# बौधायन श्रौतसूत्रम्

## प्रथमः प्रश्नः

आमावास्येन वा पौर्णमासेन वा हविषा यक्ष्यमाणो भवति
स पुरस्तादेव हविरातञ्चनमुपकल्पयत एकाहेन वा द्व्यहेन वा यथर्त्वथ वै ब्राह्मणं भवति
दध्नातनक्ति सेन्द्रत्वायाग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्या इति
चन्द्रमसं वानिर्ज्ञाय संपूर्णं वा विज्ञायाग्नीनन्वादधाति
त्रीणि काष्ठानि गार्हपत्येऽभ्यादधाति त्रीण्यन्वाहार्यपचने त्रीण्याहवनीये
परिसमूहन्त्युपवसथस्य रूपं कुर्वन्त्यथास्य व्रतोपेतस्य पर्णशाखामाच्छैति
प्राङ्वोदङ्वा वाचंयमो यत्र वा वेत्स्यन्मन्यते
सा या प्राची वोदीची वा बहुपर्णा बहुशाखाप्रतिशुष्काग्रा भवति
तामाच्छिनत्ति इषे त्वोर्जे त्वेति
तया वत्सानपाकरोति वायव स्थोपायव स्थेत्यथैषां मातॄः प्रेरयति देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा व स्तेन ईशत माघशँसो रुद्रस्य हेतिः परि वो वृणक्त्विति
ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानमीक्षतेऽथैताँ
शाखामग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन
गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाग्न्यगारस्योद्गूहति यजमानस्य पशून्पाहीति नु यदि संनयति
यद्यु वै न संनयति बर्हिः प्रतिपदेव भवति १

अथ जघनेन गार्हपत्यं तिष्ठन्नसिदं वाश्वपर्शुं वादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्यादायाभिमन्त्रयते यज्ञस्य घोषदसीति
गार्हपत्ये प्रतितपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इति त्रिरथाहवनीयमभिप्रैति
प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आवहन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमितीह बर्हिरासद इति वेदिं प्रत्यवेक्षतेऽथ तां दिशमेति यत्र बर्हिर्वेत्स्यन्मन्यते
दर्भस्तम्बं परिगृह्णाति यावन्तमलं प्रस्तराय मन्यते देवानां
परिषूतमसीत्यथैनमूर्ध्वमुन्मार्ष्टि वर्षवृद्धमसीत्यसिदेनोपयच्छति देवबर्हिर्मा

त्वान्वङ्गा तिर्यक्पर्व ते राध्यासमित्याच्छिनत्त्याच्छेत्ता ते मा
रिषमित्याच्छेदनान्यभिमृशति देवबर्हिः शतवल्शं विरोहेति
सहस्रवल्शा वि वयँ रुहेमेत्यात्मानं प्रत्यभिमृशते
सर्वश एवैनँ स्तम्बं लुनोति
कृत्वा प्रस्तरं निदधाति पृथिव्याः संपृचः पाहीति

तूष्णीमत ऊर्ध्वमयुजो मुष्टीन्लुनोति
त्रीन्वा पञ्च वा सप्त वा नव वैकादश वा यावतो वालं मन्यतेऽथ
त्रिरन्वाहितँ शुल्बं कृत्वापसलैरावेष्टयत्यदित्यै रास्नासीति
तदुदीचीनाग्रं निधाय
तस्मिन्प्रस्तरमभिसंभरति सुसंभृता त्वा संभरामीति
संनह्यतीन्द्राण्यै संनहनमिति
ग्रन्थिं करोति पूषा ते ग्रन्थिं ग्रथ्नात्विति
स ते मास्थादिति पश्चात्प्राञ्चमुपगूहत्यथैनदुद्यच्छत इन्द्रस्य त्वा
बाहुभ्यामुद्यच्छ इति
शीर्षन्नधिनिधत्ते बृहस्पतेर्मूर्ध्ना हरामीत्यैत्युर्वन्तरिक्षमन्विहीत्येत्योत्तरेण
गार्हपत्यमनधः सादयति देवंगममसीति
तदुपरीव निदधाति यत्र गुप्तं मन्यते
तूष्णीं परिभोजनीयानि लुनोति
सकृदाच्छिन्नं पितृभ्य आच्छिनत्त्यथ तथैव त्रिरन्वाहितँ शुल्बं
कृत्वैकविँशतिदारुमिध्मँ संनह्यति यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं
वनस्पतीन् । ततस्त्वामेकविँशतिधा संभरामि सुसंभृतेति
वेदं करोति वत्सज्ञुं पशुकामस्य मूतकार्यमन्नाद्यकामस्य त्रिवृतं
तेजस्कामस्योर्ध्वाग्रँ स्वर्गकामस्य
वेदिं करोति प्रागुत्तरात्परिग्राहादथापराह्णे पिण्डपितृयज्ञेन चरति २

अथैतस्यै शाखायै पर्णानि प्रच्छिद्याग्रेण गार्हपत्यं
निवपत्यथैनामधस्तात्परिवास्य जघनेन गार्हपत्यं स्थविमदुपवेषाय
निदधात्यथास्याः प्रादेशमात्रं प्रमाय दर्भनाडीः प्रवेष्ट्य तत्त्रिवृच्छाखापवित्रं
करोति त्रिवृत्पलाशे दर्भ इयान्प्रादेशसंमितः । यज्ञे पवित्रं पोतृतमं पयो हव्यं

करोतु म इत्य्
अथ सायँ हुतेऽग्निहोत्र उत्तरेण गार्हपत्यं तृणानि सँस्तीर्य तेषु चतुष्टयँ सँसादयति दोहनं पवित्रँ साम्नाय्यतपन्यौ स्थालावित्यथैनान्यद्भिः प्रोक्षति शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति त्रिरथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहति मातरिश्वनो घर्मोऽसीति तेषु सांनाय्यतपनीमधिश्रयति द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृँहस्व मा ह्वारिति
तस्यां प्राचीनाग्रँ शाखापवित्रं निदधाति वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति
तदन्वारभ्य वाचंयम आस्तेऽथ गा आयतीः प्रतीक्षत एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति महेन्द्र इति वा यदि महेन्द्रयाजी भवत्यथाहोपसृष्टां मे प्रब्रूतादित्युपसृष्टां प्राहुर्दोह्यमानामनुमन्त्रयते हुत स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यामित्यथ पुरस्तात्प्रत्यगानयन्तं पृच्छति कामधुक्ष इत्यमूमितीतरः प्रत्याह
तामनुमन्त्रयते सा विश्वायुरिति
द्वितीयमानयन्तं पृच्छति कामधुक्ष इत्यमूमित्येवेतरः प्रत्याह
तामनुमन्त्रयते सा विश्वव्यचा इति
तृतीयमानयन्तं पृच्छति कामधुक्ष इत्य्
अमूमित्येवेतरः प्रत्याह
तामनुमन्त्रयते सा विश्वकर्मेति
तिसृषु दुग्धासु वाचं विसृजते बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति
विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयित्वा
दोहनेऽप आनीय संक्षालनमानयति संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातय इत्यथैनत्तप्त्वोदगुद्वास्य शीतीकृत्वा तिरः पवित्रं दध्नातनक्ति सोमेन त्वा तनच्मीन्द्राय दधीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति
यावता मूर्च्छयिष्यन्मन्यते तावदानयत्यग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य

संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यथैनदुदन्वता कँसेन वा चमसेन वापिदधात्यदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरत इति
तदुपरीव निदधाति यत्र गुप्तं मन्यते विष्णो हव्यँ रक्षस्वेत्येतस्मिन्काले दर्भैः प्रातर्दोहाय वत्सानपाकरोति तूष्णीम् ३

अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयमिति
नक्तं परिस्तीर्णा एवैतेऽग्नयो भवन्ति
यद्यु वा अपरिस्तीर्णा भवन्त्याहवनीयमेवाग्रे पुरस्तात्परिस्तृणात्यथ दक्षिणतोऽथ पश्चादथोत्तरत एवमेवान्वाहार्यपचनं परिस्तृणात्
एवं गार्हपत्यम्
अथाग्रेण गार्हपत्यं तृणानि सँस्तीर्य तेषु द्वन्द्वं न्यञ्चि यज्ञायुधानि सँसादयति स्फ्यं च कपालानि चाग्निहोत्रहवणीं च शूर्पं च कृष्णाजिनं च शम्यां चोलूखलं च मुसलं च दृषदं चोपलां च जुहूं चोपभृतं च स्रुवं च ध्रुवां च प्राशित्रहरणं चेडापात्रं च मेक्षणं च पिष्टोद्वपनीं च प्रणीताप्रणयनं चाज्यस्थालीं च वेदं च दारुपात्रीं च योक्त्रं च वेदपरिवासनं च धृष्टिं चेध्मप्रव्रश्चनं चान्वाहार्यस्थालीं च मदन्तीं च यानि चान्यानि पात्राणि तान्येवमेव द्वन्द्वँ सँसाद्य
ब्रह्माणं दक्षिणत उपवेश्य
पृष्ठ्याँस्तृणाति संततां गार्हपत्यादाहवनीयाद्यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्य स्तृणामीत्यथ बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समे अप्रतिच्छिन्नाग्रे अनखच्छिन्ने इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः । आप्याययन्तौ संचरताम्पवित्रे हव्यशोधने इत्यथैने अद्भिरनुमार्ष्टि पवित्रे स्थो वैष्णवी स्थो यज्ञिये स्थो वायुपूते स्थो विष्णोर्मनसा पूते स्थो यज्ञस्य पवने स्थ इत्यथोत्तरेण गार्हपत्यमुपविश्य कँसं वा चमसं वा प्रणीताप्रणयनम्याचति
तस्मिँस्तिरः पवित्रमप आनयन्नाह ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति प्रसूतः समं प्राणैर्धारयमाणोऽविषिञ्चन्हृत्वोत्तरेणाहवनीयं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य
पवित्रमादाक प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यादत्ते दक्षिणेनाग्निहोत्रहवणीँ

सव्येन शूर्पं वेषाय त्वेति

गार्हपत्ये प्रतितपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इति त्रिरथ जघनेन गार्हपत्यमग्निष्ठमनो भवति
तस्योत्तरां धुरमभिमृशति धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वाम इत्यनोऽभिमन्त्रयते त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृँहस्व मा ह्वारिति ४

अथ विष्णोः क्रमोऽसीति दक्षिणमक्षपालिं क्रमित्वाभ्यारुह्य प्रौगे शूर्पं निदधाति
शूर्पे स्रुचं स्रुचि पवित्रे
अथ पुरोडाशीयान्प्रेक्षते मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्थार्मा त्वा हिँसिषमित्युरु वातायेति तृणं वा किँशारु वा निरस्यत्यथाप उपस्पृश्य दशहोतारं व्याख्याय हविर्निर्वप्स्यामीति यजमानमामन्त्र्य पवित्रवत्याग्निहोत्रहवण्या निर्वपति
यद्यु वै नानो भवति जघनेन गार्हपत्यँ स्फ्यं निदधाति स्फ्योपरि पात्रीं पात्र्यां पुरोडाशीयानावपत्यथ पूर्वार्धे पात्र्या अभिमृशति धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानं दृँहस्व मा ह्वा इत्यथ पुरोडाशीयान्प्रेक्षते मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा संविक्थार्मा त्वा हिँसिषमित्युरु वातायेति तृणं वा किँशारु वा निरस्यत्यथाप उपस्पृश्य दशहोतारं व्याख्याय हविर्निर्वप्स्यामीति यजमानमामन्त्र्य पवित्रवत्याग्निहोत्रहवण्या निर्वपत्
ओं निर्वपेति यजमानोऽनुजानात्यथ निर्वपति
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति त्रिरेतेन यजुषा
सकृत्तूष्णीम्
एतामेव प्रतिपदं कृत्वाग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधायेति चेन्द्राग्निभ्यामित्यमावास्यायामसंनयत इन्द्रायेति संनयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवत्यथ निरुप्तानभिमृशतीदं देवानामितीदमु नः सहेति

येऽतिशिष्टा भवन्ति
स्फात्यै त्वा नारात्या इत्यथाहवनीयमीक्षते सुवरभिविख्येषं वैश्वानरं ज्योतिरित्यथ गृहानन्वीक्षते दृँहन्तां दुर्या द्यावापृथिव्योरित्यथैनानादायोपोत्तिष्ठत्यैत्युर्वन्तरिक्षमन्विहीत्येत्योत्तरेण गार्हपत्यमुपसादयत्यदित्यास्त्वोपस्थे सादयामीति
गार्हपत्यमभिमन्त्रयतेऽग्ने हव्यँ रक्षस्वेति ५

अथैतस्यामेव स्रुचि तिरः पवित्रमप आनीयोदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छोऽथैना उन्महयन्नुपोत्तिष्ठत्यापो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्यद्भिरेवापः प्रोक्षति प्रोक्षिता स्थ प्रोक्षिता स्थेति त्रिरथ पुरोडाशीयान्प्रोक्षति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतं त्रिर्
उत्तानानि पात्राणि कृत्वा प्रोक्षति शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति त्रिरतिशिष्टाः प्रोक्षणीर्निधाय
कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्यावधूतँ रक्षोऽवधूता अरातय इति त्रिरथैनत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति
तस्मिन्नुलूखलमध्यूहत्यधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्त्विति तस्मिन्पुरोडाशीयानावपत्यग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामीति
मुसलमवदधात्यद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यँ सुशमि शमिष्वेत्यथ हविष्कृतमाह्वयति हविष्कृदेहि हविष्कृदेहीति त्रिः समाहन्तवा इति च अथ दृषदुपले वृषारवेणोच्चैः समाहन्तीषमावदोर्जमावद द्युमद्वदत वयँ संघातं जेष्मेत्यवहत्योत्तुषान्कृत्वोत्तरतः शूर्पमुपयच्छति वर्षवृद्धमसीति
तस्मिन्पुरोडाशीयानुद्वपति प्रति त्वा वर्षवृद्धं वेत्त्वित्यथोदङ्पर्यावृत्य परापुनाति परापूतँ रक्षः परापूता अरातय इति

सव्येन तुषानुपहत्येमां दिशं निरस्यति रक्षसां भागोऽसीत्यथाप उपस्पृश्य विविनक्ति वायुर्वो विविनक्त्विति
पात्र्यां तण्डुलान्प्रस्कन्दयति देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्यवहन्त्र्यै प्रयच्छन्नाह त्रिष्फलीकर्तवै त्रिष्फलीकृतान्मे प्रब्रूतादिति

त्रिष्फलीकृतान्प्राहुस्त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते । रक्षसां भागधेयमापस्तत्प्रवहतादित इति तण्डुलप्रक्षालनमन्तर्वेदि निनयत्युत्करदेशे वैतस्मिन्काले प्रातर्दोहं धेनूर्दोहयत्युदगग्रेण पवित्रेण
नात्रातनक्ति ६

अथ प्रोक्तेषु त्रिष्फलीकृतेषु तथैव
कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्यावधूतँ रक्षसवधूता अरातय इति त्रिरथैनत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति
तस्मिन्नुदीचीनकुम्बाँ शम्यां निदधाति दिव स्कम्भनिरसि प्रति त्वादित्यास्त्वग्वेत्त्विति
तस्यां प्राचीं दृषदमध्यूहति धिषणासि पर्वत्या प्रति त्वा दिव स्कम्भनिर्वेत्त्विति
दृषद्युपलामध्यूहति धिषणासि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्विति
तस्यां पुरोडाशीयानधिवपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतम्
अधिवदते धान्यमसि धिनुहि देवान्धिनुहि यज्ञं धिनुहि यज्ञपतिं धिनुहि मां यज्ञनियमिति
पिँषति प्राणाय त्वापानाय त्वा व्यानाय त्वेति
बाहू अन्ववेक्षते दीर्घामनु प्रसितिमायुषे धामिति
कृष्णाजिने पिष्टानि प्रस्कन्दयति देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति

हविःपेष्यै प्रयच्छन्नाहासंवपन्ती पिँषाणूनि कुरुतादिति
पिँषन्ति पुरोडाशीयान्
नि चरव्यान्दधति
यदि चरुं करिष्यन्भवति प्रागधिवपनाच्चरुपुरोडाशीयान्विभजेरन् ७

अथैतानि कपालानि प्रक्षालितानि जघनेन गार्हपत्यमुपसादयत्यष्टौ दक्षिणत एकादशोत्तरतोऽथ जघनेन गार्हपत्यमुपविश्य धृष्टिमादत्ते धृष्टिरसि ब्रह्म यच्छेति
गार्हपत्यमभिमन्त्रयतेऽपाग्नेऽग्निमामादं जहीति
निष्क्रव्यादँ सेधेति दक्षिणाङ्गारं निरस्यत्यथान्यमावर्तयत्या देवयजं वहेति
तं दक्षिणेषां कपालानां मध्यमेनाभ्युपदधाति ध्रुवमसि पृथिवीं दृँहायुर्दृँह प्रजां दृँह सजातानस्मै यजमानाय पर्यूहेत्यङ्गारमधिवर्तयति निर्दग्धँ रक्षो निर्दग्धा अरातय इत्यथ पूर्वार्ध्यमुपदधाति धर्त्रमस्यन्तरिक्षं दृँह प्राणं दृँहापानं दृँह सजातानस्मै यजमानाय पर्यूहेत्यथापरार्ध्यमुपदधाति धरुणमसि दिवं दृँह चक्षुर्दृँह श्रोत्रं दृँह सजातानस्मै यजमानाय पर्यूहेत्यथ दक्षिणार्ध्यमुपदधाति धर्मासि दिशो दृँह योनिं दृँह प्रजां दृँह सजातानस्मै यजमानाय पर्यूहेत्यथ पूर्वमुपधिमुपदधाति चित स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूहेत्यथापरमेवमेव
द्वे उत्तरतः सँस्पृष्टे उपदधाति चित स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूहेत्य्
अथैनान्यङ्गारैरधिवासयति भृगूणामङ्गिरसां तपसा तप्यध्वमित्यथैनानि योगेन युनक्ति यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू युङ्क्तामित्येवमेवोत्तराणि कपालान्युपदधात्यभीन्धते
कपालान्युपेन्धते चरुस्थालीम्
अध्यस्यन्ति श्रपणानि
तपन्ति पिष्टसंयवनीया आपः ८

अथोत्तरेण गार्हपत्यमुपविश्य वाचंयमस्तिरः पवित्रं पात्र्यां कृष्णाजिनात्पिष्टानि संवपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टँ संवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति

यथादेवतम्
अथ परिकर्मिणमाहाहराप आनयेत्याहरति प्रैषकारः प्रणीताभ्यः
स्रुवेणोपहत्य वेदेनोपयम्य पाणिं वान्तर्धायैवं मदन्तीभ्यस्
ता उभयीरानीयमानाः प्रतिमन्त्रयते समापो अद्भिरग्मत समोषधयो रसेन
सँरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वमित्यथानुपरिप्लावयत्यद्भ्यः
परि प्रजाता स्थ समद्भिः पृच्यध्वमिति
संयौति जनयत्यै त्वा संयौमीति
संयुत्य व्यूह्याभिमृशत्यग्नये त्वाग्नीषोमाभ्याममुष्मा अमुष्मा इति
यथादेवतम्पिण्डं करोति मखस्य शिरोऽसीति
तं दक्षिणेषां कपालानां प्रत्यूह्याङ्गाराँस्तेष्वधिपृणक्ति घर्मोऽसि विश्वायुरिति
प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति

तं तन्वन्तं कूर्मप्रकारं करोति
सर्वाणि कपालान्यभिप्रथयतीति ब्राह्मणम् ९

अथ तिरः पवित्रमाज्यस्थाल्यामाज्यं निर्वपति महीनां पयोऽस्योषधीनाँ
रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इत्यथोत्तरतो
भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयत्येवमेवोत्तरं पुरोडाशमधिपृणक्त्यथ
शृतमथ दध्यथ पात्र्यामप आनीय दक्षिणस्य पुरोडाशस्य त्वचं ग्राहयति
त्वचं गृह्णीष्व त्वचं गृह्णीष्वेति त्रिरथोत्तरस्याथ पर्यग्नि करोत्यन्तरितँ
रक्षोऽन्तरिता अरातय इति त्रिरथ दक्षिणं पुरोडाशँ श्रपयति देवस्त्वा सविता
श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माति धागिति
गार्हपत्यमभिमन्त्रयते अग्ने हव्यँ रक्षस्वेत्येवमेवोत्तरं पुरोडाशँ श्रपयत्यथ
दक्षिणं पुरोडाशं भस्मनाभिवास्य वेदेनाभिवासयति सं ब्रह्मणा पृच्यस्व सं
ब्रह्मणा पृच्यस्वेति त्रिरथोत्तरम्
अविदहन्त श्रपयतेति वाचं विसृजतेऽत्रैतत्पात्रीसंक्षालनं
गार्हपत्यादङ्गारेणाभितप्य हृत्वान्तर्वेदि प्रतीचीनं तिसृषु लेखासु
निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेत्यथ वेदमादत्तेऽयं वेदः
पृथिवीमन्वविन्दद्गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय
लोकमच्छिद्रं यज्ञं भूरिकर्मा करोत्विति

वेदेन वेदिं त्रिः संमार्ष्टि वेदेन वेदिं विविदुः पृथिवीँ सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति १०

अथ जघनेन वेद्यै तिष्ठन्स्फ्यमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयत इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा इत्यथैनं बर्हिषा सँश्यति वायुरसि तिग्मतेजाः शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्यथान्तर्वेद्युदीचीनाग्रं बर्हिर्निदधाति पृथिव्यै वर्मासि वर्म यजमानाय भवेति
तस्मिँ स्फ्येन प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँ सिषमित्यपहतोऽररुः पृथिव्या इत्यादत्ते
व्रजं गच्छ गोस्थानमिति हरति
वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति
हत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति
द्वितीयं प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँ सिषमित्यपहतोऽररुः पृथिव्यै देवयजन्या इत्यादत्ते
व्रजं गच्छ गोस्थानमिति हरति
वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति
हत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति
तृतीयं प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँ सिषमित्यपहतोऽररुः पृथिव्या अदेवयजन इत्यादत्ते
व्रजं गच्छ गोस्थानमिति हरति
वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति

हत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगररुस्ते दिवं मा स्कानित्यत्रानुवर्तयति
तूष्णीं चतुर्थँ हरति सह बर्हिषाथ पूर्वं परिग्राहं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसेति

पश्चादादित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसेत्युत्तरतोऽथ करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीँ रुद्रवतीमादित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदित्यथ प्राचीँ स्फ्येन वेदिमुद्धन्ति देवस्य सवितुः सवे कर्म कृरवन्ति वेधस इत्यथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति ततस्त्रिराग्नीध्रो हरति

यदाग्नीध्रस्त्रिर्हरत्यथ संप्रैषमाह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति प्रसूत उत्तरं परिग्राहं परिगृह्णात्यृतमसीति दक्षिणत ऋतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतोऽथ प्रतीचीँ स्फ्येन वेदिं योयुप्यते धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्त इत्यथान्तर्वेदि तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीँ संनह्याज्येनोदेहीत्याहरन्त्येताः प्रोक्षणीरभिपूर्य

दक्षिणेनाध्वर्युस्ता स्फ्य उपनिनीय स्फ्यस्य वर्त्मन्सादयत्यथोत्करे स्फ्यं निहन्ति यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यः श्रुतेन हृदयेनेष्णता च तस्येन्द्रवज्रेण शिरश्छिनद्मीति

हस्तौ प्रक्षाल्य स्फ्यं च प्रक्षालयत्युपसादयन्त्येतदिध्माबर्हिर्दक्षिणमिध्ममुत्तरं बर्हिः ११

अथैताः स्रुचः समादत्ते दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानीति

गार्हपत्ये प्रतितपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्यथ स्रुवँ संमार्ष्टि गोष्ठं मा निर्मृक्षम्वाजिनं त्वा सपत्नसाहँ संमार्ज्मीति

त्रिरन्तरतस्त्रिर्बाह्यतस्त्रिरेवं मूलैर्दण्डँ संमृज्याद्भिः सँस्पर्श्य प्रतितप्योत्प्रयच्छत्यथ जुहूँ संमार्ष्टि वाचं प्राणं मा निमृक्षम्वाजिनीं त्वा सपत्नसाहीँ संमार्ज्मीति

तथैव संमृज्याद्भिः सँस्पर्श्य प्रतितप्योत्प्रयच्छत्यथोपभृतँ संमार्ष्टि चक्षुः श्रोत्रं मा निर्मृक्षम्वाजिनीं त्वा सपत्नसाहीँ संमार्ज्मीति

तथैव संमृज्याद्भिः सँस्पर्श्य प्रतितप्योत्प्रयच्छत्यथ ध्रुवाँ संमार्ष्टि प्रजां योनिं मा निर्मृक्षम्वाजिनीं त्वा सपत्नसाहीँ संमार्ज्मीति
तथैव संमृज्याद्भिः संस्पर्श्य प्रतितप्योत्प्रयच्छत्यथ प्राशित्रहरणँ संमार्ष्टि रूपं वर्णं पशुभ्यो मा निर्मृक्षम्वाजिनं त्वा सपत्नसाहँ संमार्ज्मीति

तथैव संमृज्याद्भिः सँस्पर्श्य प्रतितप्योत्प्रयच्छत्यथैतानि स्रुक्संमार्जनान्यद्भिः सँस्पर्श्य गार्हपत्येऽनुप्रहरति दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितं तेन वयँ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यथाग्रेणोत्करं तृणानि सँस्तीर्य तेषु स्रुचः सादयित्वाथैतां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण संनह्यत्याशासाना सौमनसं प्रजाँ सौभाग्यं तनूमग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कमिति
अथैनां वाचयति युक्तं क्रियाता आशीः कामे युज्याता इति
अथैनां तिरः पवित्रमप आचामयति पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजेत्यथैनां गार्हपत्ये समिध आधापयत्यग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताँ स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताँ स्वाहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्॥ इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय ॥ मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्
उताहमस्मि संजया पत्युर्मे श्लोक उत्तम इति
अथैनां वाचयत्यूनेऽतिरिक्तं धीयाता इति च

अथैनां गार्हपत्यमीक्षयत्यग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वम्पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिँ सीरित्यथैनामाज्यमवेक्षयति महीनां पयोऽस्योषधीनाँ रसोऽदब्धन त्वा चक्षुषावेक्षे सुप्रजास्त्वायेत्यथैनद्गार्हपत्येऽधिश्रयति तेजोऽसीति समिधमुपयत्य प्राङ्हरति तेजोऽनु प्रेहीत्यथैनदाहवनीयेऽधिश्रयत्यग्निस्ते तेजो मा विनैदित्यत्रैताँ समिधं मध्यत आहवनीयस्याभ्यादधाति स्वाहेति अथैनदग्रेण प्रोक्षणीः पर्याहृत्य दक्षिणार्धे वेद्यै निधाय

यजमानमाज्यमवेक्षयति निमील्यावेक्षेतेति ब्राह्मणम्
अथैनद्यथाहृतं प्रतिपर्याहृत्योत्तरार्धे वेद्यै निधायाध्वर्युरवेक्षतेऽग्नेर्जिह्वासि सुभूर्देवानां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेत्यथैनदुदीचीनाग्राभ्यां पवित्राभ्यां पुनराहारं त्रिरुत्पुनाति शुक्रमसि ज्योतिरसि तेजोऽसीत्यथ प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छः
प्रोक्षणीषु पवित्रे अवधायादत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णीते शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा संमृश्योत्प्रयच्छत्य्
अथोपभृति गृह्णीते ज्योतिस्त्वा ज्योतिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषाष्टगृहीतं गृहीत्वा भूयसो ग्रहान्गृह्णानः कनीय आज्यं गृह्णीते
तथैव संमृश्योत्प्रयच्छत्यथ ध्रुवायां गृह्णीतेऽर्चिस्त्वार्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वाभिपूर्य तथैव संमृश्योत्प्रयच्छति १२

अथैतामाज्यस्थालीँ सस्रुवां जघनेन वेद्यै निधाय
प्रोक्षणीरुन्महयन्नुपोत्तिष्ठत्यापो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिम्धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्यद्भिरेवापः प्रोक्षति प्रोक्षिता स्थ प्रोक्षिता स्थेति त्रिरथेध्मं विस्रस्य प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेति
वेदिं प्रोक्षति वेदिरसि बर्हिषे त्वा स्वाहेति
बर्हिः प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याहरन्त्येतद्बर्हिरन्तरेण प्रणीताश्चाहवनीयं च
तदन्तर्वेदि पुरोग्रन्थ्यासाद्य प्रोक्षति दिवे त्वेत्यग्राण्यन्तरिक्षाय त्वेति मध्यानि पृथिव्यै त्वेति मूलानि
सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्ष्यातिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरायै श्रोणेः स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छतेत्युदूह्य प्रोक्षणीधानं बर्हिर्विस्रस्य पुरस्तात्प्रस्तरं गृह्णाति विष्णो स्तूपोऽसीति

तस्मिन्पवित्रे अपिसृजति यजमाने प्राणापानौ दधामीति वा तूष्णीं वा
तं यजमानाय वा ब्रह्मणे वा प्रयच्छत्यथैतानि बर्हिःसंनहनान्यायातयति
दक्षिणायै श्रोणेरोत्तरादँ सादथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिँ स्तृणाति
देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति
तां बहुलां पुरस्तात्प्रतीचीं त्रिवृतमनतिदृश्नँ स्तृणात्यथ प्रस्तरपाणिः
प्राङभिसृप्य परिधीन्परिदधाति गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषत
यजमानस्य परिधिरिड ईडित इति मध्यममिन्द्रस्य बाहुरसि दक्षिण
यजमानस्य परिधिरिड ईडित इति दक्षिणम्मित्रावरुणौ त्वोत्तरतः परिधत्तां
ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडित इत्युत्तरम्
अथ सूर्येण पुरस्तात्परिदधाति सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्या
इत्यूर्ध्वे समिधावादधाति वीतिहोत्रं त्वा कवे द्युमन्तँ समिधीमह्यग्ने
बृहन्तमध्वर इति दक्षिणां तूष्णीमुत्तरामभ्याधायान्तर्वेद्युदीचीनाग्रे विधृती
तिरश्ची सादयति विशो यन्त्रे स्थ इति
विधृत्योः प्रस्तरम्वसूनाँ रुद्राणामादित्यानाँ सदसि सीदेति
प्रस्तरे जुहूं जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि
सीदेत्युत्तरामुपभृतमुपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि
सीदेत्युत्तरां ध्रुवां ध्रुवासि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेत्यथ
स्रुचः सन्ना अभिमृशत्येता असदन्त्सुकृतस्य लोके ता विष्णो पाहि पाहि
यज्ञम्पाहि यज्ञपतिम्पाहि मां यज्ञनियमित्य्
अथ विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानीत्याज्यान्यभिमन्त्रयते
१३

अथादत्ते दक्षिणेनाज्यस्थालीँ सस्रुवाँ सव्येन पात्रीं वेदमित्येतत्समादाय
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य पात्र्यां
द्वेधोपस्तृणीते स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि ।
तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इत्यथ धृष्टिमादाय
दक्षिणस्य पुरोडाशस्याङ्गारानपोहतीदमहँ सेनाया अभीत्वर्यै
मुखमपोहामीत्यथैनं विदर्शयति सूर्य ज्योतिर्विभाहि महत इन्द्रियायेति
वेदेन विरजसं कृत्वाभिघारयत्याप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम्।

खमङ्क्व त्वचमङ्क्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामीति
यद्देवत्यो वा भवत्यथैनमुद्वासयति शृत उत्स्नाति जनिता मतीनामित्याज्येन सुसंतर्पयत्यार्द्रः प्रथस्नुर्भुवनस्य गोपा इत्युपरिष्टादभ्यज्याधस्तादुपानक्ति यस्त आत्मा पशुषु प्रविष्टस्तमङ्क्वेत्येवमेवोत्तरं पुरोडाशमुद्वासयत्यथ शृतमथ दध्यथ सांनाय्ये अलंकरोति यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान्त्सोम घृतवान्हि भूत्वा देवान्गच्छ सुवर्विन्द यजमानाय मह्यमिति
प्रत्यज्य कपालान्युद्वासयतीरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति संख्यायोद्वासयति यजमानस्य गोपीथायेति ब्राह्मणम्

अथैनँ स्रुवमाज्यस्य पूरयित्वानतरेण पुरोडाशाववदधात्यथैनानि संपरिगृह्यान्तर्वेद्यासादयति भूर्भुवः सुवरित्येताभिर्व्याहृतीभिर्मध्यतः पुरोडाशावासादयति दक्षिणतः शृतमुत्तरतो दध्यथैनँ स्रुवमग्रेण स्रुचः पर्याहृत्य दक्षिणेन जुहूं प्रसत्रे सादयति स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके । दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्ना इत्यथैनं यथाहृतं प्रतिपर्याहृत्य ध्रुवायामवदधात्यृषभोऽसि शाक्वरो घृताचीनाँ सूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति  १४

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यथ यत्र होतुरभिजानाति प्र वो वाजा अभिद्यव इति तत्प्रथमामभ्यादधाति प्रणवेप्रणवेऽभ्यादधात्यथ यत्र होतुरभिजानाति समिद्धो अग्न आहुतेति तदन्ततोऽभ्यादधाति
परि समिधँ शिनष्टयथ यत्र होतुरभिजानात्याजुहोता दुवस्यतेति तदेतेन वेदेन त्रिराहवनीयमुपवाजयत्यनूक्तासु सामिधेनीषु ध्रुवाज्यात्स्रुवेणोपहत्य वेदेनोपयम्य प्राजापत्यं तिर्यञ्चमाघारमाघारयति प्रजापतये स्वाहेति मनसाथ संप्रैषमाहाग्नीदग्नींस्त्रिस्त्रिः संमृड्ढीत्यथैष आग्नीध्र इध्मसंनहनानि स्फ्य उपसंगृह्य परिधीन्संमार्ष्टि त्रिर्मध्यमं त्रिर्दक्षिणार्ध्यं त्रिरुत्तरार्ध्यं त्रिराहवनीयमुपवाजयत्यग्ने वाजजिद्वाजं त्वाग्ने सरिष्यन्तं वाजं जेष्यन्तं

वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेत्यथाग्रेण
जुहूपभृतौ प्राञ्चमञ्जलिं करोति भुवनमसि विप्रथस्वाग्ने यष्टरिदं नम
इत्यथादत्ते दक्षिणेन जुहूं जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया इति
सव्येनोपभृतमुपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया इति
सव्येनात्याक्रामञ्जपत्यग्नाविष्णू मा वामवक्रमिषम्विजिहाथां मा मा संताप्तं
लोकं मे लोककृतौ कृणुतमिति
स्थानं कल्पयते विष्णो स्थानमसीत्यन्वारब्धे यजमाने मध्यमे परिधौ
सँस्पर्श्यर्जुमाघारमाघारयति संततं प्राञ्चमव्यवच्छिन्दन्नित इन्द्रो
अकृणोद्वीर्याणि समारभ्योध्र्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो
यज्ञपतेरिन्द्रावान्त्स्वाहेति
बृहद्भा इति स्रुचमुद्गृह्णात्यथासँस्पर्शयन्स्रुचावुदङ्ङत्याक्रामञ्जपति पाहि
माग्ने दुश्चरितादा मा सुचरिते भजेति
जुह्वा ध्रुवाँ समनक्ति मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामिति त्रिरथ
यथायतनँ स्रुचौ सादयित्वा प्रवरं प्रवृणीत उत्कर इध्मसंनहनानि स्फ्य
उपसंगृह्य पृष्ठमाग्नीध्रोऽनूपश्लिष्यत्य्
अथाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्देवो होता देवान्यक्षद्विद्वाँ
श्चिकित्वान्मनुष्वद्भरतवदमुवदमुवद्ब्रह्मण्वदेह वक्षद्ब्राह्मणा अस्य यज्ञस्य
प्रावितार इत्यसौ मानुष इति होतुर्नाम गृह्णात्युपोत्थाय होता विमुञ्चति
विमुक्तोऽध्वर्युरुपविशति
प्रसवमाकाङ्क्षन्नास्ते १५

अथ यत्र होतुरभिजानाति घृतवतीमध्वर्यो स्रुचमास्यस्वेति
तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह समिधो यजेति
वषट्कृते जुहोति यज यजेति
चतुर्थं यद्दयन्नर्धमौपभृतस्याज्यस्य जुह्वाँ समानयते
पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सँस्रावेणानुपूर्वँ हवीँष्यभिघारयति
ध्रुवामेवाग्रेऽथ दक्षिणं पुरोडाशमथ ध्रुवामथोत्तरं पुरोडाशमथ शृतमथ
दध्युपभृतमन्ततोऽथ चतुर आज्यस्य गृह्णान
आहाग्नयेऽनुब्रूहीत्यत्याक्रम्याश्राव्याहाग्निं यजेति
वषट्कृत उत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोत्यथोदङ्ङत्याक्रम्य चतुर

एवाज्यस्य गृह्णान आह सोमायानुब्रूहीत्यत्याक्रम्याश्राव्याह सोमं यजेति
वषट्कृते दक्षिणार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोत्यथोपस्तीर्य दक्षिणस्य
पुरोडाशस्य पूर्वार्धादवद्यन्नाहाग्नयेऽनुब्रूहीत्यथैनमुपतिष्ठते मा भेर्मा
संविक्थार्मा त्वा हिँसिषम्मा ते तेजोऽपक्रमीदित्
अथैनमभिमृशति भरतमुद्धरे मनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते
अस्तु मा मा हिँसीरिति
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति यदवदानानि
तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां
पुनरित्यत्याक्रम्याश्राव्याहाग्निं यजेति
वषट्कृते जुहोत्यथ चतुर आज्यस्य गृह्णान आह प्रजापतय इत्युपाँ
श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह प्रजापतिमित्युपाँशु यजेत्युच्चैर्वषट्कृते
जुहोत्यथोपस्तीर्योत्तरस्य पुरोडाशस्यापरार्धादवद्यन्नाहाग्नीषोमाभ्यामिति
पौर्णमास्यामिन्द्राय वैमृधायेति चेन्द्राग्निभ्यामित्यमावास्यायामसंनयत
इन्द्रायेति संनयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवति १६

समान उपस्थानः
समानोऽभिमर्शनोऽपरार्धादवदाय पूर्वार्धादवद्यत्यभिघारयति
समानः प्रत्यञ्जनोऽत्याक्रम्याश्राव्याहाग्नीषोमौ यजेति
वषट्कृते जुहोत्यथोपस्तीर्य द्विः पुरोडाशस्यावद्यन्नाहेन्द्रायानुब्रूहीति
महेन्द्रायेति वा यदि महेन्द्रयाजी भवति
द्विः पुरोडाशस्यावद्यति द्विः शृतस्य द्विर्दध्नोऽभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी
भवति
वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यन्नाहाग्नये
स्विष्टकृतेऽनुब्रूहीति
सकृद्दक्षिणस्य पुरोडाशस्योत्तरार्धादवद्यति सकृद्ध्रुवाज्यात्सकृदुत्तरस्य
पुरोडाशस्य सकृच्छृतस्य सकृद्दध्नो द्विरभिघारयति
न प्रत्यनक्त्यवत्ते स्विष्टकृति स्रुवेण पार्वणौ होमौ जुहोत्यृषभं वाजिनं वयं
पूर्णमासं यजामहे । स नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्त्रिणम्। प्राणाय
सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याम्

अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहताँ सुवीर्यँ रायस्पोषँ सहस्रिणम्। अपानाय सुराधसेऽमावास्यायै स्वाहेत्यमावास्यायाम्
अत्याक्रम्याश्राव्याहाग्निँ स्विष्टकृतं यजेति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा
आहुतीर्जुहोत्यत्रैतन्मेक्षणमाहवनीयेऽनुप्रहरत्यथैनत्सँस्रावेणाभिजुहोत्यथोदङ
ङत्याक्रम्य जुह्वामप आनीय संक्षालनमन्तःपरिधि निनयति वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सँशतधारमेतम्। स नः पितरं पितामहं प्रपितामहँ सुवर्गे लोके गच्छतु पिन्वमानँ स्वधा नम इति
निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वा बहिःपरिधि निनयतीमँ समुद्रँ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिँसीः परमे व्योमन्नित्यत्रैतदौपभृतमाज्यँ सर्वश एव जुह्वाँ समानयतेऽथ यथायतनँ स्रुचौ सादयित्वा प्राशित्रमवद्यति दक्षिणस्य पुरोडाशस्योत्तरार्धाद्यवमात्रमज्यायो यवमात्रादाव्याधात्कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धँ स्विष्टमिदँ हविरित्यथैनत्स्रुवदण्डेनाभिघार्य जघनेन प्रणीताः सादयित्वाद्भिः स्रुवदण्डँ संस्पर्श्यावदधाति १७

अथ कँसं वा चमसं वेडोपहवनं याचति
तमन्तर्वेदि निधाय तस्मिन्नुपस्तीर्य दक्षिणस्य पुरोडाशस्य दक्षिणार्धात्प्ररुज्यावदधाति मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम्। दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखामिति

द्वितीयमवदानानि संभिद्यावदधात्यथ दक्षिणस्यैव पुरोडाशस्य पूर्वार्धात्त्र्यङ्गुलं वा चतुरङ्गुलं वाज्येन सुसंतृप्तँ संतर्प्याग्रेण ध्रुवां यजमानभागं निदधाति
द्विर्ध्रुवाज्यादवद्यति द्विरुत्तरस्य पुरोडाशस्य द्विः शृतस्य द्विर्दध्नोऽभिघारयत्यथ होतुर्द्विरङ्गुलावनक्ति
निघ्रेण भक्षयित्वा
चतुरवान्तरेडामवद्यत्युपस्तृणाति

द्विरादहात्यभिघारयति
समन्वारभन्तेऽध्वर्युश्च यजमानश्च ब्रह्मा चाग्नीध्रश्चाथ यत्र होतुरभिजानाति
दैव्या अध्वर्यव उपहूता उपहूता मनुष्या इति तद्दक्षिणं पुरोडाशं चतुर्धा
कृत्वा बर्हिषदं करोत्यथ यत्र होतुरभिजानात्युपहूतोऽयं यजमान इति तर्हि
यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेदित्युपहूतायामिडायामग्नीध
आदधाति षडवत्तम्
उपस्तृणात्यादधात्यभिघारयत्युपस्तृणात्यादधात्यभिघारयति
प्राश्नन्ति
मार्जयन्तेऽथाह ब्रह्मणे प्राशित्रं परिहरेति
परि प्राशित्रँ हरन्त्यन्वपोऽनु वेदेन ब्रह्मभागम्
अथान्वाहार्यं याचत्युद्वासयन्त्येतद्धविरुच्छिष्टम् १८

अथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीति
प्रसूतोऽत्रैताँ समिधं मध्यत आहवनीयस्याभ्यादधात्
अथैष आग्नीध्रोऽस्फ्यैरेवेध्मसंनहनैः परिधीन्संमार्ष्टि सकृन्मध्यँ
सकृद्दक्षिणार्ध्यँ सकृदुत्तरार्ध्यं सकृदाहवनीयमुपवाजयत्यग्ने वाजजिद्वाजं
त्वाग्ने ससृवाँ सं वाजं जिगिवाँ सं वाजिनं वाजजितं वाजजित्यायै
संमार्ज्म्यग्निमन्नादमन्नाद्यायेत्यथैतानीध्मसंनहनान्यद्भिः
सँस्पर्श्याहवनीयेऽनुप्रहरति यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा ।
पशूनस्माकं मा हिँ सीरेतदस्तु हुतं तव स्वाहेत्यथ
जुहूपभृतावादायात्याक्रम्याश्राव्याह देवान्यजेति
वषट्कृते जुहोति यज यजेति
त्रीन्प्रतीचोऽनूयाजान्यजति
प्राचान्ततः संभिनत्त्यथोदङङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा
वाजवतीभ्याँ स्रुचौ व्यूहति वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदिति
दक्षिणेन जुहूमुद्गृह्णात्यथा सपत्नाँ न्द्रो मे निग्राभेणाधराँ अकरिति
सव्येनोपभृतं निगृह्णात्युद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्निति प्राचीं
जुहूऊहत्यथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यतामिति प्रतीचीमुपभृतं
प्रत्यूहति
प्राच्या परिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति

दक्षिणमादित्येभ्यस्त्वेत्युत्तरम्
अथोपभृतमद्भिः सँस्पर्श्य ययायतनँ स्रुचौ सादयित्वा स्रुक्षु प्रस्तरमनक्त्यक्तँ रिहाणा इति जुह्वामग्राणि वियन्तु वय इत्युपभृति मध्यानि प्रजां योनिं मा निर्मृक्षमिति ध्रुवायां मूलान्यथ प्रस्तरात्तृणं प्रच्छिद्य जुह्वामवदधात्य्
अथाश्रावयत्यो श्रावयास्तु श्रौषडिषिता दैव्याहोतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति
तमुपरीव प्राञ्चं प्रहरति नात्यग्रं प्रहरति न पुरस्तात्प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं वियौत्यूर्ध्वमुद्यौत्याप्यायन्तामाप ओषधयो मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरयेत्यथाग्नीध्रमीक्षतेऽग्नीदिति
तमाहाग्नीध्रः संवदस्वेत्यगानग्नीधेत्याहाध्वर्युरगनित्याहाग्नीध्रः
श्रावयेत्याहाध्वर्युः
श्रौषडित्याहाग्नीध्र इदं ब्रूहीत्याहाध्वर्युरनुप्रहरेत्याहाग्नीध्रोऽनुप्रहरति
स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः
शंयोर्ब्रूहीत्यथोपोत्थायाहवनीयमुपतिष्ठत आयुष्पा अग्नेऽस्यायुर्मे पाह्यचक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्यथेमामभिमृशति ध्रुवासीति
मध्यमं परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयाता इत्यथेतरावुपसमस्यति यज्ञस्य पाथ उप समितमित्यथैनान्सँस्रावेणाभिजुहोति
जुह्वामुपभृतँ संप्रस्रावयति सँस्रावभागा स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वँ स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य धुरि स्रुचौ विमुञ्चत्यग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमिति
यद्यु वै नानो भवत्युत्कर एवैने स्फ्ये विमुञ्चत्येतेनैव मन्त्रेण १९

अथादत्ते दक्षिणेनाज्यस्थालीँ सस्रुवाँ सव्येन जुहूं होत्रे वेदं प्रदाय प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो दक्षिणेनाध्वर्युर्गार्हपत्यं परिक्रामत्युत्तरेण होता
तौ जघनेन गार्हपत्यं पश्चात्प्राञ्चावुपविशतो दक्षिण एवाध्वर्युरुत्तरो होताथाध्वर्युर्वेदमुपभृतं कृत्वा चतुर आज्यस्य गृह्णान आह सोमायेत्युपाँश्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपाँ शु यजेत्युच्चैर्वषट्कृते जुहोति

चतुर एवाज्यस्य गृह्णान आह त्वष्ट्र इत्युपाँश्वनुब्रूहीत्युच्चैराश्राव्याह
त्वष्टारमित्युपाँशु यजेत्युच्चैर्वषट्कृते जुहोति
चतुर एवाज्यस्य गृह्णान आह देवानां पत्नीभ्य इत्युपाँश्वनुब्रूहीत्युच्चैराश्राव्याह
देवानां पत्नीरित्युपाँशु यजेत्युच्चैर्वषट्कृते परिश्रिते देवानां पत्नीर्जुहोत्यथ
चतुर एवाज्यस्य गृह्णान आहाग्नये गृहपतय इत्युपाँ
श्वनुब्रूहीत्युच्चैराश्राव्याहाग्निं गृहपतिमित्युपाँशु यजेत्युच्चैर्वषट्कृत
उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथाग्रेण होतारमुपातीत्य
होतुर्द्विरङ्गुलावनक्ति
निघ्रेण भक्षयित्वा
चतुर्हस्तेडाँ संपादयत्याज्यस्यैव
समन्वारभेते अध्वर्युश्चैव पत्नी चोपहूतायामिडायामग्नीध आदधाति
षडवत्तम्प्राश्नीतो मार्जयेते
अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं
जुहोत्युलूखले मुसले यच्च शूर्प आशिश्लेष दृषदि कृष्णाजिने यत्कपाले ।
अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम्। यज्ञे या विप्रुषः
सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सहुता जुहोमि स्वाहेत्य्
अपरं चतुर्गृहीतं गृहीत्वान्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय
फलीकरणानोप्य फलीकरणहोमं जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माद्य
दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः
पितुं कृणु सुषदा योनिँ स्वाहेत्यथैतेनैव यथेतमेत्य वेदे यजमानं वाचयति
वेदोऽसि वित्तिरसीत्यान्तादनुवाकस्य होत्रे वेदं प्रदाय पत्नीं विष्यतीमं
विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः । धातुश्च योनौ सुकृतस्य
लोके स्योनं मे सह पत्या करोमीत्यथास्यै
योक्त्रमञ्जलावाधायोदपात्रमानयति समायुषा सं प्रजया समग्ने वर्चसा पुनः
। सं पत्नी पत्याहं गच्छे समात्मा तनुवा ममेत्यथ मुखं विमृष्टे यदप्सु ते
सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्गधि सरस्वतीत्यपो
निनयत्यवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति ब्राह्मणम् २०

अथैनां तथैव तिरः पवित्रमप आचामयति पयस्वतीरोषधयः पयस्वद्वीरुधां
पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजेत्य्

अथैनां गार्हपत्ये समिध आधापयत्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहेत्यथ यथाप्रपन्नं निष्क्रामयत्यथ प्राङेत्य ध्रुवामाप्याययत्याप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोत्याश्रावितमत्याश्रावितम्वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेतु देवान्त्स्वाहेत्यथ यज्ञसमृद्धीर्जुहोतीष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहा भेषजं दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा दौराद्ध्यै स्वाहा दैवीभ्यस्तनूभ्यः स्वाहा ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा सर्वसमृद्ध्यै स्वाहा भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्यया सन्मनसा हितः । अया सन्हव्यमूहिषे अया नो धेहि भेषजँ स्वाहायाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हवमूहिषेऽया नो धेहि भेषजँ स्वाहा यदस्मिन्कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा । अनयाहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत्स्विष्टकृद्विद्वान्सर्वँ स्विष्टँ सुहुतम्करोतु मे । अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाँ समर्धयित्रे स्वाहा । प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणाँ स्वाहेत्
अथ बर्हिषो धातूनाँ संप्रलुप्य ध्रुवायाँ समनक्ति समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तामित्यथैनदाहवनीयेऽनुप्रहरति दिव्यं नभो गच्छतु यत्स्वाहेत्यथोपोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञँ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्युदूहति स्रुचं निनयति प्रणीता उपोत्थाय यजमानो दक्षिणेन पदा विष्णुक्रमान्क्रमते संतिष्ठत आमावास्यं वा पौर्णमास्यं वा हविः २१

## द्वितीयः प्रश्नः

अथोपव्याहरणम्विज्ञायते क्रत्वादौ क्रतुकामं कामयीत यज्ञाङ्गादौ यज्ञाङ्गकाममिति

प्राक्कूलान्दर्भान्सँस्तीर्य तेषु प्राङ्मुखो यजमान उपविश्य जपति याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः । आभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे ॥ देवा गातुविदो गातुं यज्ञाय विन्दत । मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यतामिति श्रद्ध एहि सत्येन त्वा ह्वयामीत्याकूत्या वेदनं करोत्याकूत्यै त्वा कामाय त्वा समृधे त्वा पुरो दधे । अमृतत्वाय जीवसे ॥ आकूतिमस्यावसे काममस्य समृध्यै । इन्द्रस्य युञ्जते धियः ॥ आकूतिं देवीं मनसः पुरो दधे यज्ञस्य माता सुहवा मे अस्तु । यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टमिति

मनसा त्रिः संकल्पयते त्रिरुच्चैः

सर्वकामोऽग्नीनाधास्य इत्यग्न्याधेये

स्वर्गकामो दर्शपूर्णमासाभ्यां यक्ष्य इति दर्शपूर्णमासयोः

स्वर्गकामश्चातुर्मास्यैर्यक्ष्य इति चातुर्मास्येषु

स्वर्गकामः पशुना यक्ष्य इति पशुबन्धे

स्वर्गकामः सोमेन यक्ष्य इति सोमे

स्वर्गकामोऽग्निं चेष्य इत्यग्निचयेऽहीनेऽहर्गणे वा यथाकामो यत्कामो वा यजते

तन्म ऋध्यतां तन्मे समृध्यतां तन्मे संपद्यतां काम इत्यथर्त्विजां प्रतिवचनं तत्त ऋध्यतां तत्ते समृध्यतां तत्ते संपद्यतां काम इत्यों तथेति प्रतिवचनम् १

अथर्त्विजो देवयजनं याचतेऽध्वर्यो देवयजनं मे देहीत्यध्वर्युम् आदित्यो देवो दैवोऽध्वर्युः स ते देवयजनं ददात्वित्यों तथेति प्रतिवचनम्ब्रह्मन्देवयजनं मे देहीति ब्रह्माणं चन्द्रमा देवो दैवो ब्रह्मा स ते देवयजनं ददात्वित्यों तथेति प्रतिवचनं होतर्देवयजनं मे देहीति होतारम् अग्निर्देवो दैवो होता स ते देवयजनं ददात्वित्यों तथेति प्रतिवचनम् उद्गातर्देवयजनं मे देहीत्युद्गातारम्पर्जन्यो देवो दैव उद्गाता स ते देवयजनं ददात्वित्यों तथेति प्रतिवचनं सदस्य देवयजनं मे देहीति सदस्यम् आकाशो देवो दैवः सदस्यः स ते देवयजनं ददात्वित्यों तथेति प्रतिवचनं

होत्रका देवयजनं मे दत्तेति होत्रकान्
आपो देव्यो दैव्या होत्राशँसिन्यस्तास्ते देवयजनं ददत्वित्यों तथेति
प्रतिवचनं चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यून्
रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते ते देवयजनं ददत्वित्यों तथेति प्रतिवच-
नम्
अपि वा न देवयजनं याचत आदित एव तीर्थे स्नात्वोदेत्याहतं वासः
परिधाय
शुद्धो हैव शुचिः पूतो मेध्यो विपाप्मा ब्रह्मचारी सहकारिप्रत्यय आ
चतुर्थात्कर्मणोऽभिसमीक्षमाणो वेदकर्माणि प्रयोजयेत्
प्रागपवर्गाण्युदगपवर्गाणि वा प्राङ्मुखः प्रदक्षिणं यज्ञोपवीती दैवानि कर्माणि
करोति
दक्षिणामुखः प्रसव्यं प्राचीनावीती पित्र्याणि
तिष्ठन्नासीनः प्रह्वो वा यथान्यायं छन्दोगब्राह्मणं यथा वै दक्षिणः पाणिरेवं
देवयजनं
यथा सव्यस्तथा पितृयजनं यथा पितृयजनं तथा श्मशानकरणं यथा
श्मशानकरणं तथाभिचरणीयेष्विष्टिपशुसोमेष्वादित एव पुरोदकं देवयजनं
यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुरुत्तरतो
देवयजनमात्रमतिशिनष्टि २

अथर्त्विजां वरणम्विज्ञायते ब्राह्मणा ऋत्विजो योनिगोत्रश्रुतवृत्तसंपन्ना
अविगुणाङ्गा अत्रिकिणिनो न परिखातिक्रान्ता नान्तगा नान्त्यजा नाननूचाना
हालेयवालेयपुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवरान्परिहाप्याङ्गिरस
ोऽध्वर्युर्वासिष्ठो ब्रह्मा वैश्वामित्रो होतायास्य उद्गाता कौषीतकः
सदस्योऽवशिष्टा भृगवोऽङ्गिरसो वा
योनिवृत्तं विद्या च प्रमाणमित्येके
ताँश्चिद्वृणीताव्यापन्नाङ्गानेव वृणीताकुनखिनमध्वर्युमकिलासिनं
ब्रह्माणमखण्डँ होतारमकरालमुद्गातारमशिपिविष्टँ सदस्यम्
अथ प्रतिप्रस्थाता नेष्टोन्नेतेत्यध्वर्युपुरुषा ब्राह्मणाच्छँस्याग्नीध्रः पोतेति ब्रह्मणो
मैत्रावरुणोऽच्छावाको ग्रावस्तुदिति होतुः
प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इत्युद्गातुरभिगरो ध्रुवगोपः सँश्राव इति

सदस्यस्य
स्वप्रधाना अस्वप्रधाना इत्येके
दश वैकादश वा चमसाध्वर्यवोऽन्यदक्षिणाभिः परिक्रीता भवन्तीति विज्ञायते
तस्मादग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विग्
दर्शपूर्णमासयोश्चत्वार ऋत्विजोऽध्वर्युर्ब्रह्मा होताग्नीध्र इति
चातुर्मास्येषु प्रतिप्रस्थाता पञ्चमः
पशुबन्धे मैत्रावरुणः षष्ठः
सर्वे सौम्येऽध्वरे
तान्कर्मणःकर्मणो वृणीतैकैकमुपसंगृह्य चोदयेदसावहमाध्वर्यवेण त्वा गच्छामि याजयतु मां भवानिति
ब्रह्मत्वेन हौत्रेणौद्गात्रेण सादस्येनेति
न सदस्यो विद्यत इत्येके
स्वेनस्वेन कर्मणा होत्रकान्
न होत्रकानित्येके
तत्पुरुषा होत्रकाश्चमसाध्वर्यवश्चाध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इति ३

आदित्यो देवो दैवोऽध्वर्युः स मेऽध्वर्युरध्वर्योऽध्वर्युं त्वा वृन इत्यध्वर्युम्
आदित्यो देवो दैवोऽध्वर्युः स तेऽध्वर्युस्तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनं चन्द्रमा देवो दैवो ब्रह्मा स मे ब्रह्मा ब्रह्मन्ब्रह्माणं त्वा वृण इति ब्रह्माणं चन्द्रमा देवो दैवो ब्रह्मा स ते ब्रह्मा तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनम्
अग्निर्देवो दैवो होता स मे होता होतर्होतारं त्वा वृण इति होतारम्

अग्निर्देवो दैवो होता स ते होता तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनम्पर्जन्यो देवो दैव उद्गाता स म उद्गातोद्गातरुद्गातारं त्वा वृण इत्युद्गातारम्पर्जन्यो देवो दैव उद्गाता स त उद्गाता तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनम्
आकाशो देवो दैवो सदस्यः स मे सदस्यः सदस्य सदस्यं त्वा वृण इति

सदस्यम्
स्राकाशो दैवो देवः सदस्यः स ते सदस्यस्तेनानुमतः कर्मैवाहं करिष्यामीत्यों तथेति प्रतिवचनम्
स्रापो देव्यो दैव्या होत्राशँसिन्यस्ता मे होत्राशँसिन्यो होत्रका होत्रकान्वो वृण इति होत्रकान्
स्रापो देव्यो दैव्या होत्राशँसिन्यस्तास्ते होत्राशँसिन्यस्ताभिरनुमताः कर्मैव वयं करिष्याम इत्यों तथेति प्रतिवचनं रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवश्चमसाध्वर्यवश्चमसाध्वर्यून्वो वृण इति चमसाध्वर्यून्
रश्मयो देवा दैवाश्चमसाध्वर्यवस्ते ते चमसाध्वर्यवस्तैरनुमताः कर्मैव वयं करिष्याम इत्यों तथेति प्रतिवचनम्वृतोवृतो जपति महन्मेऽवोचो यशो मेऽवोचो भगो मेऽवोचो भर्गो मेऽवोचस्तपो मेऽवोच स्तोमं मेऽवोचः क्लृप्तिं मेऽवोचो भुक्तिं मेऽवोचो विश्वं मेऽवोचः सर्वं मेऽवोचः सर्वं मे कल्याणमवोचस्तन्मावतु तन्माविशतु तन्मा जिन्वतु तेन भुक्षिषीय देवो देवमेतु सोमः सोममेत्वित्यों तथेति प्रतिवचनम् ४

सिँहे मे मन्युर्व्याघ्रे मेऽन्तरामयो वृके मे क्षुदश्वे मे घसिर्धन्वनि मे पिपासा राजगृहे मेऽशनायाश्मनि मे तन्द्रिर्गर्दभे मेऽर्शः
शल्यके मे ह्रीरश्वत्थे मे वेपथुः
कूर्मे मेऽङ्गरोगो बस्ते मेऽपसर्याप्रिये मे मृत्युर्भ्रातृव्ये मे पाप्मा
सपत्ने मे निर्ऋृतिर्दुष्कीर्तौ मे व्यृद्धिः
परस्वति मेऽसमृद्धिः
खड्गे म स्रार्तिर्गवये म स्रान्ध्यं गौरे मे बाधिर्यम्
ऋृक्षे मे शोको गोधायां मे खेदो जरायां मे हिमः
कृष्णशकुनौ मे भीरुता
कशे मे पापो गन्ध उलूके मे श्वभ्यशः
क्लोके म ईर्ष्या
मर्कटे मे दुर्ऋृद्धिः
कुलले मे मँस्योलले मे प्रध्योष्ट्रे मे तृष्णश्र्ये मे श्रमोऽव्यां म स्राव्यं कोशे मे गन्धः
कुमार्यां मेऽलङ्कारः

सूकरे मे क्लदथुः
पृदाखुनि मे स्वप्न
अजगरे मे दुस्वप्नो विद्युति मे स्मयशो लोभायां मे क्लेदः
शलभे मे पाप्मालक्ष्मी
स्त्रीषु मेऽनृतम्
अजासु मे कर्कशो व्रात्ये म ईत्या
शूद्रे मे स्तेयम्वैश्ये मेऽकार्मकृत्यं राजन्यबन्धुनि मेऽज्ञानं नैषादे मे ब्रह्महत्या
कुलिङ्गे मे क्षवथुरुलले मे विलास उद्रिणि मे वमतिः
किंपुरुषे मे रोदो द्वीपिनि मे निष्टपधस्तिनि मे किलासः
शुनि मे दुरिप्रं स्त्रावन्येषु मे म्लेच्छो विदेहेषु मे शीपथो महावर्षेषु मे
ग्लौर्मूजवत्सु मे तप्मा
दुन्दुभौ मे कासिकेक्ष्वाकुषु मे पित्तं कलिङ्गेषु मेऽमेध्यम्
अश्वतर्यां मेऽप्रजस्ता
पुँश्चल्यां मे दुश्चरितम्
आखुनि मे दन्तरोगो मक्षिकायां मे श्वल्कशः
शुके मे हरिमा
मयूरे मे जल्प्या
वृषे मे जरा
चाषे मे पापवादोऽप्सु मे श्रमो ब्रह्मोज्झे मे किल्बिषम्
अपेहि पाप्मन्पुनरपनाशितो भवा नः पाप्मन्सुकृतस्य लोके पाप्मन्धेह्यविहृतो
यो नः पाप्मन्न जहाति तमु त्वा जहिमो वयमन्यत्रास्मन्निविशतां सहस्राक्षो
अमर्त्यो यो नो द्वेष्टि स रिष्यतु यमु द्विष्मस्तमु जहीत्य्
अथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति
तां दिशमेता अप उत्सिञ्चति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै
भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य यथेतं प्रविशन्ति
५

अथेदमग्न्याधेयं तस्य कः कर्मण उपक्रमो
भवतीत्युक्तान्यृतुनक्षत्राण्युक्तमात्मनः पुरश्चरणं कथमत्रानुपूर्व्यं भवति
स्नानपवनमन्त्रप्रोक्षणपुण्याहवाचनानि श्रद्धामाहूयाकूत्या वेदनं

कृत्वोपव्याहृत्यर्त्विजो वृत्वार्हयित्वा देवयजनं याचित्वा देवयजनमादाय स्फ्यमादायान्तरेण वेद्युत्करावुद्देशेन प्रपद्य जघनेन गार्हपत्यं तिष्ठन्प्राचीनँ स्फ्येन गार्हपत्यस्यायतनमुद्धन्त्युद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेत्यथैनदद्भिरवोक्षति शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न
इत्येवमेवान्वाहार्यपचनस्यायतनमुद्धन्त्येवमेवाहवनीयस्यैवमितरयोर्यदि करिष्यन्भवत्यथान्तरेण वेद्युत्करावुद्देशेनोदङ्ङुपनिष्क्रम्य तां दिशं यन्ति यत्रास्य संभारा उपक्लृप्ता भवन्त्य्
अपि वोत्तरेण शालायाः सर्वे संभारा उपक्लृप्ता भवन्त्यपि वान्तर्वेदि प्राचीनं तान्मन्त्रानुपूर्व्यमेकैकँ संभारमेकैकेन यजुषा संभरति
वैश्वानरस्य रूपं पृथिव्यां परिस्रसा । स्योनमाविशन्तु न इति सिकताः संभृत्य निदधात्येवमेवोत्तरमुत्तरँ संभारमुत्तरेणोत्तरेण यजुषा संभृत्यसंभृत्यैव निदधात्यूषाश्च सिकताश्चाखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा अथोत्तरेण यजुषा षड्हि
रण्यशल्कानाहरत्यथ वानस्पत्याभिर्वानस्पत्याः
शाखा आर्द्राः सपलाशाः सप्ररोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरत्यपि वा यथालाभम्पर्णं द्वाभ्यां चित्रियस्याश्वत्थस्य तिस्रः सभिध आर्द्राः सपालाशाः सप्ररोहाः प्रादेशमात्रीरप्रतिशुष्काग्रा आहरति
चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसँस्कृता स्थ । प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्या इत्यथ
मुञ्जकुलायमाहरति या ते अग्न ओजस्विनी तनूरोषधीषु प्रविष्टा । तां त इह संभरामीत्यथास्मा अरणी आहरत्याश्वत्थीँ शमीगर्भामप्यशमीगर्भां वा चतुरङ्गुलमुत्सेधां द्वादशाङ्गुलं विस्तीर्णाँ षोडशाङ्गुलमायतामपि वा प्रादेशमात्रीँ सर्वतः समां चतुरङ्गुलमेवोत्सेधां तस्या उत्तानाया अनुलोममधस्तात्प्रतीचीनप्रवणं प्रजननं कुर्वन्ति

तावतीमेवोत्तरारणिम्
अथैने आहरत्यश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाँ संभरामि । शान्तयोनिँ शमीगर्भमग्नये प्रजनयितवे ॥ यो अश्वत्थः शमीगर्भ आरुरोह त्वे

सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः
सहेत्यथैतान्सुसंभृतान्संभारान्पुनरेव संभरति यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम्। स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति ६

अथ वै भवतीन्द्रो वृत्रँ हत्वासुरान्पराभाव्य सोऽमावास्यां प्रत्यागच्छत्
ते पितरः पूर्वेद्युरागच्छन्
पितॄन्यज्ञोऽगच्छत्
तं देवाः पुनरयाचन्त
तमेभ्यो न पुनरददुस्तेऽब्रुवन्वरं वृणामहा अथ वः पुनर्दास्यामोऽस्मभ्यमेव पूर्वेद्युः क्रियाता इति
तमेभ्यः पुनरददुस्
तस्मात्पितृभ्यः पूर्वेद्युः क्रियते
यत्पितृभ्यः पूर्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानःप्रतनुत इति ब्राह्मणम्
अथ यदि गां न लभते मेषमजं वा लभतेऽपि वा घृतमोदनं पक्त्वा तस्योपरिष्टात्प्रभूतमाज्यं पयो वानीय तस्मादेतत्सर्वं करोति यद्गवा कार्यम्विज्ञायते च धेन्वै वा एतद्रेतो यदाज्यं पयो वानडुहस्तण्डुला इति

गौरेवाङ्गसामान्यात्
संप्रच्छन्ना अम्बरीषं वोत्तपनीयं वाभिप्रव्रजन्त्यपि
वौपासनमेवाभिप्रव्रजन्त्यर्धमौपासनं कुर्वन्ति सर्वं वा
ब्राह्मौदनिकमौपासनं कुर्वन्ति
सोऽत्र वैव हि हूयत इति
समानं कर्मा संभारनिवपनादथ तृतीयँ संभाराणां त्रेधा विभज्य
सभ्यावसथ्ययोराहवनीये वा सभ्यावसथ्ययोः संकल्पः
समानं कर्मा समिदाधानात्
पञ्चपञ्च नानावृक्ष्याः समिधोऽभ्यज्यादधाति
कथमत्रानुपूर्व्यं भवत्यश्वत्थश्चोदुम्बरश्च पर्णश्च शमी च
विकङ्कतश्चेत्येतदत्रानुपूर्व्यम्भवति

कथमु खल्वैन्द्राग्नादित्ययोरन्त इत्यैन्द्राग्नादित्ययोरन्त उदश्वपदिकँ सृजेत्
ततोऽन्यं दशहोत्रर्थमुद्धरेदिति
तन्त्रसमास एवैतदुपपद्यते नान्यत्र प्रणीतस्याग्नेर्लौकिकत्वाद्यस्मिन्होत्रा हुतँ
स्यात्सोऽग्निः
कर्मान्तं तस्य धारणमित्यपवृत्ते कर्मणि लौकिकः संपद्यते
प्रसिद्धानि तनूहवींषि
प्रसिद्धा अग्न्याधेयदक्षिणा ददाति
ताश्चेन्नाधिगच्छेद्वासाँ स्येतावन्ति मन्थान्वौदनान्वैतावतो दद्यात्
तेनो हैवैतं काममवाप्नोतीत्य्
अप्येकां गां दक्षिणां दद्यादिति पैङ्गलायनिब्राह्मणं भवति
न त्वेवानाहिताग्निः स्याद्विज्ञायते च देवानां वा एषोऽन्यतमो य
आहिताग्निरित्यथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघा अवरुन्द्धेऽथ
यदग्निहोत्रं जुहोति सहस्रं तेनेत्यपरिमितमेवेदमुक्तं भवति ७

अथाग्न्याधेयस्योपवसथ इत्युपकल्पयते गां माँ सलामहतं वासश्चतुर
उदकुम्भाँ स्त्रीनौदुम्बराञ्छूलानौदुम्बरीं दर्वीमिकां
वपाश्रपणीमविशाखामौदुम्बरीमेव
सर्वानिवान्यान्स्थालीपाकात्पैतृयज्ञिकान्संभारानेरकोपबर्हणे आञ्जनाभ्यञ्जने
आज्यं तृणमुष्टिँ स्फ्यँ सूत्रमिति
दक्षिणत एतत्परिश्रितं भवति
तस्यैतस्मिन्परिश्रिते प्राङावृत्तस्य केशान्तं करोति तूष्णीं त्रीणि
दर्भपुञ्जीलान्युपनियत्य वपति वपे प्रवपे देवेन सवित्रा प्रसूतो ब्रह्मणा
सँशितोऽहं यानि म इत ऊर्ध्वं लोमानि तानि मे स्वस्तये
सन्त्वित्यथैनमुप्तकेशश्मश्रुं निकृत्तनखमुदकुम्भेनाभ्यवनयन्वाचयतीमा म
आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे । शुद्धाः प्रयुञ्जीमहि क्रतूनिति

स्नातः प्राङुत्सृप्याहतं वासः परिधायालङ्कृत्याङ्क्तेऽथैनमेकविँशत्या
दर्भपुञ्जीलैस्त्रेधा विभक्तैः सप्तभिःसप्तभिस्तूष्णीं पवयित्वोदपात्रमादायेमां
दिशं नीत्वा चतुष्पथ एतस्मिन्नेवोदपात्रेऽवेक्षमाणं पाप्मनो
विनिधीन्वाचयति सिँहे मे मन्युर्व्याघ्रे मेऽन्तरामय इत्यान्तमेतमनुवाकं

निगद्य निनीयापः परास्य पात्रमनवेक्षमाणा आयन्ति
हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य पवमानः सुवर्जन इत्येतमनुवाकं
यजमानं वाचयन्नद्भिर्मार्जयत्यामात्यादिध्ममादीप्यान्वाहार्यपचनवेलायाँ
सादयित्वा शोधयित्वा बर्हिषा परिस्तीर्याज्यं विलाप्योत्पूयोत्तरत
एतानुपसादयति चतुर उदकुम्भाँ स्त्रीनौदुम्बराञ्छूलानौदुम्बरीं दर्वीमेकां
वपाश्रपणीमविशाखामौदुम्बरीमेव दक्षिणतः
सर्वानिवान्यान्स्थालीपाकात्पैतृयज्ञिकान्संभारानेरकोपबर्हणे आञ्जनाभ्यञ्जने
आज्यं तृणमुष्टिँ स्फ्यँ सूत्रमिति
दक्षिणतोऽधिदेवनं करोति
तदेकान्नपञ्चाशतोऽक्षान्निवपत्यथ स्फ्यमादाय सकृदेव दक्षिणोद्धन्त्यपहता
असुरा रक्षाँ सि पिशाचा ये क्षयन्ति पृथिवीमनु । अन्यत्रेतो गच्छन्तु यत्रैषां
गतं मन इत्य्
अथैनदद्भिरवोक्षत्युदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं
य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेष्विति ८

अथोल्मुकमादत्ते य आददानाः स्वधया नवानि पित्र्याणि रूपाण्यसुराश्चरति
। परापुरो निपुरो ये भरन्त्यग्निष्टानस्मात्प्रणुनोत्तु यज्ञादिति
तेनोद्धतमभितपत्यग्निः पावकः सुदिनानि कृण्वन्नितोऽसुरान्नुदताद्दूरमोकसः ।
पितृणां ये वर्णं कृत्वेह भागमिच्छन्त इति
तदत्रैव व्यन्तं करोति
तस्मिन्नुल्मुक आज्यस्तोकं प्रश्चोतयति
तद्दक्षिणाग्रं बर्हि स्तृणाति सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा
भराम्यहम्। अस्मिन्त्सीदन्तु मे पितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः
सहेत्यथ पितृनावाहयत्युदीराणा इह सन्तु नः सोम्याः पितरः पितामहाः
प्रपितामहाश्चानुगैः सह । असुंगमाः सत्ययुजोऽवृकास आ नो हवं
पितरोऽद्यागमन्तु ॥ एह गच्छन्तु पितरो हविषे अत्तवे । अस्मिन्यज्ञे बर्हिष्या
निषद्य मा वीरः प्र मा युनगित्यथैभ्य एरकोपबर्हणे निवेदयत आसनँ शयनं
चेमे तयोः सोम्यास आगताः । प्रिया जनाय नो भूत्वा शिवा भवत शंकरा
इत्यथैभ्यः पानान्याहरति मधुपानं क्षीरपानँ सक्तुपानं यद्वा भवत्य्
अन्यद्ब्राह्मणेभ्यो ददात्यन्यदुपनिनयति एतद्वः पितरः पितामहाः प्रपितामहाः

पानमित्यत्रैकेनोदकुम्भेन मार्जयति तूष्णीं तदक्षान्पर्युपविशन्ति चत्वारः
पितापुत्राः
पिता पुरस्ताज्ज्येष्ठो दक्षिणतोऽनुजः पश्चात्कनिष्ठ उत्तरतो द्वादशाक्षान्पिता
प्रच्छिनत्ति
तद्विजयते
द्वादश ज्येष्ठस्
तद्विजयते
द्वादशानुजस्
तद्विजयतेऽथ येऽतिशिष्यन्ते तान्कनीयाँ समुपसमूहन्त्यथ यदि द्वौ भवतो
द्विरायामः पिताथ यद्येको जाया तृतीयाथ यदि नैव भवन्त्युभौ द्विरायामौ
जायापती
एष एव त्रिषु न्याय एष एव द्वयोः
कृतंकृतमित्येव व्यपगच्छन्ति
द्यूता गौरित्युक्त्वोत्तिष्ठन्त्यथैभ्यो बर्हिरादाय गामुपाकरोति पितृभ्यस्त्वा
पितामहेभ्यस्त्वा प्रपितामहेभ्यस्त्वा जुष्टामुपाकरोमीति
तूष्णीमित्येकेऽथैनामद्भिः प्रोक्षति पितृभ्यस्त्वा पितामहेभ्यस्त्वा
प्रपितामहेभ्यस्त्वा जुष्टां प्रोक्षामीति
तूष्णीमित्येके
तामत्रैव प्रतीचीनशिरसीं दक्षिणापदीँ संज्ञपयन्ति
तस्यै संज्ञप्ताया अद्भिरभिषेकं प्राणानाप्याययति तूष्णीं तूष्णीं वपामुत्खिद्य
हृदयमुद्धरति प्रज्ञातानि चावदानानि प्रज्ञातौ च मतस्नू तान्येतेष्वेव
शूलेषूपनिक्ष्यैतस्मिन्नेवाग्नौ श्रपयन्ति

शृतायां वपायां पञ्च स्रुवाहुतीर्जुहोति ९
आः प्राचीः संभवन्त्याप उत्तरतश्च याः । अद्भिर्विश्वस्य भुवनस्य
धर्त्रीभिरन्तरन्यं पितुर्दधे स्वधा नमः स्वाहा ॥
अन्तर्दधे पर्वतैरन्तर्मह्या पृथिव्या । दिवा दिग्भिरनन्ताभिरूतिभिरन्तरन्यं
पितामहाद्दधे स्वधा नमः स्वाहा ॥
अन्तर्दध ऋतुभिः सर्वैरहोरात्रैः सुसन्धिकैः । अर्धमासैश्च मासैश्चान्तरन्यं
प्रपितामहाद्दधे स्वधा नमः स्वाहा ॥

यन्मे माता प्रलुलोभ चरत्यननुव्रता । तन्मे रेतः पिता
वृङ्क्तामाभुरन्योपपद्यताम्स्वधा नमः स्वाहा ॥
यद्वः क्रव्यादङ्गमदहल्लोकान्नयन्प्रणयञ्जातवेदाः । तद्वोऽहं
पुनरावेशयाम्यरिष्टाः सर्वैरङ्गैः संभवत पितरः स्वधा नमः स्वाहेति
त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोति सोमाय पितृमते शुष्मिणे जुहुमो
हविः । वाजिन्निदं जुषस्व नः स्वजा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः
स्वाहा ॥ अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुवे । वैवस्वतेदमद्धि नः स्वजा
हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहा ॥ यदग्ने कव्यवाहन
पितृन्यक्ष्यृतावृधः । प्र देवेभ्यो वहा हव्यं पितृभ्यश्च स्वजा हव्यं देवेभ्यः
पितृभ्यः स्वधा नमः स्वाहेति

तूष्णीं दर्वीमभ्याधाय पिण्डानामावृतैतान्यवदानानि ददाति हृदयमेवाग्रेऽथ
सव्यं मतस्नमथ दक्षिणम्
एतत्ते ततासौ ये च त्वामनु याँश्च त्वमत्रान्वस्येषा ते तत स्वधाक्षितिर्यावती
पृथिवी तावती ते मात्रा तावतीं त एतां मात्रां भूतां ददामि पृथिव्या मित-
मसि तताय मा क्षेष्ठा इति
द्वितीयं ददात्येतत्ते पितामहासौ ये च त्वामनु याँश्च त्वमत्रान्वस्येषा ते
पितामह स्वधाक्षितिर्यावदन्तरिक्षं तावती ते मात्रा तावतीं त एतां मात्रां भूतां
ददाम्यन्तरिक्षेण मितमसि पितामहाय मा क्षेष्ठा इति
तृतीयं ददात्येतत्ते प्रपितामहासौ ये च त्वामनु याँश्च त्वमत्रान्वस्येषा ते
प्रपितामह स्वधाक्षितिर्यावती द्यौस्तावती ते मात्रा तावतीं त एतां मात्रां भूतां
ददामि दिवा मितमसि प्रपितामहाय मा क्षेष्ठा इत्यत्र पितरो यथाभागं
मन्दध्वमित्युक्त्वात्रैकेनोदकुम्भेन मार्जयति तूष्णीम्
अथैभ्यो गामुपपरेत्य लोहितमुपप्रवर्तयति यानि रक्षाँस्यसृग्भागानि ये चापि
पितरो हरन्तां विहरन्तां तृप्यन्तु रुधिरस्य ते ॥ ये नः पतिता गर्भा असृग्भाज
उपासते । तेभ्यः स्वजा स्वधा नमस्तृप्णुवन्तु मदन्तु च ॥ य आमा ये च
पक्वा ये च दुष्टाः पतन्ति नः । तेभ्यः स्वजा स्वधा नमस्तृप्णुवन्तु अदन्तु च
॥ ये कुमारा या स्त्रियो येऽविज्ञाताः पतन्ति नः । तेभ्यः स्वजा स्वधा
नमस्तृप्णुवन्तु मदन्तु चेत्य्
आगत्याञ्जनं ददात्यथाभ्यञ्जनं ददात्यथ वासाँ सि ददात्यथ

षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठतेऽथ वीरं याचतेऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाहुवामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यत्रैतदहतं वास एवंविदे ब्राह्मणाय दत्त्वान्यदसनीयं वासः परिधाय दक्षिणोपपरेत्याद्भिर्मार्जयते १०

यासु गन्धा रसा वर्णा बलं च निहिते उभे । ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ या ऊर्जमभिषिञ्चन्ति देवप्रेषिता महीम्। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ यासां निष्क्रमणे सर्वमिदं जायते जगत्। ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ यासामिमे त्रयो लोकास्तेजसा यशसावृताः । ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु मे ॥ याः प्राचीर्या दक्षिणा याः प्रतीचीर्या उदीचीर्या ऊर्ध्वा रेवतीर्मधुमतीरापः स्रवन्ति शुक्राः । ता म आपः शिवाः सन्तु दुष्कृतं प्रवहन्तु म इत्यत्रैतदसनीयं वासो विमुच्यान्यत्परिधाय प्राजापत्ययर्चाग्नेरुदेति प्रजापते न त्वदेतान्यन्य इत्यथोल्मुकमपिसृजत्यभूद्दतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादाः पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरप्येहि देवानित्य्

अत्रैतान्यवदानानि ब्राह्मणेभ्यो ददाति हृदयमेवाग्रेऽथ सव्यं मतस्नुमथ दक्षिणं यथाश्रद्धमन्नं कुरुते

गामेतामँ शशः कृत्वा ब्राह्मणेभ्यो वरं ददाति

स ये ह के चैतस्यै माँ सं लभन्ते सर्वे ह वा अस्यै ते गोभाजशो भवन्त्यामात्ये जयानभ्यातानान्राष्ट्रभृत इति हुत्वामात्यहोमाञ्जुहोत्येष ह वा उपवसथ उप ह्यस्मिन्देवा वसन्ति प्रातर्जेष्यामो वामं वस्वित्येतद्ध वै देवानां वामं वसु यदाग्नेयोऽष्टाकपाल उप हैनं वामं वसु गच्छति यस्य ह वा एतामेवं विद्वान्गां कल्पयते

सर्वं पाप्मानं तरति

तरति ब्रह्महत्याम्

अप पुनर्मृत्युं जयतीति होवाच प्रजापतिस्

तानि ह वा एतानि कूश्माण्डानीत्याचक्षते काजवानीति वामात्यहोमा इति वातीमोक्षा इति वा

स यत्किं चास्मिन्लोके पापं कर्म करोति सर्वस्मात्तस्मान्निर्मुच्यानृणः स्वर्गं

लोकमेतीति होवाच प्रजापतिः   ११

अग्नीनाधास्यमानो भवति स उपकल्पयत ऊषाश्च सिकताश्चाखूत्करं च वल्मीकवपां च सूदं च वराहविहतं च पुष्करपर्णं च शर्कराश्चेत्यष्टौ पार्थिवा अथ वानस्पत्या अश्वत्थश्चोदुम्बरश्च पर्णश्च शमी च विकङ्कतश्चाशनिहतश्च शमीगर्भावरणी मुञ्जकुलायं चित्रियस्याश्वत्थस्य तिस्रः समिध आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रीरप्रतिशुष्काग्राः षड्ढिरण्यशल्काँ स्त्रीन्सौवर्णाँ स्त्रीन्राजतानश्वं पूर्ववाहँ रथचक्रं ब्राह्मौदनिकान्व्रीहीन्सर्वौषधँ रोहितं चर्मानडुहं नवानि यज्ञपात्राणीत्यथास्मा अरणी आहरति यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेत्यथातो नक्षत्राणामेव मीमाँसा
कृत्तिकास्वग्निमादधीत
रोहिण्यामग्निमादधीत
पुनर्वस्वोरग्निमादधीत
पूर्वयोः फल्गुण्योरुत्तरयोः फल्गुण्योश्चित्रायामित्यथात ऋतूनामेव मीमाँसा
वसन्ते ब्राह्मणोऽग्निमादधीत
ग्रीष्मे राजन्यः
शरदि वैश्यः
वर्षासु रथकार इत्यथो खलु यदैवैनँ श्रद्धोपनमेदथादधीत
सैवास्यर्द्धिरिति
तदेतदार्तस्यातिवेलं वा श्रद्धायुक्तस्याथ वै ब्राह्मणं भवति
यो रोहिण्यामग्निमाधत्त ऋध्नोत्येव सर्वान्रोहान्रोहतीति
सा या वैशाख्याः पौर्णमास्या उपरिष्टादमावास्या भवति सा सकृत्संवत्सरस्य रोहिण्या संपद्यते तस्यामादधीतेत्यथास्यैतत्पुरस्ताएव जुष्टे देवयजनेऽगारं वा विमितं वा कारितं भवति
तस्य द्वे द्वारौ कुर्वन्ति प्राचीं च दक्षिणां च
मध्ये गार्हपत्यस्यायतनं कुर्वन्ति
पुरस्ताद्द्वादशसु विक्रामेष्वाहवनीयस्यापि वा चक्षुर्निमिते
दक्षिणतो विषुवत्यन्वाहार्यपचनस्यापि वा यथा द्वौ भागौ प्राक्स्यातामेकः पश्चादित्येवं त्रेधोद्धत्यावोक्ष्य केशश्मश्रु वपते

नखानि निकृन्तत एवं पत्नी केशवर्जम्
उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतोऽहतवाससवथाभ्यां व्रतोपायनीयं पाचयति
तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्य १२

अथाधिवृक्षसूर्ये याचति सर्वौषधमाज्यस्थालीँ सस्रुवाँ स्रुचं बर्हिर्वासो दीप्याञ्छकलानित्येतत्समादाय संप्रच्छन्ना अम्बरीषं वोत्तपनीयं वाभिप्रव्रजन्ति
तस्मिन्दीप्याञ्छकलान्संप्रकीर्य बर्हिषा परिस्तीर्याज्यं विलाप्योत्पूयाञ्जलिनोपस्तीर्णाभिघारितँ सर्वौषधं जुहोत्यग्नये सर्वौषधाय पुष्ट्यै प्रजननाय स्वाहेत्य्
अथ जयानभ्यातानान्राष्ट्रभृत इति हुत्वामात्यहोमाञ्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा प्राजापत्यां जुहोति प्रजापते न त्वदेतान्यन्य इत्यपरं चतुर्गृहीतं गृहीत्वानुख्यां जुहोत्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततान
स्वाहेत्यथैतानङ्गारान्सते वा शरावे वा यजमानो गृह्णाति आयुषे वो गृह्णामि तेजसे वो गृह्णामि तपसे वो गृह्णामि वीर्याय वो गृह्णामि ब्रह्मवर्चसाय वो गृह्णामीत्यथैनानादायोपोत्तिष्ठत्यायुर्मामाविशतु भूतिर्मामाविशतु ब्रह्मवर्चसं मामाविशत्विति
तानध्वर्यवे संप्रदायोदायन्त्यन्वारब्धे यजमान एतेनैव यथेतमेत्योत्तरेणागारं परीत्य पूर्वया द्वारा प्रपाद्य गार्हपत्यस्यायतने न्युप्योपसमादधाति परिस्तृणन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथैतद्रोहितं चर्मानडुहं जघनेनाग्निं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तस्य वहसः काले चतुरः पात्रान्व्रीहीन्निर्वपति ब्रह्मणे जुष्टं निर्वपामीति वा तूष्णीं वाथ निरुप्तानभिमृशत्याकूत्यै त्वा कामाय त्वा समृधे त्वेति
अथैतान्व्रीहीञ्छूर्पे समुप्याद्भिरभ्युक्ष्य चर्मोदूहत्यथैतस्मिन्नेव चर्मण्युलूखलमुसले निधायावहन्त्य्
अथैतेनैव पात्रेण चतुर उदपात्रानानयति यदि वीडिता स्थाली भवति यद्यु वा अवीडिता पञ्च वा भूयसो वा

स समोदकः संपद्यते १३

तं य एव कश्च कुशलः परीन्धेन
श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैनमायतिगव ऋत्विग्भ्यः प्राहुरुपसंगच्छन्त
एनमेत ऋत्विजोऽथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंघ्नन्निवोद्धरति
सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैतस्यैवौदनस्योपघातं जुहोत्युपतिष्ठते
वा प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं
तन्नो अस्त्वव देवान्यजे हेड्यान्स्वाहेत्यथैताँश्चतुर
आर्षेयानुत्तरतोऽनुदिशमुपवेश्यताननुपूर्वमाचमय्य तेभ्य एनं भूमिँ
स्पृशन्ननुच्छिन्दन्निवोपोहति
त्रिः प्राश्य प्रशँसन्ति राद्धस्ते ब्रह्मौदन इति
तेभ्यः साण्डं वत्सतरं ददात्यथैष उत्तरत आसीनो ब्राह्मणः क्षामकाषं
प्राश्नाति
तस्मै यदस्योपकल्पते तद्ददात्यथ यदाज्यमुच्छिष्यते तेन
समिधोऽभ्यज्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्।
आस्मिन्हव्या जुहोतन स्वाहा ॥ उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत ।
जुषस्व समिधो मम स्वाहा ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।
बृहच्छोचा यविष्ठ्य स्वाहेति गायत्रीभिर्ब्राह्मणस्य

त्रिष्टुग्भी राजन्यस्य जिघर्म्यग्निमा त्वा जिघर्म्यायुर्दा अग्ने हविषो जुषाण
इति
जगतीभिर्वैश्यस्य जनस्य गोपा अजनिष्ट जागृविस्त्वामग्ने मानुषीरीडते
विशः सप्त ते अग्ने समिधः सप्त जिह्वा इति
समित्सु वत्सतरीं ददाति १४

अथास्मा अरणी प्रयच्छन्नाह वाचंयमो भविष्यसि सँशाधि यत्ते
सँशिष्यमिति
स आह ब्राह्मणानाशयताश्वं गोपायत संभारान्निधत्तेति
तस्य सुभिक्षमग्न्याधेयं भवति
साग्न्याधेयस्य समृद्धिस्

तदाहुर्नाग्न्याधेये गां कुर्वीत घोररूपमिति
कुर्वीतैवापि त्वेव न कुर्वीतापि बह्वीरपि कुर्वीतानु चैतस्य भवेत्पुरया प्रशँ सेति कात्योऽथास्मा अरणी प्रयच्छति
ते प्रतिगृह्णाति मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम्। अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगाम्॥ आरोहतं दशतँ शक्वरीर्ममत्वेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तराँ समां दर्शमहं पूर्णमासं यज्ञं यथा यजा इत्यथैने उपनिगृह्णात्यृत्वियवती स्थो अग्निरेतसौ गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इत्य्
अथैनमनृतात्सत्यमुपनयति मानुषाद्दैव्यमुपनयतीदमहमनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति
तं वाचंयमँ रात्रिं जागरयन्त आसते
शल्कैस्ताँ रात्रिमग्निमिन्धते शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम्। उभयोर्लोकयोरृध्वाति मृत्युं तराम्यहमित्युत्तरेण गार्हपत्यस्यायतनं कल्माषमजं बध्नाति तेनैनमाधास्यमानँ संख्यापयति प्रजा अग्ने संवासयाशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि यान्यासन्त्सवितुः सव इति   १५

अथाध्वर्युरपररात्र आद्रुत्यारणी निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते । अग्निमश्वत्थादधि हव्यवाहं शमीगर्भाज्जनयन्यो मयोभूः ॥ अयं ते योनिरृत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्धया रयिमित्यथैतमग्निँ सते समुप्य दक्षिणतो ज्वलयन्त आसत
अथैतान्यग्न्यायतनानि शकृत्पिण्डेन परिलेपयत्यथ तृतीयँ संभाराणामादाय गार्हपत्यस्यायतने निवपति यत्पृथिव्या अनामृतँ संबभूव त्वे सचा । तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयमिति
स यत्रोषानुपाधिगच्छति तज्जपति यददश्चन्द्रमसि कृष्णं तदपीहेत्यथैनानादधाति दिवस्त्वा वीर्येण पृथिव्यै महिम्ना । अन्तरिक्षस्य पोषेण सर्वपशुमादध इत्यथैनान्संप्रयौति सं वः सृजामि हृदयानि सँसृष्टं मनो अस्तु वः । सँसृष्टः प्राणो अस्तु वः ॥ सं या वः प्रियास्तनुवः संप्रिया

हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो
ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः ।
कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ येऽग्नयः समनसोऽन्तरा
द्यावापृथिवी । वासन्तिकावृतू अभि कल्पमाना इन्द्रमिव देवा
अभिसंविशन्त्वित्यथातिशिष्टानाँ संभाराणामर्धानादाय दक्षिणया
द्वारोपनिर्हृत्यान्वाहार्यपचनस्यायतने निवपति यदन्तरिक्षस्यानामृतँ संबभूव
त्वे सचा । तद्वायुरग्नयेऽदादात्तस्मिन्नाधीयतामयमिति
स यत्रोषानुपाधिगच्छति तज्जपति यददश्चन्द्रमसि कृष्णं तदपीहेति
तथादधाति
तथा संप्रयौति
तथा कल्पयत्यथैतेनैव यथेतमेत्यातिशिष्टान्संभारानादाय पूर्वया
द्वारोपनिर्हृत्याहवनीयस्यायतने निवपति यद्दिवोऽनामृतँ संबभूव त्वे सचा
तदादित्योऽग्नयेऽददात्तस्मिन्नाधीयतामयमिति
स यत्रोषानुपाधिगच्छति तज्जपति यददश्चन्द्रमसि कृष्णं तदपीहेति

तथादधाति
तथा संप्रयौति
तथा कल्पयत्यथ गोप्तारँ समादिशति
स आह विहृता अग्नयो मा कश्चनान्तरेण संचारीदित्यथाध्वर्युः
प्रदक्षिणमावृत्य प्रत्यङ्ङुद्द्रुत्य गार्हपत्यस्यायतन उपरि संभारेषु मुञ्जकुलायं
निदधाति
तस्मिन्प्रतीचीनप्रजननामरणिं निधाय दशहोत्रोत्तरारणिमवदधाति
स आह मन्थतेति
यजमानः प्रथमो मन्थति
यजमान उत्तमो मन्थति
जनयति
जाते वरं ददामीति वाचं विसृजतेऽथैनमुपतिष्ठतेऽजीजनन्नमृतं
मर्त्यासोऽस्त्रेमाणं तरणिं वीडुजम्भम्। दश स्वसारो अग्रुवः समीचीः पुमाँ सं
जातमभिसँरभन्तामित्यथैनमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः
पोषेण मह्यम्। दीर्घायुत्वाय शतशारदाय शतँ शरद्भ्य आयुषे वर्चसे जीवात्वै

पुरयाय ॥ प्राणे त्वामृतमादधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या
इत्यथोद्गातारमाह रथन्तरं ब्रूहीत्यथैनमादधाति
भूर्भुवो घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भुवत्। छर्दिस्तोकाय तनयाय
यच्छ ॥ भृगूणां त्वाङ्गिरसां व्रतपते व्रतेनादधामीति
भृग्वङ्गिरसामादध्यादादित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां
ब्राह्मणीनां प्रजानाम्वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञ इन्द्रस्य
त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य
मनोस्त्वा ग्रामरयो व्रतपते व्रतेनादधामीति वैश्यस्य

ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति
यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिररयशल्कमुपास्यति स्वया
तनुवा संभवेत्यथैतँ राजतं वृषलाय वाज्ञाताय
वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणम्
अथैनमुपतिष्ठते अहं त्वदस्मि मदसि त्वमेतद्ममासि योनिस्तव योनिरस्मि ।
ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः ॥ सुगार्हपत्यो
विदहन्नरातीरुषसः श्रेयसीःश्रेयसीर्दधत्। अग्ने सपत्नाँ पबाधमानो
रायस्पोषमिषमूर्जमस्मासु धेहीति १६

अथैतमग्निमाददते य एष सते समुप्तो भवति
तं दक्षिणया द्वारोपनिर्हृत्यान्वाहार्यपचनमादधाति भूर्भुवो वातः
प्राणस्तदयमग्निः संप्रियः पशुभिर्भुवत्। स्वदितं तोकाय तनयाय पितुं पच ॥
अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति
यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिररयशल्कमुपास्यति स्वया
तनुवा संभवेत्यथैतँ राजतं वृषलाय वाज्ञाताय
वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणम्
अपि वा गार्हपत्यादेवान्वाहार्यपचनमादधाति
प्रजापतिरग्निमसृजत सोऽबिभेत्प्र मा धक्ष्यतीति तस्य त्रेधा महिमानं
व्यौहच्छान्त्या अप्रदाहायेत्येतस्माद्ब्राह्मणादथैनमुपतिष्ठत इमा उ
मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी
मध्ये वसोर्दीदिहि जातवेद इत्यथैतेनैव यथेतमेत्याभ्यादधातीध्मं प्रणयनीयं

तं तथाभ्यादधाति यथा मन्यतेऽर्धोदिते सूर्य आहवनीय आधीयमानः संपत्स्यत इति

तस्य तथा संपद्यत उपोपयमनीः कल्पयन्त्यश्व एष पूर्ववाट पल्पूलितः पुरस्तात्तिष्ठत्यथोद्गातारमाह वामदेव्यं ब्रूहीत्यथैनमुद्यच्छत ओजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे । सपत्नतूरसि वृत्रतूः ॥ यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः । पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि ॥ दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः । यत्रयत्र जातवेदः संबभूथ ततो नो अग्ने जुषमाण एहीतीयत्यग्रे हरत्यथेयत्यथेयत्यधोऽधः शिरो हरतीति ब्राह्मणम्
आददान एवैता मात्रा अभिसंपादयेदित्येतदपरम्
अश्वं पूर्वं नयन्ति
तमनुमन्त्रयते प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पद इति
विषुवत्युपरमन्ति विक्रमस्व महाँ असि वेदिषन्मानुषेभ्यस्त्रिषु लोकेषु जागृहीत्यथोपातियन्त्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततानेत्यथैतेनाश्वेन प्राचोत्तरतः पार्श्वतः संभाराणामाक्रमयति यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्नित्यथैनं प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदञ्चमुत्सृजति स एषोऽध्वर्योर्भवत्यन्यं ब्रह्मणे ददात्यथ प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयति यदिदं दिवो यददः पृथिव्याः संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाः शम्भूः प्रजाभ्यस्तनुवे स्योनः ॥ प्राणं त्वामृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्या इत्य्
अथोद्गातारमाह बृहद्रारवन्तीयँ श्यैतमिति गायेति
सर्वाणि संप्रेष्यति
बृहति गीयमान आहवनीयमादधाति भूर्भुवः सुवरर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः शुक्रं ज्योतिरजस्रं तेन मे दीदिहि तेन त्वादधेऽग्निनाग्ने ब्रह्मणा अमीषां त्वा देवानां व्रतपते व्रतेनादधामीति
यथर्षि यथागोत्रं गायत्रेण छन्दसेत्युत्तरतो हिरण्यशल्कमुपास्यति स्वया

तनुवा संभवेत्यथैतँ राजतं वृषलाय वाज्ञाताय
वातिप्रयच्छत्यार्तिमेवातिप्रयच्छतीति ब्राह्मणम्
अथैनमुपतिष्ठत आनशे व्यानशे सर्वमायुर्व्यानश इत्यत्रैतावग्नी आदधाति
सभ्यं चावसथीयं च
रथचक्रं प्रवर्तयति संततं गार्हपत्यादाहवनीयात्  १७

सर्वौषधेन व्याहृतीभिरग्नीञ्छमयित्वा पञ्चपञ्च नानावृक्ष्याः
समिधोऽभ्यज्याभिदधाति समिध्यमानः प्रथमो नु धर्म इत्येताभिः
पञ्चभिरायुर्दा अग्ने हविषो जुषाण इत्येतामपोद्धृत्याथ प्रदक्षिणमावृत्य
प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यं तिष्ठँस्तनूभिरुपतिष्ठते ये ते अग्ने शिवे तनुवौ
विराट्च स्वराट्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ
सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ
विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम्। ये ते अग्ने शिवे तनुवौ
प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम्। यास्ते अग्ने
शिवास्तनुवस्ताभिस्त्वादध इति
सर्वाभिर्गार्हपत्यं सर्वाभिरन्वाहार्यपचनं सर्वाभिराहवनीयम्
अथ घोरास्तनूरनुदिशति यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेत्यत्र यं
यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य विराजक्रमैरुपतिष्ठते
नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते
सत्ये प्रतिष्ठितामिति गार्हपत्यम्
अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे । अदब्धायोऽशीततनो । अविषन्नः
पितुं कृणिवत्यन्वाहार्यपचनं शँस्य पशून्मे गोपाय । द्विपादो ये चतुष्पदः ।
अष्टाशफाश्च य इहाग्ने । ये चैकशफा आशुगा इत्याहवनीयं सप्रथ सभां मे
गोपाय । ये च सभ्याः सभासदः । तानिन्द्रियावतः कुरु ।
सर्वमायुरुपासतामिति सभ्यम्
अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयिविदा विदुः । ऋचः सामानि यजूँ
षि । सा हि श्रीरमृता सतामित्यावसथीयम्

अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा
समिद्वत्याहवनीये पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति

पूर्णाहुतौ वरं ददात्यथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण
गार्हपत्यमुपसादयति कूर्चे वा सूनायां वा स्थालीँ सस्रुवाँ स्रुचमभिद्योतनँ
समिधमित्यथैतामग्निहोत्रीं दक्षिणत उदीचीँ स्थापयित्वा ब्राह्मणो दोग्धि
पूर्वौ दुह्यादपरौ दुह्याद्न
संमृशेद्द्वयोर्दुह्यात्पशुकामस्येत्यधिश्रित्योत्तरमानयत्यथैतदग्निहोत्रमग्रेणाहवन
ीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्य
तस्मिन्नग्निहोत्रविधिं चेष्टित्वा समिधमुपयत्य प्राङ्हरति
जघनेनाहवनीयमुपसादयति कूर्चेऽत्रैताँ समिधं मध्यत
आहवनीयस्याभ्यादधाति तूष्णीं तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोत्युच्च
माष्टर्यव च माष्टर्युभयमवाप्नोतीति ब्राह्मणं द्विरङ्गुल्या प्राश्योदङ्पर्यावृत्य
प्राचीनदण्डया स्रुचा भक्षयति
निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्दिशति
सप्तर्षीनेव प्रीणातीति ब्राह्मणं हुत्वोपसमिन्द्धे ब्रह्मवर्चसस्य समिद्ध्ययपो
निनयत्यवभृथस्यैव रूपमकरिति ब्राह्मणम् १८

अथ परिकर्मिणं बर्हिर्लावं प्रहिणोत्याहृतं वा यजुषा करोत्यथ पृष्ठ्याँ
स्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वप्स्यन्दशहोतारं व्याचक्षीत
सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीत
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ
हविषोऽग्निर्मूर्धा भुव इति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्याग्न्याधेयदक्षिणा ददात्या द्वादशभ्यो ददाति
कामं भूयसीर्ददाति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम्
अथ तदानीमेव पृष्ठ्याँ स्तीर्त्वापः प्रणीयैन्द्राग्नमेकादशकपालं
निर्वपत्यादित्यं चरुं घृत एष चरुर्भवति
शृते नेदीयसि वाज्यमानयति
श्रपयित्वासादयति

तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ
हविषोरिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्यादितिर्न उरुष्यतु महीमू
षु मातरमित्यादित्यस्य
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्याथैतं चरुं व्युद्धृत्य चत्वार आर्षेयाः प्राश्नन्ति
दिशामेव ज्योतिषि जुहोतीति ब्राह्मणं संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम् १९

अत्रैतद्द्वादशाहं व्रतं चरति
तस्यैतद्व्रतं नानृतं वदति
न माँ समश्नाति
न स्त्रियमुपैति
नास्य पल्पूलनेन वासः पल्पूलयन्त्यमृन्मयपाय्यशूद्रोच्छिष्टी
स्वयं पादौ प्रक्षालयते

न लवणमश्नाति
न कौशीधान्यमन्यत्र तिलेभ्यः
प्राङ्चारः स्वयँ समिध आहरमाणोऽग्नीनामन्ते संविशत्यजस्रा अस्यैते
द्वादशाहमग्नयो भवन्ति
नास्य ब्राह्मणोऽनाश्वान्गृहे वसत्यग्निहोत्रोच्छेषणव्रतो वा यजमानो भवति
भक्तमु पत्नया आहरन्त्यथ द्वादशसु व्युष्टासु पृष्ठ्याँ स्तीर्त्वापः प्रणीयाग्नये
पवमानाय पुरोडाशमष्टाकपालं निर्वपति
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविषोऽग्न
आयूँ षि पवसेऽग्ने पवस्वेति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्य त्रिँ शन्मानँ हिरण्यं ददाति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम्
अथ तदानीमेव पृष्ठ्याँ स्तीर्त्वापः प्रणीयाग्नये पावकाय पुरोडाशमष्टाकपालं

निर्वपत्यग्नये शुचये
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविषोरग्ने
पावक स नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्य त्रिँशन्मानचत्वारिँशन्माने हिरण्ये ददाति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम् २०

अथातोऽन्वारम्भस्यैव मीमाँसान्वारम्भं पौर्णमास्याः समानोपवसथं
करोत्यथ प्रातर्हुतेऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय
स्रुचि चतुर्गृहीतं गृहीत्वा चतुर्होतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे
यजमाने स्वाहेत्य्
अपरं चतुर्गृहीतं गृहीत्वा सारस्वतौ होमौ जुहोति
पूर्णा पश्चादित्यनुद्रुत्याग्नीषोमविति जुहोत्यपरं चतुर्गृहीतं गृहीत्वा निवेशनी
संगमनी वसूनामित्यनुद्रुत्य यत्ते देवा अदधुर्भागधेयमिति जुहोत्यथ पृष्ठ्याँ
स्तीर्त्वापः प्रणीयाग्नावैश्णवमेकादशकपालं निर्वपति सरस्वत्यै चरुँ
सरस्वते द्वादशकपालमिति
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ
हविषामग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवः पीपिवाँसँसरस्वत स्तनं
ये ते सरस्व ऊर्मय इति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्य मिथुनौ गावौ ददाति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम्
अथ पौर्णमासवैमृधाभ्यां यजते
संतिष्ठतेऽग्न्याधेयँ संतिष्ठतेऽग्न्याधेयम् २१

अग्नीन्पुनराधास्यमानो भवति
तदाहुः कृतयजुः संभृतसंभारो भवति न संभृत्याः संभारा न यजुः कर्तव्यमित्यथो खलु संभृत्या एव संभाराः कर्तव्यं यजुः पुनराधेयस्य समृद्ध्या इति
स उपकल्पयते पुनर्निष्कृतँ रथं पुनरुत्स्यूतं वासः पुनरुत्सृष्टमनड्वाहं दर्भकुलायं तिस्रो दर्भमयीर्विसूर्मिकाः
प्रज्ञाता आग्न्याधेयिकाः संभाराः
सा याषाढ्याः पौर्णमास्याः पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्याँ संपद्यते तस्यामादधीतेति
तस्या उपवसथेऽरण्योरग्नीन्समारोह्योदवसाय
मथित्वाग्नीन्विहृत्याग्नेयमष्टाकपालं निर्वपति वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ तदानीमेवाद्भिरग्नीन्समुन्द्य ब्रह्मौदनँ श्रपयित्वोपवसत्यथ प्रातराग्न्याधेयिकं कर्म तायत एतावदेव नाना
यदमुत्र मुञ्जकुलायं तदिह दर्भकुलायं योऽमुत्रेध्मः प्रणयनीयः स इह दर्भमयीर्विसूर्मिका
दर्भैर्गार्हपत्यमादधाति दर्भैरन्वाहार्यपचनं दर्भैराहवनीयं
दर्भैर्गार्हपत्यमादधात्याधाने सर्पराज्ञीर्ऋचोऽनुवर्तयति १

भूमिर्भूम्ना द्यौर्वरिणेति चतस्रो गार्हपत्ये तिस्र आहवनीये

समानं कर्मा रथचक्रादेतावदेव नाना
यदमुत्र तूष्णीमग्निहोत्रं तदिह सप्त ते अग्ने समिधः सप्त जिह्वा इति जुहोति
योऽमुत्राग्नेयोऽष्टाकपालः स इहाग्नेयः पञ्चकपालस्
तस्य प्रयाजेषु चतस्रो विभक्तीर्दधात्यग्न आयाहि वीतये समिधो अग्न आज्यस्य वियन्त्वग्निं दूतं वृणीमहे तनूनपादग्न आज्यस्य वेत्वग्निनाग्निः समिध्यत इडो अग्न आज्यस्य वियन्त्वग्निर्वृत्राणि जङ्घनद्बर्हिरग्न आज्यस्य वेत्विति
स्वयँ संपन्न उत्तमः प्रयाजोऽथात आज्यभागयोरेव मीमाँसा
वार्त्रघ्नावाज्यभागौ स्यातामित्येके

वृधन्वन्तावाज्यभागौ स्यातामित्येकेऽग्निँ स्तोमेन बोधय त्वं नः सोमेत्येतौ स्यातामित्येकेऽग्न आयूँषि पवसेऽग्ने पवस्वेत्येतौ स्यातामित्येके यत्पवमानं तत्सोमरूपम्पङ्क्त्यौ हविषोऽग्ने तमद्याधा ह्यग्न इत्यथ पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोत्यग्निं प्रति स्विष्टकृतं निराहाभिष्टे अद्य एभिर्नो अर्कैरिति संयाज्ये
अन्वाहार्यमासाद्य २

पुनराधेयदक्षिणा ददाति पुनर्निष्कृतँ रथं पुनरुत्स्यूतं वासः पुनरुत्सृष्टमनड्वाहं तस्यानूयाजेषु विभक्ती दधात्यग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः । भसन्नु ष प्र पूर्व्य इषं वुरीतावसे । देवं बर्हिर्वसुवने वसुधेयस्य वेत्वग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवो देवो नराशँसो वसुवने वसुधेयस्य वेत्विति

स्वयँ संपन्न उत्तमोऽनूयाजः
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम्
अथ तदानीमेव पृष्ठ्याँ स्तीर्त्वापः
प्रणीयाग्निवारुणमेकादशकपालमनुनिर्वपति
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविषस्त्वं नो अग्ने स त्वं नो अग्न इति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्यानड्वाहं ददाति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतं संतिष्ठते पुनराधेयम्
इति न्वृद्धिपुनराधेयम्
अथ वै भवति
यः पराचीनं पुनराधेयादग्निमादधीत स एतान्होमाञ्जुहुयादिति
तृतीयमाधान आग्नेयस्य पञ्चकपालस्य पुरस्तात्स्विष्टकृतः
स्रुवाहुतीरुपजुहोति लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा

वियन्तु स्वाहा । केतः सकेतः सुकेतस्ते न ग्रादित्या ग्राज्यं जुषाणा वियन्तु स्वाहा । विवस्वाँ ग्रदितिर्देवजूतिस्ते न ग्रादित्या ग्राज्यं जुषाणा वियन्तु स्वाहेति
संतिष्ठते तृतीयमाधानम्
ग्रथापहृताग्नेर्नष्टारणीकस्य च ब्रह्मौदनेनैव प्रतिपद्यते

सिद्धमग्न्याधेयम् ३

पुरस्तादित्यस्यास्तमयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धरति सायमाहुतये
पुरस्तादित्यस्योदयाद्गार्हपत्यमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धरति प्रातराहुतये
वाचा त्वा होत्रा प्राणेनोद्गात्रा चत्नुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाँश्चकार । ग्रह्ना यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति सायं रात्रिया यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातर्
ग्रग्निं निदधात्यमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयानन्तं काममितो जयेम प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहेति सायं सूर्यमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहेति प्रातः
सायंप्रातरेवैषा पत्न्यन्वास्ते
सायँ सायमित्येकेऽथैतान्यग्निहोत्रपात्राणि प्रज्ञालितान्युत्तरेण गार्हपत्यमुपसादयति कूर्चे वा सूनायां वा स्थालीं सस्नुवाँ स्नुचमभिद्योतनँ समिधमित्यथैतामग्निहोत्रीं दत्तिणत उदीचीँ स्थापयित्वा ब्राह्मणो दोग्धि

पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीः स्यादपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वा बुभूषेद्न
संमृशेद्द्वयोर्दुह्यात्पशुकामस्येत्यधिश्रित्योत्तरमानयत्यथैतदग्निहोत्रमग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमुपसाद्याथ परिषिञ्चति ४

ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति
सत्यं त्वर्तेन परिषिञ्चामीति प्रातरेवमेव हुत्वा परिषिञ्चत्यथ प्रदक्षिणमावृत्य प्रत्यङङाद्रुत्य जघनेन गार्हपत्यमुपविश्योदीचोऽङ्गारान्निरूह्य व्यन्तान्कृत्वा तेष्वधिश्रित्याभिद्योतनेनाभिद्योतयत्यग्निस्ते तेजो मा प्रतिधाक्षीदिति
स्रुवेणापः प्रत्यानयत्यमृतमसीति
पुनरेवाभिद्योत्य त्रिः पर्यग्नि करोत्यन्तरितँ रक्षोऽन्तरिता अरातय इति
वर्त्म कुर्वन्नुदगुद्वास्य प्रत्यूह्याङ्गारानादत्ते दक्षिणेन स्रुवँ समिधं च सव्येनाग्निहोत्रहवणीं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति
गार्हपत्ये प्रतितपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातय इति त्रिरथ कूर्चे स्रुचं निधाय यजमानमामन्त्रयत ओमुन्नेष्यामीत्योमुन्नयेति यजमानोऽनुजानात्यथ चतुरः स्रुवानुन्नयति पूर्णान्वानूचो वा भूरिडा भुव इडा सुवरिडा भूर्भुवः सुवरिडेति
स्थाल्याँ स्रुवं प्रत्यवधायाथैने संमृशति सजूर्देवैः सायंयावभिः सायंयावानो मा देवाः स्वस्ति संपारयन्तु पशुभिसिति सायं
सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति संपारयन्तु पशुभिरिति प्रातर्
अत्रैताँ समिधँ स्रुग्दण्ड उपसंगृह्य जघनेन गार्हपत्यमुपसादयति कूर्चे नम ईशानाय प्रजाः पशवो मे वर्धन्तामहं यजमानो मा रिषमिति
दशहोत्रोद्द्रुत्य प्राङ्हरति भूर्भुवः सुवरुर्वन्तरिक्षमन्विह्ययं पन्था विततो देवयानो येनायन्नृषयः स्वर्गकामास्तेन गच्छामि परमं व्योम यथा न हीये सुकृताँ सकाशादिति
जघनेनाहवनीयमुपसादयति कूर्चे नम ईशानाय प्रजा मे वर्धतामहं यजमानो मा रिषमित्यत्रैताँ समिधं मध्यत आहवनीयस्याभ्यादधाति ५

रजतां त्वाग्निज्योतिषं वायुमतीँ स्वर्ग्याँ स्वर्गाय लोकाय रात्रिमक्षितिमिष्टकामुपदधेऽमृतं प्राणे दधामि प्रजापतिस्त्वा सादयत्विति तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमँ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति सायम्

अथ प्रातर्हरिणीं त्वा सूर्यज्योतिषं वायुमतीँ स्वग्याँ स्वर्गाय
लोकायाहरन्तीतिमिष्टकामुपदधेऽमृतमपाने दधामि प्रजापतिस्त्वा सादयदि-
ति
तयादेवतं कृत्वा सूददोहसं करोति
तस्यामादीप्तायां प्रतिमुखं जुहोत्यग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति सायं
सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्
इति नु सँसृष्टम्
अथासँसृष्टमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं सूर्यो ज्योतिर्ज्योतिः सूर्यः
स्वाहेति प्रातर्
अथ सकृदतिवाल्य कूर्चे स्रुचं निधाय दक्षिणावृद्गार्हपत्यं प्रतीक्षत उपप्रेत
संगच्छध्वं मा भागिनां भागधेयं प्रमायि । सप्तर्षीणाँ सुकृताम्यत्र लोकस्तत्रेमं
यज्ञं यजमानं च धत्तेत्यतिहाय पूर्वामाहुतिमुत्तरां भूयः समिध्येव जुहोति
प्रजापतये स्वाहेति मनसाथ त्रिरतिवाल्य कूर्चे स्रुचं
निधायावाचीनमवमृज्य प्रतीचा नीचा पाणिनौषधीषु लेपं
निमार्ष्ट्योषधीभ्यस्त्वौषधीर्जिन्वेत्येवमेव द्वितीयमवमृज्यौषधीष्वेव
निमार्ष्टि दक्षिणतः प्राचीनावीती पितृभ्यस्त्वा पितॄञ्जिन्वेति सायम्
अथ प्रातरूर्ध्वमुन्मृज्य प्राचोत्तानेन पाणिनौषधीषु
लेपमुन्मार्ष्ट्योषधीभ्यस्त्वौषधीर्जिन्वेत्
एवमेव द्वितीयमवमृज्यौषधीष्वेव निमार्ष्टि दक्षिणतः प्राचीनावीती
पितृभ्यस्त्वा पितॄञ्जिन्वेत्यथाप उपस्पृश्य द्विरङ्गुल्या प्राश्नाति प्रजा
ज्योतिरित्यथोदङ्पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयति ६

इदँ हविः प्रजननं मे अस्तु दशवीरँ सर्वगणँ सवस्तये । आत्मसनि प्रजासनि
पशुसन्यभयसनि लोकसनि वृष्टिसनि ॥ अग्निः प्रजां बहुलां मे करोत्वन्नं
पयो रेतो अस्मासु धत्त । रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति सायं
सूर्यः प्रजां बहुलां मे करोत्विति प्रातर्
निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्दिशति सप्तर्षीन्प्रीणीहि सप्तर्षीञ्जिन्व
सप्तर्षिभ्यः स्वाहेति
सप्तर्षीनेव प्रीणातीति ब्राह्मणम्
अथ जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरेऽमृतं जुहोमि

स्वाहेत्यन्नित्यामन्निताहुतिं जुहोमि स्वाहेत्यन्तर्वेदि निनयति
हुत्वोपसमिन्द्धे ब्रह्मवर्चसस्य समिद्ध्यपो निनयत्यवभृथस्यैव
रूपमकरिति ब्राह्मणम् ७

अथ सायँ हुतेऽग्निहोत्रे यज्ञोपवीत्यप आचम्य यजमानायतने
तिष्ठन्नाहवनीयमुपतिष्ठत उपप्रयन्तो अध्वरमिति षड्भिरनुच्छन्दसं
षड्भिरेवोत्तराभिराग्निपावमानीभिराहवनीयमेवोपतिष्ठतेऽग्न आयूँ षि
पवसेऽग्ने पवस्वाग्ने पावक स नः पावकाग्निः शुचिव्रततम उदग्ने
शुचयस्तवेत्
अथाहवनीयमेवोपतिष्ठत आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो
मे देहि तनूपा अग्नेऽसि तनुवं मे पाह्यग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्यथ
रात्रिमुपतिष्ठते चित्रावसो स्वस्ति ते पारमशीयेत्यथाहवनीये
समिधमादधातीन्धानास्त्वा शतँ हिमा द्युमन्तः समिधीमहि वयस्वन्तो
वयस्कृतं यशस्वन्तो यशस्कृतं सुवीरासो अदाभ्यम्। अग्ने
सपत्नदम्भनम्वर्षिष्ठे अधि नाके स्वाहेत्यथाहवनीयमेवोपतिष्ठते सं त्वमग्ने
सूर्यस्य वर्चसागथाः समृषीणाँ स्तुतेन सं प्रियेण धाम्ना ॥ त्वमग्ने सूर्यवर्चा
असि सं मामायुषा वर्चसा प्रजया सृजेत्यथ वै भवति
यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य
परस्तादाग्निपावमानीभिरुपतिष्ठत इति
स संवत्सरस्य परस्तादाग्निपावमानीभिर्गार्हपत्यमुपतिष्ठते
पुनर्नवमेवैनमजरं करोतीति ब्राह्मणम्
अथ गृहाँश्च पशूँश्चोपतिष्ठते संपश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा
भवन्तु नो गृहे ॥ अम्भ स्थाम्भो वो भक्षीय मह स्थ महो वो भक्षीय सह स्थ
सहो वो भक्षीयोर्ज स्थोर्जं वो भक्षीय । रेवती
रमध्वमस्मिन्लोकेऽस्मिन्गोष्ठेऽस्मिन्क्षयेऽस्मिन्योनाविहैव स्तेतो माप गात
बह्वीर्मे भूयास्तेत्
अथाग्निहोत्रियै वत्समभिमृशति सँहितासि विश्वरूपीरा मोर्जा विशा
गौपत्येना रायस्पोषेण । सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्तामित्यथ
द्विपदत्रिपदाभिर्गार्हपत्यमुपतिष्ठत उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया
वयम्। नमो भरन्त एमसि ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम्।

वर्धमानँ स्वे दमे ॥ स नः पितेव सूनवे अग्ने सूपायनो भव । सचस्वा अः स्वस्तये ॥ अग्ने त्वं नो अन्तम उत त्राता शिवो भव वरूथ्यः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दा इत्यथ गृहाँश्चैव पशूँश्चैवोपतिष्ठते ८

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडा स्थ मधुकृतः स्योना मा विशतेरा मदः । सहस्रपोषं वः पुष्यासम्मयि वो रायः श्रयन्तामित्यथाहवनीयमुपतिष्ठते तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादित्याहवनीयमेवोपतिष्ठते सोमानँ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजमित्यथ रात्रिमुपतिष्ठते कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत इत्यथ गार्हपत्यमुपतिष्ठते परि त्वाग्ने पुरं वयं विप्रँ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावत इत्
अथ गार्हपत्यमेवोपतिष्ठतेऽग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतँ हिमास्तामाशिषमाशासे मह्यममुष्मै ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मा अमुष्मा इति
यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्ततोऽथ वै भवति
यो वा अग्निं प्रत्यङ्ङुपतिष्ठते प्रत्येनमोषति यः पराङ्विष्वङ्प्रजया पशुभिरेति कवातिर्यङ्ङिवोपतिष्ठेतेति
स कवातिर्यङ्ङिवोपतिष्ठते नैव प्रत्यङ्न पराङ् ९

पिण्डपितृयज्ञं करिष्यन्नुपकल्पयते सकृदाछिन्नं बर्हिर्दर्भाँश्च परिस्तरणीयान्व्रीहीँश्च शूर्पं च प्रक्षालिते चोलूखलमुसले स्थालीँ स्रुवाँ समेक्षणामेरकोपबर्हणे आञ्जनाभ्यञ्जने दशाँ स्फ्यमुदकुम्भं यज्ञायुधानीत्यथान्वाहार्यपचनं परिस्तृणाति
तमुत्तरेणैकैकँ सँसादयत्येरकोपबर्हणे आञ्जनाभ्यञ्जने दशाँ स्फ्यमुदकुम्भं यज्ञायुधानीत्यथ प्राचीनावीतं कृत्वा जघनेनान्वाहार्यपचनमुपविश्य पवित्रवत्याँ स्थाल्यां व्रीहीन्निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति वा तूष्णीं वोपर्यधाँ स्थालीं कृत्वैतस्मिन्नेव चर्मण्युलूखलमुसले निधायावहन्ति सकृदेव दक्षिणामुखोऽथैनानविविच्याथैतस्यामेव स्थाल्यां तिरः पवित्रमप

आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपत्य्
अथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्नि कृत्वा मेक्षणँ स्रुवं च संमात्रृष्टत्र्यथैतं चरुँ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथ यज्ञोपवीतं कृत्वान्वाहार्यपचनमुपसमाधाय मेक्षणेनोपघातं तिस्र आहुतीर्जुहोति सोमाय पितृपीताय स्वधा नमः स्वाहा यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहाग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेति दक्षिणार्धपूर्वार्धे तूष्णीं मेक्षणमभ्याधाय प्राचीनावीतं कृत्वा दक्षिणेनान्वाहार्यपचनँ स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हि स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहामार्जयन्तां प्रपितामहा इत्यथ स्रुवेणोपस्तीर्णाभिघारिताँ स्त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये च त्वामन्वित्यत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ्पर्यावृत्योष्मणो व्यावृत उपास्ते
व्यावृत्त ऊष्मेति प्राहुरथाभिपर्यात्रृत्यैतं चरुमवजिघ्रति १०

ये समानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्॥ ये सजाताः समनसो जीवा जीवेषु मामकाः । तेषाँ श्रीर्मयि कल्पतामस्मिँ लोके शतँ समा इत्यथ तथैवाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहामार्जयन्तां प्रपितामहा इत्यथाञ्जनं ददात्याञ्जतां पितर आञ्जतां पितामहा आञ्जतां प्रपितामहेत्यथाभ्यञ्जनं ददात्यभ्यञ्जतां पितरोऽभ्यञ्जतां पितामहा अभ्यञ्जतां प्रपितामहा इत्य्
अथ वासाँ सि ददात्येतानि वः पितरो वासाँ स्येतानि वः पितामहा वासाँ स्येतानि वः प्रपितामहा वासाँ सीत्युत्तर आयुषि लोम छिन्दीतेति ब्राह्मणम्
अथ षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठते नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिँ लोके स्थ युष्माँ स्तेऽनु येऽस्मिँ लोके मां तेऽनु य एतस्मिँ लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँ लोकेऽहं तेषां वसिष्ठो भूयासमित्यथ वीरं याचते वीरं मे पितरो दत्त वीरं मे पितामहा दत्त वीरम्मे प्रपितामहा दत्त पितृमानहं युष्माभिर्भूयासँसुप्रजसो मया यूयं भूयास्तेत्यथैनानुत्थापयत्युत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुयाता पुराणम्। धत्तादस्मासु द्रविणं यच्च भद्रम्प्र णो

ब्रूताद्भागधान्देवतास्वित्यथैनान्सँसाधयति यन्तु पितरो यथालोकं मनसा जवेन परेत पितरः सोम्यास्गम्भीरैः पथिभिः पूर्व्यैः । अथा पितॄन्त्सुविदत्राँ पीत यमेन ये सधमादं मदन्तीत्यथ तिसृभिर्मन आह्वयते मनो न्वाहुवामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यत्रैतान्पिण्डान्सह बर्हिषाग्नावनुप्रहरत्यथैतेषाँ शस्त्राणां द्वेद्वे उदाहरन्त्यथ यज्ञोपवीतं कृत्वा प्राजापत्यअयर्चा गार्हपत्यमुपतिष्ठते प्रजापते न त्वदेतान्यन्य इत्
अत्रैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति
संतिष्ठते पिण्डपितृयज्ञः ११

वर्षासु श्यामाकानामाग्रयणं करिष्यन्भवति
तस्य प्रज्ञात उपवसथोऽथ प्रातर्हुतेऽग्निहोत्रे पृष्ठ्याँस्तीर्त्वापः प्रणीय सौम्यँ श्यामाकं चरुं निर्वपति
हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीयेऽज्यानीर्जुहोति शतायुधाय शतवीर्यायेति पञ्च
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविष
आप्यायस्व सं त इति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्य वासो ददात्यथ यजमानभागं प्राश्नात्यग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतम्
अथ शरदि व्रीहीणामाग्रयणं करिष्यन्भवति
तस्य प्रज्ञात उपवसथोऽथ प्रातर्हुतेऽग्निहोत्रे पृष्ठ्याँस्तीर्त्वापः प्रणीयैन्द्राग्नं द्वादशकपालं निर्वपति वैश्वदेवं चरुं द्यावापृथिव्यमेककपालमिति
हविष्वृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृःतं गृहीत्वाहवनीयेऽज्यानीर्जुहोति शतायुधाय शतवीर्यायेति पञ्च
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ
हविषामिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य

विश्वे देवा विश्वे देवा इति वैश्वदेवस्य

द्यावा नः पृथिवी प्र पूर्वजे पितरेति द्यावापृथिव्यस्य
त्रिष्टुभौ संयाजे
अन्वाहार्यमासाद्य प्रथमजं वत्सं ददात्यथ यजमानभागं प्राश्नाति भद्रान्नः
श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा । स नो मयोभूः पितो आ
विशस्व शं तोकाय तनुवे स्योन इति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतम्
अथ वसन्ते यवानामाग्रयणं करिष्यन्भवति
तस्य प्रज्ञात उपवसथः
समानं कर्म यथा व्रीह्याग्रयणस्यैतावदेव नानाथ यजमानभागं प्राश्नात्येतमु
त्यं मधुना संयुतं यवँ सरस्वत्या अधि मनावचर्कृषुः । इन्द्र आसीत्सीरपतिः
शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति
संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतम्  १२

अग्निभ्यः प्रवत्स्यन्यज्ञोपवीत्यप आचम्याग्रेणाहवनीयं परीत्य यजमानायतने
तिष्ठन्नाहवनीयमुपतिष्ठते मम नाम प्रथमं जातवेदः पिता मात च दधतुर्यदग्रे
। तत्त्वं बिभृहि पुनरा मदैतोस्तवाहं नाम बिभ्राण्यग्न इत्यथ
वाचंयमोऽभिप्रव्रजत्यग्नीनामसकाशे वाचं विसृजते
सोऽधःसंवेश्यमाँसाश्य स्त्र्युपायी प्रवसति
न द्वादशीमतिप्रवसति
नोपवसथमुपात्येत्यायन्प्रपथे समिधः कुरुतेऽग्नीन्पराख्याय वाचं
यच्छत्याहवनीयमेवोपतिष्ठते मम नाम तव च जातवेदो वाससी इव
विवसानौ ये चरावः । आयुषे त्वं जीवसे वयं यथायथं विपरिदधावहै
पुनस्त इत्य्
अथ गार्हपत्यमुपतिष्ठते नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे ।
अषाढो अग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्व
इत्यथान्वाहार्यपचनमुपतिष्ठते त्वत्पितारो अग्ने
देवास्त्वामाहुतयस्त्वद्विवाचनाः । सं मामायुष सं नौपत्येन सुहिते मा धा
इत्यथाहवनीयमुपतिष्ठते   १३

अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयँ सहस्रसातमः । अस्मा अस्तु सुवीर्यमिति
स यद्यस्मै यज्ञभ्रेषमाचक्षते न तेऽहौषीदिति तद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोति मनो ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति
शरावं दक्षिणां ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथातिपन्नाः प्रतिजुहोत्येतेन ह स्म वै पूर्वे श्रोत्रिया ऋतायवस्तेजस्कामा यशस्कामा ब्रह्मवर्चसकामा उपतिष्ठन्ते
तदेतदुत्सन्नं व्रतस्यैव गरिम्णाथातो वैराजमेवोपस्थानं नर्य प्रजां मे गोपायेति गार्हपत्यम्
अथर्व पितुं मे गोपायेत्यन्वाहार्यपचनं शँस्य पशून्मे गोपायेत्याहवनीयं सप्रथ सभां मे गोपायेति सभ्यम्
अहे बुध्निय मन्त्रं मे गोपायेत्यावसथीयं सोऽपरिमितं प्रवसति पुनरायन्प्रपथे समिधः कुरुतेऽग्नीन्पराख्याय वाचं यच्छत्यागत्यैतेनैवोपतिष्ठते समानी प्रायश्चित्तिः १४

अथोपवसथीयेऽहन्यज्ञोपवीत्यप आचम्याग्रेणाहवनीयं परीत्य यजमानायतन उपविश्य तिरः पवित्रमप आचामति पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजेत्यथाहवनीये समिध आदधात्यग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताँ स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताँ स्वाहेत्यथ श्वो भूते हविर्निरुप्यमाणमभिमन्त्रयतेऽग्निँ होतारमिह तँ हुवे देवान्यज्ञियानिह यान्हवामहे । आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्येति तदुदित्वा वाचं यच्छत्या हविष्कृतो हविष्कृता वाचं विसृज्य यज्ञं योगेन युनक्ति कस्त्वा युनक्ति स त्वा युनक्त्विति
काले कपालानि युनक्ति यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू युङ्क्तामिति

तेषां यजुष्कृतानां यद्भिद्यते तदुत्कर उदस्यत्यभिन्नो घर्मो जीरदानुर्यत
आत्तस्तदगन्पुनरित्य्
अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं
जुहोतीध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसंचरन्ति । त्रयस्त्रिँ शत्तन्तवो
ये वितत्निरे य इमं यज्ञँ स्वधया ददन्ते तेषां धिन्नं प्रत्येतद्दधामि
स्वाहेत्यथान्यदपिसृजति घर्मो देवाँ अप्येत्वित्यथ वै भवति
यदि नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालमिति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ तथैव गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि
चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोतीध्मो वेदिः परिधयश्च सर्वे
यज्ञस्यायुरनुसंचरन्ति । त्रयस्त्रिँ शत्तन्तवो ये वितत्निरे य इमं यज्ञँ स्वधया
ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहेत्यथान्यदपिसृजति घर्मो देवाँ
अप्येत्वित्यथ यद्याज्यस्य वा सांनाय्यस्य वान्यत्र बर्हिषः
पुरोत्तमात्प्रयाजात्स्कन्दति तस्य स्वधाँ संभरति   १५

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च । बृहस्पतिप्रसूतो यजमान इह मा
रिषदिति
स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेत्यथ
यावत्परिशिष्टेन प्रचरत्यथ यजमानमाज्यमवेक्षयत्याजयमसि सत्यमसि
सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मँ सत्यौजाः सहोऽसि
सहमानमसि सहस्वारातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व
पृतन्यतः सहस्रवीर्यमसि तन्मा जिन्वाज्यस्याज्यमसि सत्यस्य सत्यमसि
सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाभिघारयामि तस्य ते भक्षीयेत्य्
अथाज्यग्रहाणां गृहीतंगृहीतमनुमन्त्रयते पञ्चानां त्वा वातानां यन्त्राय धर्त्राय
गृह्णामि पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि पञ्चनां त्वा दिशां यन्त्राय
धर्त्राय गृह्णामि पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति चतुर्भिर्जुहूम्
अष्टाभिरुपभृतं चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि ब्रह्मणस्त्वा
तेजसे यन्त्राय धर्त्राय गृह्णामि क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि विशे
त्वा यन्त्राय धर्त्राय गृह्णामि सुवीर्याय त्वा गृह्णामि सुप्रजास्त्वाय त्वा
गृह्णामि रायस्पोषाय त्वा गृह्णामि ब्रह्मवर्चसाय त्वा गृह्णामीति
चतुर्भिर्ध्रुवाम्भूरस्माकँ हविर्देवानामाशिषो यजमानस्य देवानां त्वा

देवताभ्यो गृह्णामीत्यभिपूर्यमाणामनुमन्त्रयते कामाय त्वा गृह्णामीति
परिधीन्परिधीयमानाननुमन्त्रयते ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासं धीरश्चेत्ता
वसुविदिति मध्यम्
उग्रोऽस्युग्रोऽहँ सजातेषु भूयासमुग्रश्चेत्ता वसुविदिति दक्षिणम्
अभिभूरस्यभिभूरहँ सजातेषु भूयासमभिभूश्चेत्ता वसुविदित्युत्तरम्

अथाग्निं योगेन युनक्ति युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे
जातवेद इति
समिधोरभ्याधीयमानयोर्जपतीन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम
बलिहृतो वयं त इत्यथान्तर्वेदि हवीँष्यासन्नान्यभिमन्त्रयते यन्मे अग्ने अस्य
यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो । तेन हन्मि सपत्नं दुर्मरायुमैनं
दधामि निर्ऋत्या उपस्थ इति १६

अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेद्यज्ञमुखं वा अग्निहोत्रं
ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते
संवत्सरे पर्यागत एताभिरेवोपसादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति
ब्राह्मणम्
अथ वै भवति
दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवीँष्यासादयेद्यज्ञमुखं वै
दर्शपूर्णमासौ ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते
संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति
ब्राह्मणम्
अथ वै भवति
चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीँष्यासादयेद्यज्ञमुखं वै
चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते
संवत्सरे पर्यागत एताभिरेवासादयेद्ब्रह्मणैवोभयतः संवत्सरं परिगृह्णातीति
ब्राह्मणम्
अथ वै भवति
यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं यज्ञस्याशीर्गच्छति यदृचा विशं
यज्ञस्याशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते

सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद्ब्रह्मैव प्रतिपदं कुरुते
तथा ब्रामणः साशीर्केण यज्ञेन यजत इति ब्राह्मणम्

अथ वै भवति
यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याशीर्गच्छेदिति तस्यैता व्याहृतीः
पुरोऽनुवाक्यायां दध्याद्भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या
भ्रातृव्यमेवास्य यज्ञस्याशीर्गच्छतीति ब्राह्मणम्
अथ वै भवति
यान्कामयेत यजमानान्त्समावत्येनान्यज्ञस्याशीर्गच्छेदिति तेषामेता व्याहृतीः
पुरोऽनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च
एकां
तथैनान्त्समावती यज्ञस्याशीर्गच्छतीति ब्राह्मणम्
अथ वै भवति
यथा वै पर्जन्यः सुवृष्टः वर्षत्येवं यज्ञो यजमानाय वर्षति
स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परिगृह्णातीति
ब्राह्मणम्व्याहृतीभिर्ब्राह्मणस्य प्रतिपद्यते हिङ्कारेण राजन्यस्यर्चा वैश्यस्य
सर्वमेवैतत्त्रयं कुर्यादित्येतदपरम्
इध्ममभ्याधीयमानमनुमन्त्रयते १७

उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्ध मन्विद्ध
मन्द्रजिह्वेति
प्रवरं प्रव्रियमाणमनुमन्त्रयतेऽमर्त्यस्य ते होतर्मूर्धन्नाजिघर्मि रायस्पोषाय
सुप्रजास्त्वाय सुवीर्यायेति
स्रुवेणाघारमाघार्यमाणमनुमन्त्रयते मनोऽसि प्रजापत्यं मनसा मा
भूतेनाविशेति
स्रुच्यमाघारमाघार्यमाणमनुमन्त्रयते वागस्यैन्द्री सपत्नक्षयणी वाचा
मेन्द्रियेणाविशेति
प्रयाजानामिष्टमिष्टमनुमन्त्रयते वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु
ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु वर्षा ऋतूनां प्रीणामि ता मा प्रीताः
प्रीणन्तु शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु हेमन्तशिशिरावृतूनां

प्रीणामि तौ मा प्रीतौ प्रीणीतामित्य्
आज्यभागाविष्टावनुमन्त्रयतेऽग्नीषोमयोरहं देवयज्यया
चक्षुष्मान्भूयासमित्यग्निमिष्टमनुमन्त्रयतेऽग्नेरहं देवयज्ययान्नादो
भूयासमित्युपाँशुयाजमिष्टमनुमन्त्रयते दब्धिरस्यदब्धो भूयासममुं
दभेयमित्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप
उपस्पृश्याग्नीषोमाविष्टावनुमन्त्रयतेऽग्नीषोमयोरहं देवयज्यया वृत्रहा
भूयासमितीन्द्राग्नी इष्टावनुमन्त्रयत इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो
भूयासमितीन्द्रमिष्टमनुमन्त्रयत इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासमिति
महेन्द्रमिष्टमनुमन्त्रयते महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमिति
स्विष्टकृतमिष्टमनुमन्त्रयतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान्यज्ञेन प्रतिष्ठां
गमेयमिति
प्राशित्रेऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशँसादिति
यजमानभागे यो मेऽन्ति दूरेऽरातीयति तमेतेन
जेषमितीडामाह्रियमाणामनुमन्त्रयते सुरूपवर्षवर्ण एहीति प्रतिपद्य
मघोनीत्यातोऽवान्तरेडां प्राश्यमानामनुमन्त्रयते जुष्टिरसि जुषस्व नो जुष्टा
नोऽसि जुष्टिं ते गमेयमित्यथान्तर्वेद्यद्भिर्माजयते मनो
ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो
विश्वे देवा इह मादयन्तामिति

बर्हिषदं पुरोडाशमभिमन्त्रयते ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे
मोपदसदित्यथान्वाहार्यं याचति
तमन्तर्वेद्यासन्नमभिमन्त्रयते
प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वानित्यान्तादनुवाकस्य १८

अनूयाजानामिष्टमिष्टमनुमन्त्रयते बर्हिषोऽहं देवयज्यया प्रजावान्भूयासं
नराशँसस्याहं देवयज्यया पशुमान्भूयासमग्नेः स्विष्टकृतोऽहं
देवयज्ययायुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्यथ यत्र होतुरभिजानात्यग्निरिदं
हविरजुषतेति तद्यजमानमुज्जितिं वाचयत्यग्नेरहमुज्जितिमनूज्जेषमिति यथेष्टम्
उक्तं वाजवत्योर्व्यूहनम्
अथ यत्र होतुरभिजानात्याशास्तेऽयं यजमानोऽसविति तद्यजमानं यज्ञस्य

दोहं वाचयत्येमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषमिति
प्रस्तरं प्रह्रियमाणमनुमन्त्रयते रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयत्विति
परिधीन्विमुच्यमानाननुमन्त्रयते वि ते मुञ्चामि रशना वि रश्मीन्वि योक्त्रा यानि परिचर्तनानि । धत्तादस्मासु द्रविणं यच्च भद्रम्प्र णो ब्रूताद्भागधान्देवतास्विति
शंयुवाकमुक्तमनुमन्त्रयते विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति

पत्नीसंयाजानामिष्टमिष्टमनुमन्त्रयते १९

सोमस्याहं देवयज्यया सुरेता रेतो धिषीय त्वष्टुरहं देवयज्यया पशूनाँ रूपं पुषेयमित्यथेतरावुपसमस्यति देवानां पत्वीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासमिति
वेदे यजमानं वाचयति वेदोऽसि वित्तिरसि विदेयेत्यान्तादनुवाकस्य
ध्रुवामाप्याय्यमानामनुमन्त्रयत आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्नित्यथ यजमानभागं प्राश्नाति प्रजापतेर्विभान्नाम लोकस्तस्मिँस्त्वा दधामि सह यजमानेनेति सं यज्ञपतिराशिषेति वात्रैतत्पूर्णपात्रं याचति
तमन्तर्वेदि निधाय पूर्णपात्रे यजमानं वाचयति सदसि सन्मे भूयाः सर्वस्मसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठा इत्यथ दिशो व्युन्नयति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां दक्षिणायां दिशि मासाः पितरो मार्जयन्तां प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तामुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तामूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामित्यथैना निनयति समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासम्मा परासेचि मत्पय इत्य्
अथोपोत्थाय दक्षिणेन पदा विष्णुक्रमान्क्रमते २०

विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं तृतीये चतुर्थमनुवर्तयति
न चतुर्थाय प्रक्रामति
नाहवनीयमुपात्येत्यथात्रैव तिष्ठन्नाहवनीयमुपतिष्ठतेऽगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मावृक्षीत्यथादित्यमुपतिष्ठते सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीत्यथैभ्यो लोकेभ्यो भ्रातृव्यं निर्भजतीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्म इत्यथाप उपस्पृश्य
सं ज्योतिषाभुवमित्युरः प्रत्यात्मानं प्रत्यभिमृशतेऽथ दक्षिणमँ समभि पर्यावर्ततेऽइन्द्रीमावृतमन्वावर्त इत्यथोदङ्पर्यावर्तते समहं प्रजया सं मया प्रजा समहँ रायस्पोषेण सं मया रयस्पोष इत्यथाहवनीये समिधमादधाति समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासँस्वाहेत्यथाहवनीयमुपतिष्ठते वसुमान्यज्ञो वसीयान्भूयासमित्यथाग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठतेऽग्न आयूँ षि पवसेऽग्ने पवस्वेत्यथ गार्हपत्यमेवोपतिष्ठतेऽग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतँ हिमास्तामाशिषमाशसे मह्यममुष्मै ज्योतिष्मतीं तामाशिषमाशसेऽमुष्मा अमुष्मा इति

यावन्तोऽस्य पुत्रा जाता भवन्ति तन्तव इत्यन्ततः २१

अथ वै भवति
यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति
कस्त्वा युनक्ति स त्वा विमुञ्चत्विति
काले कपालानि विमुञ्चति यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतामित्यथैतेनैव यथेतमेत्य यजमानायतन उपविश्य तथैव तिरः पवित्रमप आचामति पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजेत्यथाहवनीये समिध आदधात्यग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि

स्वाहेत्यथोपोत्थाय यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माँ अधिपतीन्करोतु वयँ स्याम पतयो रयीणामित्यथ प्राङुत्क्रम्य जपति गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः । इडावाँ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावानित्यथ ब्राह्मणाँस्तर्पयितवा इति संप्रेष्यति २२

ब्रह्मत्वं करिष्यन्यज्ञोपवीत्यप आचम्याग्रेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्ब्रह्मसदनमुपतिष्ठते नमो ब्रह्मणे नमो ब्रह्मसदनायेत्यथासनात्तृणं निरस्यत्यहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इत्युपविशत्युन्निवत उदुद्वतश्च गेषमित्यथेमे समीक्षते पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति भूर्भुवः सुवः क इदं ब्रह्मा भविष्यति स इदं ब्रह्मा भविष्यति प्राणः प्रजापतियुक्तोऽहं युज्ये ब्रह्मणार्वेव वाजी सुधुर इव वह्निर्बलीवर्द इव युक्तो हव्यं वक्ष्याम्यहं देवताभ्यो भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्ये ब्रह्म प्रपद्ये क्षत्रं प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं प्रपद्येऽनार्तां देवतां वाचं प्रपद्य ओं प्रपद्य इति
तं यजमानो ब्रह्माणं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे वीतहव्ये पुरोहितं येनायन्नुत्तमँ सुवर्देवा अङ्गिरसो दिवमिति वृतो ब्रह्मा जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि ब्रह्माणं मावृथा वीतहव्ये पुरोहितं येनायन्नुत्तमँ सुवर्देवा अङ्गिरसो दिवं देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवः सुवर्बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणाम्बृहस्पते यज्ञं गोपायेति
स यत्राह ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति तद्ब्रह्मा प्रसौति २३

देव सवितः प्रणय यज्ञं देवता वर्धयैता नाकस्य पृष्ठे सुवर्गे लोके यजमानो अस्तु । सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योंं प्रणयेति स वाचंयमो भवति प्रणीतासु प्रणीयमानास्वा हविष्कृतः

सांनाय्ये दोह्यमान आ ततो यदाह बहु दुग्धीन्द्राय देवेभ्यो हव्यमिति
महेन्द्रायेति वा यदि महेन्द्रयाजी भवत्यधिवपने वाचं यच्छत्या
कपालोपधानात्
संवपने वाचं यच्छत्या समभिवासनात्
स्तम्बयजुषि ह्रियमाण आ प्रोक्षणीनामासादनात्
स यत्राह ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति तद्ब्रह्मा प्रसौति बृहस्पते
परिगृहाण वेदिं ब्रह्मणा यज्ञं परिगृह्णीहीमम्। सप्तर्षीणाँ सुकृतां यत्र
लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों परिगृहाणेत्याज्येषु गृह्यमाणेषु वाचं
यच्छत्या ध्रुवासादनात्
सामिधेनीष्वनूच्यमानास्वा प्रवरादनूक्तायां पुरोऽनुवाक्यायामा वषट्कारात्
प्राशित्रेऽवदीयमान आ प्रसवात्
परिहरन्त्यस्मा एतत्प्राशित्रमग्रेणाहवनीयं तदाह्रियमाणं प्रतिपश्यति २४

सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्यथैनदुभाभ्याँ हस्ताभ्यां प्रतिगृह्णाति
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीत्य्
अथैनत्सादयति पृथिव्यास्त्वा नाभौ सादयामीत्यथैनदवेक्षते सुपर्णस्य त्वा
गरुत्मतश्चक्षुषावेक्ष इत्यथैनदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्यातिहाय दतः
पूर्वं जिह्वाग्रे निदधात्यग्नेस्त्वास्येन प्राश्नामीति
प्राश्याप आचम्य सहाद्भिरवगिरति ब्राह्मणस्योदरेण
बृहस्पतेर्ब्रह्मणेत्यथाद्भिर्मार्जयित्वा प्राणान्संमृशते वाङ्म आसन्नसोः
प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि
तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिँसीरिति
मयि प्राणा मयि प्राणा इति वाहृतं ब्रह्मभागं प्राशित्रहरणे
निदधात्यथान्वाहार्यं याचति
तमन्तर्वेद्यासन्नमभिमन्त्रयते २५

ब्रह्मन्ब्रह्मासि नमस्ते ब्रह्मन्ब्रह्मणे पाहि मामहुताद्य सर्वो मह्यं हुतो
भवेत्यथास्य यावन्मात्रमवदाय प्राशित्रहरणे निदधाति श्रीरस्येहि
मामभ्यन्नवानन्नादो भूयासमित्यथैनमग्रेण स्रुच उदञ्चं नीयमानमनुमन्त्रयते
यज्ञो दिवँ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाँ

अप्येत्विति
स यत्राह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीति
तद्ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत्प्र च सुव प्रच यज बृहस्पतिर्ब्रह्मा
स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति
प्रचरतेति प्रवर्ग्ये
सोऽत्रैवास्त आ समिष्टयजुषो होमाद्धुते
समिष्टयजुष्युपोत्थायाहवनीयमुपतिष्ठतेऽयाडग्रज्ञँ हविषो जातवेदा अदब्धो
अन्ततः पूर्वो अस्मिन्निषद्य । सन्वन्सनिँ सुविमुचा नो विमुञ्च धेह्यस्मासु
द्रविणं जातवेदो यच्च भद्रमिति

स एतेनैव ब्रह्मा भवति दर्शपूर्णमासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य
सौत्रामण्या इति  २६

हवीँष्यासाद्य होतारमामन्त्रयते
स यज्ञोपवीत्यप आचम्य हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयँ शक्त्यै
वाँ सुकृताय वामित्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो
नो अग्निरित्यथान्तरेण वेद्युत्करौ प्रपद्यते सत्यं प्रपद्य ऋतं प्रपद्येऽमृतं प्रपद्ये
प्रजापतेः प्रियां तनुवमनार्तां प्रपद्य इदमहं पञ्चदशेन वज्रेण द्विषन्तं
भ्रातृव्यमवक्रामामि योऽस्मान्द्वेष्टि यं च वयं द्विष्मो भूर्भुवः सुवर्विष्णो स्थाने
तिष्ठामीति
दक्षिणेन प्रपदेनोत्तरं वेद्यन्तमवक्रम्य तिष्ठति
यदा जानात्यग्नये समिध्यमानायानुब्रूहीति तदेदँ हौत्रं जपति कं प्रपद्ये तं
प्रपद्ये यत्ते प्रजापते शरणं छन्दस्तत्प्रपद्ये यावत्ते विष्णो वेद तावते
करिष्यामि देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि नमोऽग्नय उपद्रष्ट्रे
नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे जुष्टामद्य देवेभ्यो वाचमुद्यासं
शुश्रूषेण्यां मनुष्येभ्यः स्वधावतीं पितृभ्यः प्रतिष्ठां विश्वस्मै भूताय भूर्भुवः
सुवः प्रशास्त आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्ये अभयं मे अस्तु
प्राजापत्यमनुवक्ष्यामि वाचं प्रपद्ये वागार्त्विज्यं करिष्यति यशसे त्वा
द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वा यज्ञो यज्ञाय महि शर्म यच्छतामित्
अत्र त्रिरभिहिङ्कृत्यानवानमभि हिङ्कारादृचमुपसंदधाति

प्र वो वाजा अभिद्यव इति त्रिः प्रथमामन्वाह
त्रिरुत्तमां सर्वा अर्धर्चशोऽपानित्यनूक्तासु सामिधेनीषु देवता आवाह्य भूमौ
प्रादेशं कृत्वोपविशतीदमहं गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना
वषट्कारेण वज्रेण द्विषन्तं भ्रातृव्यमवबाधेऽवबाढो द्विषन्निति
स आहवनीयं प्रेक्षमाण आस्ते प्रणीता वोभयं वान्तरेण
नेति वेति वा वीक्षतेऽनप्रगल्भो हास्माज्जायते
यदा जानात्यग्निर्देवो होतेत्येतज्जपति देव सवितरेतं त्वा वृणतेऽग्निहोत्राय
सह पित्रा वैश्वानरेणेत्यथोपोत्थाय दक्षिणेन हस्तेन
दक्षिणेऽँसेऽध्वर्युमन्वारभते सव्येन दक्षिणेऽँस आग्नीध्रं
यद्यु वै स्वयं प्रत्याश्रावयेन्नीविदेश एनं दक्षिणस्याँ
श्रोण्यामन्वारभेताग्निमन्वारभामहे होतृवूर्ये पुरोहितम्। येनायन्नुत्तमँ स्वर्देवा
अङ्गिरसो दिवम्॥ देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु
त्रिरेकादशा अनुसँरभध्वमित्यथाध्वर्यवे नाम प्रब्रूतेऽथ दक्षिणमँ समभि
पर्यावर्ततेऽइन्द्रीमावृतमन्वावर्त इत्यथ होतृषदनमभिव्रजञ्जपति २७

षण्मोर्वीरँ हसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्च ता मा रक्षन्तु
ता मा गोपायन्तु ताभ्यो नम इत्यथासमात्तृणं निरस्यति शुष्कं वा
प्रतिच्छिन्नाग्रं वा दक्षिणायै च सन्धिमनु प्रतीच्यै च निरस्तः
परावसुरित्यथाप उपस्पृश्योपस्तीर्योपविशतीदमहमर्वावसोः सदने
सीदामीति दक्षिणोत्तर्यथ दक्षिणावृद्गार्हपत्यं प्रतीक्षते विश्वकर्मँ स्तनूपा असि
तनुवं मे पाहीत्युभौ समीक्षत आहवनीयं चाग्नाविष्णू मा
वामवक्रमिषमोजोऽशिष्टम्विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ
कृणुतमित्येष वां लोक इति मनागिवोदङ्सर्पत्यथ तिस्र ऋचो जपति विश्वे
देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं
यथा वो येन पथा हव्यमा वो वहानि ॥ तदद्य वाचः प्रथमं मसीय येनासुराँ
अभि देवा असाम । ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम्॥
नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः । यजाम
देवान्यदि शक्नवाम मा ज्यायसः शँ समा वृक्षि देवा इत्य्
अथ स्रुगादापनेन स्रुचावादाप्य यथादेवतँ हविषो यजत्यथ
वषट्काराणामनुमन्त्रणो वषट्कार मा मे प्रवृणमो अहं त्वां बृहता मन

उपह्वये मातरिश्वना प्राणान्न मे वाचं हव्यं देवेभ्योऽभिवहाम्योजः सहः सह
ओजो वागिति
यद्यु वा अभ्यग्रा वषट्काराः स्युरेतावतैवानुमन्त्रयत ओजः सह ओजो
वागित्यथ होतुर्द्विरङ्गुलावनक्ति
यत्पूर्वाक्तं तदुत्तरोष्ठे प्रोहति वाचस्पतये त्वा हुतं प्राश्नामीषे प्राणायेति
सदसस्पतये त्वा हुतं प्राश्नाम्यूर्जेऽपानायेत्यधरोष्ठेऽपोहत्य्
अथाप उपस्पृश्य चतुरवान्तरेडामवदापयतेऽप्रसृतेन पाणिनासमस्तेनेडां
मुखसंमितामुपह्वयते २८

उपहूतँ रथन्तरँ सह पृथिव्या सहाग्निना सहान्नाद्येन सह वाचोप मा रथन्तरँ
सह पृथिव्या सहाग्निना सहान्नाद्येन सह वाचा ह्वयताम्
उपहूतं वामदेव्यँ सहान्तरिक्षेण सह वायुना सह प्राणेन सह पशुभिरुप मा
वामदेव्यँ सहान्तरिक्षेण सह वायुना सह प्राणेन सह पशुभिर्ह्वयताम्
उपहूतं बृहत्सह दिवा सहादित्येन सह चक्षुषोप मा बृहत्सह दिवा
सहादित्येन सह चक्षुषा ह्वयताम्
उपहूतँ स्थास्नु भुवनमुप मा स्थास्नु भुवनँ ह्वयताम्
उपहूतं चरिष्णु हुवनमुप मा चरिष्णु भुवनं ह्वयताम्
उपहूताः सप्त होत्रा उप मा सप्त होत्रा ह्वयन्ताम्
उपहूता गावः सहाशिरोप मा धेनुः सहर्षभा ह्वयताम्
उपहूता धेनुः सहर्षभोप मा धेनुः सहर्षभा ह्वयताम्
उपहूतेडा वृष्तिरुप मामिडा वृष्टिर्ह्वयताम्
उपहूतो भक्षः सखोप मा भक्षः सखा ह्वयताम्

उपहूताइँ हो इडोपहूता हे सासि जुषस्व मेड इत्युपाँ
शूक्त्वोच्चैर्निरुक्तामुपह्वयते
स यदि सर्वां प्राशिष्यन्स्यात्पाणौ कृतानि प्राश्य चमसादेव प्राश्नीयादथ
यदि दित्सेद्वा निधित्सेत वा पुरोडाशशकलमवच्छिद्यैव प्राश्नीयादिडासि
स्योनासि स्योनकृत्सा नो रायस्पोषे सुप्रजास्त्वे धार्मुखस्य त्वा द्युम्नाय
सुरभ्यास्यत्वाय प्राश्नामीति
प्राश्याप आचम्य प्राचीं वोदीचीं वोदकराजिं निनयति तूष्णीमिति न्वे

वाज्यस्य वचोऽथाप्येतं जपं जपति मनो ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्तामित्यनूयाजानिष्ट्वा शंयुवाकमुक्त्वा बर्हिष्यञ्जलिं कृत्वा निह्नुते यज्ञ शं च म उप च मे प्रजापते यज्ञ यत्ते न्यूनं यदु तेऽतिरिक्तं कर्म प्रजापतौ यज्ञ तदित्य्
अथ दक्षिणार्धे वेद्यै वेदं निधाय यजमानं वाचयति २९

येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेनास्मभ्यं वेद एधि । वेदोऽसि वित्तिरसि विदेयाहं प्रजां पशून्स्वर्गं लोकम्। कर्मासि करुणमसि क्रियासमहं पुण्यं कर्म । सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनँ राय अस्पोषँ सहस्रिणं वेदो ददातु वाजिनमिति पत्नीसंयाजानिष्ट्वा फलीकरहोमे हुते वेदे पत्नीं वाचयति वेदोऽसि वित्तिरसि विदेयाहमदः । कर्मासि करुणमसि क्रियासमहमदः सनिरसि सनितासि सनेयमहमदो घृतवन्तं कुलायिनँ रायस्पोषँ सहस्रिणं वेदो ददातु वाजिनमिति
विस्रस्य वेदमर्धानि पत्न्यै प्रयच्छति
तानि पत्न्यन्तरोरू वा न्यस्यति दक्षिणेन वोरुणपनिगृह्णीत
अथेतराणि प्राङावृत्त स्तृणन्नेति तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृताननुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनमित्यथ यान्यतिशिष्यन्ते तानि बर्हिषि संन्यस्यत्यापृणोऽसि संपृण प्रजया मा पशुभिरापृणेत्यथ यथाप्रपन्नं निष्क्रम्याग्रेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्नाहवनीयमुपतिष्ठतेऽयाडग्यज्ञँ हविषो जातवेदा अदब्धो अन्ततः पूर्वो अस्मिन्निषद्य । सन्वन्सनिँ सुविमुचा नो विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम्॥ एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा । उत प्रणेष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्या ॥ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अग्निरिन्द्रो बृहस्पतिर्विश्वे मुञ्चन्तु मरुतः स्वर्का इत्येते न्वेव जपा दर्शपूर्णमासयोरिष्टीनां चातुर्मास्यानां पशुबन्धस्य सौत्रामण्या इति ३०

अथ पशावुपधीयन्ते

यदा जानात्यग्नये मथ्यमानायानुब्रूहीति तदेते ऋचौ जपति यद्वो वयं प्रमिनाम व्रतानि ॥ यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजातीति मैत्रावरुणदण्डेऽध्वर्युर्यजमानं वाचयति त्वां गावोऽवृणत राज्याय त्वाँ हवन्त मरुतः स्वर्काः । वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनीति

तमग्रे गृहीत्वा मैत्रावुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीति
तँ स स्थूरतः प्रतिगृह्णाति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रतिगृह्णामीति दक्षिणोत्तर्यथैनमूर्ध्वमुन्माष्टर्यवक्रोऽविधुरो भूयासमिति
तमादाय संप्रेष्यति होता यक्षदग्निँ समिधा सुषमिधा समिद्धमितीध्मान्तं पशोः ३१

## चतुर्थः प्रश्नः

पशुना यक्ष्यमाणो भवति
स उपकल्पयते पौतुद्रवान्परिधीन्गुल्गुलु सुगन्धितेजनँ शुक्लामूर्णास्तुकां या पेत्वस्यान्तरा शृङ्गे द्वे रशने द्विगुणां च त्रिगुणां च द्वे वपाश्रपणी विशाखां चाविशाखां च हृदयशूलं कार्ष्मर्यमयान्परिधीनौदुम्बरं मैत्रावरुणदण्डं मुखेन संमितमिध्माबर्हिरिध्मं प्रणयनीयं प्लक्षशाखामिडसूनं यवान्यवमतीभ्यः सक्तून्सक्तुहोमाय पृषदाज्याय दधि हिरण्यमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा षड्ढोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीँ सस्रुवां बर्हिर्हिरण्यमुदपात्रं ह्वयन्ति तक्षाणँ सपरशुमाहैहि यजमानेति पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूप स्पष्टो भवति यत्र वा वेत्स्यन्मन्यते
स यः समे भूम्यै स्वाद्योने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठतेऽत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं

परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इत्यथैनमाज्येनानक्ति देवस्त्वा
सविता मध्वानक्त्वित्यूर्ध्वाग्रं बर्हिरनूच्छ्रयत्योषधे त्रायस्वैनमिति
स्वधितिना तिर्यञ्चं प्रहरति स्वधिते मैनँ हिँ सीरिति

यः प्रथमः शकलः परापतति तं प्रज्ञातं निदधाति
तमपरिभिन्दन्ननक्षमङ्गं वृश्चति
प्राञ्चं वोदञ्चं वा प्रयान्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा
हिँ सीः पृथिव्या संभवेत्यथाव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति
वनस्पते शतवल्शो विरोह स्वाहेति
सहस्रवल्शा वि वयँ रुहेमेत्यात्मानं प्रत्यभिमृशतेऽन्वग्रँ शाखाः प्रसूदयति
यं त्वायँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति
पञ्चारत्निं तस्मै वृश्चेदित्येष ब्राह्मणवतामवमस्
तं परिष्वङ्गपरमं प्रादेशावमं चषालस्य काले परिवासयत्यच्छिन्नो रायः
सुवीर इति
यत्परं भवति तस्य चतुरङ्गुलं चषालाय प्रच्छेदयति
तं चतुरश्रिं वाष्टाश्रिं वा कृत्वा वा हरत्या वा हारयत्योह्य
निस्तिष्ठत्यवतक्षणानामेव स्वरुं कुरुतेऽथास्यैषा पूर्वेद्युरेव पशुबन्धिकी
वेदिर्विमिता भवति दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा
पुरस्तात्तिरश्ची
तां परिस्तीर्य स्तम्बयजुर्हरति १

इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथ याचति स्फ्यमुदपात्रं बर्हिः शम्यामित्
एतत्समादायाहैहि यजमानेत्युत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु
स्फ्येनोद्धत्यावोक्ष्य शम्यया चात्वालं परिमिमीते
वित्तायनी मेऽसीति पुरस्तादुचीचीनकुम्बयान्तरत स्फ्येनालिखति
तिक्तायनी मेऽसीति दक्षिणतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा
नाथितमिति पश्चादुदीचीनकुम्बयान्तरत स्फ्येनालिखत्यवतान्मा
व्यथितमित्युत्तरतः प्राचीनकुम्बयान्तरत स्फ्येनालिखत्यथ चात्वाले

बर्हिर्निधाय तस्मिन्स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां
पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति
हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति
द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्यां
पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति
हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति
तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्यां
पृथिव्यामसीत्यादत्त आयुषा नाम्नेहीति
हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति
तूष्णीं चतुर्थँ हरति सह बर्हिषाथाध्वर्यु स्फ्येन
चात्वालात्पुरीषमुद्धन्त्यथाग्नीध्रमाहाग्नीदितस्त्रिर्हरेति
ततस्त्रिराग्नीध्रो हरति
यदाग्नीध्रस्त्रिर्हरत्यथाध्वर्युरुत्तरवेद्यै पुरीषँ संप्रयौति सिँहीरसि महिषीरसीति
प्रथयत्युरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति
स्फ्येन सँहन्ति ध्रुवासीत्यथैनामद्भिरवोक्षति
देवेभ्यः शुन्धस्वेति देवेभ्यः शुम्भस्वेति सिकताभिरनुप्रकिरति
तां प्रादेशमात्रीं चतुरश्रां निष्ठाय शम्यया परिमिमीत

उत्तरनाभिमुत्साद्याथैनां प्रतिच्छाद्याभ्रिमादत्ते देवस्य त्वा सवितुः
प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयतेऽभ्रिरसि
नारिरसीति
तया यूपावटं परिलिखति यथान्तर्वेद्यर्धँ स्याद्बहिर्वेद्यर्धम्परिलिखितँ रक्षः
परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्द्वेष्टि यं च
वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामीत्यथाग्नीध्रमाहाग्नीदेहीमं यूपावटं
खनोपरसंमितं प्राक्पुरीषमुद्वपताद्चतुरङ्गुलेनोपरमतिखनतादिति
तँ स खनति वा खानयति वा
यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाताभ्यादधातीध्मं प्रणयनीयम्
उपोपयमनीः कल्पयन्ति चात्वालाद्
आत्मनेन्द्रघोषवतीः प्रोक्षणीरध्वर्युरादत्ते
परिकर्मिणे पञ्चगृहीतमाज्यं प्रयच्छति

ब्रह्मणि संभारा भवन्त्यथ संप्रैषमाहाग्नये
प्रणीयमानायानुब्रूह्यग्नीदेकस्फ्ययानुसंधेहीति
त्रिरुक्तायामुद्यच्छन्ते
होतुर्वशं यन्त्युत्तरेण वेदिं प्रतिपद्यन्ते
धारयन्त्येतमग्निम्
अथाध्वर्युरिन्द्रघोषवतीभिः प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति २

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विति पुरस्तान्
मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः
प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति पश्चाद्
विश्वकर्मा त्वादित्यैरुत्तरतः पात्वित्युत्तरतोऽथ यत्प्रोक्षणीनामुच्छिष्यते
तद्दक्षिणत उत्तरवेद्यै निनयति
यदेव तत्र क्रूरं तत्तेन शमयतीति ब्राह्मणम्

अथैनाँ हिरण्यमन्तर्धायाद्दण्या पञ्चगृहीतेन व्याघारयति
सिँहीरसि सपत्नसाही स्वाहेति दक्षिणेऽँसे
सिँहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याँ श्रोण्यां सिँहीरसि रायस्पोषवनिः
स्वाहेति दक्षिणस्याँ श्रोण्यां सिँहीरस्यादित्यवनिः स्वाहेत्युत्तरेऽँसे
सिँहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्येऽथ भूतेभ्यस्त्वेति
स्रुचमुद्गृह्णात्यथ पौतुद्रवान्परिधीन्परिदधाति
विश्वायुरसि पृथिवीं दृँहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृँहेति दक्षिणम्
अच्युतक्षिदसि दिवं दृँहेत्युत्तरम्
अथातिशिष्टान्संभारान्निवपति गुल्गुलु सुगन्धितेजनँ
शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीत्यथैनान्सँस्त्रावेणाभिघारयत्यथ
प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयति यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा
वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन
जरितारमङ्ग्धीत्यथैनं विस्त्रस्याहुतिषाहं कृत्वाध्वराहुतिभिरभिजुहोत्यग्निर्यज्ञं
नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं तिर
स्वाहा ॥
वायुर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं

तिर स्वाहा ॥
सूर्यो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं तिर स्वाहा ॥
यज्ञो यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन्। देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं तिर स्वाहेत्य्
अथैता यजमान एव स्वयं जुहोत्यग्निरन्नादोऽन्नपतिरन्नस्येशे स मेऽन्नं ददातु स्वाहा । वायुः प्राणदाः प्राणस्येशे स मे प्राणं ददातु स्वाहा । आदित्यो भूरिदा भूयिष्ठानां पशूनामीशे स मे भूयिष्ठान्पशून्ददातु स्वाहेत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह
प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवँ स्वधितिँ स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवँ स्वधितिँ स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धमाज्यानि गृहीत्वा
पृषदाज्यग्रहण्यामुपस्तृणीते महीनां पयोऽसीति
विश्वेषां देवानां तनूसिति द्वितीयम्बर्हिषी अन्तर्धाय दध्यानयत्यृध्यासमद्य
पृषतीनां ग्रहं पृषतीनां ग्रहोऽसीत्यपोद्धृत्य बर्हिषी अथाभिघारयति
विष्णोर्हृदयमसीत्येकमिष विष्णुस्त्वानु विचक्रम इति द्वितीयम् ३

अथ प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृह्णाति

पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य
कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति
विधृती तिरश्ची सादयति
विधृत्योः प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरा एता असदन्निति समभिमृश्य
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः
प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीँ सस्रुवाँ स्वरुरशनं मैत्रावरुणदण्डं यूपशकलँ हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रक्षालयति यत्ते शिक्वः परावधीत्तक्षा

हस्तेन वास्या । आपस्ते तद्वनस्पतेऽपनुदन्तु शुन्धनीरिति
यूप एष प्रक्षालितः प्रपन्नः संपन्नचषालः प्रागवटादुपशेते
तमुत्तरेणाहवनीयं तिष्ठन्पराञ्चं प्रोक्षति पृथिव्यै त्वान्तरिक्षाय त्वा दिवे
त्वेत्यवटेऽपोऽवनयति शुन्धतां लोकः पितृषदन इति
यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति
बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणाँ सदनमसीत्य्यूपशकलमवास्यति
स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य
वित्तादित्यथादत्त आज्यस्थालीँ सस्रुवाँ स्वरुरशनं
मैत्रावरुणदण्डमुदपात्रमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची
पत्न्यग्रेण यूपं परीत्य दक्षिणत उदङ्मुखास्तिष्ठन्ति पूर्व एवाध्वर्युरपरो
यजमानोऽपरा पत्नी

अथ प्रवृह्य चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वानक्त्वित्यन्तरतश्च
बाह्यतश्च
स्वभ्यक्तं कृत्वा चषालं प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यथ
स्रुवेणाग्निष्ठामश्रिमभिघारयन्नाह यूपायाज्यमानायानुब्रूहीत्यान्तमनक्त्यान्तमेव
यजमानं तेजसानक्ति
नोपरमनक्ति
पत्न्युपरमनक्ति
सर्वतः परिमृशत्यपरिवर्गमेवास्मिन्तेजो दधातीति ब्राह्मणम्
उच्छ्रयन्नाहोच्छ्रीयमाणायानुब्रूहीत्युच्छ्रयत्युद्दिवँ स्तभानान्तरिक्षं पृण
पृथिवीमुपरेण दृँहेत्यथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि विष्णोः
कर्माणि पश्यतेति द्वाभ्यां स यत्राग्निष्ठामश्रिमाहवनीयेन संपादयति
तद्ध्रुवस्य चषालं परेक्षयति तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततमित्यथैनं प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिँ
सुप्रजावनिँ रायस्पोषवनिं पर्यूहामीति
मैत्रावरुणदण्डेन सँहन्ति ब्रह्म दृँह क्षत्रं दृँह प्रजां दृँह रायस्पोषं
दृँहेत्यन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथैतां त्रिगुणाँ रशनां त्रिः
संभुज्य मध्यमेन गुणेन नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहीति
त्रिः प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमँ

रायस्पोषो यजमानं मनुष्या इत्युपान्ते व्यतिषजत्यान्तं प्रवेष्टयत्यणिमति
स्थविमत्प्रवयत्यथोत्तरेणाग्निष्ठामश्रिं मध्यमे गुणे स्वरुमवगूहत्यन्तरिक्षस्य
त्वा सानाववगूहामीति
स्वर्वन्तं यूपमुत्सृजति ४

अथैतं पशुं पल्पूलितमन्तरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं
पुरस्तात्प्रत्यङ्मुखमुपस्थापयति
तमिषे त्वेति बर्हिषी आदायोपाकरोत्युपवीरस्युपो देवान्दैवीर्विशः
प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु
रण्व रेवती रमध्वम्प्रजापतेर्जायमाना इमं पशुं पशुपते ते अद्येन्द्राग्निभ्यां त्वा
जुष्टमुपाकरोमीति
यद्देवत्यो वा भवति
प्रज्ञाते बर्हिषी निधायाधिमन्थनँ शकलं निदधात्यग्नेर्जनित्रमसीति
वृषणावन्वञ्चौ वृषणौ स्थ इत्यथारणी आदत्त उर्वश्यस्यायुरसि पुरूरवा
इत्यथैते आज्यस्थाल्याँ समनक्ति घृतेनाक्ते वृषणं दधाथामित्यथ
प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्रजायस्व त्रैष्टुभं छन्दोऽनु प्रजायस्व जागतं
छन्दोऽनु प्रजायस्वेत्यथाहाग्नये मथ्यमानायानुब्रूहीति
जात आह जातायानुब्रूहीति
प्रहरन्नाह प्रह्रियमाणायानुब्रूहीति
प्रहरति भवतं नः समनसविति
प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यथ रशनामादत्ते देवस्य त्वा
सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति
तयाक्ष्णया पशुमभिदधाति दक्षिणमध्यर्धशीर्षमृतस्य त्वा देवहविः
पाशेनारभ इति
द्विगुणायै च त्रिगुणायै चान्तौ संदधाति धर्षा मानुषानिति
नियुनक्त्यथैनमद्भिः प्रोक्षत्यद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति
यद्देवत्यो वा भवति
पाययत्यपां पेरुरसीति

स्वात्तं चित्सदेवँ हव्यमापो देवीः स्वदतैनमित्युपरिष्टात्प्रोक्ष्याधस्तादुपोक्षति

सर्वत एवैनं मेध्यं करोतीति ब्राह्मणम्
उदूह्य प्रोक्षणीधानम् ५

अथेध्मात्समिधमाददान आहाग्नये
समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मम्परि समिधँ शिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति
संमृष्टे स्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा पशुँ समनक्ति
सं ते प्राणो वायुना गच्छतामिति ललाटे
सं यजत्रैरङ्गानीति ककुदि
सं यज्ञपतिराशिषेति दक्षिणस्याँ श्रोण्याम्
अथ यथायतनँ स्रुचौ सादयित्वा प्रवरं प्रवृणीते
प्रसिद्धँ होतारं वृणीतेऽथाश्रावयत्यो श्रावयास्तु श्रौषड्मित्रावरुणौ प्रशास्तारौ
प्रशास्त्रादित्यसौ मानुष इति मैत्रावरुणस्य नाम गृह्णात्यथाश्रावयति
यद्यत्रात्याश्रावयत्यो श्रावयास्तु श्रौषडग्निर्ह दैवीनां विशां पुरएतायं यजमानो
मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतँ हिमा द्वा यू राधाँ
सीत्संपृञ्चानावसंपृञ्चानौ तन्व इति
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिद्धः प्रेष्येति
वषट्कृते जुहोति प्रेष्य प्रेष्येति
चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वँ समानयते
परि स्वाहाकृतीभ्यः सँस्रावँ शिनष्टि
दश प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य स्वरुं च शासं च याचति

तौ जुह्वामङ्क्त्वा ताभ्यां पशुँ समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति
प्रयच्छति शासम्
अवगूहति स्वरुम्
अथ यथायतनँ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीत्यथैष
आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण

शामित्रदेशमग्रेण पशुं जघनेन स्रुच इत्येवं त्रिः प्रदक्षिणं
पर्येत्यथानुपरिसरणमपाव्यानि जुहोति प्रजानन्तः प्रतिगृह्णन्ति पूर्वे येषामीशे
पशुपतिः पशूनां ये बध्यमानमनु बध्यमाना य आरण्याः पशवो विश्वरूपाः
प्रमुञ्चमाना भुवनस्य रेत इति
निधायाग्नीध्र उल्मुकं यथेतं त्रिः पुनः प्रतिपर्येत्यथोल्मुकप्रथमाः
प्रतिपद्यन्तेऽन्वक्छमिता पशुना
पशुमध्वर्युर्वपाश्रपणीभ्यामन्वारभते
वपाश्रपणी यजमानोऽथाश्राव्य संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इत्यथैतं
पशुमन्तरेण चात्वालोत्करावुदञ्चं नीयमानमनुमन्त्रयते नाना प्राणो
यजमानस्य पशुना रेवतीर्यज्ञपतिं प्रियधा विशतेति द्वाभ्यां स यत्रैतदाग्नीध्र
उल्मुकं निदधाति तदग्रेण वोत्तरेण वा पशवे निहन्यमानाय बर्हिरुपास्यति
पृथिव्याः संपृचः पाहीति
तदेतं पशुं प्रतीचीनशिरसमुदीचीनपादं निघ्नन्त्यकृण्वन्तं मायुँ
संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसत इह प्रजा
विश्वरूपा रमन्तामस्मिन्यज्ञे विश्वविदो घृताचीः । अग्निं
कुलायमभिसंवसाना अस्माँ वन्तु पयसा घृतेनेति

संज्ञप्तं प्राहुर्
जुहोति संज्ञप्ताहुतिं यत्पशुर्मायुमकृतेत्यथाभ्यैति शमितार उपेतनेति
पाशात्पशुं प्रमुच्यमानमनुमन्त्रयतेऽदितिः पाशं
प्रमुमोक्त्वेतमित्यविशाखयोपसज्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि
यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशमित्यथ प्रतिप्रस्थाता
पत्नीमुदानयत्युदकमण्डलुमुत्थाप्याथैनामादित्यमुदीक्षयति नमस्त
आतानेत्यथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य
प्राचीमुदानयन्वाचयत्यनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह
रायस्पोषेणेत्यागतामध्वर्युरप्सु वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाँ
ऊढ्वं शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति
सानुपूर्वं पशोः प्राणानाप्याययति
वाक्त आप्यायतामिति वाचम्प्राणस्त आप्यायतामिति प्राणं चक्षुस्त
आप्यायतामिति चक्षुः

श्रोत्रं त आप्यायतामिति श्रोत्रम्
एतानेव पुनः संमृशति या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत्ते क्रूरं
यदास्थितं तत्त आ प्यायतां तत्त एतेन शुन्धतामिति
नाभिस्त आप्यायतामिति नाभिम्पायुस्त आप्यायतामिति पायुं संप्रगृह्य पदः
प्रक्षालयति शुद्धाश्चरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्या इति

शमहोभ्यामित्यतिशिष्टा दक्षिणतोऽनुपृष्ठं निनयति
नयन्ति पत्नीम्
उत्तानं पशुं पर्यस्यन्ति
तस्य दक्षिणस्य पार्श्वस्य विवृत्तमनु प्राचीनाग्रं बर्हिर्निदधात्योषधे
त्रायस्वैनमिति
स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनँ हिँसीरिति
छिनत्ति बर्हिर्वि त्वचं कृणत्त्यथैतस्यैव बर्हिषोऽणिमत्सचते
स्थविमदुभयतो लोहितेनाङ्क्त्वेमां दिशं निरस्यति रक्षसां भागोऽसीदमहँ
रक्षोऽधमं तमो नयामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो
नयामीत्यथाप उपस्पृश्य वरीय आच्छायेषे त्वेति वपामुत्खिदति
तया वपाश्रपणी प्रोर्णोति घृतेन द्यावापृथिवी
प्रोर्णवाथामित्यविशाखयोपतृद्याधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर
इत्यथैनां प्रदक्षिणमावृत्याद्भिरभ्युक्ष्य शामित्रे प्रतितपत्यथोल्मुकप्रथमाः
प्रतिपद्यन्ते ६

अन्वगध्वर्युर्वपयात्र वपाश्रपणी पुनरन्वारभते यजमान
ऐत्युर्वन्तरिक्षमन्विहीत्येत्याहवनीयस्यान्तमेष्वङ्गारेषु वपायै प्रतितप्यमानायै
बर्हिषोऽग्रमुपास्यति वायो वीहि स्तोकानामित्यथैनामन्तरेण यूपं चाहवनीयं
चोपातिहृत्य तां दक्षिणत उदङ्मुखः प्रतिप्रस्थाता श्रपयत्यथैनाँ
स्रुवाहुत्याभिजुहोति त्वामु ते दधिरे हव्यवाहमित्यथाह स्तोकेभ्योऽनुब्रूहीति
परिहितासु स्तोकीयासु शृतायां वपायां जुहूपभृतावादायात्याक्रम्याश्राव्याह
स्वाहाकृतीभ्यः प्रेष्येति

वषट्कृते जुहोत्यथोदङ्ङत्याक्रम्य सँस्रावेण पृषदाज्यमभिघार्य

वपामभिघारयत्यथोपस्तीर्य द्विः स्रुवेण वपाँ समवलुम्पन्नाहेन्द्राग्निभ्यां
छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहीति
द्विरभिघारयत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं
प्रेष्येत्यथ पुरस्तात्स्वाहाकृतिँ स्रुवाहुतिं जुहोति स्वाहा देवेभ्य इति
वषट्कृते वपां जुहोति जातवेदो वपया गच्छ देवान्त्वँ हि होता प्रथमो
बभूथ । घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतँ हविरदन्तु देवाः
स्वाहेत्यथोपरिष्टात्स्वाहाकृतिँ स्रुवाहुतिं जुहोति देवेभ्यः स्वाहेत्यत्र
वपाश्रपणी अनुप्रहरति प्राचीं विशाखां प्रतीचीमविशाखाँ स्वाहोर्ध्वनभसं
मारुतं गच्छतमित्यथैने सँस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनँ
स्रुचौ सादयित्वा समुत्क्रम्य चात्वाले मार्जयन्ते
ह्वयन्ति पत्नीँ ह्वयन्ति होतारँ ह्वयन्ति ब्रह्माणँ ह्वयन्ति प्रतिप्रस्थातारँ ह्वयन्ति
प्रशास्तारँ ह्वयन्त्याग्नीध्रमेहि यजमानेतीदमापः प्रवहतावद्यं च मलं च यत्।
यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम्॥ निर्मा मुञ्चामि शपथान्निर्मा
वरुणादुत । निर्मा यमस्य पड्बीशात्सर्वस्माद्देवकिल्बिषादथो
मनुष्यकिल्बिषादित्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः
सन्त्विति
तां दिशम्निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै
भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्य्
अथाप उपस्पृश्य यथायतनमुपविशन्ति ७

अथ संप्रैषमाहाग्नीत्पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं विशाधीति
निर्वपत्येष आग्नीध्र ऐन्द्राग्नमेकादशकपालम्
अथ प्रतिप्रस्थाता पशुं विशास्ति शमितर्हृदयं जिह्वां वक्षस्तानि सार्धं
कुरुतात्तनिम मतस्नौ तानि सार्धँ सव्यं दोरेकचरं कुरुताद्नाना पार्श्वे
अवधत्ताद्दक्षिणाँ श्रोणिमध्युद्धिं कुरुताद्दक्षिणं दोः सव्याँ श्रोणिमणिमद्गुदस्य
तानि त्र्यङ्गानि कुरुताद्वनिष्ठुं च जाघनीं चावधत्ताद्बहु यूः कुरुतात्त्रिः पशुं
प्रच्यावयतात्त्रिः प्रच्युतस्य पशोर्हृदयमुत्तमं कुरुतादिति
शृते पशौ पशुपुरोडाशं याचति
तमुपस्तीर्णाभिघारितमुद्वास्यान्तर्वेद्यासादयत्यथ जुहूपभृतोरुपस्तृणान
आहेन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीति

पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्त्यथोपभृति स्विष्टकृते सकृदुत्तरार्धादवद्यति
द्विरभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्येति
वषट्कृते जुहोत्यथ समावपमान आहाग्नयेऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य
यथायतनँ स्रुचौ सादयित्वा
प्राशित्रमवदायेडामवद्यत्युपहूतायामिडायामग्नीध आदधाति
षडवत्तम्प्राश्नन्ति
मार्जयन्त
अथ संप्रैषमाहाग्नीदुत्तरबर्हिरुपसादय प्रतिप्रस्थातः पशौ संवदस्वेत्यथैष
आग्नीध्रः प्लक्षशाखायामिडसूनमुपगूहति
तदुत्तरबर्हिर्भवत्यथ प्रतिप्रस्थाता पृषदाज्यं विहत्य जुह्वाँ समानीयान्तरेण
चात्वालोत्करावुदङ्ङुपनिष्क्रम्य पृच्छति शृतँ हवी३ः शमितरिति
शमितैष उत्तरतो हृदयशूलं धारयँ स्तिष्ठति
स शृतमिति प्रत्याह
तं तथैव द्वितीयमुत्क्रम्य पृच्छति
तं तथैवेतरः प्रत्याह
तं तथैव तृतीयमुत्क्रम्य पृच्छति
तं तथैवेतरः प्रत्याहाथ शमितुर्हृदयशूलमादाय तेन हृदयमुपतृद्य तं शमित्रे
संप्रदाय पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो
जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहेति
वियूः कृत्वा हरतेत्युक्त्वैतेनैव यथेतमेत्य चतसृषूपस्तृणीते
जुहूपभृतोरिडाधाने यस्मिँश्च वसाहोमं ग्रहीष्यन्भवत्याहरन्ति तं पशुमन्तरेण
चात्वालोत्करावन्तरेण यूपं चाहवनीयं चोपातिहृत्य तं दक्षिणतः
पञ्चहोत्रासादयत्येतेनैव यूराहरन्त्येतेनैवेडसूनम्
अथ प्लक्षशाखायाँ हृदयं निधाय स्वधितिना तस्याग्रेऽवद्यन्नाह ८

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति
हृदयस्यैवाग्रे द्विरवद्यत्यथ जिह्वाया अथ वक्षसोऽथ तनिम्नोऽथ वृक्ययोरथ

सव्यस्य दोष्णोऽथ दक्षिणस्य पार्श्वस्याथ सव्यस्याथ दक्षिणायै श्रोणेरध्युद्ध्यै त्रैधं गुदं कृत्वाणिमत्स्विष्टकृते निदधाति स्थविमदुपयड्भ्यो मध्यं द्वैधं कृत्वा जुह्वामवदधात्
अथ वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णोति
यूष्णोपसिञ्चत्यभिघारयत्यथोपभृति स्विष्टकृते सर्वेषां त्र्यङ्गाणाँ सकृत्सकृत्समवद्यति
सकृद्दक्षिणस्य दोष्णः पिशितं प्रच्छिद्यावदधाति सकृत्सव्यायै श्रोणेरणिमद्गुदस्याथ वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णोति
यूष्णोपसिञ्चति
द्विरभिघारयत्यथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ वनिष्ठुमिति पात्र्याँ समवधाय यूष्णोपसिञ्चत्यभिघारयत्यथ कँसे वा चमसे वा वसाहोमं गृह्णाति
यूष्णोपसिञ्चत्यभिघारयत्यथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे निदेध्यदैन्द्रोऽपानो अङ्गेअङ्गे विबोभुवद्देव त्वष्टर्भूरि ते संसमेतु विषुरूपा यत्सलक्ष्माणो भवथ । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्यथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुम्बतः श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्वातस्य त्वा ध्रज्यै पूष्णो रँह्या अपामोषधीनाँ रोहिष्या इति
संमृष्टस्य पशोः प्रतीचीं जाघनीँ हरन्ति
प्रतिपरिहरन्ति पशुम्
अथ जुहूपभृतावाददान आहेन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीत्यत्याक्रम्याश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रेष्येति
प्रतिप्रस्थातैष उत्तरतो वसाहोमं धारयँस्तिष्ठति

सोऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय स्वाहेति वषट्कृते हविर्जुहोत्येतस्य होममनु प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः स्वाहेत्यथ प्रदक्षिणमावृत्य पृषदाज्यात्स्रुवेणोपघ्नन्नाह वनस्पतयेऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति

वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथ समावपमान
आहाग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङङत्याक्रम्य
यथायतनँ स्रुचौ सादयित्वा होत्र इडामुपोद्यच्छन्ते मेदस
उपहूतायामिडायामग्नीध आदधाति षडवत्तमर्धवनिष्ठुमथार्धवनिष्ठुं मेदस्वत्
प्राश्नन्ति
मार्जयन्तेऽथाह ब्रह्मणे वक्षः परिहरेति
तद्ब्रह्मा प्रतिगृह्णाति ९

वयँ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहीत्यथ
संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः
समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढ
ीत्याहरन्त्येताञ्छामित्रादौपयजानङ्गारांस्तानग्रेण होतारं
निवपत्युपसीदत्युपयष्टा गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहत्य जुह्वाँ
समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्येति

वषट्कृते जुहोति प्रेष्य प्रेष्येत्येवमेवोपयष्टोपयजति गुदस्य प्रच्छेदँ समुद्रं
गच्छ स्वाहेत्येतैरेकादशभिर्
अग्निं वैश्वानरं गच्छ स्वाहेति सर्वमन्ततोऽनुप्रहरत्यथ बर्हिषि हस्तौ
निमार्ष्टर्द्ध्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छेत्यथास्य धूममन्वीक्षते तनूं
त्वचं पुत्रं नप्तारमशीयेत्येकादशानूयाजानिष्ट्वोदङङत्याक्रम्य जुह्वाँ
स्वरुमवधाय पुरस्तात्प्रत्यङ्तिष्ठञ्जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षमर्चिः
पृथिवीं भस्मना पृणस्व स्वाहेत्यथ यथायतनँ स्रुचौ सादयित्वा
वाजवतीभ्याँ स्रुचौ व्यूहति
शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्य जाघन्या पत्नीं
संयाजयन्त्याज्यस्यैव सोमं च त्वष्टारं च यजत्युत्तानायै जाघन्यै देवानां
पत्नीर्यजति
नीच्या अग्निं गृहपतिम्
उत्तानायै जाघन्यै होत्र इडामवद्यति
नीच्या अग्नीधे षडवत्तम्प्राश्नीतो

मार्जयेते
अथ स्रुचि चतुर्गृहीतं गृहीत्वापसलैः पर्यावृत्यान्वाहार्यपचने प्रायश्चित्तं हुत्वा न फलीकरणहोमेन चरत्यथ प्राङेत्य ध्रुवामाप्याय्य त्रीणि समिष्टयजूँषि जुहोति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति स्रुवेणैव द्वितीयमेष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहेति स्रुचा तृतीयं देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं नो देव देवेषु यज्ञँ स्वाहा वाचि स्वाहा वाते धाः स्वाहेत्य्
उदूहति स्रुचम्
अथ याचति स्फ्यमुदपात्रँ हृदयशूलमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची पत्न्यन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्याग्रेण यूपँ स्फ्येनोद्धत्यावोक्ष्य शुष्कस्य चार्द्रस्य च सन्धौ हृदयशूलमुद्वासयति १०

शुगसि तमभि शोच योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्चेत्यथाप्रतीक्षमायन्ति वरुणस्यान्तर्हित्यै
प्रपथे समिधः कुर्वत एधोऽस्येधिषीमहीत्येत्याहवनीयेऽभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्तेऽपो अन्वचारिषँ रसेन समसृक्ष्महि । पयस्वाँ अग्न आगमं तं मा सँसृज वर्चसेत्यथौपयजिकेऽग्नौ बर्हिरुपोषति यत्कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामीत्यथाञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति
हस्तौ प्रध्वँसयतेऽग्धादेकोऽहुतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजं सदः सहो वरेण्यमिति
द्वितीयं जुहोति यान्यपामित्यान्यप्रतीत्तान्यस्मि यमस्य बलिना चरामि । इहैव सन्तः प्रति तद्यातयामो जीवा जीवेभ्यो निहराम एनत्स्वाहेति

हस्तौ प्रध्वँसयतेऽग्धादेकोऽहुतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजं सदः सहो वरेण्यमिति

तृतीयं जुहोत्यनृणा अस्मिन्ननृणाः परस्मिँस्तृतीये लोके अनृणाः स्याम । ये देवयाना उत पितृयाणाः सर्वान्पथो अनृणा आक्षीयेम स्वाहेति
हस्तौ प्रध्वँसयतेऽग्धादेकोऽहुतादेकः समनसादेकस्ते नः कृण्वन्तु भेषजं सदः सहो वरेण्यमित्यथ देवता उपतिष्ठतेऽयं नो नभसा पुर इत्यग्निँ स त्वं नो नभसस्पत इति वायुं देव सँस्फानेत्यादित्यम्
अथ यूपमुपतिष्ठत आशासानः सुवीर्यँ रायस्पोषँ स्वश्वियम्। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेत्यथ पूर्वाग्निँ शकले समारोपयत्ययं ते योनिर्ऋत्विय इति
तं मध्यमेऽग्नावपिसृजत्याजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्याम्
अथ मध्यममग्निमुपसमाधाय मध्यमेऽग्नौ पूर्णाहुतिं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इति
पूर्णाहुतौ वरं ददाति
धेनुवरं वानडुद्वरं वा दद्यादिति ह स्माह बौधायनः
संतिष्ठते पशुबन्धः संतिष्ठते पशुबन्धः ११

पञ्चमः प्रश्नः

वैश्वदेवहविर्भिर्यक्ष्यमाणो भवति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां नक्षत्रप्रयोग इत्येक आहुरुदगयन आपूर्यमाणपक्षस्य पुण्याहे प्रयुञ्जीतेति
स उपकल्पयते त्रेणीँ शललीं लोहितायसस्य च क्षुरं चतुष्टयानि पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि द्वयं पयः पृषदाज्याय च दधि हविरातञ्चनाय च त्रेधा बर्हिः संनद्धं तदेकधा पुनः संनद्धं प्रसूमयं प्रस्तरमित्यथोपवस्थीयेऽहन्द्विहविषमारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुं सा प्रसिद्धेष्टिः संतिष्ठतेऽथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुतेऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याँस्तीर्त्वापः प्रणीयाग्नेयमष्टाकपालं निर्वपति सौम्यं चरुँ सावित्रं द्वादशकपालँ सारस्वतं चरुं पौष्णं चरुं मारुतँ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति

हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य दक्षिणार्धे गार्हपत्यस्याष्टौ
कपालान्युपदधात्यथोत्तरतस्तिरः पवित्रमप आनीय सौम्याय
चरवेऽधिश्रयत्यथोत्तरतः सावित्राय द्वादशकपालान्युपदधात्य्
अथोत्तरतस्तिरः पवित्रमप आनीय सारस्वतपौष्णाभ्यामधिश्रयत्यथोत्तरतो
मारुताय सप्त कपालान्युपदधात्यथोत्तरत स्तिरः पवित्रं पय आनीयामिक्षाया
अधिश्रयत्यथोत्तरतो द्यावापृथिव्यमेककपालमुपदधात्यभीन्धते
कपालान्युपेन्धते चरुस्थालीः
कृतानि पिष्टानि समुप्य संयुत्याथाधिपृणक्त्याग्नेयमष्टाकपालं तिरः पवित्रँ
सौम्ये चरव्यानावपत्यथाधिपृणक्ति सावित्रं द्वादशकपालं तिरः पवित्रँ
सारस्वतपौष्णयोश्चरव्यानावपत्यथाधिपृणक्ति मारुतँ सप्तकपालं तिरः पवित्रं
तप्ते पयसि दध्यानयति
सामिक्षा भवति
तां य एव कश्च कुशलः परीन्धेन श्रपयित्वा विवाजिनां कृत्वाप्रतापे
निदधात्यथाधिपृणक्ति द्यावापृथिव्यमेककपालमिति
त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय
स्तम्बयजुर्हरति   १

इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहंपरिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा
संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं
पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षाणीषूदस्य
स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च
स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीं
पत्नीँ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं
पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रसूमयं प्रस्तरं गृह्णाति

त्रिविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य
कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधाति
विधृती तिरश्ची सादयति
विधृत्योः प्रसूमयं प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरा एता असदन्निति समभिमृश्य
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वं
हवींष्युद्वासयत्युपस्तीर्णाभिघारितान्पुरोडाशानभिघार्य चरून्
प्रसिद्धमा मारुतादथ कँसे वा चमसे वामिक्षां व्युद्धृत्य
वाजिनमानीयाथाभिघारयत्यथैककपालमुद्वास्य बर्ह्यानीयाविःपृष्ठं
करोत्यथैतानि संपरिगृह्यान्तर्वेद्यासादयति भूर्भुवः
सुवरित्येताभिर्व्याहृतीभिरुत्करे वा विशये वा वाजिनम्
अथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति
प्रहृत्याभिहुत्य २

अथेध्मात्समिधमाददान आहाग्नये
समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मम्परि समिधँ शिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति
संमृष्टे स्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाँ समज्य सादयित्वा स्रुचौ
प्रवरं प्रवृणीते

प्रसिद्धँ होतारं वृणीते
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति
वषट्कृते जुहोति यज यजेति चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वं
समानयते
नव प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सँस्रावेणानुपूर्वँ हवींष्यभिघारयत्यथाग्नये
सोमायेत्याज्यभागाभ्यां चरत्यथानुपूर्वँ हविर्भिश्चरति
प्रसिद्धमा मारुताद्विश्वेभ्यो देवेभ्योऽनुब्रूहि विश्वान्देवान्यजेत्यामिक्षया
चरत्युपाँश्वेककपालेन चरति द्यावापृथिवीभ्यामनुब्रूहि द्यावापृथिवी

यजेत्यथ स्विष्टकृता चरत्यत्रैतानि मेक्षणान्याहवनीयेऽनुप्रहरत्यथैनानि सँस्रावेणाभिजुहोत्यथोदङ्ङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति ३

उपहूतायामिडायामग्नीध आदधाति षडवत्तम्प्राश्नन्ति
मार्जयन्तेऽथाह ब्रह्मणे प्राशित्रं परिहरेति
परि प्राशित्रँ हरन्त्यन्वपोऽनु वेदेन ब्रह्मभागम्
अथान्वाहार्यं याचति
तस्मिन्प्रथमजं वत्सं ददात्युद्वासयन्त्येतद्धविरुच्छिष्टम्
आसादयन्ति वाजिनम्
अथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढ
ीत्यथाध्वर्युः पृषदाज्यं विहत्य जुह्वाँ समानीयात्याक्रम्याश्राव्याह देवान्यजेति वषट्कृते जुहोति यज यजेति नवानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा वाजवतीभ्याँ स्रुचौ व्यूहति

शंयुना प्रस्तरपरिधि संप्रकीर्य सम्प्रस्राव्य स्रुचौ विमुच्याथ कँसं वा चमसं वानाज्यलिप्तं याचति
तमन्तर्वेदि निधाय तस्मिन्बर्हिषि विषिञ्चन्वाजिनमानयन्नाह
वाजिभ्योऽनुब्रूहीत्यत्याक्रम्याश्राव्याह वाजिनो यजेति
वषट्कृते जुहोति वाजिभ्यः स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षं स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति यन्मे रेतः प्रसिच्यते यन्म आप्यायते यद्वा जायते पुनः । यद्वा मे प्रतितिष्ठति तेन मा वाजिनं कुरु तेन मा रेतस्विनं कुरु तेन मा शिवमाविश तस्य ते वाजिपीतस्य वाजिभिः पीतस्येति वा मधुमत उपहूतस्योपहूतो भक्षयामीति
अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूँषि जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतम्
अथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपत ऋतमेव परमेष्ट्यृतं

नात्येति किं चन । ऋते समुद्र आहित ऋते भूमिरियँ श्रिता ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम्वैश्वानरस्य तेजसा ॥ ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्

संतिष्ठन्ते वैश्वदेवहवींषि
संवत्सरीणाँ स्वस्तिमाशास्त इत्याशास्ते ४

अथातश्चतुर्षु मासेषु वरुणप्रघासहविर्भिर्यक्ष्यमाणो भवति
स उपकल्पयते त्रेणीं शललीं लोहितायसस्य च क्षुरं चतुष्टयानि
पुरोडाशकपालानि पञ्च चरुस्थालीस्तावन्ति मेक्षणानि द्वयं पयः पृषदाज्याय च दधि हविरातञ्चनाय च शमीपर्णकरीरसक्तूनैषीकँ शूर्पं मनागुपतप्तानां यवानामवाञ्जनपिष्टानां प्रतिपूरुषं करम्भपात्राण्येकातिरिक्तानि भवन्ति
तेषामेव मेषीं च मेषं च कुर्वन्ति
शृङ्गवान्मेषो भवत्यशृङ्गा मेषी
तौ शुक्लाभिरूर्णाभिः संप्रच्छन्नौ भवतो द्वावध्वर्यू
द्वयानि यज्ञपात्राणि
द्वयमिध्माबर्हिर्द्वे वेदी
तयोः पाशुबन्धिकीवोत्तरा दार्शपौर्णमासिकीव दक्षिणा
ते पश्चात्समे पुरस्ताद्विषमे पृथमात्राद्वेदी असंभिन्ने भवतोऽथास्यैतदहर्द्वया वत्सा अपाकृता भवन्ति मरुद्भ्यो वरुणायेति
द्वयं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुतेऽग्निहोत्रे पृष्ठ्याँस्तीर्त्वापः प्रणीय निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालमिति

हविष्कृता वाचं विसृजते
समानं कर्मा पर्यग्निकरणादत्रैतानि करम्भपात्राण्यभिपर्यग्निकुर्वन्ति मेषीं च मेषं च शमीपर्णकरीरसक्तूनैषीकँ शूर्पमिति

त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय स्तम्बयजुषी हरतोऽध्वर्युरेवोत्तरस्यां वेद्याँ हरति प्रतिप्रस्थाता दक्षिणस्यां तयोर्हरतोरध्वर्युः पूर्व एति पुनरायतोः प्रतिप्रस्थाता पूर्व एतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वौ परिग्राहौ परिगृह्णीतोऽध्वर्युरेव करणं जपत्युद्धत उद्धताभ्यामाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यध्वर्युरेव चात्वालस्यावृता चात्वालं
परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्नेरावृता द्वावग्नी प्रणयतोऽध्वर्युरेवोत्तरस्यां वेद्यामग्निं निधायाध्वराहुतिभिरभिजुहोति
प्रतिप्रस्थाता दक्षिणस्यामग्निं निधायाभिजुहोति तूष्णीम्
अग्निवत्युत्तरौ परिग्राहौ परिगृह्य योयुपित्वा तिर्यञ्चौ स्फ्यौ स्तब्ध्वाध्वर्युरेव संप्रैषमाह प्रोक्षणीरासादयतमिध्माबर्हिषी उपसादयतं स्रुवौ च स्रुचश्च संमृष्टं तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्याभ्यां च दध्ना चोदेतमित्याहृतासु प्रोक्षणीषूदस्य स्फ्यौ मार्जयित्वेध्माबर्हिषी उपसाद्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रुत्य स्रुवौ च स्रुचश्च संमृष्टस्तूष्णीं पृषदाज्यग्रहणीं पत्नीँ संनह्याज्याभ्यां च दध्ना चोदेत आज्ये च प्रोक्षणीश्चोत्पूय प्रसिद्धं पृषदाज्यवन्त्येवाज्यान्यध्वर्युरुत्तरस्यां वेद्यां गृह्णीते
दार्शपौर्णमासिकानि प्रतिप्रस्थाता दक्षिणस्याम् ५

अथ प्रोक्षणीभिरुपोत्तिष्ठत इध्मौ प्रोक्षतो वेदी प्रोक्षतो बर्हिषी प्रोक्षतो बर्हिषी आसन्ने प्रोद्भयोपनिनीय पुरस्तात्प्रस्तरौ गृह्णीतः
पञ्चविधमेवाध्वर्युरुत्तरस्यां वेद्यां बर्हि स्तृणाति
त्रिविधं प्रतिप्रस्थाता दक्षिणस्याम्
अथ प्रस्तरपाणी प्राञ्चावभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधत्त ऊर्ध्वाः समिध आधत्तो विधृतीस्तिरश्चीः सादयतो विधृतीषु प्रस्तरौ
प्रस्तरयोर्जुह्वौ
बर्हिषोरितरा एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यञ्चावाद्रवतो दक्षिणत एवाध्वर्युरुत्तरतः प्रतिप्रस्थातानुपूर्वँ हवीँष्युद्वासयत
आग्नेयप्रभृतीन्येवाध्वर्युरुद्वासयति प्रसिद्धमैन्द्राग्नाद्यारुतीं प्रतिप्रस्थाता कँसे वा चमसे वामिक्षां व्युद्धृत्य तस्यां मेषीमवदधात्य्
अथास्यै शमीपर्णकरीरसक्तूनामिक्षामित्युपवपति

वाजिनमानीयाथाभिघारयति
वारुणीमध्वर्युस्तथैव कँसे वा चमसे वामिक्षां व्युद्धृत्य तस्यां
मेषमवदधात्यथास्मै शमीपर्णकरीरसक्तूनामिक्षामित्युपवपति
वाजिनमानीयाथाभिघारयति
तथैककपालमुद्वास्य बह्वानीयाविःपृष्ठं करोत्यथैतानि
संपरिगृह्यान्तर्वेद्यासाद्यत आग्नेयप्रभृतीन्येवाध्वर्युरुत्तरस्यां वेद्यामासादयति
प्रसिद्धमैन्द्राग्नाद्मारुतीं प्रतिप्रस्थाता दक्षिणस्याम्वारुणीमध्वर्युरुत्तरस्यां कायं
चैककपालं तथैवोतकरे वा विशये वा वाजिने
अध्वर्युरेव निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति
प्रहृत्याभिहुत्य ६

अथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्याधत्त इध्मौ
परि समिधौ शिनष्टो वेदाभ्यामुपवाजयतोऽनूक्तासु सामिधेनीषु
स्रुवाभ्यामाघारावाघारयतोऽध्वर्युरेव संप्रैषमाहाग्नीदग्नींस्त्रिस्त्रिः संमृड्ढीति
संमृष्ट उत्तरोऽग्निर्भवत्यसंमृष्टो दक्षिणोऽथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि
कस्ते जार इत्यसविति
तं वरुणो गृह्णात्विति निर्दिशति
यज्जारँ सन्तं न ब्रूयात्प्रियं ज्ञातिँ रुन्ध्यादसौ मे जार इति
निर्दिशेद्निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति ब्राह्मणम्
अत्रैतानि करम्भपात्राण्यभिपर्यग्निकृतान्यैषीके शूर्पे समुप्य पत्न्यै प्रयच्छति

तानि पत्नी शीर्षन्नधिनिधत्तेऽथैनां दक्षिणया द्वारोपनिष्क्रमय्य
दक्षिणेनान्वाहार्यपचनं दक्षिणेनोभे वेदी परीत्य प्राचीमुदानयन्वाचयति
प्रघास्यान्हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषस इत्यथ
दक्षिणमग्निमग्रेण पुरस्तात्प्रत्यङ्मुखास्तिष्ठन्त्युत्तर एवाध्वर्युर्दक्षिणो यजमानो
दक्षिणा पत्न्यत्रैतानि करम्भपात्राणि पत्नी यजमानाय प्रयच्छति
तानि यजमानः शीर्षन्नधिनिधत्तेऽथ पुरोऽनुवाक्यामन्वाह ७

मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया । मही ह्यस्य मीढुषो यव्या ।
हविष्मतो मरुतो वन्दते गीरित्युभौ याज्यां पत्नी च यद्ग्रामे यदरण्ये

यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम्। यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहेत्यत्रैतदैषीकँ शूर्पमग्नावनुप्रहरत्यपि वाद्भिरभ्युन्दय भुञ्जते
व्यवयतोऽध्वर्युरनुमन्त्रयतेऽक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानव इत्यथ प्रतिप्रस्थाता दक्षिणमग्निँ संमाष्टर्युभौ स्रुच्यावाघारावाघारयतोऽध्वर्युरेव प्रवरं प्रवृणीते
प्रसिद्धँ होतारं वृणीते
सीदति होता
प्रसवमाकाङ्क्षतः
प्रसूतौ स्रुच आदायात्याक्रम्याश्राव्याह समिधो यजेति
वषट्कृते जुहुतो यज यजेति चतुर्थाष्टमयोः समानयमानवष्टमेऽध्वर्युः सवँ समानयते

परि प्रतिप्रस्थाता सँस्रावँ शिनष्टयनूयाजेभ्यो नव
प्रयाजानिष्ट्वोदञ्चावत्याक्रम्य सँस्रावाभ्यामानुपूर्वँ हवीँष्यभिघारयत
आग्नेयप्रभृतीन्येवाध्वर्युरभिघारयति प्रसिद्धमैन्द्राग्नाद्मारुतीं प्रतिप्रस्थाता वारुणीमध्वर्युः कायं चैककपालम्
अथाग्नये सोमायेत्याज्यभागाभ्यां चरतोऽथ
प्रतिप्रस्थातोपरमत्यथाध्वर्युरानुपूर्वँ हविर्भिश्चरति
प्रसिद्धमैन्द्राग्नादथाध्वर्युरुपरमत्यथ प्रतिप्रस्थाता मारुत्या अवद्यन्नाह मरुद्भ्योऽनुब्रूहीति
प्रथमेनावदानेन शमीपर्णकरीरसक्तूनामिक्षाया इत्यवद्यति
द्वितीयेनावदानेन शमीपर्णकरीरसक्तूनामिक्षां मेषीमित्यवदधात्यभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याह मरुतो यजेति
वषट्कृते जुहोत्यथ प्रतिप्रस्थातोपरमत्यथाध्वर्युर्वारुणया अवद्यन्नाह वरुणायानुब्रूहीति
प्रथमेनावदानेन शमीपणकरीरसक्तूनामिक्षाया इत्यवद्यति
द्वितीयेनावदाएन शमीपर्णकरीरसक्तूनामिक्षां मेषमित्यवदधात्यभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याह वरुणं यजेति
वषट्कृते जुहोत्युपाँश्वेककपालेन चरति कायानुब्रूहि कं यजेत्यथ

स्विष्टकृता चरत आग्नेयप्रभृतीनामेवाध्वर्युरवद्यति प्रसिद्धमैन्द्राग्नाद्यारुत्यै प्रतिप्रस्थाता

वारुण्या अध्वर्युराशयादेककपालस्य च
द्विरभिघारयतो न प्रत्यञ्चोऽत्याक्रम्याश्राव्याहाग्निँ स्विष्टकृतं यजेति
वषट्कृत उत्तरार्धपूर्वार्धयोरतिहाय पूर्वा आहुतीर्जुहुतोऽत्रैतानि
मेक्षणान्याहवनीययोरनुप्रहरतोऽथैनानि
सँस्रावाभ्यामभिजुहुतोऽथोदञ्चावत्याक्रम्य यथायतनँ स्रुचः सादयित्वा
प्राशित्रमवदायेडामवद्यत आग्नेयप्रभृतीनामेवाध्वर्युरवद्यति
प्रसिद्धमैन्द्राग्नाद्यारुत्यै प्रतिप्रस्थाता
वारुण्या अध्वर्युराशयादेककपालस्य चाभिघारयत्यथ प्रतिप्रस्थातोत्तरां
वेदिमुपसर्पति ८

उपहूतायामिडायामग्नीध आदधाति षडवत्तम्प्राश्नन्ति
मार्जयन्तेऽथाह ब्रह्मणे प्राशित्रं परिहरेति
परि प्राशित्रँ हरन्त्यन्वपोऽनु वेदेन ब्रह्मभागम्
अथान्वाहार्यं याचति
तस्मिन्यथाश्रद्धं ददात्युद्वासयन्त्येतद्धविरुच्छिष्टम्
आसादयन्ति वाजिने
अध्वर्युरेव संप्रैषमाह ब्रह्मन्प्रस्थास्यामः
समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथाध्वर्युः पृषदाज्यं विहत्य जुह्वाँ
समानीयात्याक्रम्याश्राव्याह देवान्यजेति

वषट्कृते जुहुतो यज यजेति नवानूयाजानिष्ट्वोदञ्चावत्याक्रम्य यथायतनँ
स्रुचः सादयित्वा वाजवतीभ्याँ स्रुचो व्यूहतः
शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचो विमुच्य
तथैव कँसौ वा चमसौ वानाज्यलिप्तौ याचतः
समानी वाजिनयोश्चर्याध्वर्युरेव प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य
प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूँषि जुहोत्येकं
प्रतिप्रस्थाता दार्शपौर्णमासिकं दक्षिणेऽथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न

विसृजते व्रतम्
अथ याचत्याज्यस्थालीँ सस्रुवाँ स्रुचं बर्हिः प्रतिवसनीये वाससी वारुण्यै
निष्कासं तुषानित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची
पत्न्यन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्ति
प्रसिद्धोऽवभृथः
साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीक्षमायन्ति
वरुणस्यान्तर्हित्यै
प्रपथे समिधः कुर्वत एधोऽस्येधिषीमहीत्येत्याहवनीयेऽभ्यादधाति समिदसि
तेजोऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्तेऽपो अन्वचारिषँ रसेन
समसृक्ष्महि । पयस्वाँ अग्न आगमं तं मा संसृज वर्चसेत्यत्र विसृजते व्रतम्

अथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या
लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते यद्धर्मः
पर्यवर्तयदन्तान्पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो धीतिभिः सह ।
इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा
। शिरस्तपस्याहितम्वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये
। तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं
तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ
दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्
संतिष्ठन्ते वरुणप्रघासहवींषि
परिवत्सरीणाँ स्वस्तिमाशास्त इत्याशास्ते ९

अथातश्चतुर्षु मासेषु साकमेधहविर्भिर्यक्ष्यमाणो भवति
स उपकल्पयते त्रेणीँ शललीं लोहितायसस्य च क्षुरं चतुष्टयानि
पुरोडाशकपालानि चतस्रश्चरुस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दध्यथ
पौर्णमास्या उपवसथेऽग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकँ
सूर्येणोदयता
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ मध्यंदिने मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथास्यैतदहर्मरुद्भ्यो गृहमेधिभ्यो वत्सा अपाकृता
भवन्त्यथ सायँ हुतेऽग्निहोत्रे सर्वासां दुग्धे गार्हपत्ये गृहमेधीयं चरुँ

श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनम-
संघ्नन्निवोद्धरति
सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयान्तर्वेद्यासादयत्यथाग्नये
सोमायेत्याज्यभागाभ्यां चरत्य्
अथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति
वषट्कृते जुहोत्यथ स्विष्टकृता चरतीडान्तो गृहमेधीयः संतिष्ठते
पूर्णदर्व्याय क्षामकाषं परिशिनष्टि
प्रतिवेशँ स्त्रीकुमारेभ्यः पचन्त्याशिता भवन्त्याञ्जतेऽभ्यञ्जतेऽनु
वत्सान्वासयन्ति
सवात्योरेवैताँ रात्रिं वत्सं बध्नन्त्यथाध्वर्युरपररात्र आद्रुत्य नित्यवत्सायै
पयसाग्निहोत्रं जुहोत्यथैतां दर्वीं निर्णिज्योपस्तीर्य तस्यामेतँ सर्वश एव
क्षामकाषमवदधाति
द्विरभिघारयत्यथ पुरोऽनुवाक्यामन्वाह पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्जँ शतक्रतो इति
यजति देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारमिन्नि मे हरा निहारं
निहरामि ते स्वाहेत्यृषभ एहीत्यृषभस्य रवथे जुहुयाद्ब्रह्मणो हिंकार
इत्येतदपरं गार्हपत्ये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ पृष्ठ्याँ स्तीर्त्वापः
प्रणीय मरुद्भ्यः क्रीडिभ्यः पुरोडाशँ सप्तकपालं निर्वपति साकँ सुर्येणोद्यता
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ तदानीमेव पृष्ठ्याँ स्तीत्वापः प्रणीय
निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नमेकादशकपालमैन्द्रं चरुं
वैश्वकर्मणमेककपालमिति

त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय
स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं
परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्यावृता चात्वालं
परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्नेरावृताग्निं

प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेहीत्याहृतासु प्रोक्षाणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमार्ष्टि तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं यथा वैश्वदेवहवीँष्येवँ संतिष्ठतेऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतम्  १०

महापितृयज्ञं करिष्यन्नुपकल्पयते व्रीहीँश्च यवाँश्च षट्कपालान्यभिवान्यायै दुग्धमर्धपात्रं द्वे नवे पात्रे इक्षुशलाकां त्रीन्पर्णसेवान्समूलम्बर्हिर्वर्षीयाँ समिध्ममिध्मात्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशाँ स्फ्यमुदकुम्भौ यज्ञायुधानीत्यथ गार्हपत्यं परिस्तृणाति

तमुत्तरेणैकैकँ सँसादयति कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशाँ स्फ्यमुदकुम्भौ यज्ञायुधानीत्यथ यज्ञोपवीतं कृत्वोत्तरेण गार्हपत्यमुपविश्य
पवित्रवत्याग्निहोत्रहवण्या निर्वपति
देवस्य त्वा सवितुः प्रसवेऽश्विणोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सोमाय पितृमते जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वा पितृभ्यो बर्हिषद्भ्यो जुष्टं निर्वपामीति चतुरो यवानाम्
एतामेव प्रतिपदं कृत्वा पितृभ्योऽग्निष्वात्तेभ्यो जुष्टं निर्वपामीति चतुर एव यवानां तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवान्
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य दक्षिणार्धे गार्हपत्यस्य
षट्कपालान्युपदधात्यथैतान्यवानुलूखले परिक्षुद्य गार्हपत्य
एककपालमधिश्रित्य भर्जयन्ति
बहुरूपा धानाः कृत्वा तेषामर्धा धाना भवन्त्यथेतरान्सक्तून्कुर्वन्ति
कृतानि पिष्टानि समुप्य संयुत्याधिपृणक्ति पुरोडाशँ षट्कपालम्
अथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय तिरः पवित्रं धाना आवपत्यथैतदभिवान्यायै दुग्धमर्धपात्रं याचति

तस्मिँ स्तिरः पवित्रँ सक्तूनोप्यैकयेत्तुशलाकयोपमन्थति
दक्षिणोपमन्थत्यनारभ्योपमन्थतीति ब्राह्मणम्
अथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेष्वधिश्रयति
त्वचं पुरोडाशस्य ग्राहयित्वाभिवास्यात्रैवाप्येभ्यो निनयति

दक्षिणत एष सम स्थण्डिलः कृतो भवति
तदेतां चतुरश्रां वेदिमालिखत्येव न खनति
तस्यै मध्यतोऽन्वाहार्यपचनमुपसमाधाय स्तम्बयजुर्हरति ११

इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा
संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ
्याज्येनोदेहीत्याहृतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमाष्टर्याज्येनोदेत्याज्यं च
प्रोक्षणीश्चोत्पूय प्रसिद्धंपञ्चगृहीतानि वा षड्गृहीतानि वाज्यानि गृहीत्वा
प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्समूलं प्रस्तरं गृह्णाति तूष्णीम्
अथ प्राचीनावीतं कृत्वा त्रिरपसलैः परिस्तृणन्पर्येति
संतरामेवाग्रेऽथ वितराम्
अथ वितराम्
अथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपर्येत्यथ प्रस्तरपाणिर्द्वौ परिधी
परिदधाति मध्यमं चैव दक्षिणं चोर्ध्वे समिधावादधाति
विधृती तिरश्ची सादयति
विधृत्योः समूलं प्रस्तरं न्यस्यति तूष्णीं
प्रस्तरे जुहूम्बर्हिषीतरे
एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्यानुपूर्वँ
हवीँष्युद्वासयत्युपस्तीर्णाभिघारितं पुरोडाशमभिघार्य धानाः करम्भमिति

तेषामेकैकमनूचीनान्युदाहरन्ति
दक्षिणतः पुरोडाशमासादयत्युत्तरतो धाना उत्तरतः करम्भं दक्षिणत
एतत्परिश्रयणं कशिपूपबर्हणे आञ्जनाभ्यञ्जने दशाँ स्फ्यमिति निदधात्युत्तरत
उदकुम्भौ
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतोऽध्वर्युश्चाग्नीध्रश्च १२

अथेध्मात्समिधमाददान आहाग्नये देवेभ्यः पितृभ्यः
समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मँ सकृद्वा त्रिर्वा
परि समिधँ शिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति
संमृष्टे स्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवाँ समज्य सादयित्वा स्रुचौ
प्रवरं प्रवृणीतेऽथाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्देवो होता
देवान्पितृन्यक्षत्सीदेत्येतावान्प्रवरः
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति
वषट्कृते जुहोति
यज यजेत्यपबर्हिषश्चतुरः प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सँस्रावेणानुपूर्वँ
हवीँष्यभिघारत्
अथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोदङ्ङत्याक्रम्य यथायतनँ स्रुचौ
सादयित्वा प्राचीनावीतानि कुर्वते
विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवीँष्युत्तरतः पुरोडाशमासादयति
दक्षिणतः करम्भम्
आशय एव धाना भवन्त्युत्तरत उपविशतो ब्रह्मा च यजमानश्च
दक्षिणतोऽध्वर्युश्चाग्नीध्रश्चाथैनत्परिश्रयन्ति
तस्योदीचीं द्वारं कुर्वन्ति
स यो बलवाँ स्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः
परिषिञ्चन्परीहीति
स तथा करोति

निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथोपस्तीर्य
पूर्वार्धात्पुरोडाशस्यावद्यन्नाह १३

सोमाय पितृमतेऽनु स्वधेति
पूर्वार्धात्पुरोडाशस्यावद्यति
पूर्वार्धाद्धानानाम्पूर्वार्धात्करम्भस्याभिघारयति
प्रत्यनक्ति
दक्षिणतोऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्राव्यत्यस्तु स्वधेति
प्रत्याश्रावयति
सोमं पितृमन्तँ स्वधा कुर्विति
ये स्वधेत्यागूर्ये स्वधामह इति वा
स्वधा नम इति वषट्करोति
वषट्कृते जुहोत्य्
अथोपस्तीर्य मध्याद्धानानामवद्यन्नाह पितृभ्यो बर्हिषद्भ्योऽनु स्वधेति
मध्याद्धानानामवद्यति
मध्यात्करम्भस्य
मध्यात्पुरोडाशस्याभिघारयति
प्रत्यनक्ति
दक्षिणतोऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति
प्रत्याश्रावयति
पितॄन्बर्हिषदः स्वधा कुर्विति
ये स्वधेत्यागूर्ये स्वधामह इति वा
स्वधा नम इति वषट्करोति
वषट्कृते जुहोत्यथोपस्तीर्यापरार्धात्करम्भस्यावद्यन्नाह
पितृभ्योऽग्निष्वात्तेभ्योऽनु
स्वधेत्यपरार्धात्करम्भस्यावद्यत्यपरार्धात्पुरोडाशस्यापरार्धाद्धानानाम्
अभिघारयति
प्रत्यनक्ति
दक्षिणतोऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति
प्रत्याश्रावयति

पितॄनग्निष्वात्तान्स्वधा कुर्विति
ये स्वधेत्यागूर्ये स्वधामह इति वा
स्वधा नम इति वषट्करोति
वषट्कृते जुहोत्यथोपस्तीर्य दक्षिणार्धात्पुरोडाशस्यावद्यन्नाहाग्नये
कव्यवाहनाय स्विष्टकृतेऽनु स्वधेति
दक्षिणार्धात्पुरोडाशस्यावद्यति
दक्षिणार्धाद्धानानां दक्षिणार्धात्करम्भस्य
द्विरभिघारयति
न प्रत्यनक्ति
दक्षिणतोऽवदायोदङ्ङतिक्रामत्यो स्वधेत्याश्रावयत्यस्तु स्वधेति
प्रत्याश्रावयत्यग्निं कव्यवाहनँ स्विष्टकृतँ स्वधा कुर्विति
ये स्वधेत्यागूर्ये स्वधामह इति वा
स्वधा नम इति वषट्करोति
वषट्कृते दक्षिणार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यत्रैतन्मेक्षणँ
शलाकामित्यग्नावनुप्रहरत्यथैने सँस्रावेणाभिजुहोत्यथ दक्षिणतोऽत्याक्रम्य
यथायतनँ स्रुचौ सादयित्वा यज्ञोपवीतानि कुर्वते
विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींषि
दक्षिणतः पुरोडाशमासादयत्य्
उत्तरतः करम्भम्
आशय एव धाना भवन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चोत्तरतोऽध्वर्युश्चाग्नीध्रश्चाथ
प्राशित्रमवदायेडामवद्यति १४

उपहूतायामिडायामग्नीध आदधाति षडवत्तं निघ्रेण भक्षयित्वा बर्हिषि
संन्यस्यन्त्यथ प्राचीनावीतानि कृत्वा पुरोडाशं धानाः करम्भमिति पात्र्याँ
संप्रयौति
तिसृषु स्रक्तिषु पर्णसेवेषु त्रीन्पिण्डान्ददात्येतत्ते ततासौ ये च त्वामन्विति
दक्षिणस्याँ श्रोण्याम्
एतत्ते पितामहासौ ये च त्वामन्विति दक्षिणेऽँस एतत्ते प्रपितामहासौ ये च
त्वामन्वित्युत्तरेऽँस उत्तरस्याँ श्रोण्यां लेपं निमार्ष्ट्यैषा

युष्माकमियमस्माकमिमां वयं जीवा जीवन्तोऽनुसंचरन्तो भूयास्मेत्यत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य यज्ञोपवीतानि कृत्वाहवनीयमुपतिष्ठन्ते सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुर स्तुतो यासि वशाँ अनु । योजा न्विन्द्र ते हरी इत्या तमितोरुपतिष्ठन्तेऽथ गार्हपत्यमुपतिष्ठन्तेऽक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इत्
आ तमितोरुपतिष्ठन्तेऽथ प्राचीनावीतानि
कृत्वान्वाहार्यपचनमभिप्रपद्यन्तेऽक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः । परेत पितरः सोम्या इत्या तमितोरुपतिष्ठन्ते
स यो बलवाँस्तमाहानेनोदकुम्भेन संततया धारया त्रिरपसलैः परिषिञ्चन्परीहीति
स तथा करोति
निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्याहरणप्रीत्येव कशिपूपबर्हणे आञ्जनाभ्यञ्जने ददात्यथ वासाँसि ददात्यथ
षड्भिर्नमस्कारैर्विपर्यासमुपतिष्ठतेऽथ वीरं याचतेऽथैनानुत्थाप्य प्रवाह्य तिसृभिर्मन आह्वयते मनो न्वाहुवामह आ न एतु मनः पुनः पुनर्नः पितरो मन इत्यत्रैतान्पिण्डान्सह पर्णसेवैरग्नावनुप्रहरति
व्यवच्छिन्दन्ति परिश्रयणम्
अथ यज्ञोपवीतानि कुर्वतेऽथ संप्रैषमाह ब्रह्मन्प्रस्थास्यामः
समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढीत्यथ
जुहूपभृतावादायात्याक्रम्याश्राव्याह देवौ यजेति
वषट्कृते जुहोति
यज यजेत्यपबर्हिषौ द्वावनूयाजाविष्ट्वोदङ्ङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा वाजवतीभ्याँ स्रुचौ व्यूहति
शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्यात्रैव समिष्टयजुर्जुहोत्य्
अथैतेषाँ शस्त्राणां द्वेद्वे उदाहरन्त्यथ यज्ञोपवीतानि कृत्वा प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठन्ते प्रजापते न त्वदेतान्यन्य इत्यत्रैतां द्वितीयां जपति यदन्तरिक्षं पृथिवीमुत द्यामिति
संतिष्ठते महापितृयज्ञः १५

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता प्रतिपूरुषं
त्रैयम्बकानेककपालानेकातिरिक्तान्गार्हपत्ये श्रपयित्वानभिघारितानुद्वास्य
सते वा श्रावे वा जरत्कोशबिले वा समुप्योपास्तेऽथ याचति नीललोहिते
सूत्रे अन्तमं पर्णमन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय
गार्हपत्यमुपतिष्ठन्ते यावन्तो गृह्या स्मस्तेभ्यः कमकरम्पशूनाँ शर्मासि शर्म
यजमानस्य शर्म मे यच्छेत्यथोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य
नित्यसंपन्नश्चतुष्पथ स्पष्टो भवति
यद्यु वै न भवत्यनसा वा रथेन वा वियान्ति
तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्यान्तमे पर्णे सर्वेषां त्रैयम्बकाणाँ
सकृत्सकृत्समवदाय जुहोत्येक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र
पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं
गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजँ सुभेषजं यथासति सुगम्मेषाय
मेष्ययवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्। यथा नः श्रेयसः करद्यथा नो
वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्स्वाहेत्यत्रैतदन्तमं
पर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति

यद्यु वै न द्वेष्ट्याखुववटे न्यस्यत्यथैतेषां त्रैयम्बकाणामेकैकं व्युत्प्रयच्छति द्वौ
यजमानायाथैतमग्निं त्रिः प्रदक्षिणं परियन्ति दक्षिणानूरूनुपाघ्नानास्त्र्यम्बकं
यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय
मामृतादिति
सकृत्परीत्योत्तरतस्तिष्ठन्त्युत्खिदन्ति
भगाय त्वेति लिप्सन्त एवमेव द्वितीयं परियन्त्येवं तृतीयम्
अथैषा पतिकामा त्रिरपसलैः पर्येति सव्यमूरुमुपाघ्नाना त्र्यम्बकं यजामहे
सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति
सकृत्परीत्योत्तर्तस्तिष्ठत्युत्खिदति
भगाय त्वेति लिप्सत एवमेव द्वितीयं पर्येत्येवं तृतीयम्
अथैनान्यजमानस्याञ्जलावावपति १६

प्रजया त्वा सँसृजामि मासरेण सुरामिवेति

तान्यजमानः पत्नयञ्जलावावपति प्रजया त्वा पशुभिः सँसृजामि मासरेण सुरामिवेति
तान्पत्नी दुहित्रे भगकामायै भगेन त्वा सँसृजामि मासरेण सुरामिवेत्य्
अथैनान्मूत ओप्य नीललोहिताभ्याँ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विशाखायां वा बध्नात्येष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्यवततधन्वा पिनाकहस्तः कृत्तिवासोमित्या
तमितोरुपतिष्ठन्तेऽथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्यादित्यं चरुं पुनरेत्य निर्वपतीयं वा अदितिरस्यामेव प्रतितिष्ठन्तीति ब्राह्मणं सा प्रसिद्धेष्टिः संतिष्ठतेऽत्र विसृजते व्रतम्
अथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते य इमां महीं पृथिवीमृतुभिः पर्यवर्तयद्यो अस्याः पृथिव्यास्त्वचि निवर्तयत्योषधीः । अग्निरीशान ओजसा वरुणो धीतिभिः सह । इन्द्रो मरुद्भिः सखिभिः सह ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितम्वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीर्ष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन आध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्
संतिष्ठन्ते साकमेधहवीँषीदावत्सरीणाँ स्वस्तिमाशास्त इत्याशास्ते १७

अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति

स उपकल्पयते त्रेणीँ शललीं लोहितायसस्य च क्षुरं पञ्चतयानि पुरोडाशकपालानि पञ्च चरुस्थालीस्तावन्ति मेक्षणानि पृषदाज्याय दधीत्यथास्यैताँ रात्रिं वायवे वत्सा अपाकृता भवन्ति
प्रातर्वायव्यं पयो दोहयति संनाय्यस्य वावृता तूष्णीं वाथ प्रातर्हुतेऽग्निहोत्रे पृष्ठ्याँस्तीर्त्वापः प्रणीय निर्वपत्याग्नेयमष्टाकपालमिति पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति

त्वचं पुरोडाशानां ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
स यद्युत्तरवेदिं करोति यथा महाहवीँष्येवँ संतिष्ठते
यद्यु वा उत्तरवेदिं न करोति यथा वैश्वदेवहवीँष्येवँ संतिष्ठतेऽन्यत्र वाजिनादथ पूर्णपात्रविष्णुक्रमैश्चरित्वा विसृजते व्रतम्
अथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपत एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः ॥ प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्। येन मासा अर्धमासा ऋतवः परिवत्सराः ॥ येन ते ते प्रजापते ईजानस्य न्यवर्तयन्। तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा

शिरस्तपस्याहितम्वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये तपसास्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये ॥ शीष्णस्तदृतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्
संतिष्ठन्ते शुनासीरीयहवीँष्यनुवत्सरीणाँ स्वस्तिमाशास्त इत्याशास्ते १८

षष्ठः प्रश्नः

अग्निष्टोमेन यक्ष्यमाणो भवति
स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां च सैषा पृथ्वी वेणीकार्या भवति त्रिवृदेकतःपाशा द्वाविँशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूलां च शरेषीकामौदुम्बरं च दण्डं चमसं च व्रतप्रदानँ स्थालीँ सशिक्याँ समेक्षणाम्
एतानि त्रयोदश यजमानस्
तावन्त्येव पत्नीमभितो भवन्ति कुम्बं च कुरीरं च वासश्च योक्त्रं चापरिमितानि च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूला च शरेषीकामृन्मयश्च पात्रः शङ्कुश्च स्थाली सशिक्या समेक्षणा

जुष्टे देवयजने शाला कारिता भवति
पुरोहविषि देवयजने याज्येदित्येतेषां यज्ञोषयते
प्राचीनवँशा दिद्त्ववतीकाशा दत्तिणतो वर्षीयसी
तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दत्तिणां प्रतीचीमुदीचीं दत्तिणतो
व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालम्
अथ यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं
यजमानायापरं पत्न्यै
तयोः प्राची द्वारौ कुर्वन्ति
तदुदकुम्भौ निधापयत्यथामावास्येन वा हविषेष्ट्वा नत्तत्रे
वारण्योरग्नीन्समारोह्य शालामभिप्रैत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां
प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य मध्यमे वँशे राजानं प्रग्रथ्नन्ति
परिस्तृणन्ति
दत्तिणत उपविशतो ब्रह्मा च यजमानश्चाथ गार्हपत्य आज्यं विलाप्योत्पूय
स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे
यजमाने स्वाहेत्य्
अपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोति यद्यत्र जुहोति
पूर्वाह्ण एवैतौ व्रतदुघयोर्वत्सौ बध्नन्त्यथाभ्यां व्रतोपायनीयं पाचयति
तस्याशितौ भवतः सर्पिर्मिश्रस्य
पयोमिश्रस्याथाध्वर्युस्तीर्थ्यान्संभारान्याचत्यथाहैहि यजमानेति
पूर्वया द्वारोपनिष्क्रम्य यत्रापस्तद्यन्त्यथास्य प्राङ्मुखस्य दत्तिणं
गोदानमद्भिरुनत्ति १

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इत्यूर्ध्वाग्रं बर्हिरनूच्छ्रयत्योषधे
त्रायस्वैनमिति
स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनँ हिँ सीरिति
प्रवपति देवश्रूरेतानि प्रवप इति
स्वस्त्युत्तराण्यशीयेत्युप्तान्तं प्रत्यभिमृशत एतयैवावृतोत्तरं गोदानमद्भिरुनत्ति
यजुषा वा तूष्णीं वा
नापिताय त्तुरं प्रयच्छन्नाह नापितोप्तकेशश्मश्रुं मे निकृत्तनखं प्रब्रूतादिति
तं तथा प्राहाथैनमद्भिरभिषिञ्चत्यापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः

पुनन्त्विति
संप्रधाव्य रजः प्रप्लावयति विश्वमस्मत्प्रवहन्तु रिप्रमित्युदेत्युदाभ्यः शुचिरा पूत एमीति
वसनस्यान्तेन प्रतिच्छाद्याप आचामत्यपोऽश्नादिति ब्राह्मणम्
अथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहीत्यथास्यैतन्नवनीतं विचितमुदशराव उपशेते
तस्य पाणिभ्याँ संप्रम्लाय मुखमेव प्रथममभ्यङ्क्ते महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहीत्य्
अनुलोममा पादाभ्याम्
अन्योऽस्य पृष्ठमभ्यनक्त्यथास्यैतदाञ्जनं पिष्टं दृषद्युपशेते सतूला च शरेषीका
तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहीति त्रिरनिधावं द्विरुत्तरम्
अप्यु पञ्च कृत्व आङ्क्त इति ब्राह्मणम्पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरम्
अथैनमेकविँशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति
यजमानमतिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्यथैनँ सव्ये पाणावभिपात्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति
पूर्वया द्वारा शालां प्रपादयतीन्द्राग्नी द्यावापृथिवी आप
ओषधीरित्यथैनमग्रेणाहवनीयं पर्याणीय दक्षिणत
उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसीतीह मा सन्तं पाहीत्यात्मानम् २

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता पत्न्यै दक्षिणमुपपक्षमद्भिरुनत्ति
तूष्णीं तूष्णीमूर्ध्वाग्रं बर्हिरनूच्छ्रयति
तूष्णीँ स्वधितिं तिर्यञ्चं निदधाति
तूष्णीं प्रवपति
तूष्णीमुप्तान्तं प्रत्यभिमृशत एतयैवावृतोत्तरमुपपक्षमद्भिरुनत्ति तूष्णीमेव
नापिताय क्षुरं प्रयच्छन्नाह नापितोप्तोपपक्षां मे निकृत्तनखां प्रब्रूतादिति
तां तथा प्राहाथैनामद्भिरभिषिञ्चति तूष्णीं

तूष्णीँ संप्रधाव्य रजः प्रप्लावयति तूष्णीम्
अद्भिरुदेति तूष्णीम्वसनस्यान्तेन प्रतिच्छाद्याप आचामति
तूष्णीं प्रदक्षिणमहतं वासः परिधत्ते
तूष्णीमभ्यङ्क्ते
तूष्णीमाङ्क्तेऽथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति
तूष्णींतूष्णीमेवाथैनामानीयापरया द्वारा शालां प्रपाद्य प्राचीमुदानयन्वाचयति
प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा
इहेत्यथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमित्यथ पृष्ठ्याँस्तीर्त्वापः
प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति
तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीँ संनह्यति न
यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं
याचति न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं
वाचयति न विष्णुक्रमान्क्रमतेऽथाध्वयुः प्रदक्षिणमावृत्य प्रत्यङङाद्रुत्य
पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः
स्रुवेणोपघातं दीक्षाहुतीर्जुहोति ३

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये
स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा
पञ्चमीं जुहोत्यापो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं
बृहस्पतिर्नो हविषा वृधातु स्वाहेत्
अपरं चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाँ स्रुचमौद्ग्रहणं जुहोति विस्वे देवस्य
नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे
स्वाहेत्यत्रैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथाग्रेणाहवनीयं पर्याहृत्य यजमानाय
प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां चौदुम्बरं दण्डं
पञ्चममुष्णीषँ षष्ठम्
अथ प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वासश्च योक्त्रं च शङ्कुं
च ४

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति

तस्य शुक्लकृष्णे संमृशति शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिर्ऋृक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृच इत्यथ दक्षिणं जान्वाच्याभिसर्पतीमां धियँ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सँशिशाधि । ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावँ रुहेमेत्यथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छेति पाहि मा मा मा हिँसीरिति निष्टर्क्यं ग्रन्थिं ग्रथ्नात्येतस्मिन्काले प्रतिप्रस्थाता योक्त्रेण पत्नीँ संनह्यत्याशासाना सौमनसं सं त्वा नह्यामीति द्वाभ्याम्

अथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति

वसनस्यातीकाशेषु वाचयति नक्षत्राणां मातीकाशात्पाहीति

प्रतिकृष्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेण शिरो वेष्टयति श्रिया ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसायेत्

एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमध्यूहति तूष्णीम्

अथास्यैषा कृष्णविषाणा त्रिवलिर्वा पञ्चवलिर्वा शाणया रज्ज्वा परितृणा मण्डचरवद्विग्रथिता

तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसीति

मा मा हिँसीरिति यजमानः प्रतिगृह्णाति

तां वसनस्यान्तमायां दशायां बद्ध्वा तयान्तर्वेदि लोष्टमुद्धन्ति कृष्यै त्वा सुसस्याया इति

सुपिप्पलाभ्यस्त्वौषधीभ्य इति दक्षिणं गोदानं कण्डूयत एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै शङ्कमाबध्नात्येतेन कण्डूयस्वेत्यथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितं सूपस्था देवो वनस्पतिरित्यूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णात्यथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याँ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इत्यत्र मुष्टी करोति वाचं यच्छत्यथाहादीक्षिष्टायं ब्राह्मणोऽसावित्थंगोत्रोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता तमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः प्रब्रूम इति

त्रिरुपाँश्वाह

देवेभ्य एवैनं प्राह
त्रिरुच्चैरुपनिष्क्रम्योभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति ब्राह्मणम्
अथैनँ सँशास्ति ५

दीक्षितोऽसि दीक्षितवादं वद सत्यमेव वद मानृतम्मा स्मयिष्ठार्मा कण्डूयथार्मापावृथा यदि स्मयासा अपिगृह्य स्मयासै यदि कण्डूयासै कृष्णविषाणया कण्डूयासै यदि वाचं विसृजेर्वैष्णवीमृचमनुद्रवताद्या त्वान्यत्र दीक्षितविमितात्सूर्योऽभ्युदियाद्याभिनिम्रुक्ताद्यानि देवतानामानि यथाख्यातं तान्याचक्ष्वाथ यान्यदेवतानामानि यथाख्यातं तान्याचक्षाण उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्मा व्यवच्छेत्था दण्डाच्चेति
स एवमेवैतत्सर्वं करोत्यथोपसमिन्धनवेलायामुत्तरेणाहवनीयं तिष्ठन्संप्रैषमाहाग्नीञ्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति संप्रेष्य वाचंयमयोर्व्रते दोहयतोऽथाध्वर्युः पूर्वया द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य गार्हपत्येऽग्निहोत्रविधिं चेष्टित्वा तप्त्वोदगुद्वास्य शीतीकृत्वातच्य वानातच्य वोत्तरे शालाखण्डे शिक्य आसजत्यथ प्रतिप्रस्थाता दक्षिणया द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य व्रतश्रपणे तप्त्वोदगुद्वास्य शीतीकृत्वातच्य वानातच्य वा दक्षिणे शालाखण्डे शिक्य आसजत्
अथोदितेषु नक्षत्रेषु यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजतेऽथातिथीनामुपस्थामेति
चनसितवतीं विचक्षणवतीं वाचं वदति
स यद्यु हामेध्यमुपाधिगच्छति तज्जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाँ श्रेष्ठो दीक्षे मा मा हासीरित्यथ यद्येनमभिवर्षत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त म मे दीक्षां मा तपो निर्वधिष्टेत्येवं तत्र जपति
तस्यैते यजुषी परिप्लवे आ सँस्थायै भवतोऽथास्मै निपतः काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
स यदि बहुतयमुपस्तीर्णं भवति कृष्णाजिनादेवानन्तर्हितः संविशत्यथ संवेशनयजुर्जपति ६

अग्ने त्वँ सु जागृहि वयँ सु मन्दिषीमहि । गोपाय नः स्वस्तये प्रबुधे नः पुनर्दद इति
दक्षिणतः शय एतद्वै यजमानस्यायतनँ स्व एवायतने शयेऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शय इति ब्राह्मणम्
अथैषा पत्नी जघनेन गार्हपत्यँ संविशति तूष्णीम्
अथाध्वर्युर्मध्यरात्र आद्रुत्य प्रबुद्धयजुर्वाचयति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य इत्यथाप आचामति दैवीं धियं मनामहे सुमृडीकामभिष्टये । वर्चोधाम्यज्ञवाहसं सुपारा नो असद्वश इत्य्
अथास्मै कँसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति
तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेत्य्यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयत्येतस्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति
तत्सा परिश्रित्य व्रतयति तूष्णीं निर्णिज्य पात्रे प्रयच्छतोऽथ तथैव पुरा नक्षत्राणामन्तर्धानात्संप्रेष्य वाचंयमयोर्व्रते दोहयतोऽथोदित आदित्ये यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुतेति त्रिर्वाचं विसृजते
समानो वाचो विसर्गः समानँ संवेशनयजुः समानं प्रबुद्धयजुः समानमपामाचमनँ समानं व्रतनम्
अथ सनीहारान्प्रहिणोति
स यं मन्यते न मा प्रत्याख्यास्यतीति तं प्रथममभि प्रहिणोति विश्वे देवा अभि मामाववृत्रन्पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावेत्याहरन्तं दृष्ट्वा जपति नानाहरन्तं रास्वेयत्सोमा भूयो भर मा पृणन्पूर्त्या विराधि माहमायुषेति
स यथारूपं प्रतिगृह्णाति ७

चन्द्रमसीति हिरण्यम्वस्त्रमसीति वास उस्रासीति गां हयोऽसीत्यश्वं छागोऽसीति छागम्मेषोऽसीति मेषम्
अथ यद्ब्राह्मणेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भवेत्येव

तत्प्रतिगृह्णाति
ताः समुदायुत्य रक्षन्ति
तासां या नश्यति वा म्रियते वा वायवे त्वेति तामनुदिशति

याप्सु वा पाशे वा वरुणाय त्वेति तां या सं वा शीर्यते गर्तं वा पतति
निर्ऋत्यै त्वेति तां यामहिर्वा व्याघ्रो वा हन्ति रुद्राय त्वेति तां तासां तिस्रः
पराच्योऽथ येयं नष्टा यदि विन्देयुः कथँ स्यादित्येतदनुदिष्टैव
स्यादित्येतदेकं कमस्या अतः श्रेयाँ सं प्रतिग्रहीतारं लभेत
दक्षिणाभिरेवैनाँ सह दद्यादित्येकम्वायव्ययैवैनया यजेतेत्येतदपरम् ८

अथातः प्रयाणस्यैव मीमाँसा
दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते सँसृजन्ति व्रते
संबध्नन्ति व्रतदुघयोर्वत्सवादधति यदाग्नेयं भवति नीडे गार्हपत्यं प्रौग
आहवनीयम्
अपि वारण्योरग्नीन्समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि
बृहस्पतिः पुरएता ते अस्त्वित्यथ यद्येनं यान्तं
व्रतनवेलोपाधिगच्छत्युत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति
तूष्णीं तृणोदकायावस्यत्यथ यद्यपर्याणा अप उपाधिगच्छति तज्ञपति
देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो
मावक्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषमिति

सं वा गाहते सं वा तरति
सेतुमेव कृत्वात्येतीति ब्राह्मणम्
अथ यत्र वत्स्यन्भवति तदवस्यत्यथेमवस्य वर आ पृथिव्या
इत्यथादित्यमुद्यन्तमुपतिष्ठत आरे शत्रून्कृणुहि सर्ववीर इत्यथ यत्र
यक्ष्यमाणो भवति तदवस्यत्येदमगन्म देवयजनं पृथिव्या
इत्यान्तादनुवाकस्य ९

अथातः क्रयस्यैवोपवसथः पर्याप्लवते

स उपकल्पयते चन्द्रं च छागां च कृष्णबलक्षयावूर्णास्तुके उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीँ सैषारुणा पिङ्गलैकहायनी भवति सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालितमुद्धृतफलकँ रोहितं चर्मानडुहं द्वयमिध्माबर्हिः कार्ष्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षवी विधृती स्थालीं पद्धरणीमँ शुग्रहणँ हिरण्यमौदुम्बरीँ राजासन्दीं तस्यै नाभिदघ्नाः पादा भवन्त्यरत्निमात्राणि शीर्षाण्यनूच्यानि
सा मौञ्जीभी रज्जुभिर्व्यूता भवत्येकसराभिर्मनाग्वर्षीयसीमिव सम्राडासन्दीं यदि प्रवर्ग्यवान्सोमो भवत्यथाध्वर्युरपररात्र आद्रुत्य सँशास्ति त्रिस्तनव्रतं दोहयतेति

प्रातरुदित आदित्ये विसृष्टायां वाच्यग्रेण शालां तिष्ठन्देवयजनमध्यवस्यति यदि पुरस्तादनध्यवसितं भवत्यथाहैहि यजमानेति
पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याँस्तीर्त्वापः प्रणीयादित्यं चरुम्प्रायणीयामिष्टिं निर्वपति
हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूयाहवनीये स्रुवाहुतिं जुहोति कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्स्वाहेत्यथोपनिष्क्रम्य संप्रैषमाह सोमविक्रयिन्सोमँ शोधयोपरवाणां काले रोहिते चर्मण्यानडुहेऽपामन्ते ब्राह्मणो दक्षिणत आस्तां ता गावो दूरं मा गुर्यासु सोमक्रयणी च सोमवाहनौ चानड्वाहौ सोमवाहनमनः प्रक्षालयतोद्धृत-फलकमिति
यथासंप्रैषं ते कुर्वन्त्यथैतेनैव यथेतमेत्याथैतं चरुँ श्रपयित्वाभिघार्योदञ्चमुद्वास्य षड्ढोत्रा प्रायणीयमासादयति
समानं कर्मा प्रयाजेभ्यः
पञ्च प्रयाजानिष्ट्वोदङङत्याक्रम्य सँस्रावेण पञ्चकृत्वो ध्रुवामभिघार्य चरुमभिघारयत्युपभृतमन्ततोऽथ चतुर आज्यस्य गृह्णान आह   १०

पथ्यायै स्वस्तय इत्युपाँ श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह पथ्याँ स्वस्तिमित्युपाँ शु यजेत्युच्चैर्वषट्कृते पूर्वार्धे जुहोत्यथ चतुर एवाज्यस्य गृह्णान आहाग्नय इत्युपाँ श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपाँ शु

यजेत्युच्चैर्वषट्कृते दक्षिणार्धे जुहोत्य्
अथ चतुर एवाज्यस्य गृह्णान आह सोमायेत्युपाँ
श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सोममित्युपाँ शु यजेत्युच्चैर्वषट्कृतेऽपरार्धे
जुहोत्यथ चतुर एवाज्यस्य गृह्णान आह सवित्र इत्युपाँ
श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह सवितारमित्युपाँ शु यजेत्युच्चैर्वषट्कृत
उत्तरार्धे जुहोत्यथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाहादित्यईत्युपाँ श्वनुब्रूहीत्युच्चैः
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याहादितिमित्युपाँ शु यजेत्युच्चैर्वषट्कृते मध्ये
जुहोत्यथ वै भवत्यदितिमिष्ट्वा मारुतीमृचमन्वाह
मरुतो यद्ध वो दिव इत्यथोपस्तीर्योत्तरार्धाच्चरोरवद्यन्नाहाग्नये
स्विष्टकृतेऽनुब्रूहीत्यथ वै भवत्यष्टावत्तः स्विष्टकृद्द्वादशावत्तेडा
द्विरभिघारयति न प्रत्यनक्त्यथैतन्मेक्षणमधोऽधः
स्रुचावाग्नीध्रायोत्प्रयच्छन्नाहातिवालयतादेव
मानुप्रहार्षीरित्यत्याक्रम्याश्राव्याहाग्निँ स्विष्टकृतं यजेति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा
आहुतीर्जुहोत्यत्रैतन्मेक्षणमाहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः
सादयत्यथोदङङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा
प्राशित्रमवदायेडामवद्यत्युपहूतायामिडायामग्नीध आदधाति
षडवत्तम्प्राश्नन्ति
मार्जयन्ते ११

अथ परिक्रमिणः सँशास्त्यनुच्छिष्टीकुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीताथैतां
चरुस्थालीँ सक्षामकाषामेतन्मेक्षणमेतं वेदमेतद्बर्हिश्चतुष्टयमुदयनीयाय
निधत्तादिति
शंय्वन्तः प्रायणीयः संतिष्ठत
अत्रैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं
गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भनाड्यां प्रग्रथ्य स्रुच्यवदधातीयं
ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छेत्यत्रैतां दर्भनाडीँ स्रुग्दण्ड
उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा
विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेत्यपरं

चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी स्थालीं पद्धरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवँ हविरित्यथैनँ हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चितेत्यथैताँ सोमक्रयणीमग्रेण शालामुदीचीमतिवित्सयन्ति
तामनुमन्त्रयते चिदसि मनासीत्यान्तादनुवाकस्याथाह दक्षिणस्येर्मस्य सप्तमं पदं जोषयध्वमिति
तस्यै षट्पदान्यनुनिक्रामति १२

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासीति
सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो
वसुभिराचिकेत्वित्यथैतस्मिन्पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायाः पदे घृतवति स्वाहेत्यपोद्धृत्य हिरण्यँ स्फ्येन वा कृष्णविषाणया वा पदं परिलिखति परिलिखितँ रक्षः परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्
अथैनत्स्फ्येनोपसंग्राहं यावत्तमूतं पद्धरण्याँ संवपत्यस्मे रायोऽस्मे राय इति त्रिस्त्वे राय इति यजमानाय प्रयच्छति
तोते राय इति यजमानः पत्न्या अथ पत्नीँ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्वेत्यथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीत्यथ यजमानः सोमक्रयणीमीक्षते माहँ रायस्पोषेण वियोषमित्यथैनद्भिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ बध्नीतेऽथैनं पदाशयमद्भिरुपसृजत्युत्सृजन्ति सोमक्रयणीं नयन्ति पत्नीं नि पद दधति १३

अथात्रैव तिष्ठन्याचति चन्द्रं च छागां च कृष्णबलक्ष्यावूर्णास्तुके उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमित्यथ पृच्छति सोमविक्रयिञ्छुद्धस्ते सोमा३ इति
शुद्ध इतीतरः प्रत्याह

सुविचितँ राजानं पुरस्ताद्भागाभिरुपतिष्ठत एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताद्छन्दोमानाँ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यथैतद्रोहितं चर्मानडुहमुत्तरलोमास्तीर्याथैतद्द्विगुणं वासः प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणात्यथ हिरण्यवता पाणिना राजानमभिमृशत्यँ शुना ते अँ शुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रह इत्यथैनमतिच्छन्दसर्चा मिमीत एकयैकयोत्सगं मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते सर्वास्वङ्गुष्ठमुपनिगृह्णात्यभि त्यं देवँ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसँरत्नधामभि प्रियं मतिम्। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवरिति
पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं दशकृत्वो मिमानोऽर्धवेलाँ राज्ञो मिमीतेऽथातिशिष्टँ राजानं प्रजाभ्यस्त्वेत्युपसमूहति
समुच्चित्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति व्यानाय त्वेत्यनुश‍ृन्थत्यथोपरिष्टादङ्गुल्यावकाशं कृत्वा यजमानमवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्वित्यथैनं चर्मणि निदधाति तं ततः कौत्स आदत्तेऽद्भिरभ्युक्ष्य चर्मोदूहत्य्
अथोपोत्थाय पृच्छति सोमविक्रयिन्क्रय्यस्ते सोमा३ इति
क्रय्य इतीतरः प्रत्याह
मूजवता३ इति
मूजवतो हीतीतरः प्रत्याहाथैनं गवा पणते गवा ते क्रीणानीति
क्रीतः सोम इत्याह सोमविक्रयी वयाँ सि व्याचक्ष्वेत्येषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं त इत्यथैनँ हिरण्येन पणते १४

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तमभिमातिषाहँ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन संयत्ते गोरित्युक्त्वास्मै चन्द्राणीति यजमानाय प्रयच्छत्यथैनं प्रतीचीनग्रीवयाजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यस्मै ते बन्धुरिति यजमानमीक्षते

मयि ते रायः श्रयन्तामित्यात्मानम्
अथैनां प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीचीमुत्सृजति
सैषा कौत्सस्य भवत्यथ कौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधा इति
तं यजमानस्योरौ दक्षिण आसादयतीन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तँ
स्योनः स्योनमित्यथैनं प्रत्यपोर्णुते यजमानोऽद्भिरभ्युक्ष्य कौत्साय वा
परिकर्मिणे वोष्णीषं प्रयच्छत्यथ यजमानँ शुक्लयोर्णास्तुकयाध्यस्यत्यस्मे
ज्योतिरित्यथैतां कृष्णामुपग्रथ्नातीदमहँ सर्पाणां दन्दशूकानां ग्रीवा
उपग्रथ्नामीति
तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इत्यथ
सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः
सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नित्य्
अथैनमादायोपोत्तिष्ठत्युदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य
शुष्मेणोदस्थाममृताँ अन्विति
दक्षिणत एतत्सोमवाहनमनः प्रागीषं योग्यकृतमुपस्थितं भवति
तदभिप्रैत्युर्वन्तरिक्षमन्विहीति
तस्य नीडे कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीत्यदित्याः सद आसीदेति
कृष्णाजिने राजानम्
अथैनमुपतिष्ठतेऽस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानीत्यथैनं वाससा
परितनोति वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु क्रतुं
वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रावित्यथोदु त्यं जातवेदसमिति
सौर्यर्चा कृष्णाजिनं पुरस्तात्प्रत्यानह्यत्यथ सोमवाहनावानीयमानौ
प्रतिमन्त्रयत उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनविति
तयोर्दक्षिणं पूर्वं युनक्ति वरुणस्य स्कम्भनमसीति
वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति
प्रत्यस्तो वरुणस्य पाश इति योक्त्रम्
एतयैवावृतोत्तरमनड्वाहं युनक्त्यथ दक्षिणामीषामन्वारभ्य संप्रैषमाह १५

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु
त्वमाह्वा यजमान आह्वास्यतीति

यदा यजमानस्त्रिरुपाँश्वाह्वयतेऽथैष सुब्रह्मरयोऽन्तरेरोषे तिष्ठन्पलाशशाखां धारयन्सुब्रह्मरयामाह्वयति सुब्रह्मरयोँ सुब्रह्मरयोमिति त्रिस्
त्रिरुक्तायां प्रच्यावयन्ति प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरादघद्श्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः सँस्कृतमिति

प्रदक्षिणँ राजानं परिवहन्त्यथैतावञ्जसोपसंक्रामतोऽध्वर्युश्च यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्वित्यथाग्रेण शालां तिष्ठन्नोह्यमानँ राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो द्वाय तदृतँ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शँ सतेत्यथैतत्सोमवाहनमनोऽग्रेण शालामुदगीषमुपस्थापयन्ति
तदुपस्तभ्नोति वरुणस्य स्कम्भनमसीति
वरुणस्य स्कम्भसर्जनमसीति शम्यामुद्वृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रम्
अथ वै भवति
विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभत इति ब्राह्मणम्
अथाहैहि यजमानेति
पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याँस्तीर्त्वापः प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्याम्
अथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा १६

अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वातिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वाग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामीत्येतामेव प्रतिपदं कृत्वा श्येनाय त्वा सोमभृते विष्णवे त्वा जुष्टं निर्वपामीति

पञ्चकृत्वो यजुषा

हविष्कृता वाचं विसृज्यैतयैवावृतोत्तरमनड्वाहं विमुञ्चत्यथैते ब्राह्मणाश्चत्वार आसन्दीमाददतेऽथ यजमानो नीडाद्राजानमादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति
पूर्व एवासन्द्या प्रतिपद्यन्तेऽन्वग्राज्ञा यजमानोऽन्वक्छूद्र उदपात्रेण पूर्वया द्वारा शालां प्रपादयति गयस्फानः प्रतरणः सुवीरोऽवीरः प्रचरा सोम दूर्यानित्यथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधति तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानम्
अथैनमुपतिष्ठते वरुणोऽसि धृतव्रतो वारुणमसीति
समुच्चित्य कृष्णाजिनस्यान्तान्स्पन्द्यया विग्रथ्य वँशे प्रग्रथ्नाति शंयोर्देवानाँ सख्यादित्यथापरावासन्दीपादावन्तरेण ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छित्स्महीत्यथैनं वारुण्यर्चा परिचरति तत्त्वा यामि ब्रह्मणा वन्दमान इत्यथैनँ सँशास्ति मा राजानं चाहवनीयं चान्तरेण कश्चन संचारीद्वैनँ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्पाद्योऽनुप्रपादीदित्यथास्मै मधुपर्कं च गां च प्राहुस् तामध्वर्युर्विशास्ति १७

श्रपयन्त्येतमातिथ्यं वैष्णवं नवकपालं तेन सह मदन्तीरधिश्रयति
शिल्पवदेतदिध्माबर्हिरातिथ्यस्य भवति
कार्ष्मर्यमयैः परिधिभिराश्ववालेन प्रस्तरेणैक्षवीभ्यां विधृतीभ्यां तेन शिल्पवत्

त्वचं पुरोडाशस्य ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिग्राह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्याहृतासु प्रोक्षाणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमाष्ट्याज्येनोदेत्याज्यं च

प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति
पञ्चविधं बर्हि स्तीर्त्वा प्रस्तर पाणिः प्राङभिसृप्य
कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति
विधृत्योराश्ववालं प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरे
एता असदन्निति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङङाद्रुत्याथैतं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य चतुर्होत्रातिथ्यमासादयत्यत्र संभारान्व्याचष्टेऽथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति
प्रहृत्याभिहुत्याथेध्मात्समिधमाददान आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मं न समिधं पैशिनष्टि
वेदेनोपवाज्ययत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति

संमृष्टे स्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्रुचावुदङङत्याक्रम्य जुह्वा ध्रुवाँ समज्य सादयित्वा स्रुचौ प्रवरं प्रवृनीते
प्रसिद्धँ होतारं वृणीते
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यजेति
वषट्कृते जुहोति यज यजेति
चतुर्थं यक्ष्यन्नत्रैतदौपभृतमाज्यँ सर्वश एव जुह्वाँ समानयते
पञ्च प्रयाजानिष्ट्वोदङङत्याक्रम्य सँस्रावेण ध्रुवामभिघार्य पुरोडाशमभिघारयति नोपभृतम्
अथाग्नये सोमायेत्याज्यभागाभ्यां चरत्युपाँ शु हविषा चरति विष्णवेऽनुब्रूहि विष्णुं यजेत्यथ स्विष्टकृता चरतीडान्त आतिथ्यः संतिष्ठतेऽत्रैतत्पूर्णपात्रमन्तर्वेदि निनयत्यत्रैतद्ध्रुवाज्यमाप्याय्य कँसं वा

चमसं वा याचति
तमन्तर्वेदि निधाय तस्मिन्नेतत्तानूनप्त्रं निगृह्णाति  १८

आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामीति
स यावन्त ऋत्विजस्त एनत्समवमृशन्त्यनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमिति
यजमानमतिवाचयत्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषं सुविते मा धा इति
स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव त्रिरवजिघ्रति प्रजापतौ त्वा मनसि जुहोमीत्यथैनदद्भिरभ्युन्नीयोत्तरतः सिञ्चत्यथाहाग्नीन्मदन्त्यापा३ इति मदन्ति देवीरमृता ऋतावृध इति
ताभिराद्रवेत्यथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्त्यँ शुरँ शुस्ते देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति

यजमानमतिवाचयत्याप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याँ स्रुचौ व्यूहति
विधृतीभ्यां प्रस्तरँ समुल्लुप्याप्रतिशृणँस्त्रेधानक्ति
न प्रस्तरायाश्रावयति
न बर्हिरनुप्रहरति
तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणो निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति
परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावन्मात्रँ स्पन्द्यया विग्रथ्याहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयत्यथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियँ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनँ सँशास्ति संतरं मेखलाँ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयस्वोत्पूर्वं व्रतनँ सृज या ते अग्ने रुद्रिया

तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातोऽधि व्रतयेति
स एवमेवैतत्सर्वं करोति   १६

अथ प्रवर्ग्यस्यावृता प्रवर्ग्येण चरत्यथ स्फ्यमाददान आहाग्नीन्मदन्तीरधिश्रय
हविरधिश्रयेह्युपसीदेत्येतास्वेव मदन्तीषु भूयसीरप आनयत्याज्यमधिश्रयति
तद्धविरथैतस्यैव बर्हिष स्तीर्णस्य पर्यवलोपँ स्तम्बयजुर्हरत्
इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा
संप्रैषमाह मदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि
हविषोदेहीत्याहृतासु मदन्तीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचौ च संमार्ष्टि
हविषोदेति
हविश्च मदन्तीश्चोत्पूयाष्टौ कृत्वो जुह्वां गृह्णीते
चतुरुपभृत्याज्यस्थाल्यां तृतीयामुत्प्रदाय मदन्तीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णात्येकविधं बर्हि
स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे
समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति
विधृत्योराश्ववालं प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरे
एते असदतामिति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन
गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टेऽथैतेनैव यथेतमेत्याथेध्मात्समिधमाददान
आहाग्नये समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मँ सकृद्वा त्रिर्वा
न समिधं परिशिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति
संमृष्टे न स्रुग्भ्यामुत्तरम्
अथ प्रवरं प्रवृणीतेऽथाश्रावयत्यो श्रावयास्तु श्रौषट्सीद होतरित्येतावान्प्रवरः
सीदति होता
प्रसवमाकाङ्क्षति

प्रसूतः स्रुचावाददान आह २०

अग्नय इत्युपाँ श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपाँ शु
यजेत्युच्चैर्वषट्कृते पूर्वार्धेऽर्धवेलां जुहोत्यथात्रैव तिष्ठन्नाह सोमायेत्युपाँ
श्वनुब्रूहीत्युच्चैराश्राव्याह सोममित्युपाँ शु यजेत्युच्चैर्वषट्कृते मध्ये जुहोत्यथ
समानयमान आह विष्णव इत्युपाँ श्वनुब्रूहीत्युच्चैराश्राव्याह विष्णुमित्युपाँ शु
यजेत्युच्चैर्वषट्कृते पश्चात्सर्वं जुहोत्यथोदङ्ङत्याक्रम्य यथायतनँ स्रुचौ
सादयित्वाथाहाग्नीन्मदन्त्यापा३ इति
मदन्ति देवीरमृता ऋतावृध इति
ताभिराद्रवेत्यथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय
राजानमाप्याययन्त्यँ शुरँ शुस्ते देव सोमाप्यायतामिन्द्रायैकधनविद आ
तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति
यजमानमतिवाचयत्याप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम
सुत्यामशीयेत्यथाप उपस्पृश्य यथायतनमुपविशन्त्यथाध्वर्युर्वाजवतीभ्याँ
स्रुचौ व्यूहति
विधृतीभ्यां प्रस्तरँ समुल्लुप्याप्रतिशृणँस्त्रेधानक्ति
न प्रस्तरायाश्रावयति
न बर्हिरनुप्रहरति
तं दक्षिणार्धे वेद्यै निधाय तस्मिन्दक्षिणोत्तरिणो निह्नुवत एष्टा रायः प्रेषे
भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति
सव्ये पाणौ प्रस्तरँ समावृत्याज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं
जुहोति या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीम्त्वेषं वचो
अपावधीँ स्वाहेति
परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावन्मात्रँ स्पन्द्यया
विग्रथ्याहवनीयेऽतिवाल्याद्भिरभ्युन्द्योत्तरतः सादयत्
अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं
प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां त्रिस्तनव्रतं प्रयच्छत्यथापराह्ण
आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति
तयोः समानी चर्यैतावदेव नाना
सव्योत्तरिणो निह्नुवतेऽथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय

त्रिस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मरायः सुब्रह्मरायां त्रिस्तनव्रतं दोहयति
तदर्धरात्रे प्रयच्छति २१

अथाध्वर्युरपररात्र आद्रुत्य सँशास्ति द्विस्तनव्रतं दोहयतेति
प्रातरुदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति
रजाशयामत्र जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मराय सुब्रह्मरायामाह्वय
द्विस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मरायः सुब्रह्मरायां द्विस्तनव्रतं प्रयच्छति
स आहवनीयादेवाग्रे षट्प्राचः प्रक्रमान्प्रक्रामति
तच्छङ्कुं निहन्ति
स शालामुखीयः शङ्कुः
शालामुखीयाच्छङ्कोः षट्त्रिँशत्प्राचः प्रक्रमान्प्रक्रामति
तच्छङ्कुं निहन्ति
स यूपावटीयः शङ्कुः
शालामुखीयाच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान्प्रक्रामति पञ्चदशोदीचस्
तच्छङ्कू निहन्ति
ते श्रोणी
यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान्प्रक्रामति द्वादशोदीचस्
तच्छङ्कू निहन्ति

तावँ सवथैनामक्ष्णया मानेन प्रमाय समन्तँ स्पन्द्यया परितनोति
पृष्ठ्यामातनोति
यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति
स मध्यम औत्तरवेदिकः शङ्कुर्मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा
क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि
तच्छङ्कू निहन्ति
ते श्रोणी
यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि
तच्छङ्कू निहन्ति
तावँ सवथैनामक्ष्णया मानेन प्रमाय समन्तँ स्पन्द्यया परितनोति
पृष्ठ्यामातनोति

मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यँ षट्प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं तत्स्पन्द्यं निदधाति
स उपरवाणां कालोऽथ महावेद्या उत्तरादँ सीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं तदाग्नीध्र उपसीदति
स उत्करस्य कालोऽथोपरवाणां कालात्स्तम्बयजुर्हरति   २२

इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति करणं जपतीमां नराः कृणुत वेदिमेत्य वसुमतीँ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीम्वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येदित्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निम्नान्पूरयत किँ शारूणि निरस्यत प्राचीमुदीचीं प्रवणां निस्तिष्ठतेति
यथासंप्रैषं ते कुर्वन्त्यथ महावेद्या उत्तरादँ सीयाच्छङ्कोर्वेद्यन्तेन त्रीन्प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं चतुर्थं
तच्चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याथैनां प्रतिच्छाद्यापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां द्विस्तनव्रतं दोहयति
तदर्धरात्रे प्रयच्छति   २३

अथाध्वर्युरपररात्र आद्रुत्य सँशास्त्येकस्तनव्रतं दोहयतेति
प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति हराशयामत्र जुहोत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् अर्धस्तनव्रतं प्रयच्छत्यथ तदानीमेवापराह्णिकी प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यँ सँसादयोद्वासनायेति
त्रेधैतत्पदं कुर्वन्ति
गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधत्यथ प्रवर्ग्यस्यावृता

प्रवर्ग्यमुद्वासयत्यग्नेरावृताग्निं प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह
प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्येतावान्संप्रैषोऽत्रैवैतद्बर्हिरनुस्पन्द्यँ स्तृणाति सकृदेवैतदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिशयीतेत्येक आहुरथास्यैते अनसी प्रक्षालिते प्रपन्ने योग्यकृते अभितः शालां तिष्ठतस्

तयोर्दक्षिणं वर्षीय उत्तरँ ह्रसीय उद्धृतफलकं दक्षिणमनुद्धृतफलकमुत्तरं तयोर्यदक्षे बद्धं तदवस्यत्यथैने अन्तर्वेद्यभ्यावर्तयन्त्यथाग्रेण शालामरत्निमात्रमभित स्पन्द्याँ स्थापयित्वाथैने प्रोक्षति वैष्णवी विष्णवे शुन्धेथामित्यथाहेहि यजमानेति
पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इद्मही देवस्य सवितुः परिष्टुतिः स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीँ सस्रुवाँ स्फ्यमुदपात्रं बर्हिर्हिरण्यमित्येतत्समादायाहेहि यजमानेत्यन्वग्यजमानोऽनूची पत्नी पदतृतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य दक्षिणस्यां वर्तन्याँ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पाँ सुरे स्वाहेत्यथैतेषां पदपाँ सूनामर्धान्पत्न्यञ्जलावावपत्यथैनान्संस्रावेणाभिघारयति
सा प्राचोत्तानेन पाणिना दक्षिणमक्षधुरमुपानक्त्या नो वीरो जायतां कर्मण्यो यँ सर्वेऽनुजीवाम यो बहूनामसद्वशीत्यपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपसृप्योत्तरस्यां वर्तन्याँ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीरावती धेनुमती हि भूतँ सूयवसिनी मनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहेत्य् अत्रैतान्पदपाँ सून्सर्वश एव पत्न्यञ्जलावावपत्यथैनान्सँस्रावेणाभिघारयति
सा प्राचोत्तानेनैव पाणिनोत्तरमक्षधुरमुपानक्ति
समान उपाञ्जनोऽथैतानि शस्त्राणि प्रतिप्रस्थात्र उत्प्रयच्छति
नयन्ति पत्नीँ ह्वयन्ति होतारम्
अथैने संपरिगृह्य संप्रैषमाह २४

हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति
त्रिरुक्तायां प्रवर्तयन्ति प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जीह्वरतमित्यथ यद्यक्ष उत्सर्जति सुवाग्देव दुर्यां॑ वदेत्येव तत्र जपत्यथैतावञ्जसोपसंक्रामतोऽध्वर्युश्च प्रतिप्रस्थाता चोत्तरेण हविर्धाने परीत्य पूर्वाव्युपातीत्य मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यं त्रीन्प्रतीचः प्रक्रमान्प्रक्रामतस्
तदेनयोर्नभ्यस्थयोश्चुबुके रमयतोऽत्र रमेथां वर्ष्मन्पृथिव्या इत्यथ दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चाध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्त्यथैनां॑ स्पन्द्यया सूपनिबद्धामुपनिबध्नाति विष्णोर्नुकं वीर्याणि प्रवोचमित्येवमेव प्रतिप्रस्थातोत्तरस्य हविर्धानस्योत्तरतो मेथीं निहन्त्य् अथैनां॑ स्पन्द्यया सूपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेणाथाध्वर्युर्दक्षिणस्य हविर्धानस्य चुबुकात्प्राञ्चमरत्निं मीत्वा लोके न्यस्य गर्तं खानयत्यथ दक्षिणाद्युगान्तात्प्राञ्चं बाहुं मीत्वा लोके न्यस्य गर्तं खानयति तावुभावुत्तरेणान्यं गर्तं खानयत्येवमेव
प्रतिप्रस्थातोत्तरतस्त्रीन्गर्तान्खानयत्येवमपरतस्
तेषु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति
तासूदञ्चौ वँशौ प्रोहन्त्यध्यस्यन्ति पुरस्ताद्रराटीं विष्णो रराटमसीति
विष्णोः पृष्ठमसीति मध्यमं छदिरधिनिदधाति
विष्णो श्न्यप्त्रे स्थ इति ये अभितो भवतो दक्षिणतश्चोत्तरतश्च परिश्रयन्ति प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं प्रवयति दर्भणे स्पन्द्याम्विष्णोः स्यूरसीति
विष्णोर्ध्रुवमसीति ग्रन्थिं करोति
तं तदानीमेव विस्रस्याहाकुर्वन्तो ग्रन्थीन्हस्तकौशलैर्निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुम्
एवमपरे द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशति वैष्णवमसि विष्णवे त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य शालामुखीयाच्छङ्कोरनुस्पन्द्यँ षट्प्राचः प्रक्रमान्प्रक्रामति दक्षिणा सप्तमं
तदभ्रिं निदधाति
स औदुम्बर्यै कालेऽउदुम्बर्यै कालादभ्रिमादत्ते   २५

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति
तयौदुम्बर्या अवटं परिलिखति परिलिखितँ रक्षः परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथोद्गातारमाहोद्गातरेहीममौदुम्बर्या अवटं खन प्राक्पुरीषमुद्वपतादिति
तँ स खनति वा खानयति वा
सोऽत एव सदो विमिमीते
यथा त्रीणि छदींषि तिर्यञ्चयेवं प्राक्शो यथा त्रीणि छदींष्यन्वञ्चयेवमुदक्शोऽपि वा यथा द्वौ भागावुदक्स्पन्द्यायै स्यातामेको दक्षिणत इति
तस्य त्रिश्रेणिगर्तान्खानयति
सोऽत एव प्राङ्द्रुत्वा दक्षिणस्य हविर्धानस्य पुरोऽक्षमुपरवान्विमिमीते प्रादेशमुखान्प्रादेशान्तस्पादान्
अथोन्नेतारमाहोन्नेतरे हीमानुपरवान्खन प्रादेशमुखान्प्रादेशान्तस्पादान्बाहुमात्रानवाचोऽसंभिन्दन्नुपरिष्टादधस्तात्संतृणानिति

तान्स खनति वा खानयति वाथैषां पुरीषं दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं निवपति
तं चतुरश्रं खरं करोत्यथैनँ सिकताभिराभ्राशिनं करोत्यथोपरवाणां कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति
तया यूपावटं परिलिखति यथान्तर्वेद्यर्धँ स्याद्बहिर्वेद्यर्धम्परिलिखितँ रक्षः परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीत्यथाग्नीध्रमाहाग्नीदेहीमं यूपावटं खनोपरसंमितं प्राक्पुरीषमुद्वपताद्चतुरङ्गुलेनोपरमतिखनतादिति
तँ स खनति वा खानयति वा
यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थातौदुम्बरीँ स्थूणां यजमानेन

संमायाधस्तात्परिवासयत्यच्छिन्नो रायः सुवीर इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीँ सस्रुवां मैत्रावरुणदण्डँ हिरण्यमुदपात्रमित्येतत्समादायाहैहि यजमानेत्यौदुम्बर्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटादुपशेते
तां परस्तादर्वाचीं प्रोक्षति   २६

दिवे त्वानतरिक्षाय त्वा पृथिव्यै त्वेत्यवटेऽपोऽवनयति शुन्धतां लोकः पितृषदन इति
यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति
बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणाँ सदनमसीत्य्
अथैनद्धिरण्यमन्तर्धाय स्रुवाहुत्याभिजुहोति पितृभ्यः स्वाहेत्यथैनामुच्छ्रयत्युद्दिवँस्तभानान्तरिक्षं पृण पृथिवीं दृँहेत्यथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्यथैना प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिँ सुप्रजावनिँ रायस्पोषवनिं पर्यूहामीति
मैत्रावरुणदण्डेन सँहन्ति ब्रह्म दृँह क्षत्रँ दृँह प्रजां दृँह आयस्पोषं दृँहेत्यन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीयाथास्यै विशाखे हिरण्यं निधाय स्रुवाहुत्याभिजुहोति घृतेन द्यावापृथिवी आपृणेथाँ स्वाहेत्यान्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसानक्तीति ब्राह्मणम्
अथैनामुद्गातृभ्यः प्राहुस्
तस्यां तच्चेष्टन्ति यत्ते विदुरेतस्या उच्छ्रयणमनु प्राचीनकर्णा स्तूणा उच्छ्रयन्ति तासूदीचो वँशान्प्रोहन्त्यध्यस्यन्ति मध्यमं छदिरिन्द्रस्य सदोऽसीति विश्वजनस्य छायेति ये अभितो भवतो नवच्छदि तेजस्कामस्य मिनुयादिति त्रीणित्रीण्येव सर्वाणि भवन्ति
दक्षिणान्युत्तराणि करोति
स दक्षिणानिदक्षिणान्येवोत्तराणि करोत्यन्तर्वर्तान्करोति व्यावृत्त्या इति सन्धिषु तृणवर्तान्प्रत्यस्यति
तेऽन्तर्वर्ता अथैनत्परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इति

दक्षिणतश्चोत्तरतश्च परिश्रयन्ति
प्राचीं च प्रतीचीं च द्वारौ कुर्वन्त्यथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं प्रवयति दर्भणे स्पन्द्यामिन्द्रस्य स्यूरसीतीन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति
तं तदानीमेव विस्रस्याहाकुर्वन्तो ग्रन्थीन्हस्तकौशलैर्निस्तिष्ठतेत्येवमेवोत्तरं द्वार्बाहुम्
एवमपरे द्वार्बाहू निस्तिष्ठत्यथैनदभिमृशत्यैन्द्रमसीन्द्राय त्वेत्यथ महावेद्या उत्तरादँ सीयाच्छङ्कोर्वेद्यन्ते नाष्टादश प्रतीचः प्रक्रमान्प्रक्रामति
तदाग्नीध्रागारं विमिमीते यथान्तर्वेद्यर्धँ स्याद्बहिर्वेद्यर्धम्
अथैनत्समुच्छ्रित्य परिश्रयन्ति
तस्य दक्षिणां द्वारं कुर्वन्त्याग्नीध्रागारस्य पार्श्वमानी पश्चारत्निरेतेन मार्जालीयो व्याख्यातस्
तस्योदीचीं द्वारं कुर्वन्ति २७

अथात्रैव तिष्ठन्याचत्यभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीँ सस्रुवामधिषवणं चर्माधिषवणे फलके षट्छङ्कून्ग्रावाणँ हिरण्यमुदपात्रमित्येतत्समादायाहैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य नीड एतच्चर्मोत्सादयति पुरोऽक्षमितराणि सँसादयन्त्यथोपरवाणां कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इ
इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरसीति
तयोपरवान्परिलिखति पूर्वयोर्दक्षिणमेवाग्रे परिलिखितँ रक्षः परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान्द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामीति सर्वानिवानुपूर्वं
खनति रक्षोहणो वलगहनो वैष्णवान्खनामीति सर्वानिवानुपूर्वम्
अथैभ्यः पाँसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसेत्यवबाढो वलग इति यजमानस्याधस्पदं पाँसूनुद्वपति
पूर्वयोर्दक्षिणात्
त्रैष्टुभेन छन्दसेत्यपरयोर्दक्षिणाद्जागतेन छन्दसेत्यपरयोरुत्तरादानुष्टुभेन

छन्दसेति पूर्वयोरुत्तरादत्रैतान्पदपाँ सूनसञ्चरे परावपत्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्याथैनानवमृशतोऽध्वर्युश्च यजमानश्च पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं यजमानोऽथ यजमानः पृच्छति अध्वर्यो किमत्रेति
भद्रमिति
तन्नौ सहेत्यथाध्वर्युः पृच्छति यजमान किमत्रेति
भद्रमिति
तन्नौ सहेति
यमेवाध्वर्युः प्रजहाति तं यजमानोऽवमृशति
दक्षिणयोरपरमेवाध्वर्युरवमृशति पूर्वं यजमानोऽध्वर्युरत्र पृच्छत्यथ यजमानोऽपरयोरुत्तरमेवाध्वर्युरवमृशति दक्षिणं यजमानो यजमानोऽत्र पृच्छत्यथाध्वर्युरुत्तरयोः पूर्वमेवाध्वर्युरवमृशत्यपरं यजमानोऽध्वर्युरत्र पृच्छत्यथ यजमानो यजमानः प्रथमः पृच्छति यजमान उत्तमोऽथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणाँ हन्तेति
सर्वानेवानुपूर्वम्

अथैनानद्भिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति
सर्वानेवानुपूर्वम्
अथैष्वपोऽवनयति रक्षोहणो वलगहनेऽवनयामि वैष्णवानिति
सर्वेष्वेवानुपूर्वम्
अथैषु यवान्प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति
सर्वेष्वेवानुपूर्वम्
अथैनान्बर्हिषावस्तृणाति रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवानिति
सर्वानेवानुपूर्वम्
अथैनान्हिरण्यमन्तर्धाय स्रुवाहुत्याभिजुहोति रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान्स्वाहेति सर्वानेवानुपूर्वम्
अथास्यैते फलके दीर्घसोमे संतृण्णे भवतोऽसंतृण्णे एकाहे
ते सँस्पृष्टे उपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवी इत्यथैने शङ्कुभिः परिणिहन्ति द्वाभ्यां पुरस्ताद्द्वाभ्यां

पश्चाद्द्वाभ्यामभितोऽनवसर्पणायाथैने प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इत्यथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परिष्तृणामि वैष्णवी इत्यथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवी इत्यथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठेति वा तूष्णीं वा
तिरश्चर्मन्फलके ग्राव्णोद्वादयति २८

बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति
नीड एतच्चर्मोत्सादयति

ग्रावसु ग्रावाणमप्यर्जत्यथ दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति स्तोत्रेभ्योऽथ याचति स्फ्यमुदपात्रं चात्वालात्पुरीषँ सिकता इत्येतत्समादायाहैहि यजमानेत्याग्नीध्रं द्रुत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालात्पुरीषँ सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिँ सीरिति
तं परिमण्डलं धिष्णियं करोत्यथैनँ सिकताभिराभ्राशिनं करोत्यथान्तःसदसं धिष्णियान्निवपति होतुः प्रथमम्वह्निरसि हव्यवाहन इति
श्वात्रोऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य
तुथोऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छँसिन उशिगसि कविरित्युत्तरतः पोतुरङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुरवस्युरसि
दुवस्वानित्युत्तरतोऽच्छावाकस्याथ दक्षिणे वेद्यन्ते मार्जालीयं धिष्णियं निवपति शुन्ध्यूरसि मार्जालीय इति
सर्वेष्वेव रौद्रमनुवर्तयत्याग्नीध्रेऽन्ततो निवपत्युदक्सँस्थताया इत्यष्टौ न्यवाप्सीदित्यथाष्टावनुदिशति
सम्राडसि कृशानुरित्याहवनीयमुपतिष्ठते
परिषद्योऽसि पवमान इत्यास्तावम्प्रतक्वासि नभस्वानिति चात्वालम्
असंमृष्टोऽसि हव्यसूद इति पशुश्रपणम्
अथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठत ऋतधामासि सुवर्ज्योतिरिति

ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनम्

अथात्रैव तिष्ठन्गार्हपत्यमुपतिष्ठतेऽजोऽस्येकपादित्यहिरसि बुध्निय इति यं प्रहास्यन्तो भवन्ति   २९

अथात्रैव तिष्ठन्संप्रैषमाह स्तृणीत बर्हिः प्र व्रतं यच्छत समपिव्रतान्ह्वयध्वमास्तावं बहुलँ स्तृणीत सदोहविर्धाने बहुले स्तृणीतोन्नेतर्ग्राव्णो वायव्यानि द्रोणकलशे दशपवित्रे समवधाय पत्नीशाले सँसादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति
यथासंप्रैषं ते कुर्वन्त्यथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिँ स्तृणाति देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति
तां बहुलां पुरस्तात्प्रत्यञ्च स्तृणन्तो यन्त्यथान्तःशालं पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छति
तं ब्रह्मादायोत्तरतस्तिष्ठत्युत्तरतस्तिष्ठन्नग्निमन्वानयत्युदग्ने तिष्ठानु मानुदेहि विश्वैर्देवैर्यज्ञियैः संविदानः । सुवर्गे लोके यजमानँ हि धेहि मास्यै हास्था आहुत्यै यामुपेम इत्यथाभ्यादधातीध्मं प्रणयनीयम्
उपोपयमनीः कल्पयन्ति चात्वालात्
समन्वारब्धेष्वपिव्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनानि जुहोति त्वँ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथँ स्वाहेति

स्रुवेणाप्तुं प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा संप्रैषमाहाग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति
त्रिरुक्तायामुद्यच्छन्ते
होतुर्वशं यन्त्यथ वै भवति
प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाँसि प्रवर्तयन्तीति
यदस्यात्र शस्त्रं भवति पूर्वं तेनाग्निमन्ववस्यन्त्यथाग्निप्रथमाः प्रतिपद्यन्तेऽन्वग्राञ्चा चाज्यैश्चान्वग्ग्राव्णो वायव्यानि
पूर्वया द्वारोपनिष्क्रामन्त्ययं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातवित्युत्तरेण सदः परीत्याग्नीधागारेऽग्निं निधाय नयवत्यर्चाग्नीध्रे जुहोत्यग्ने नय सुपथा राये

अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमौक्तिं विधेम स्वाहेत्यत्रैवैतद्ग्रावोवायव्यँ समुपसाद्योपातियन्ति राज्ञा चाज्यैश्चाहवनीये स्रुवाहुतिं जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति ३०

अथ प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति
पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य
कार्ष्मर्यमयान्परिधीन्परिदधात्यूर्ध्वे समिधावादधात्यैक्षवी विधृती तिरश्ची सादयति
विधृत्योराश्ववालं प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरा एता असदन्निति समभिमृश्याथाप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमित्यथ दक्षिणस्य हविर्धानस्य नीडे
कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीत्यदित्याः सद आसीदेति कृष्णाजिने राजानम्
अथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तँ रक्षध्वं मा वो दभदिति
संप्रदायोपतिष्ठत एतत्त्वँ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सह प्रजया सह रायस्पोषेणेति
नमो देवेभ्य इति प्राञ्चमञ्जलिं करोति
स्वधा पितृभ्य इति दक्षिणा न्यचत्यथोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्यथाहवनीयमुपतिष्ठते सुवरभिविख्येषं वैश्वानरं ज्योतिरित्यथ यजमानमवान्तरदीक्षां विसर्जयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियँ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीत्यथैनँ सँशास्ति स्रस्रीष्व मेखलां प्र मुष्टी सारय मैत्रावरुणाय दण्डं प्रयच्छ यजमान इति त्वाचक्षतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्विति

स एवमेवैतत्सर्वं करोत्यथ यूपाहुतिँ हुत्वा यूपं यजुषा करोति
यूपावटं यजुषा करोति
तदेतद्यूपावटान्तम्  ३१

अथ यूपस्यावृता यूपमुच्छ्रयति
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति
तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले
मार्जयन्तेऽथ यो वीडितः कुम्भस्तं याचति
तमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्ति
नान्तमा वहन्तीरत्येति
न स्थावराणां गृह्णाति
प्रतीपं तिष्ठन्गृह्णाति
छायायै चातपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो
हविष्माँ विवासति हविष्माँस्तु सूर्य इत्यथैना आदाय प्रदक्षिणमावृत्य
सव्येऽँसे निधायैतेनैव यथेतमेत्योत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य
पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमौपसदायां वेद्याँ सँस्पृष्टाः
सादयत्यग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा
धत्तेत्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते
पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येके   ३२

अथ वसतीवरीः परिहरिष्यन्नाह व्यपक्रामत मा वोऽभिपरिहारिषमिति
यजमानायतने यजमान उपविशति
जघनेन गार्हपत्यं पत्न्यथैना आदाय दक्षिणया द्वारोपनिर्हृत्य सव्येऽँसे
निधाय दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्य
दक्षिणतो यूपेन सँस्पृष्टाः सादयतीन्द्राग्नियोर्भागधेयी स्थेत्यथैना
आदायोदङ्ङावृत्य दक्षिणेऽँसे निधायैतेनैव यथेतमेत्य जघनेन
गार्हपत्यमौपसदायां वेद्याँ सँस्पृष्टाः सादयति मित्रावरुणयोर्भागधेयी
स्थेत्यथैना आदाय पूर्वया द्वारोपनिर्हृत्य दक्षिण एवाँ से निधायोत्तरेण सदः
परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्योत्तरतो यूपेन सँस्पृष्टाः सादयति

विश्वेषां देवानां भागधेयी स्थेत्यथैना आदाय प्रदक्षिणमावृत्य सव्येऽँसे निधायैतेनैव यथेतमेत्य जघनेनाग्नीध्रीयं धिष्णियँ सँस्पृष्टाः सादयति यज्ञे जागृतेति ३३

अथ पयाँ सि विशास्ति या सम्राड्धुक्तस्यै दधिघर्माय दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या आशिरे पयश्च सक्तूँश्च कुरुत शृतातङ्क्यमादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः कुरुत चतुरोऽम्भृणाँस्त्रीनुदचनानयुज एकधनाँस्त्र्यवमानेकादशपरमाँश्चतस्रो रशनाश्चतस्रो वपाश्रपणीर्द्वयमिध्माबर्हिरौदुम्बरान्महापरिधीन्कुरुत सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्विति

यथासंप्रैषं ते कुर्वन्त्यथैतानम्भृणानायातयत्युत्तरस्य हविर्धानस्य नीड आधवनीयम्प्रौगे पूतभृतं तयोः समान उदचन आग्नीध्र एकँ सोदचनम्मार्जालीय एकँ सोदचनम्
आग्नीध्र एताँ रात्रिं यजमानः संविशति
हविर्धाने राजानं गोपायन्ति ३४

सप्तमः प्रश्नः

अथातो महारात्र एव बुध्यन्ते
संबोधयन्त्येतानृत्विजोऽध्वर्युँ होतारं ब्रह्माणमुद्गातारं प्रतिप्रस्थातारं प्रस्तोतारं प्रशास्तारं ब्राह्मणाच्छँ सिनमच्छावाकं नेष्टारं पोतारँ सदस्यमुन्नेतारमाग्नीध्रं ग्रावस्तुतँ सुब्रह्मण्यं प्रतिहर्तारं ये चान्ये परिकर्मिणो भवन्ति
ते हस्तपादान्प्रक्षाल्याग्नीध्रे यजमानमुपसंगच्छन्तेऽथाध्वर्युर्हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयमित्यथात्रैव तिष्ठन्संप्रैषमाहोन्नेतर्ग्राव्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षँ सँसादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहरेति
यथासंप्रैषं ते कुर्वन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशत्यग्निर्मूर्धा दिव इति वैष्णव्या हविर्धानम्विष्णो त्वं नो अन्तम इत्याग्नेय्या स्रुचोऽयमग्निः सहस्रिण

इति
वायव्यया वायव्यानि वायो शतँ हरीणामित्यैन्द्र्या सद इन्द्रं विश्वा अवीवृधन्नित्यथ पृषदाज्यवन्त्याज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठतीध्मं प्रोक्षति
वेदिं प्रोक्षति
बर्हिः प्रोक्षति
बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृह्णात्येकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्महापरिधीन्परिदधाति नित्येन परिधानेनाथैनान्योगेन युनक्ति
युनज्मि ते पृथिवीं ज्योतिषा सहेति मध्यमं युनज्मि वायुमन्तरिक्षेण ते सहेति दक्षिणम्मृशति युनज्मि तिस्रो विपृचः सूर्यस्य त इत्यथाप उपस्पृश्याहैहि यजमानेति

पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठेति वा तूष्णीं वा तस्मिन्संमुखान्ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्याम् अथैनमुद्गातृभ्यः प्राहुस्तस्मिँस्तच्चेष्टन्ति यत्ते विदुरथाप उपस्पृश्याहैहि यजमानेत्याग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याग्नीध्रे जुहोत्यन्वारब्धे यजमाने स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एवासन्यां जुहोत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः स्वाहेत्यथाहवनीये घृतानुषिक्तँ शकलमभ्यादधाति तूष्णीम्
अथात्रैव तिष्ठन्संप्रैषमाह १

प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वप प्रतिप्रस्थातः खरे पात्राणि युङ्धीति यथासंप्रैषं ते कुर्वन्ति
प्रतिपद्यत एष होता प्रातरनुवाकं यच्छति ब्रह्मा वाचम्
आह्वयति सुब्रह्मण्यः सुब्रह्मण्यां तस्यामाहुतायां ब्रह्मा वाचं विसृजते निर्वपत्येष आग्नीध्र ऐन्द्रानेकादशकपालान्सवनीयांस्तेषां व्रीहिष्वेव

हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यावान्
अथ प्रतिप्रस्थाता खरे पात्राणि युनक्ति

पूर्वार्धे खरस्य दक्षिणाशिरसमुपाँशुसवनं निदधाति दक्षिणत उपाँशुपात्रमुत्तरतोऽन्तर्यामपात्रमुपसँस्पृष्टे
असँस्पृष्टे अभिचरतः
पश्चाद्द्विदेवत्यपात्राण्यन्वञ्चयैन्द्रवायवपात्रं
मैत्रावरुणपात्रमाश्विनपात्रम्पश्चाच्छुक्रामन्थिनोः प्रबाहुग्दक्षिणँ शुक्रपात्रमुत्तरं मन्थिपात्रम्
अग्रेण मन्थिपात्रमृतुपात्रे
पश्चादाग्रयणस्थालीं दक्षिणस्यां खरश्रोण्यामादित्यस्थालीँ सोपशयाम्
उत्तरस्यां खरश्रोण्यामुक्थ्यस्थालीँ सोपशयाम्
उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीम्
अन्तरेण पूतभृदाधवनीयौ चमसान्
दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशं दशापवित्रे इति
निदधात्यथैनान्यभिमृशत्यग्निर्देवता गायत्री छन्द उपाँशोः पात्रमसीति
दशभिर्दशाथाध्वर्युः सं वा विशति कर्माणि वानुप्रेक्षमाण आस्ते २

अथ यत्र होतुरभिजानात्यभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः । अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवमिति तत्प्रचरण्याँ स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । शृणोत ग्रावाणो विदुषो नु यज्ञं शृणोतु देवः सविता हवं मे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय संप्रैषमाहाप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एत नेष्टः
पत्नीमुदानयाग्नीद्धोतृचमसेन च मा वसतीवरीभिश्च चात्वाले
प्रत्युपलम्बस्वेति
यथासंप्रैषं ते कुर्वन्त्य्
आनयति नेष्टा पत्नीं पान्नेजनं कलशमादाय प्रेह्युदेहीत्येतेन निगदेनाथैनां पूर्वया द्वारोपनिष्क्रमय्योत्तरेण सदः परीत्योत्तरेणाग्नीधीयं धिष्णियं पर्याणीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्त्यथाप्सु बर्हिः

प्रास्याभिजुहोति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं
देवेभ्यो देवत्रा धत्त शुक्रँ शुक्रपेभ्यो येषां भाग स्थ स्वाहेति
मैत्रावरुणचमसेनाहुतिमपप्लावयति कार्षिरस्यपापां मृध्रमिति
बर्हिषी अन्तर्धायोन्नयति समुद्रस्य वोऽक्षित्या उन्नय
इत्यथैकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वाथ
पन्नेजनीर्गृह्णाति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः
पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर्गृह्णामीति
ताः पत्न्यै संप्रदायोदायन्त्यन्वारब्धे यजमान एतेनैव यथेतमेत्य चात्वाले
होतृचमसं च मैत्रावरुणचमसं च सँस्पर्श्य वसतीवरीर्व्यानयति
पूरयति होतृचमसम्
अप्तुं मैत्रावरुणचमसे प्रस्कन्दयत्यथ होतृचमसं
वसतीवरीर्मैत्रावरुणचमसमिति त्रयँ संनिधाय प्रतिस्तोमं प्रचरण्या समनक्ति
सं ज्योतिषा ज्योतिरङ्क्ताँ सँशुक्राः शुक्रेण सँहविषा हविः सं
यज्ञपतिराशिषेत्यथैषा पत्न्येतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसदायां
वेद्याँ संस्पृष्टाः सादयति तूष्णीम् ३

अथाध्वर्युर्होतुरुत्काशमेति
होताध्वर्युं पृच्छत्यध्वर्योऽवेरपा३ इत्युतेमनन्नमुरुतेमाः पश्येतीतरः प्रत्याहाथ
यद्यग्निष्टोमो जुहोति यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः । स यन्ता
शश्वतीरिषः स्वाहेत्य्
अथ यद्युक्थ्य एतेनैव यजुषा मध्यमे परिधौ निमार्ष्ट्यथ यद्यतिरात्र एतदेव
यजुर्वदन्प्रपद्यते
यज्ञक्रतूनां व्यावृत्त्या इति ब्राह्मणम्
अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषेऽपातिहृत्य नीड
उत्सादयत्यथोदुब्ज्याधवनीयँ सर्वश एव मैत्रावरुणचमसीयाः पर्यस्यति
तृतीयं वसतीवरीणामवनयति
तृतीयमेकधनानाम्पुरोऽक्षं वसतीवरीः सादयति
पश्चादक्षमेकधननान्
अथान्तरेण हविर्धाने उपविश्यौदुम्बरं पात्रं चतुःस्रक्ति याचति
तस्मिन्बर्हिषी अन्तर्धाय प्राजापत्यं दधिग्रहं गृह्णात्युपयामगृहीतोऽसि

प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्य इति
अपोद्धृत्य बर्हिषी अथैनमादायोपोत्तिष्ठति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति
पूर्वया द्वारोपनिष्क्रामत्यपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहीत्येत्याहवनीये जुहोत्यन्वारब्धे यजमाने प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भुतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहेति

अथास्य संक्षालनमन्तःपरिधि निनयति
धेनुवरं वानडुद्वरं वा दद्यादिति ह स्माह बौधायनो द्वादश पष्ठौहीरित्याञ्जीगविर्ऋषभमिति कात्यो मणिकुण्डलमिति राथीतरः ४

अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य चर्मणि निदधाति
तासु निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत आयुर्मे तर्पयतेति प्रतिपद्य गणा मे मा वितृषन्नित्यातस्ता यजमानाय संप्रदायाथैतेषां ग्राव्णां यः सुजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमँ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमित्यथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपाँशुसवनमभि मिमीत इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वादित्यवत इन्द्राय त्वा विश्वदेव्यावत इति
पञ्चकृत्वो यजुषा
पञ्चकृत्वस्तूष्णीं दशकृत्वो मिमानोऽर्धवेलाँ राज्ञो मिमीतेऽथातिशिष्टँ राजानमुष्णीषेण विग्रथ्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयत्यथ मितँ राजानँ होतृचमसीयाभिरुपसृजति श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य

पिबतोपहूतो युष्माकँ सोमः पिबत्वित्य्
अथैनँ संप्रयौति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति
तिरश्चर्मन्फलके अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाँ हिँसिषं मा मा हिँसिष्टमित्यथ वृद्धीर्वाचयत्यवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताँ सवनाय सोममिति
संतृप्तस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ षडँशून्सचतेऽथैतेनैव पाणिनोपाँशुपात्रमादत्तेऽथोपसृष्टँ राजानमष्टौ कृत्वोऽग्रेऽभिषुणोति
सोऽँशौ स्कन्ने वाचयत्या मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्यथाञ्जलिनोपहन्ति तूष्णीम्
अन्तर्दधाति प्रतिप्रस्थाता
प्रथमाभ्यामँशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्निति
सचत एतावँशू
तथोपसृष्टँ राजानमेकादशकृत्वो द्वितीयमभिषुणोति
नात्राँशौ स्कन्ने वाचयति
तथाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थाता
मध्यमाभ्यामँशुभ्यामानयत्यध्वर्युर्वृषा वृष्णो अँशुभ्यां गभस्तिपूत इति
सचत एतावँशू
तथैवोपसृष्टँ राजानं द्वादशकृत्वस्तृतीयमभिषुणोति
नैवात्राँशौ स्कन्ने वाचयति
तथैवाञ्जलिनोपहन्ति तूष्णीमेवान्तर्दधाति प्रतिप्रस्थातोत्तमाभ्यामँशुभ्यामानयत्यध्वर्युर्देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वेति

सचत एतावँशू
अथैनमुपाँशुसवनं दशापवित्रेण परिमृज्य पूर्वार्धे खरस्य दक्षिणाशिरसं निदधात्यथ प्रतिप्रस्थातुर्ग्रहमादत्ते स्वांकृतोऽसीति
ग्रहमपयच्छत्यथैनमवेक्षते मधुमतीर्न इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्यथैनमादायोपोत्तिष्ठति मनस्त्वाष्ट्वित्यैत्युर्वन्तरिक्षमन्विहीत्येत्याहवनीये जुहोत्यन्वारब्धे यजमाने

स्वाहा त्वा सुभवः सूर्याय स्वाहेति
हुत्वानुप्राणिति
वाचयति भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे
पाहीत्यथैनमवाचीनमवमृज्य प्रतीचा नीचा पाणिना मध्यमे परिधौ निमार्ष्टि
देवेभ्यस्त्वा मरीचिपेभ्य इत्यथ प्रदक्षिणमावृत्याग्रयणस्थाल्यां ग्रहस्य
सँस्रावमवनयत्येष ते योनिरित्यथैतस्मिन्नुपाँ सुपात्रेऽँशुं प्रास्यत्यथैनं दक्षिणत
उपाँ शुसवनेन सँस्पृष्टँ सादयति प्राणाय त्वेति
व्यानाय त्वेत्युपाँ शुसवनं प्रत्यभिमृशते ५

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता राजन्येवाँ शूनां
द्वौद्वावपिसृजति यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय
स्वाहेति यत्ते सोम यत्ते सोमेत्यथाभिषोष्यन्तः सर्वश एव राजानं
पर्युपविशन्ति
पश्चात्प्राङ्मुखोऽध्वर्युरुपविशति
तस्य दक्षिणं बाहुमनु यजमानो दक्षिणतः प्रतिप्रस्थातोत्तरत आग्नीध्रोऽन्तरेण
प्रतिप्रस्थातारं चाग्नीद्रहं च
यश्चतुर्थोऽभिषुणोत्यथोन्नेतारमाहाहरोपसृजेत्युपसृजत्युन्नेताधवनीयादुदचनेनोप
र्यर्धे होतृचमसेऽँशून्परिप्लावयन्ति प्रागपागुदगधराक्तास्त्वा दिश
आधावन्त्वम्ब निष्वरेत्येष निग्राभ आप्याययन्ति
व्यपोहन्तेऽभिषुणवन्ति
निग्राभमुपयन्त्याप्याययन्ति
व्यपोहन्तेऽभिषुणवन्ति
निग्राभमुपयन्त्याप्याययन्ति
व्यपोहन्तेऽभिषुणवन्ति
न चतुर्थे निग्राभमुपयन्त्यथैनँ सुसंभृतँ संभरणयाँ संभृत्योन्नेत्र उत्प्रयच्छति
एवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीय ऋजीषमन्ततो दशापवित्रेण
परिवेष्ट्योन्नेत्र उत्प्रयच्छति
तदुन्नेताधवनीये विक्षाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे
उपावहृत्य चर्मणि निदधाति
तस्मिन्संमुखान्ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहत्यथोद्गाता

वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु
द्रोणकलशमध्यूहति
तस्मिन्नुदीचीनदशं दशापवित्रं वितन्वन्ति
तेन तथा कृतेनादित्यस्योदयमाकाङ्क्षन्त उदित आदित्येऽन्तर्यामं
गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोममुरुष्य
रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षँ सजोषा
देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्वेति

स्वांकृतोऽसीति ग्रहमपयच्छत्यथैनमवेक्षते मधुमतीर्न
इषस्कृधीत्यथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य
इत्यथैनमादायोपोत्तिष्ठति मनस्त्वाष्ट्वित्यैत्युर्वन्तरिक्षमन्विहीत्येत्याहवनीये
जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहेति
हुत्वान्वपानिति
वाचयति धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहीत्यथैनमूर्ध्वमुन्मृज्य
प्राचोत्तानेन पाणिना मध्यमे परिधावुन्मार्ष्टि देवेभ्यस्त्वा मरीचिपेभ्य इत्यथ
प्रदक्षिणमावृत्याग्रयणस्थायां ग्रहस्य सँस्रावमवनयत्येष ते
योनिरित्यथैनमुत्तरत उपाँशुसवनेन सँस्पृष्टँ सादयत्यपानाय त्वेति
व्यानाय त्वेत्युपाँशुसवनं प्रत्यभिमृशतेऽथोन्नेतारमाहाप्रमत्तः संततमानयोपाँ
शु ग्रहान्ग्रहीष्यामीत्यथादत्त ऐन्द्रवायवपात्रं तदेतद्रास्नावत्परिग्रीवि भवति
तेन गृह्णात्यतिपवमानस्य राज्ञ आ वायो भूष शुचिपा
इत्यनुद्रुत्योपयामगृहीतोऽसि वायवे त्वा जुष्टं गृह्णामीत्यथैनमपयत्य
पुनरेवोपयच्छतीन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्रवायुभ्यां
त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिः सजोषाभ्यां त्वेत्यथादत्ते मैत्रावरुणपात्रं
तदेतत्पिलकावद्भवति
तेन गृह्णात्यतिपवमानस्य राज्ञोऽयं वां मित्रावरुणेत्यनुद्रुत्योपयामगृहीतोऽसि
मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति

बर्हिषी अन्तर्धाय पयसा श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य
सादयत्येष ते योनिरृतायुभ्यां त्वेत्यथोपातीत्याश्विनपात्रँ शुक्रपात्रमादत्ते

तदेतद्वैल्वं वा पालाशं वा श्लक्ष्णं भवति
तेन गृह्णात्यतिपवमानस्य राज्ञोऽयं वेनश्चोदयदित्यनुद्रुत्योपयामगृहीतोऽसि शण्डाय त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिर्वीरतां पाहीत्यथादत्ते मन्थिपात्रं तदेतद्वैकङ्कतँ श्लक्ष्णं भवति
तेन गृह्णात्यतिपवमानस्य राज्ञस्तं प्रत्नथेत्यनुद्रुत्योपयामगृहीतोऽसि मर्काय त्वा जुष्टं गृह्णामीति
बर्हिषी अन्तर्धाय सक्तुभिः श्रीणात्यपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य साद्यत्येष ते योनिः प्रजाः पाहीत्यथादत्त आग्रयणस्थालीं तया गृह्णात्यतिपवमानस्य राज्ञो ये देवा दिव्येकादश स्थेत्यनुद्रुत्योपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीत्यथैनां त्रिरभिहिङ्करोति ६

हिं हिं हिं सोमः पवते सोमः पवते सोमः पवतेऽस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्यै विशे पवत इषे पवत ऊर्जे पवतेऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै सुन्वते यजमानाय पवते मह्यमित्युपाँशूक्त्वा ज्यैष्ठ्याय पवत इत्युच्चैर्
अथैनमधिवदत आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणेति
परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्युपब्दिमतोऽत ऊर्ध्वं ग्रहान्गृह्णाति त्रिँशत्त्रयश्च गणिनो रुजन्त इति
रुग्णवत्यर्चा भ्रातृव्यतो गृह्णीयादिति ब्राह्मणम्
अथादत्त उक्थ्यस्थालीं तया गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वोक्थायुव इत्यथादत्ते ध्रुवस्थालीं स आह ये पूर्वया द्वारा प्रापत्सत प्राञ्चस्ते निष्क्रामन्तु येऽपरया प्रत्यञ्चस्ते मा वोऽभिपरिहारिषमिति
जघनेनाभिषोतॄन्सोन्नेतृकानभिपरिहृत्योत्तरत उपयच्छति मूर्धानं दिवो अरतिं

पृथिव्या इत्यनुद्रुत्योपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामीत्यथैनमधिवदते ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम इत्यथैनद्यथाहृतं प्रतिपर्याहृत्योत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते सादयत्येष ते योनिरग्नये त्वा वैश्वानरायेति
ध्रुवेण राजानं परिदधात्यथोपर्यर्धे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इत्य्
अथोन्नेतारमाहारिक्तं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति तच्छ्रुत्वोन्नेता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदचनानानयत्यथारिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीय विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतम्
अथोन्नेतरित्याह प्राञ्चँ राजानं पूतभृततमभि संपवयताद्दशाभ्राधवनीयं मृष्ट्वा न्युब्जतादिति
स तथा करोत्यथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति
तं निःसर्पन्तमन्वारभत उद्गातोद्गातारं प्रस्तोता
प्रस्तोतारं प्रतिहर्ता
प्रतिहर्तारं यजमानो यजमानं ब्रह्मा
प्रतिप्रस्थाता सप्तमः सर्पति
तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति ७

अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशंभूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहेत्येतयाध्वर्यू जुहुतो यथावेदमितरे जुह्वत्यथोदञ्चोऽभि पवमानँ सर्पन्ति
प्रह्व एवाध्वर्युः प्रथमो बर्हिषी धुवानः सर्पति वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथास्तावे यथायतनमुपविशन्त्यथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वाथोपाकरणं जपति वायुर्हिङ्कर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः

प्राणभृतः प्राणं मयि दधत्वौँस्तुध्वमिति
स एष त्रिवृद्बहिष्पवमानो भवति
तस्य पञ्चम्यां प्रस्तुतायां वाचयति श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे
स्वस्ति मा संपारयेत्यत्र दशहोतारं व्याचष्ट उद्द्रुते साम्नि
संप्रैषमाहाग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोदाशाँ अलंकुरु प्रतिप्रस्थातः
पशुरन्तिकेऽस्त्विति
यथासंप्रैषं तौ कुरुतोऽथाप उपस्पृश्याहैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य समस्तँ राजानमुपतिष्ठते विष्णो त्वं नो अन्तम
इत्यथादत्त आश्विनपात्रं तदेतद्द्व्यश्रि भवति
तस्मिन्गृह्णाति द्रोणकलशात्परिप्लुना पात्रेण या वां
कशेत्यनुद्रुत्योपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिर्माध्वीभ्यां त्वेत्यथाप उपस्पृश्याहैहि
यजमानेत्याहवनीयं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं
मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथावकाशैश्चरति
परिभूरग्निं परिभूरिन्द्रमित्येतेनानुवाकेनाथ प्रचरण्यां नवकृत्वो गृह्णीतेऽथैष
आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं धिष्णियेष्वङ्गारान्विहरत्यथ
पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णियान्व्याघारयति यथान्युप्तैर्मन्त्रैः

स यद्यु ह यथान्युप्तमभिजुहोति सप्त त इत्याग्नीध्रेऽन्ततो जुहोति
यद्यु वै स्वाहा स्वाहेति स्वाहेत्येवान्तत आग्नीध्रीये जुहोत्युदक्सँस्थताया
इत्यथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीँ सादयत्यथ सांकाशिनेन पथा
पृष्ठ्याँस्तृणाति संततां गार्हपत्यादाहवनीयात् ८

अथाध्वर्यू रशनाहस्तो यूपमभ्यैत्युदूह्य पूर्वाँ रशनां नाभिदघ्ने परिव्ययन्नाह
परिवीयमाणायानुब्रूहीति
स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति
समानं कर्मा प्रवरात्
प्रसिद्धँ होतारं वृणीतेऽथाश्रावयत्यो श्रावयास्तु श्रौषडश्विनाध्वर्यू
आध्वर्यवादित्यहं चासौ च मानुषविति
प्रतिप्रस्थातुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषड्मित्रावरुणौ

प्रशास्तारौ प्रशास्त्रादित्यसौ मानुष इति
मैत्रावरुणस्य नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्रो ब्रह्मा ब्राह्मणादित्यसौ मानुष इति
ब्राह्मणाच्छँ सिनो नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषड्मरुतः पोत्रादित्यसौ मानुष इति
पोतुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषड्ग्नावो नेष्ट्रादित्यसौ मानुष इति
नेष्टुर्नाम गृह्णात्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निमाग्नीध्रादित्यसौ मानुष इत्यग्नीधो नाम गृह्णाति
तेषां प्रवृतःप्रवृत एव प्रवृताहुतीर्जुहोति
जुष्टो वाचो भूयासमृचा स्तोमँ समर्धय सूर्यो मा देवो देवेभ्यः पात्वित्येताभिरध्वर्यू जुहुतो
यथावेदमितरे जुह्वत्यथाश्रावयत्यो श्रावयास्तु श्रौषडग्निर्ह दैवीनां विशां पुरएतायँ सुन्वन्यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतँ हिमा द्वा यू राधाँ सीत्संपृञ्चानावसंपृञ्चानौ तन्व इति
समानं कर्मा वपायै
वपया प्रचर्य वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्तेऽथ यजमानमुत्करे स्फ्यविघनानुपस्थापयति ९

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृत स्थ ते मास्मिन्यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तामित्यथ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते
नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयम्
अथ प्राङावृत्य जपति दृढे स्थः शिथिरे समीची माँ हसस्पातं सूर्यो मा देवो दिव्यादँ हसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्य इत्यथ प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशति देवी द्वारौ मा मा संताप्तमित्यथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्या इत्यथासनाद्बहिःसदसं तृणं

निरस्यत्यहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इत्य्
उपविशत्युन्निवत उदुद्वतश्च गेषमित्यथेमे समीक्षते पातं मा द्यावापृथिवी
अद्याह्न इत्यथ दक्षिणार्धं परेक्षत आगन्त पितरः पितृमानहं
युष्माभिर्भूयासँसुप्रजसो मया यूयं भूयास्तेत्यथोत्तरार्धं परेक्षत उदक्सँस्थताया
इति १०

अथेमावध्वर्यू आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठेते
एवमाग्नीध्रीयम्
एवँ होत्रीयम्
एवं प्राञ्चावावृत्य जपत एवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशत एवँ
सदः प्रपद्येते
एवमासनाभ्यां बहिःसदसं तृणे निरस्यतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं
निश्रयमाण उपविशत्युत्तरं प्रतिप्रस्थातैवमिमे समीक्षेते
एवं दक्षिणार्धं चोत्तरार्धं च परेक्षेते
उदक्सँस्थताया इत्यथेमे वषट्कर्तार
आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठन्त एवमाग्नीध्रीयं तमुत्तरेण
परियन्त्येवँ होत्रीयम्
एवं प्राञ्च आवृत्य जपन्त्येवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशन्त्येवँ
सदः प्रपद्यन्तेऽग्रेण धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं परीत्यैवमासनेभ्यो
बहिःसदसं तृणानि निरस्यन्त्येवँ स्वँ स्वमेव धिष्णियमनूपविशन्त्येवमिमे
समीक्षन्त एवं दक्षिणार्धं चोत्तरार्धं च परेक्षन्त उदक्सँस्थताया इत्यथेमे सर्व
उद्गातारो ब्रह्मा सदस्य इत्यवषत्कर्तार
आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठन्त एवमाग्नीध्रीयं तमुत्तरेण
परियन्त्येवँ होत्रीयम्
एवं प्राञ्च आवृत्य जपन्त्य्
एवं प्रदक्षिणमावृत्योत्तरेण सदः परीत्यैवमपरे द्वारौ सदसः संमृशन्त्येवँ सदः
प्रपद्यन्त एवमामनेभ्यो बहिःसदसं तृणानि निरस्यन्त्यौदुम्बरीमेवोद्गातारः
पर्युपविशन्ति
दक्षिणत उदङ्मुखौ ब्रह्मा सदस्य इत्युपविशत एवमिमे समीक्षन्त एवं
दक्षिणार्धं चोत्तरार्धं च परेक्षन्त उदक्सँस्थताया इत्यथैतेषां

विसँस्थितसंचरोऽन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छँ सिनश्च येऽधिष्णिया
अथ धिष्णियवन्तः स्वँ स्वमेव धिष्णियमुत्तरेणोत्तरेण परियन्ति
ते सँस्थिते सवने यथाप्रसृप्तमेव विनिःसर्पन्ति   ११

संप्रसृप्तान्विदित्वाध्वर्युः सवनीयान्पुरोडाशान्याचत्यथैष आग्नीध्रो जघनेन
गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीते
मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति
पुरस्ताद्धाना दक्षिणतः करम्भम्पश्चात्परिवापम्
आमिक्षामुत्तरतोऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिर्हृत्योत्तरेण सदः
परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्यान्तर्वेद्यासादयत्यथ
जुहूपभृतोरुपस्तृणान आह प्रातः प्रातःसावस्येन्द्राय
पुरोडाशानामवदीयमानानामनुब्रूहीति
द्विः पुरोडाशस्यावद्यति
द्विर्धानानां द्विः करम्भस्य
द्विः परिवापस्य
द्विरामिक्षाया अभिघारयति
प्रत्यनक्त्यथोपभृति स्विष्टकृते सर्वेषाँ सकृत्सकृदुत्तरार्धादवद्यति

द्विरभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याह प्रातः प्रातःसावस्येन्द्राय
पुरोडाशान्प्रस्थितान्प्रेष्येति
वषट्कृते जुहोत्यथ समावपमान आहाग्नयेऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङ्ङत्याक्रम्य
यथायतनँ स्रुचौ सादयित्वा पात्र्यामिडाँ समवधाय प्रतीचः
पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पशव इडेति वदन्तोऽथ प्राङायन्नाह
वायव इन्द्रवायुभ्यामनुब्रूहीति
तच्छ्रुत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना
पात्रेणादित्यस्थाल्या औपशये पात्र उपयामगृहीतोऽसि वाक्षसदसि
वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति
ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्त उत्तरतस्तिष्ठते

प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथ वै
भवत्यैन्द्रवायवमादायाघारमाघारयेदिति
स आज्यस्थाल्याः स्रुवेणोपहत्यैन्द्रवायवमादायाघारमाघारयत्यध्वरो
यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स
पिन्वस्व घृतवद्देव सोम स्वाहेत्यथाश्रावयत्यो श्रावयास्तु श्रौषड्वायव
इन्द्रवायुभ्यां प्रेष्येति
वषट्कृतेऽध्वर्युः पूर्वो जुहोति
द्वितीयं वषट्कृते सहोभौ जुहुतो हुत्वा वाचयति यो न इन्द्रवायू अभिदासति
भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि
यथेन्द्राहमुत्तमश्चेतयानीत्य्
अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सँस्रावमवनयत्युभयोरर्धमध्वर्युः
प्रतिप्रस्थातुः पात्रेऽवनयति
तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति देवेभ्यस्त्वेत्यथाध्वर्युः
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाह
मित्रावरुणाभ्यामनुब्रूहीति
तच्छ्रुत्वा प्रतिप्रस्थाता मैत्रावरुणस्य प्रतिनिर्ग्राह्यं गृह्णाति
द्रोणकलशात्परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्र
उपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य
ध्रुवस्याध्यक्षाभ्यां गृह्णामीति
ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्त उत्तरतस्तिष्ठते
प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु
श्रौषड्मित्रावरुणाभ्यां प्रेष्येति
वषट्कृते सहोभौ जुहुतो हुत्वा वाचयति यो नो मित्रावरुणावभिदासति
भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि
यथेन्द्राहमुत्तमश्चेतयानीत्यथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य
सँस्रावमवनयत्युभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रेऽवनयति
तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वदेवेभ्यस्त्वेत्यथाध्वर्युः
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाहाश्विभ्यामनुब्रूहीति
तच्छ्रुत्वा प्रतिप्रस्थाताश्विनस्य प्रतिनिर्ग्राह्यं गृह्णाति द्रोणकलशात्परिप्लुना
पात्रेणादित्यस्थाल्या औपशये पात्र उपयामगृहीतोऽसि श्रुतसदसि

श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामीति
ग्रहावादायोपनिष्क्रामत्
उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्त उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्यं
प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां प्रेष्येति
वषट्कृते सहोभौ जुहुतो हुत्वा वाचयति यो नोऽश्विनावभिदासति भ्रातृव्य
उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानीत्यथ
प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सँस्रावमवनयत्युभ्योरर्धमध्वर्युः
प्रतिप्रस्थातुः पात्रेऽवनयति
तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा देवेभ्य इति १२

स यद्यु हैतैः सँस्रावैरुपर्यर्धा स्थाली भवत्येतेनैनां पात्रेणापिदधाति
यद्यु वै नोपर्यर्धा भवति द्रोणकलशादेनामुपर्यर्धां कृत्वैतेनैव पात्रेणापिदधाति
विष्णवुरुक्रमैष ते सोमस्तँ रक्षस्व तं ते दुश्चक्षा मावख्यदित्यथाध्वर्युः
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय
प्राङायन्नाहोन्नीयमानेभ्योऽनुब्रूहि
होतुश्चमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा तु
त्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्वेति
यथासंप्रैषं ते कुर्वन्ति
द्रोणकलशादेव प्रथममुन्नयन्त्यथ पूतभृतोऽथ द्रोणकलशात्
त उभयतःशुक्रा होतृचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथ प्रतिप्रस्थाता चतुर्णाँ शकलानां द्वौ प्रोक्षति

द्वावप्रोक्षितौ भवतः
प्रोक्षिताभ्यामपिधायाप्रोक्षिताभ्यामुपयच्छतः
शुक्रमेवाध्वर्युरादत्ते
मन्थिनं प्रतिप्रस्थाता
ग्रहावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण
उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता
तौ जघनेनोत्तरवेदिं ग्रहौ संधत्त आयुः संधत्तं तन्मे जिन्वतं प्राणँ संधत्तं तं मे

जिन्वतमपानँ संधत्तं तं मे जिन्वतं व्यानँ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतँ श्रोत्रँ संधत्तं तन्मे जिन्वतमिति
स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेत्यध्वर्युर्दक्षिणेनोत्तरवेदिं परिक्रामति
स्तुतोऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेति प्रतिप्रस्थातोत्तरेणोत्तरवेदिं परिक्रामति
तौ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमधिद्रवत इन्द्रेण सयुजो वयँ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी हूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहँ हरस्वी भूयासमित्यथान्तरेण यूपं चाहवनीयं च ग्रहौ संधत्त आयु स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तम्प्राण स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तमपान स्थोऽपानं मे धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तम्व्यान स्थो व्यानं मे धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तं चक्षु स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तं श्रोत्रँ स्थः श्रोत्रं मे धत्तँ श्रोत्रं यज्ञाय धत्तँ श्रोत्रं यज्ञपतये धत्तमिति

षड्भिः संधाभिः संधाय व्युत्क्रामतः १३

तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तः शण्डः सहामुनेत्यध्वर्युर्यं यजमानो द्वेष्टि तं मनसा ध्यायति
निरस्तो मर्कः सहामुनेति प्रतिप्रस्थाता यं यजमानो द्वेष्टि तं मनसा ध्यायत्यथाप उपस्पृश्य प्रोक्षितावभ्याधत्तः
शुक्रैषा ते समित्तया समिध्यस्व स्वाहेत्यध्वर्युर्मन्थिन्नेषा ते समित्तया समिध्यस्व स्वाहेति प्रतिप्रस्थातैतस्मिन्काले
चमसाध्वर्यवश्चमसानुपोद्यच्छन्तेऽथाध्वर्युः पुरस्तात्प्रत्यङ्तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषट्प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति
वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो

अग्निः । स प्रथमो बृहस्पतिश्चिकित्वान्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेति
वषट्कृतानुवषट्कृते द्विर्जुहुतस्
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः
प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः
सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तध्वँ होतुश्चमसाध्वर्यवुपरमैहि
प्रतिप्रस्थातरुत्तरार्ध आहवनीयस्य मन्थिनः सँस्रावं जुहुधीति
यथासंप्रैषं ते कुर्वन्त्यथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य सँस्रावमवनयति
हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं
वाथ प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः सँस्रावं जुहोत्येष ते रुद्र
भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यँ रायस्पोषँ सुवीर्यँ संवत्सरीणाँ
स्वस्तिँ स्वाहेत्यथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनँ
सादयति
यन्त्येते महर्त्विजां चमसा अथैते होत्रकाणां चमसाध्वर्यवः
सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते
तेषां मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति
वषट्कृतानुवषट्कृते द्विर्जुहोति
ब्रह्मन्यज पोतर्यज नेष्टर्यजाग्नीद्यजेति पञ्च होत्राः संयाज्य प्रदक्षिणमावृत्य
प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविशत्ययाडग्नीदिति
स भद्रमकरित्याह होता यो नः सोमँ राजानं पाययिष्यतीत्यथ होतादत्त
ऐन्द्रवायवपात्रम्
आत्तमेवाध्वर्युरन्वारभतेऽन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स
वेद
तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः पुरोवसुर्वाक्पा
वाचं मे पाहीत्यथ होता भक्षयत्यथाध्वर्युरथैनद्धोत्रेऽनुषजति
तद्धोता यथायतनँ सादयत्यथ होतादत्ते मैत्रावरुणपात्रम्
आत्तमेवाध्वर्युरन्वारभतेऽन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स
वेद
तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि
वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहीत्यथैनद्धोत्रेऽनुषजति
तद्धोता यथायतनँ सादयत्यथ होतादत्त आश्विनपात्रम्

आत्तमेवाध्वर्युरन्वारभत
अन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद
तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहीति
सर्वतः परिहारमाश्विनं भक्षयतीति ब्राह्मणम्
अथैनद्धोत्रेऽनुषजति
तद्धोता यथायतनँ सादयत्यथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते १४

उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसान्
उपहूतायामिडायामनाहितमग्नीधे भवत्यथैतानि द्विदेवत्यपाराण्यरिक्तानि करोति
पुरोडाशशकलमैन्द्रवायवपात्रे प्रास्यत्यामिक्षां मैत्रावरुणपात्रे
धाना आश्विनपात्रेऽथैनानि संपरिगृह्य पूर्वया द्वारोपनिर्हृत्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याँ सादयति
तान्या तृतीयसवनात्परिशेरेऽथाग्नीध आदधाति षडवत्तम्प्राश्नन्ति
मार्जयन्त इडोपहूताँश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्त आप्याययन्ति चमसानाप्यायस्व समेतु त इति
सीदन्ति नाराशँसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध ऐन्द्राग्नायाथैषोऽच्छावाकोऽग्रेण सद आस्ते
तस्मै महत्पुरोडाशशकलमादधदाहाच्छावाक वदस्व यत्ते वाद्यमिति

स यत्राच्छावाकस्याभिजानात्युपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमिति तदाह होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्वेति
तमृचा होतोपह्वयतेऽथ प्राङायन्नाहोन्नीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्यवुन्नयस्वोभयतःशुक्रं कुरुष्वेति

स तथा करोत्यथ प्राङेत्याच्छावाकचमसमादायाश्राव्याहाच्छावाक यजेति वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं स यद्यस्मिन्नच्छावाक उपहवमिच्छत उपैवैनँ ह्वयते
नो त्वेव संभक्षयतः
सीदत्यस्य नाराशँस आप्यायितोऽथाहाच्छावाक सीद नेष्टः
पत्नीमुदानयाग्नीदच्छावाकं मे सन्नं प्रब्रूतादिति
सीदत्येषोऽच्छावाको जघनेन स्वं धिष्णियम्
आनयति नेष्टा पत्नीं पन्नेजनीरादाय प्रेह्युदेहीत्येतेन निगदेनाथैनां पूर्वया द्वारोपनिष्क्रमय्यापरया द्वारा सदः प्रपाद्य जघनेन नेष्टुर्धिष्णियमसंचरे सामपथे पन्नेजनीः सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीः सादयामि यज्ञाय वः पन्नेजनीः सादयामीत्यथाहाग्नीध्रः सन्नोऽच्छावाकोऽच्छावाकँ सन्नमुप पन्नेजनीरसीषदन्नित्येतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति
यदशना स्यात्पत्नी पत्नीशाले १५

अथर्तुपात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशाद्गृह्णात्युपयामगृहीतोऽसि मधवे त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाता गृह्णात्युपयामगृहीतोऽसि माधवाय त्वा जुष्टं गृह्णामीति ग्रहावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता द्वार्बाहुं निश्रयमाण उपरमत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येव प्रतिप्रस्थाता
प्रपद्यतेऽध्वर्युः
स गृह्णात्युपयामगृहीतोऽसि शुक्राय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येवाध्वर्युः
प्रपद्यते प्रतिप्रस्थाता
स गृह्णात्युपयामगृहीतोऽसि शुचये त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो

श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येव प्रतिप्रस्थाता
प्रपद्यतेऽध्वर्युः
स गृह्णात्युपयामगृहीतोऽसि नभाय त्वा जुष्टं गृह्णामीत्यथ
प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येवाध्वर्युः
प्रपद्यते प्रतिप्रस्थाता
स गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वा जुष्टं
गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येव प्रतिप्रस्थाता
प्रपद्यतेऽध्वर्युर्विपर्यस्य पात्रं स गृह्णात्युपयामगृहीतोऽसीषाय त्वा जुष्टं
गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येवाध्वर्युः
प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रं
स गृह्णात्युपयामगृहीतोऽस्यूर्जाय त्वा जुष्टं गृह्णामीत्यथाध्वर्युराश्रावयत्यो
श्रावयास्तु श्रौषड्तुभिः प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येव प्रतिर्पस्थाता
प्रपद्यतेऽध्वर्युः
स गृह्णात्युपयामगृहीतोऽसि सहाय त्वा जुष्टं गृह्णामीत्यथ
प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्तुभिः प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येवाध्वर्युः
प्रपद्यते प्रतिप्रस्थाता
स गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वा जुष्टं
गृह्णामीत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्तुभिः प्रेष्येति

वषट्कृते जुहोति
निष्क्रामत्येव प्रतिप्रस्थाता
प्रपद्यतेऽध्वर्युर्विपर्यस्य पात्रं स गृह्णात्युपयामगृहीतोऽसि तपाय त्वा जुष्टं गृह्णामीत्यथ प्रतिप्रस्थाताश्रावयत्यो श्रावयास्तु श्रौषड्तुभिः प्रेष्येति
वषट्कृते जुहोति
निष्क्रामत्येवाध्वर्युः
प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रं तमाह प्रतिप्रस्थातरुपैतेन पात्रेण रमेत्यथाध्वर्युराश्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येत्यध्वर्यू यजतमित्याह प्रशास्ता
होतरेतद्यजेत्याहाध्वर्युर्वषट्कृते जुहोति
सोऽत्रैवासीनं प्रतिप्रस्थातारमनुप्रपद्यते
प्रतिप्रस्थातात्र पूर्वो गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वा जुष्टं गृह्णामीत्यथाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सँसर्पोऽस्यँ हस्पत्याय त्वा जुष्टं गृह्णामीति
ग्रहावादायोपनिष्क्रामतो दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामत्युत्तरं प्रतिप्रस्थाता
प्रतिप्रस्थातात्र श्रावयत्यो श्रावयास्तु श्रौषड्तुना प्रेष्येति
गृहपते यजेत्याह प्रशास्ता

होतरेतद्यजेत्याह गृहपतिः
वषट्कृते सहोभौ जुहुतोऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सँस्रावमवनयति
तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाणेति
तेन प्रतिप्रस्थातैन्द्राग्नं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेणाइन्द्राग्नी आगतँ सुतमित्यनुद्रुत्योपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रँ संभक्षयत्यृतुना पीतस्येति होत्रा पोत्रा नेष्ट्राग्नीधा ब्राह्मणाच्छँ सिना मैत्रावरुणेनेत्यथ विपर्यस्य पात्रँ होत्रैव चतुः संभक्षयत्यृतुभिः पीतस्येति होत्रा पोत्रा नेष्ट्राच्छावाकेनेत्यथ विपर्यस्यैव पात्रँ होत्रैव द्विः संभक्षयत्यृतुना पीतस्येति १६

अथ होतारं विपृच्छति प्रणवमुपाँ शुशँ सँशँ सिष्यसी३ विग्राहा३मिति
स यथैनँ होता प्रत्याह तच्छ्रुत्वा निगृह्य पात्रं पराङावर्तत इडा देवहूरिति
यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणाति
यदुपाँ शु शँ सति तदुपाँ शु प्रतिगृणाति
यदुच्चैः शँ सति तदुच्चैः प्रतिगृणति
संततं वा विग्राहं वा
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमैन्द्राग्नं ग्रहम्
अनूद्यच्छन्ते नाराशँ सान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँ साननुप्रकम्पयन्त्य्
एतत्पात्रं नाराशँ सा अन्वायन्त्यनुसवनभक्ष इन्द्राग्निभ्यां पीतस्येति
होता चैवाध्वर्युश्चैतत्पात्रँ संभक्षयतो नराशँ सपीतेन नाराशँ सान्नराशँ
सपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्त आप्याययन्ति चमसानाप्यायस्व समेतु त
इति
सीदन्ति नाराशँ सा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो
वैश्वदेवायाथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदेमं वैश्वदेवं
ग्रहम्गृह्णाम्यथोदञ्चँ राजानं पूतभृतमभि संपवयताद्दशाभिर्द्रोणकलशं मृष्ट्वा
न्युब्जतादिति
स तथा करोति
स शुक्रपात्रेण वैश्वदेवं कलशादृह्णात्योमासश्चर्षणीधृत
इत्यनुद्रुत्योपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति

परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाप उपस्पृश्य
बर्हिषी आदाय वाचंयमः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति
स्तुवते वैश्वदेवाय
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं वैश्वदेवं ग्रहम्
अनूद्यच्छन्ते नाराशँ सान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति

तथैव द्विर्द्विर्नाराशँ साननुप्रकम्पयन्त्येतत्पात्रं नाराशँ सा
अन्वायन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति
होता चैवाध्वर्युश्चैतत्पात्रँ संभक्षयतो नराशँ सपीतेन नाराशँ सान्नरशँ
सपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथाह प्रतिप्रस्थातरिमे चतुर्पात्रे एतच्च शुक्रपात्रं मार्जालीये
मार्जयित्वा पात्रेष्वपिसृजेति
स तथा करोत्यथ प्राङायन्नाह १७

मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
मैत्रावरुणचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं
तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां

भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थ्यायुवं
यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामीति
पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
परिमृज्य सादयत्येष ते योनिर्मित्रावरुणाभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्ङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
मैत्रावरुणायैषोत्तमेति प्राहुर्
मैत्रावरुणस्य कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ग्रहम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे
ग्रहस्य सँस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं
मनुष्येभ्य इति आ तूष्णीं वात्रैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च
आद्रवन्त्यनुसवनभक्षो मित्रावरुणाभ्यां पीतस्येति
मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथाह प्रतिप्रस्थातर्ग्रहौ ते प्रचरेति
तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्नाह १८

ब्राह्मणाच्छँ सिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
ब्राह्मणाच्छँ सिनश्चमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथादत्त उक्थ्यस्थाल्या औपशयं पात्रं

तस्मिन्नेतस्य राज्ञोऽर्धवेलां गृह्णाति य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामीति
पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
ब्राह्मणाच्छँसिन एषोत्तमेति प्राहुर्
ब्राह्मणाच्छँसिनः कालात्पराङावर्तते प्रतिप्रस्थाताभ्येनमाह्वयते ब्राह्मणाच्छँसी
प्रत्याह्वयते प्रतिप्रस्थाता
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ग्रहम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थयशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ प्रदक्षिणमावृत्य ब्राह्मणाच्छँसिनश्चमसे ग्रहस्य सँस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति आ तूष्णीं वात्रैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति
ब्राह्मणाच्छँसिनश्चमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ प्राङायन्नाह   १९

अच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः
प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चर्म फलकयोः

प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठेति वा तूष्णीं वा
तस्मिन्संमुखान्ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे
राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्याम्
अथैनमुद्गातृभ्यः प्राहुस्तस्मिँस्तच्चेष्टन्ति यत्ते विदुरथोदुब्ज्याधवनीयमर्धं
वसतीवरीणामवनयत्यर्धमेकधनानाम्पुरोऽक्षं वसतीवरीः सादयति
पश्चादक्षमेकधनान्
अच्छावाकचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्य्
अथादत्त उक्थ्यस्थाल्या औपशयं पात्रं तस्मिन्नेतँ सर्वश एव राजानं गृह्णाति
य उक्थ्यस्थाल्यां भवत्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य
उक्थायुवं यज्ञस्यायुष इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामीति
नात्र पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
दशाभिरेवैनां मृष्ट्वा न्युब्जति
परिमृज्य सादयत्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति
स्तुवतेऽच्छावाकाय एषोत्तमेति प्राहुरच्छावाकस्य कालात्पराङावर्तते
प्रतिप्रस्थाताभ्येनमाह्वयतेऽच्छावाकः
प्रत्याह्वयते प्रतिप्रस्थाता
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ग्रहम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ प्रदक्षिणमावृत्याच्छावाकस्य चमसे
ग्रहस्य सँस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं
मनुष्येभ्य इति वा तूष्णीं वात्रैवैतत्पात्रमुपनिधाय भक्षैः प्रत्यञ्च
आद्रवन्त्यनुसवनभक्ष इन्द्राग्निभ्यां पीतस्येत्यच्छावाकचमसमेवैते त्रयः
समुपहूय भक्षयन्ति

यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्यायन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथोक्थशा इत्याह
प्रातःसवनं प्रतिगीर्य प्रशास्तः प्रसुहीति
सर्पतेत्याह प्रशास्ता
संतिष्ठते प्रातःसवनम् २०

अष्टमः प्रश्नः

प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारवित्यत एवोर्ध्वेन
संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाहाभिषोतार एत ह्वयत ग्रावस्तुतमेहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य
तासु तथैव निग्राभ्यासु यजमानं वाचयति तास्तथैव यजमानाय संप्रदाय
ग्रावाणमादत्तेऽन्यमुपाँशुसवनात्
तं तथैव प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमभि मिमीत इन्द्राय त्वेन्द्राय त्वेति
पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीं दशकृत्वो मिमानः सर्वश एव राजानं
मिमीतेऽद्भिरभ्युद्य ग्रावस्तुत उष्णीषं प्रयच्छत्यद्भिरेवाभ्युद्याध्वर्योरावसथं वासो हरन्ति
तथा मितँ राजानँ होतृचमसीयाभिरुपसृजति
तथा संप्रयौति
तथा तिरश्चर्मन्फलके अभिमृशति
तथा वृद्धीर्वाचयति
नात्राँशून्सचते
घोषवन्त एवाभिषुण्वन्तीहा३ इहा३ इहेति
तदेव सद्विनयन्तीहा३ इह इहा३ इह इहा३ इहेत्यथ संभरणीये
निष्क्रीडयन्तीहा३ इहा३ इहेत्यथैनँ सुसंभृतँ संभरण्याँ संभृत्योन्नेत्र
उत्प्रयच्छति

तमुन्नेताध्वनीयेऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीयस्
तृतीयस्य तृतीये बृहदुपयन्ति बृहद्बृहद्बृहदित्यृजीषमन्ततो दशापवित्रेण
परिवेष्ट्योन्नेत्र उत्प्रयच्छति
तदुन्नेताधवनीये विक्षाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणोषे
उपावहृत्य चर्मणि निदधाति
तस्मिँस्तथैव संमुखान्ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति
तथोद्गाता वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं
ग्रावसु द्रोणकलशमध्यूहति
तस्मिँस्तथैवोदीचीनदशं दशापवित्रं वितत्य प्रसिद्धँ शुक्रामन्थिनौ ग्रहौ
गृह्णात्यथर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति १

मरुत्वन्तं वृषभं वावृधानमिन्द्र मरुत्व इह पाहि सोममिति द्वाभ्याम्
अथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति
तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयति
तथोक्थ्यं गृह्णात्युक्थ्येन राजानं परिदधाति
तथोपर्यर्धे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द
यस्ते द्रप्सो यो द्रप्सो यस्ते द्रप्स इति
तथोन्नेतारमाहारिक्तं पूतभृतं कुरु पवमानस्य ग्रहान्ग्रहीष्यामीति
तथारिक्ते पूतभृति पवमानस्य ग्रहान्गृह्णात्युपयामगृहीतोऽसीन्द्राय त्वेति
द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयम्
इन्द्राय त्वेति पूतभृतं तथोन्नेतरित्याह प्राञ्चँ राजानं पूतभृतमभि
संपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतादिति

स तथा करोति
तथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति
तेषु तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति
विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः
प्रैयमेषां वदन्तो वयं देवानाँ सुमतौ स्याम स्वाहेत्येतयाध्वर्यू जुहुतो
यथावेदमितरे जुह्वत्यथ प्रदक्षिणमावृत्य सदोऽभि पवमानँ सर्पन्ति
तथा सदसि यथायतनमुपविशन्ति

तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा
तथोपाकरणं जपति वायुर्हिङ्कर्तेति
स एष पञ्चदशो माध्यंदिनः पवमानो भवति
तस्याष्टम्यां प्रस्तुतायां वाचयति सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यत्र चतुर्होतारं व्याचष्ट उद्द्रुते साम्नि संप्रैषमाहाग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय दध्याहरेति
यथासंप्रैषं तौ कुरुतस्
तथाप उपस्पृश्याहैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य तथा समस्तँ राजानमुपतिष्ठते
तथावकाशैश्चरति
तथा प्रचरण्यां नवकृत्वो गृह्णीते
तथैष आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं धिष्णियेष्वङ्गारान्विहरति
तथा पुरस्तात्प्रत्यङ्ङासीनो विहृतान्धिष्णियान्व्याघारयति
तथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीँ सादयति

तथा सांकाशिनेन पथा पृष्ठ्याँस्तृणाति संततां गार्हपत्यादाहवनीयात् २

अथान्तरेण हविर्धाने उपविश्य दधिघर्माय दधि याचति
तदाहृतमवेक्षते ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति
बर्हिषी अन्तर्धाय कँसे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्तमिन्द्र ते ग्रहँ सहोर्जा गृह्णाम्यस्तृतमित्यपोद्धृत्य बर्हिषी अथैनँ श्रीणाति वाक्च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताँ शृतोऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं कृणिवत्यथाह होतर्वदस्व यत्ते वाद्यमित्यथैनमादायोपोत्तिष्ठन्नाह श्रातँ हविरित्यत्याक्रम्याश्राव्याह दधिघर्मस्य यजेति
वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहेत्यनुवषट्कृते हुत्वा हरति

भक्षं स यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे ॥ आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह सत्येन तपसा सह । तस्य दोहमशीमहि तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति

निर्णिज्य पात्रं प्रयच्छति
तथा सवनीयान्पुरोडाशान्याचति
तेषां तथैव समवद्यन्नाह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्ति
तथोपभृति स्विष्टकृते सर्वेषाँ सकृत्सकृदुत्तरार्धादवद्यति
द्विरभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति
वषट्कृते जुहोति
तथा समावपमान आहाग्नयेऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति
तथोदङङत्याक्रम्य यथायतनँ स्रुचौ सादयित्वा तथैव पात्र्यामिडाँ समवधाय प्रतीचः पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पशव इडेति वदन्तोऽथ प्राङायन्नाहोन्नीयमानेभ्योऽनुब्रूहि ३

होतुश्चमसमनून्नयध्वमुभयतःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्योऽपि त्वमुन्नयस्व प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्वेति यथासंप्रैषं ते कुर्वन्ति
समानं कर्माश्रावणादाश्रावण एव व्येत्यथाध्वर्युः पुरस्तात्प्रत्यङ्तिष्ठन्नाश्रावयत्यो श्रावयास्तु श्रौषड्माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय

सोमान्प्रस्थितान्प्रेष्येति
वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मेति

वषट्कृतानुवषट्कृते द्विर्जुहुतस्
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वति
तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मण इति
तथा प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य सँस्रावमवनयति हुतं त्वा
हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा तूष्णीं वा
तथा प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः सँस्रावं जुहोति
तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनँ सादयति
यन्त्येते महर्त्विजां चमसास्
तथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तन्ते
तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति
ब्रह्मन्यज पोतर्यज नेष्टर्यजाच्छावाक यजाग्नीद्यजेति
षड्ढोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण
होतारमुपविशत्ययाडग्नीदिति
स भद्रमकरित्याह होता यो नः सोमँ राजानं पाययिष्यतीति
तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्त उपहूयमानायामिडायामुपप्रगृह्णन्ति
चमसान्
उपहूतायामिडायामग्नीध आदधाति षडवत्तम्प्राश्नन्ति
मार्जयन्त इडोपहूताँश्चमसान्भक्षयन्ति भक्षेहि माविशेति दीर्घभक्षमनुद्रुत्य
रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस
इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्त
आप्याययन्ति चमसानाप्यायस्व समेतु त इति
सीदन्ति नाराशँसा आप्यायिता दक्षिणस्य
हविर्धानस्यापालम्बमधोऽधस्तृतीयाय मरुत्वतीयायैतस्मिन्काल आग्नीध्रे
यजमानः पुरोडाशानां प्राश्नाति

यदशना स्यात्पत्नी पत्नीशाले   ४

अथ दाक्षिणानि होष्यन्याचत्याज्यस्थालीँ सस्रुवाँ स्रुचं वासस्
तस्यैतस्य वसनस्यान्तमायां दशायां हिरण्यशल्कः प्रग्रथितो
भवत्येतत्समादायाहैहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य
पूर्वया द्वारा शालां प्रपाद्य समन्वारब्धेष्वपिव्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं
विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यान्तँ स्रुग्दण्ड उपसंगृह्य
सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्युदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यँ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं
देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी
अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्यथाग्नीध्रं द्रुत्वा स्रुचि
चतुर्गृहीतं गृहीत्वा वसनस्यैवान्तँ स्रुग्दण्ड उपसंगृह्य नयवत्यर्चाग्नीध्रे
जुहोत्यग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमौक्तिं विधेम स्वाहेत्यथ दिवं गच्छ
सुवः पतेति हिरण्यँ हुत्वोद्गृह्णाति
सृज्यन्ते दक्षिणा दक्षिणापथेनान्तरेण सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं
चान्तरेण चात्वालोत्करव्
एवमुदीच्यः प्रतिपद्यन्ते
ताः प्रदक्षिणं कृत्वाभ्यैति रूपेण वो रूपमभ्यैमि वयसा वय इत्यथैना
विभजति तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाक इत्यथ
सदोऽभ्यैत्येतत्ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत
चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीरिति   ५

अथैष आत्रेयोऽग्रेण सद आस्ते
तमभ्यैति ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यँ
सुधातुदक्षिणमित्यथैनमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमितीतरः प्रत्याह
तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह
तं तथैव तृतीयमुत्क्रम्य पृच्छति क आत्रेय इत्ययमहमित्येवेतरः प्रत्याह
तस्य पाणौ हिरण्यमादधाति चन्द्र मँ हेति यदु चान्यदुपकल्पतेऽथाग्नीध्रं
द्रुत्वा हिरण्यमुखमग्नीधे ददात्यथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रेऽथ

हविर्धानं द्रुत्वाध्वर्यवे ददाति य उ चैनमन्येऽभितो भवन्त्यथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्रह्मणाच्छँसिनेऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो यथासमुदितं प्रसर्पकेभ्योऽथाहैहि यजमानेत्याग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुरित्य्
अथातिक्रामातीमोच्चैश्चरत्यग्निना देवेन ये देवा यज्ञहन
इत्येताभ्यामनुवाकाभ्याम्
अथ यजमानं प्राञ्चमीक्षयति वि सुवः पश्य व्यन्तरिक्षमित्यथैनँ सदस्युपवेशयति यतस्व सदस्यैरित्यथ दक्षिणाः समनुदिशत्यस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान्देवयानेन पथेत सुकृतां लोके सीदत तन्नः सँस्कृतमिति ६

अथ प्राङायन्नाहेन्द्राय मरुत्वतेऽनुब्रूहीति
तच्छ्रुत्वा प्रतिप्रस्थाता
ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्त उत्तरतस्तिष्ठते प्रतिप्रस्थात्रेऽन्यतरं प्रयच्छत्यथाश्रावयत्यो श्रावयास्तु श्रौषडिन्द्राय मरुत्वते प्रेष्येति
वषट्कृते सहोभौ जुहुतोऽथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सँस्रावमवनयति
तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाणेति
तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशात्परिप्लुना पात्रेण मरुत्वाँ न्द्र वृषभो रणायेत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मरुत्वत इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत्पात्रँ संभक्षयतीन्द्रेण मरुत्वता पीतस्येत्यथ निगृह्य पात्रं पराङावर्तत इडा देवहूरिति
यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यभ्येनमाह्वयते होता

प्रत्याह्वयतेऽध्वर्युः
शँसति

प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं तृतीयं मरुत्वतीयं ग्रहम्
अनूद्यच्छन्ते नाराशँसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँसाननुप्रकम्पयन्त्येतत्पात्रं नाराशँसा
अन्वायन्त्यनुसवनभक्ष इन्द्रेण मरुत्वता पीतस्येति
होता चैवाध्वर्युश्चैतत्पात्रँ संभक्षयतो नराशँसपीतेन नाराशँसान्नराशँ
सपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः
पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्त आप्याययन्ति चमसानाप्यायस्व समेतु त इति
सीदन्ति नाराशँसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो
माहेन्द्राय ७

अथ प्राङेत्य शुक्रपात्रमाददान आहोन्नेतर्यदेमं माहेन्द्रं ग्रहं गृह्णाम्यथोदञ्चँ
राजानं पूतभृतमभि संपवयताद्दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतादिति
स तथा करोति
स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद्गृह्णाति महाँ इन्द्रो य
ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथाप उपस्पृश्य बर्हिषी आदाय
वाचंयमः प्रत्यङ्ङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते माहेन्द्राय

प्रस्तुते साम्नि संप्रैषमाहाभिषोतारोऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वादय
प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति
यथासंप्रैषं ते कुर्वन्ति
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता

प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहम्
अनूद्यच्छन्ते नाराशँसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँसाननुप्रकम्पयन्त्येतत्पात्रं नाराशँसा
अन्वायन्त्यनुसवनभक्षो महेन्द्रेण पीतस्येति
होता चैवाध्वर्युश्चैतत्पात्रँ संभक्षयतो नराशँसपीतेन नाराशँसान्नरशँ
सपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः
पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति
तं तथैवोत्तमेऽतिशिष्ट आहाच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव
राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्याथोदुब्ज्याधवनीयँ सर्वश एव वसतीवरीः
पर्यस्यति
सर्वश एवैकधनान्
पुरोऽक्षमेव वसतीवरीकलशं मृष्ट्वा न्युब्जति

पश्चादक्षमेकधनान्
अच्छावाकचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथादत्त उक्थ्यस्थाल्या
औपशयं पात्रं तस्मिन्नेतँ सर्वश एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवति
स उ वा ऐन्द्र एव भवत्यथोक्थं वाचीत्याह माध्यंदिनँ सवनं प्रतिगीर्य

प्रशास्तः प्रसुहीति
सर्पतेत्याह प्रशास्ता
संतिष्ठते माध्यंदिनँ सवनम् ८

प्रसर्पन्ति तृतीयसवनाय देवी द्वारवित्यत एवोर्ध्वेन
प्रस्थातराशिरमानय शृतातङ्क्यमादित्यग्रहाय दध्याहरैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य य एष उपाँशुपात्रेऽँशुः प्रास्तो भवति तं
माध्यंदिनीय ऋजीषेऽपिसृज्य यमेव कं च
ग्रावाणमादायोन्नेतारमाहाहरोपसृजेत्युपसृजत्युन्नेताधवनीयादुदचनेनापरिमित
मभिषुत्याथैनँ सुसंभृतँ संभरणयाँ संभृत्योन्नेत्र उत्प्रयच्छति
तमुन्नेताधवनीयेऽवनयत्येवमेव द्वितीयः पर्यायः संतिष्ठत एवं तृतीय
ऋजीषमन्ततो दशापवित्रेण परिवेष्टयोन्नेत्र उत्प्रयच्छति
तदुन्नेताधवनीये विक्षाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे
उपातिहृत्य नीड उत्सादयति
परिश्रयन्ति पूर्वां द्वारमपरां चाथादत्त आदित्यस्थाल्या औपशयं पात्रं
तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य आदित्यस्थाल्यां भवति कदा चन
स्तरीरसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीति
बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा चन
प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यपोद्धृत्य
बर्हिषी अर्धवेलाँ राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति
सुम्नमित्यनुद्रुत्योपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामीत्यथैनँ
स्थविमत उपाँशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन
मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा
श्रीणामीत्यथैनमुद्गृह्णात्यत्र विज्ञानमुपैति यदि ताजक्प्रस्कन्देद्वर्षुकः पर्जन्यो
भवति
यदि चिरमवर्षुको न सादयतीति ब्राह्मणम्
अथैनमुपाँशुसवनं दशापवित्रेण परिवेष्टय
तेनाधस्तात्पात्रमुद्धन्त्यूर्मिकारमविषिञ्चन् ९

आ समुद्रादान्तरिक्षात्प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो

वर्षयन्तून्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमित्यथैनमुपाँशुसवनं दशापवित्रेण परिमृज्य ग्रावस्वपिसृजति
विवृणवन्ति पूर्वां द्वारमपरां चाथैतं ग्रहं
बर्हिर्हस्तेनापिधायोपोत्तिष्ठन्नाहादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योऽनुब्रूहीत्य्
अत्याक्रम्याश्राव्याहादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति
वषट्कृत ओषधीः प्रास्याग्नावादित्यं जुहोति सकृदेव
न हुत्वान्वीक्षते
पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमादत्त एतस्मिन्काले प्रतिहर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन्वा राज्ञ उदचनानानयत्याग्रयणमेवाध्वर्युरादत्त
आदित्यस्थालीं प्रतिप्रस्थाता सोपशयाँ संप्रगृह्णाति
तासां तिसृणां चतसृणां वा धाराणां
तथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति
तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयत्यपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाशिरमवनयत्यन्वारब्धायां पत्न्यामस्मे देवासो वपुषे चिकित्सतेति
चतसृभिरनुच्छन्दसम्
अपोद्धृत्य बर्हिषीपूतभृतो बिले द्रप्साननुमन्त्रयते
द्वौ पवमानस्य ग्रहौ गृह्णाति
तथोन्नेतरित्याह प्राञ्चँ राजानं पूतभृतमभि संपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतादिति
स तथा करोति
तथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति
तेषु तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति १०

इदं तृतीयँ सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्येतयाध्वर्यू जुहुतो यथावेदमितरे जुह्वति
तथा प्रदक्षिणमावृत्य सदोऽभिपवमानँ सर्पन्ति

तथा सदसि यथायतनमुपविशन्ति
तथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छत्यृक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वा
तथोपाकरणं जपति वायुर्हिङ्कर्तेति
स एष सप्तदश आर्भवः पवमानो भवति
तस्य नवम्यां प्रस्तुतायां वाचयति सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यत्र पञ्चहोतारं व्याचष्ट उद्द्रुते साम्नि
संप्रैषमाहाग्नीच्छालाकान्विहर बर्हि स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति
यथासंप्रैषं तौ कुरुतस्
तथाप उपस्पृश्याहैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य तथा समस्तँ राजानमुपतिष्ठते
नात्रावकाशैश्चरति
तथा प्रचरण्यां नवकृत्वो गृह्णीते
तथैष आग्नीध्र आग्नीध्रीयाद्धिष्णियादनुपूर्वं धिष्णियेषु शालाकान्विहरति
तथा पुरस्तात्प्रत्यङ्ङासीनो विहृतञ्छालाकान्व्याघारयति
तथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीं सादयति
तथा सांकाशिनेन पथा पृष्ठ्याँस्तृणाति संततां गार्हपत्यादाहवनीयात् ११

अथ पशुना चरति मनोताप्रभृतिनेडान्तेन
तथा सवनीयान्पुरोडाशान्याचति
तेषां तथैव समवद्यन्नाह तृतीयस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहीति

पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्ति
तथोपभृति स्विष्टकृते सर्वेषाँ सकृत्सकृदुत्तरार्धादवद्यति
द्विरभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति

वषट्कृते जुहोति
तथा समावपमान आहाग्नयेऽनुब्रूहीत्याश्राव्याहाग्नये प्रेष्येति
वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथोदङङत्याक्रम्य
यथायतनँ स्रुचौ सादयित्वा तथैव पात्र्यामिडाँ समवधाय प्रतीचः
पुरोडाशान्प्रहिणोत्यनु हैके संयन्ति पशव इडेति वदन्तोऽथ
प्राङायन्नाहोन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राँ शीर्वतः
कुरुध्वमुन्नेतः सोमं प्रभावयेति
होतृचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य
सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो
विश्वदेव्यावतस्तीव्राँ शीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति
वषट्कृते जुहोति श्येनाय पत्वने स्वाहेत्यनुवषट्कृते तृम्पन्ताँ होत्रा
मधोर्घृतस्य स्वाहेति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वति
तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र
सदस्यस्य होत्रकाणां चमसाध्वर्यवः
सकृत्सकृदाशीर्वतोऽभ्युन्नीयोपावर्तध्वमिति
यन्त्येते महर्त्विजां चमसास्
तथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतोऽभ्युन्नीयोपावर्तन्ते

तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यजेति
वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहेति
परिधये जनप्रथनायेति ब्राह्मणाच्छँसिन ऊर्जे होत्राणामिति पोतुः
पयसे होत्राणामिति नेष्टुः
प्रजापतये मनव इत्यच्छावाकस्यर्तमृतपाः सुवर्वाडित्यग्नीधश्चमसं
चमसमेवानुवषट्करोति तृम्पन्ताँ होत्रा मधोर्घृतस्य स्वाहेति
सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङङाद्रुत्याग्रेण
होतारमुपविशत्ययाडग्नीदिति

स भद्रमकरित्याह होता यो नः सोमँ राजानं पाययिष्यतीति
तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्त उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसान्
उपहूतायामिडायामग्नीध आदधाति षडवत्तम्प्राश्नन्ति
मार्जयन्त इडोपहूताँश्चमसान्भक्षयन्ति भक्षेहि माविशेति
दीर्घभक्षमनुद्रुत्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्त आप्याययन्ति चमसानाप्यायस्व समेतु त इति
सीदन्ति नाराशँसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध उपासनवन्तो वैश्वदेवाय

चमसायचमसायैव त्रीँस्त्रीन्पुरोडाशशकलानुपास्यति
नव होतृचमसे
तानत एवानुमन्त्रयतेऽत्र पितरो यथाभागं मन्दध्वमित्येतस्मिन्काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति
यदशना स्यात्पत्नी पत्नीशाले १२

अथ प्राङायन्नाह देवाय सवित्रेऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृहीत्वोपास्व मा सीषद इति
तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्ग्रहं गृह्णाति वाममद्य सवितरित्यनुद्रुत्योपयामगृहीतोऽसि देवाय त्वा सवित्रे जुष्टं गृह्णामीति
न सादयतीति ब्राह्मणम्
असादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्येति
वषट्कृते जुहोत्यथ वै भवति
सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे सोममभिगृह्णातीति
स सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सोमे
सोममभिगृह्णात्युपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो

विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यथाध्वर्युः
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रा समीक्ष्य पराङावर्तत इडा देवहूरिति
यावदेतस्य यजुषः पर्याप्नोति तावज्जपत्यभ्येनमाह्वयते होता

प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणात्यथ यत्र होतुरभिजानात्येकया च दशभिश्च स्वभूत इति
तत्प्रतिप्रस्थाता द्विदेवत्यपात्राणि मार्जालीये मार्जायित्वा पात्रेष्वपिसृजत्यथ
यत्र होतुरभिजानाति प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति तदन्यतोमदं
प्रतिगृणात्योथा मोद इव मदा मोद इवेत्या व्याहावादथ यत्र
होतुरभिजानाति तद्राधो अद्य सवितुर्वरेण्यमिति तदुभयतोमदमेव
प्रतिगृणाति मदा मोद इव मदा मोद इवेत्या व्याहावात्
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं वैश्वदेवं ग्रहम्
अनूद्यच्छन्ते नाराशँसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँसाननुप्रकम्पयन्त्येतत्पात्रं नाराशँसा
अन्वायन्त्यनुसवनभक्षो विश्वैर्देवैः पीतस्येति
होता चैवाध्वर्युश्चैतत्पात्रँ संभक्षयतो नराशँसपीतेन नाराशँसान्नराशँ
सपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दसः
पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति

होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्ते १३

अथ होतारं विपृच्छति परियक्ष्यसि सौम्या३ं न परियक्ष्यसी३ इति

स यथैनँ होता प्रत्याह तच्छ्रुत्वासन्नँ सौम्यमागच्छत्यथ स्रुचि चतुर्गृहीतं
गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यजेति
वषट्कृते जुहोत्यथोपस्तीर्य द्विश्चरोरवद्यति
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याह सौम्यस्य यजेति
वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोत्यथैनं वैष्णव्यर्चा
स्रुवाहुत्याभिजुहोति विष्णो त्वं नो अन्तम इति
यद्यु वै होताग्नावैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत
तस्मिन्नाज्यमानीयावेक्षते
पवित्रं वै सौम्य आत्मानमेव पवयन्ते
य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेतेति
तस्मिन्भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा
सोमेन तद्वयमस्मासु धारयामसीति
मन एवात्मन्दधार न गतमना भवतीति ब्राह्मणम्

अथैनमुद्गातृभ्यो हरन्ति
तस्मिँस्तच्चेष्टन्ति यत्ते विदुरथ प्राङायन्नाह प्रतिप्रस्थातरुपाँ शुपात्रेण
पात्नीवतमाग्रयणाद्ग्रहं गृहीत्वोपास्व मा सीषद इति
तच्छ्रुत्वा प्रतिप्रस्थातोपाँ शुपात्रेण पात्नीवतमाग्रयणाद्ग्रहं
गृह्णात्युपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं
गृह्णाम्यग्नाइ पत्नीवाइ इति
बर्हिषी अन्तर्धाय घृतेन श्रीणात्यहं परस्तादहमवस्तादहं ज्योतिषा वि तमो
ववार । यदन्तरिक्षं तदु मे पिताभूदहँ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः
समानानामित्यपोद्धृत्य बर्हिषी न सादयतीति ब्राह्मणम्
असादयित्वोपनिष्क्रम्याश्राव्याहाग्नीत्पात्नीवतस्य यजेति
वषट्कृते जुहोति सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्युपाँ श्वनुवषट्कृते हुत्वा
हरति भक्षं स यद्यस्मिन्नाग्नीध्र उपहवमिच्छत उपैवैनँ ह्वयते
नो त्वेव संभक्षयतोऽथाहाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा
संख्याप्याप उपप्रवर्तयतादूरुणोपप्रवर्तयतादनग्नं
कृत्वोरुमुपप्रवर्तयताधोतुश्चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय

मातिरीरिचः प्रतिप्रस्थातर्होतृचमसे ध्रुवायावकाशं कुरुतादेहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति भूतमसि भूते मा धा
मुखमसि मुखं भूयासमिति
होतृचमसमेव प्रथममुन्नयन्ति

यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति
स्तुवते यज्ञायज्ञियेनात्र सप्तहोतारं व्याचष्टे
प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो
वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताँ सि धिषीयागन्देवान्यज्ञो नि
देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः
समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिता इति
स यदेवैनामुद्गातोपमीवति तदेषा पत्न्यूरुणा पत्नेजनीरुपप्रवर्तयति
नग्नं कृत्वोरुमुपप्रवर्तयति   १४

होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणात्यथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाँ उतायमिति
तदुभयतोमोदं प्रतिगृणाति मोदा मोद इव मदा मोद इवेत्या व्याहावादथ
यत्र होतुरभिजानाति तन्तुं तन्वन्रजसो भानुमन्विहीति तत्प्रतिप्रस्थाता
ध्रुवम्परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यथैनं प्रच्यावयति विश्वे
त्वा देवा वैश्वानराः प्रच्यावयन्त्वित्
अथैनमाहरति दिवि देवान्दँ हान्तरिक्षे वयाँ सि पृथिव्यां पार्थिवानित्यथैनँ
होतृचम्सेऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा नः
सर्वमिज्जगदयक्ष्मँ सौमना असत्॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः
समनसः करत्। यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्निति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतँ होतृचमसम्
अनूद्यच्छन्ते चमसान्

अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च
आद्रवन्त्यनुसवनभक्षोऽग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत
उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथैताँश्चमसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वायातयति
तेषु त्रीँस्त्रीँश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलम्
अथोक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य प्रशास्तः प्रसुहीति
सर्पतेत्याह प्रशास्ता
संतिष्ठते तृतीयसवनम् १५

अथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः
समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढ
ीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गारांस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा
गुदतृतीयेनाथाध्वर्युः पृषदाज्यं विहत्य जुह्वाँ समानीयात्याक्रम्याश्राव्याह
देवेभ्यः प्रेष्येति

वषट्कृते जुहोति प्रेष्य प्रेष्येत्येकादशानूयाजानिष्ट्वोदङङत्याक्रम्य यथायतनँ
स्रुचौ सादयित्वा वाजवतीभ्याँ स्रुचौ व्यूहति
शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्योन्नेतारमाहोन्नेतर्ग्रहस्ते प्रचरेति
तच्छ्रुत्वोन्नेता द्रोणकलश आग्रयणतृतीयं ग्रहं गृह्णात्युपयामगृहीतोऽसि हरि-
रसि हारियोजनो हर्यो स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव
सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामीति
बर्हिषी अन्तर्धाय धानाभिः श्रीणाति हरी स्थ हर्योर्धाना इत्यपोद्धृत्य बर्हिषी

अथैनमादायोपोत्तिष्ठन्नाहेन्द्राय हरिवते धानासोमानामनुब्रूहीति
शीर्षन्नधिनिधाय विक्रम्याश्राव्याहेन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति
वषट्कृते जुहोति सहसोमा इन्द्राय स्वाहेत्यनुवषट्कृते हुत्वा हरति भक्षं स
यावन्त ऋत्विजस्तेभ्य उन्नेता धाना व्यावपति
त उन्नेतर्युपहवमिष्ट्वैकैकामन्वस्यन्ते
मनसा संबाधते   १६

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीत्यथैना निर्णिज्योत्तरवेद्याँ
संनिवपन्त्यापूर्या स्था मा पूरयत प्रजया च धनेन चेति
निवपन्नेव यजमानस्तिस्रो धानाः सचतेऽथ याचति स्फ्यमुदपात्रं
बर्हिरित्येतत्समादायाहैहि यजमानेति

जघनेन दक्षिणेन हविर्धाने परीत्य दक्षिणेन मार्जालीयं धिष्णियँ
स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हि स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो
मार्जयन्तां पितामहार्मार्जयन्तां प्रपितामहा इत्यथ तिस्रो धाना ददात्येतत्ते
ततासौ ये च त्वामन्वेतत्ते पितामहासौ ये च त्वामन्वेतत्ते प्रपितामहासौ ये
च त्वामन्वित्यत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदङ्पर्यावृत्यात्र षड्ढोतारं
व्याचष्टेऽथाभिपर्यावृत्य तथैवाद्भिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे
स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्याम्
अथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसोऽवयजनमसि स्वाहा
मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा पितृकृतस्यैनसोऽवयजनमसि
स्वाहेत्यथाप्सुषोमान्पर्युपविश्यावघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते
नृभिः सुतस्येष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो
गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामीत्यथैना
निनीयोपोत्थायादित्यमुपतिष्ठन्ते   १७

अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान्।
किमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्येति
यद्यु वा अस्तमित आदित्यो भवत्याहवनीयमेवैतेन यजुषोपतिष्ठन्तेऽथाग्नीध्रं

द्रुत्वाग्नीध्रे दधिद्रप्सान्भक्षयन्ति दधिक्राव्णो अकारिषमित्य्
अथ सख्यवैसर्जनं जपन्त्युभा कवी युवाना सत्या ता धर्मणस्पती । सत्यस्य धर्मणस्पते वि सख्यानि सृजामह इत्यथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य षड्ग्मियाणि जुहोति धाता रातिः सवितेदं जुषन्तामिति
त्रीणि यजूँषि यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दां दशमीं जुहोत्यायुर्दा अग्ने हविषो जुषाण इत्येतस्मिन्काले चात्वाले यजमानः कृष्णविषाणां प्रास्यतीन्द्रस्य योनिरसि यज्ञस्य त्वा योनौ सादयामीति वा तूष्णीं वाथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कुं प्रास्यति तूष्णीम् १८

अत्रैतमवभृथँ सँसादयन्त्यग्रेणाग्नीध्रमुच्छ्राय्यां वा चर्मणि वा पत्नीशालादाददते वारुणमुपस्तीर्णाभिघारितमाज्यस्थालीँ सस्रुवाँ स्रुचं बर्हिः प्रतिवसनीये वाससी औदुम्बरीँ राजासन्दीं सदस औदुम्बरीँ स्थूणां मैत्रावरुणदण्डं हविर्धानाभ्यां पूतभृदाधवनीयौ चमसानधिषवणं चर्माधिषवणे फलके षट्छङ्कून्ग्राव्णो वायव्यानि स्थालीर्द्रोणकलशं दशापवित्रे ऋजीषमित्येतत्सह कृष्णाजिने यत्किञ्चित्सोमलिप्तं भवत्यथ वै भवति
परा स्थालीरस्यन्त्युद्वायव्यानि हरन्तीत्येतत्समादाय प्रस्तोतारमाह प्रस्तोतः साम गायेति

साम्ना प्रस्तोतान्ववैति
त्रिर्निधनमुपैति
पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणम्
अथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्त्युरुँ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चिदिति
विषुवति द्वितीयं निधनमुपयन्त्यपः पराख्याय वाचयति शतं ते राजन्भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मदित्युदकान्ते तृतीयं

निधनमुपयन्त्यथापामन्तमभितिष्ठन्त्यभिष्ठितो वरुणस्य पाश इत्यथाप्सु बर्हिः प्रास्यत्यग्नेरनीकमप आविवेश । अपां नपात्प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्न इत्यथैनत्स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत्स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान्यजत्यथाग्नये सोमायेत्याज्यभागाभ्यां चरत्यथोपस्तीर्य पूर्वार्धात्पुरोडाशस्यावद्यन्नाह १९

वरुणायानुब्रूहीति
पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति
प्रत्यनक्त्यत्याक्रम्याश्राव्याह वरुणं यजेति
वषट्कृते जुहोत्यथोपस्तीर्य सर्वश एव वारुणमवदधदाहाग्नीवरुणाभ्याँ स्विष्टकृद्भ्यामनुब्रूहीति
द्विरभिघारयत्याश्राव्याहाग्नीवरुणौ स्विष्टकृतौ यजेति

वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोत्यथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजत्यथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरित्यथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यप्स्वेवापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेत्यत्रैतमवभृथँ संप्रकिरन्ति यत्किंचित्सोमलिप्तं भवत्यवभृथ निचंकुण निचेरुरसि निचंकुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहीत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति
तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्यात्रैतदृजीषं प्रप्लावयन्ति सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतँ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतादिति
बिन्दूनुपैव स्पृशति
न भक्षयत्यथानुपमज्जन्तावन्योन्यस्य पृष्ठे धावयतो विस्रस्य मेखले प्रतिवसनीये वाससी परिधायोन्नेतारमाहोन्नेतरुन्नो नयेति
तिसृभिरुद्वतीभिरुदायन्त्युद्वयं तमसस्पर्युदु त्यं चित्रमित्यथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश इत्यथाप्रतीक्षमायन्ति

वरुणस्यान्तर्हित्यै
प्रपथे समिधः कुर्वत एधोऽस्येधिषीमहीत्य्
एत्याहवनीयेऽभ्यादधाति समिदसि तेजोऽसि तेजो मयि
धेहीत्यथाहवनीयमुपतिष्ठन्तेऽपो अन्वचारिषँ रसेन समसृक्ष्महि । पयस्वाँ
अग्न आगमं तं मा सँसृज वर्चसेति
व्यवच्छिन्दन्ति परिश्रयणानि
विवर्तयन्ति हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम् २०

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता प्रायणीयस्य निष्कास
उदयनीयमभिनिर्वपत्येष एव वेद एतन्मेक्षणमेतद्बर्हिरथैतां चरुस्थालीँ
सक्षामकाषामुत्खिद्य निर्णिज्य तयोदयनीयँ श्रपयति
तस्मिँस्तथैव श्रप्यमाणे जघनेन गार्हपत्यमौपसदायां वेद्याँ
स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं
परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
समानं कर्म यथा प्रायणीयस्यैतावदेव नाना
पथ्याममुत्र स्वस्तिंप्रथमां यजति तामिहोपोत्तमां यजति
नो तु दिशश्चयवन्तेऽथ पुरस्तात्स्विष्टकृतः स्रुवाहुतिमुपजुहोति यास्ते विश्वाः
समिधः सन्त्यग्न इत्युपस्तरणाभिघार्णाभ्यामेवैतद्ध्रुवाजयं विच्छिँषन्ति
समिष्टयजुरु हैके जुह्वति

शंय्वन्त उदयनीयः संतिष्ठतेऽत्रैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथ
पृषदाज्यवन्त्याज्यानि गृहीत्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते
नखानि निकृन्तते
सर्वसँस्थां पशोः कुर्वन्त्यथ यदि वशां न लभते मैत्रावरुणीमामिक्षां
गार्हपत्ये श्रपयित्वा तयाहवनीये प्रचरति
साज्यभागप्रतिपत्केडान्ता संतिष्ठते २१

अथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नेयमष्टाकपालमुद-

वसानीयामिष्टिं निर्वपति
श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः
पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविषोऽग्ने तमद्याधा ह्यग्न इति
त्रिष्टुभौ संयाज्ये
अन्वाहार्यमासाद्यानड्वाहं ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथारण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य
पूर्वाणि देविकाहवींषि निर्वपत्यनुमत्यै चरुँ राकायै चरुं धात्रे पुरोडाशं
द्वादशकपालमित्य्
अन्वाहार्यमासाद्य वत्सतरीं ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ तदानीमेव पृष्ठ्याँस्तीर्त्वापः प्रणीयोत्तराणि
देविकाहवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्र एव पुरोडाशं
द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरं ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथारण्योरग्नीन्समारोह्य स्वान्यग्न्यायतनान्यध्यवसाय
मथित्वाग्नीन्विहृत्य सायंप्रातरग्निहोत्रे प्रतिजुहोति
संतिष्ठतेऽग्निष्टोमः संतिष्ठतेऽग्निष्टोमः २२

## नवमः प्रश्नः

प्रवर्ग्यँ संभरिष्यन्नुपकल्पयते खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं वाभ्रिं
व्याममात्रीं वारत्निमात्रीं वोभयतःक्ष्णूं मृदं च भावितां करणीयां कृष्णाजिनं
वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा
छागापयोऽर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि
कृष्णाजिनलोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डं
मदन्तीरित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा पूर्वां शान्तिमुपयन्ति नमो
वाच इत्यथाग्रेण शालां धनुर्मात्रे वेद्यै गर्तं खानयति
तद्भावितां मृदमवलेपयति
समां बिलेन करोति
तदुपसादयति वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा स्थाले
छागापय इत्यथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि सँस्तीर्य
तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथोत्तरँ शालाखण्डमग्रेण

स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति
तं परिमण्डलं खरं करोत्यथैनँ सिकताभिराभ्राशिनं करोति
तं कुशतरुणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति
तस्योदीचीं द्वारं कुर्वन्ति
तदुपसादयत्यर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिन-
लोमानि सूनामधिकरणीं कर्तारं कुशलं वेणुकाण्डमित्यथ गार्हपत्ये
मदन्तीरपोऽधिश्रयत्यन्तर्वेद्यभ्रिं निदधाति
परिश्रयन्ति द्वाराणि
पत्नीशाले पत्नीं परिश्रयन्ति

परिस्तृणन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चात्र पूर्वाँ शान्तिमुपयन्ति येषामनुपेता
भवत्यगार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये
सावित्रं जुहोत्यन्वारब्धे यजमाने १

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे
वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति
जुहोत्यदीक्षितस्य
जपति दीक्षितस्याथाभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयतेऽभ्रिरसि नारिरस्यध्वरकृद्देवेभ्य
इत्यथैनामादायोपोत्तिष्ठत्युत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु
मरुतः सुदानव इन्द्र प्राशूर्भवा सचेति
प्रैति प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसम्देवा
यज्ञं नयन्तु न इत्यथ भावितां मृदमुपतिष्ठते देवी द्यावापृथिवी अनु मेऽमँ
साथामित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति
मखाय त्वेति हरति
मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्
एवमेव द्वितीयँ हरत्येवं तृतीयं तूष्णीं चतुर्थं पर्येतस्यै श्नष्टयथ
वराहविहतमुपतिष्ठत इयत्यग्र आसीरित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य
शिर इति

मखाय त्वेति हरति
मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्
एवमेव द्वितीयँ हरत्
एवं तृतीयं तूष्णीं चतुर्थम्पर्यैतस्य शिनष्टयथ वल्मीकवपामुपतिष्ठते
देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीरित्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति
मखाय त्वेति हरति
मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्
एवमेव द्वितीयँ हरत्येवं तृतीयं तूष्णीं चतुर्थम्पर्यैतस्यै शिनष्टयथोतीकस्तम्बं वादारस्तम्बं वोपतिष्ठत इन्द्रस्यौजोऽसीत्यभ्रिया प्रहरत्यृध्यासमद्य मखस्य शिर इति
मखाय त्वेति हरति
मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्
एवमेव द्वितीयँ हरत्येवं तृतीयं तूष्णीं चतुर्थं पर्यैतस्य शिनष्टयथ छागापय उपतिष्ठतेऽग्निजा असि प्रजापते रेत इत्यभ्रिमवदधात्यृध्यासमद्य मखस्य शिर इति
मखाय त्वेति हरति
मखस्य त्वा शीर्ष्ण इत्युत्तरतः कृष्णाजिने मृदि प्रश्चोतयत्युदूह्योपस्थानम्
एवमेव द्वितीयं प्रश्चोतयत्येवं तृतीयं तूष्णीं चतुर्थं चतुर्थेन सह सर्वश एवैतच्छागापय स्थालेन मृदि परिषिञ्चत्यत्रैतानतिशेषानपोऽभ्यवहरन्त्यत्रैव वा प्रकिरन्ति
प्रायश्चित्ताय वा परिशाययन्ति २

अथ प्रवर्ग्यमाददतेऽवनाम्य मुखान्यनभिप्रश्वसन्तो न प्रवर्ग्यं चादित्यं चान्तर्दधति
बहवो हरन्तीति विज्ञायतेऽथैनमानयन्त्यैतु ब्रह्मणस्पतिरा देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु न इत्
अथैनं खर उपावहरन्त्यायुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां धेहि मां धेहि मयि धेहीत्यथैनमर्मकपालैः शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिन-

लोमैरिति सँसृज्य मदन्तीभिरुपसृजति मधु त्वा मधुला करोत्विति
पिराडं करोति मखस्य शिरोऽसीति
यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदोऽपच्छिद्य
त्रीन्पिराडान्करोति
तेषामेकं कर्त्रे प्रयच्छति गायत्रोऽसीति
तेनास्य बुध्नं करोति गायत्रेण त्वा छन्दसा करोमीत्यतिशिष्टायै मृदोऽर्धं
प्रयच्छति त्रैष्टुभोऽसीति
तेनास्य मध्यं करोति त्रैष्टुभेन त्वा छन्दसा करोमीति
सर्वामन्ततो मृदं प्रयच्छति जागतोऽसीति
तेनास्य बिलं करोति जागतेन त्वा छन्दसा करोमीति
तं प्रादेशमात्रं पृथुबुध्नं मध्ये लग्नं करोत्यथास्य वेणुकाराडेन
द्विभागमवविध्यति
तदस्य पिन्वनं भवत्यथास्य त्र्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यति
मखस्य रास्नासीत्यथास्य बिलं गृह्णात्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन
छन्दसेत्यथैनमादित्येनाभितपति सूर्यस्य हरसा श्रायेत्यथैनं खरे निदधाति
निहितमनुमन्त्रयते मखोऽसीत्येवमेव द्वितीयं महावीरं करोत्येवं तृतीयं तूष्णीं
पिन्वने रौहिणकपाले चाज्यस्थालीम्चाथ या मृदतिशिष्यते तया प्रवाते
प्रतिलेपमुपवातयति
तेषूपवातेषूपकल्पयत एकविँशतिं वृष्णो अश्वस्य शकृत्पिराडानभ्रिमग्निं
पचनमित्यथाश्वशकमादीप्य मुख्यं महावीरं धूपयति वृष्णो अश्वस्य
निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणेत्य्
अन्तरतश्च बाह्यतश्च सुधूपितं कृत्वा निदधात्येवमेव द्वितीयं महावीरं
धूपयत्येवं तृतीयं तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं चाथोत्तरेण
शालामुरुबिलमिवावटं खानयति
तं पचनेनावस्तीर्य तस्मिन्प्राचो वोदीचो वा महावीरानायातयति
पुरस्तात्पिन्वने
पश्चाद्रौहिणकपाले चाज्यस्थालीं चाथैनान्पचनेनोपरिष्टात्संप्रच्छाद्य
मृदावलिम्पति
चतुरङ्गुलमनुदिशमादीपनायातिशिनष्ट्यथोपोषति ३

अर्चिषे त्वेति पुरस्ताद्शोचिषे त्वेति दक्षिणतो ज्योतिषे त्वेति पश्चात्
तपसे त्वेत्युत्तरतस्
तेऽह्ना वा रात्र्या वा पच्यन्ते
यदि प्रातरुपोषति सायमुपैति
यदि सायं प्रातस्
तेषु पक्वेषूपकल्पयते गोपयश्छागापयो धृष्टिमश्मसंदावँ सतँ संदँ शं खारीँ
शिक्यं कृष्णाजिनमित्येतत्समादायाभ्यैत्यभीमं महिना दिवम्मित्रो बभूव
सप्रथाः । उत श्रवसा पृथिवीम्॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य
सानसिम्। द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादत्ते सिद्ध्यै त्वेति
तया मुख्यान्महावीरादङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः
। सुबाहुरुत शक्त्येत्यथैनमुच्छ्रयत्युत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ
ध्रुवस्त्वमित्यथैनमाशये प्रतिष्ठापयत्यपद्यमानः पृथिव्यामाशा दिश
आपृणेत्य्
अथैनमन्वीक्षते सूर्यस्य त्वा चक्षुषान्वीक्ष ऋजवे त्वा साधवे त्वा सुक्षित्यै
त्वा भूत्यै त्वेत्यथैनं प्रदक्षिणं पुरीषेण पर्यूहतीदमहममुमामुष्यायणं विशा
पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति यथावर्णम्
अथैनँ संदँ शेन परिगृह्य सतेऽवधाय छागापयसाच्छृणत्ति गायत्रेण त्वा
छन्दसाच्छृणद्मि त्रैष्टुभेन त्वा छन्दसाच्छृणद्मि जागतेन त्वा छन्दसाच्छृणद्मि
छृणत्तु त्वा वाक्छृणत्तु त्वोर्क्छृणत्तु त्वा हविश्छृन्द्धि वाचं छृन्द्ध्यूर्जं छृन्द्धि
हविर्देव पुरश्चर सघ्यासं त्वेत्यन्तरतश्च बाह्यतश्च स्वाच्छृणं कृत्वा
गोपयसाभिविष्यन्दयत्येवमेव द्वितीयं महावीरमाच्छृणत्त्येवं तृतीयं तूष्णीं
पिन्वने रौहिणकपाले चाज्यस्थालीं चाथ यदि विधुर्वा प्रदरो वा
जायतेऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युद्दयोल्मुकेनाभितपति विधुं
दद्राणं यदृते चिदभिश्रिष इति द्वाभ्यां सँहैव रोहति
यद्यु वै सर्वश एव भिद्यत एतान्येव कपालान्यवाञ्जनं पिष्ट्वा यैषा
मृत्प्रायश्चित्ताय परिशेते तया सँसृज्य कृत्वा पक्त्वाच्छृद्य निदधाति
तेषां यदा श्वसथ उपरमत्यथैनान्खार्याँ समवधाय
कृष्णाजिनेनोपरिष्टात्संप्रच्छाद्योत्तरे शालाखण्डे शिक्य आसजति
यथा पत्नी न पश्यति तथा
त आ कालात्परिशेरेऽथोत्तराँ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति

४

श्वो राज्ञः क्रय इत्युपकल्पयत श्रौदुम्बरीँ सम्राडासन्दीमौदुम्बरीँ स्थूणां गोदोहनीमौदुम्बरं छागायै शङ्कुमौदुम्बरँ शफोपयमनमौदुम्बरँ स्रुवमौदुम्बर्यौ स्रुचावनिष्कीर्णे रौहिणहवणी द्वे श्रौदुम्बरी धृष्टी त्रीणि धवित्राणि कार्ष्णाजिनान्यौदुम्बरदण्डानि

वैणवदण्डानीत्येके
षडौदुम्बराञ्छकलान्वैकङ्कतीं च समिधं त्रयोदश वैकङ्कतान्परिधीन्वैकङ्कतीँ स्रुचं प्रचरणीं कार्ष्मर्यमयान्परिधीन्सुवर्णरजतौ च रुक्मौ द्वे घर्मदुघे धेनुं च छागां च द्वौ कुशमयौ वेदावेकं मौञ्जं वेदमपरिवासितं मौञ्जं रज्जुदाम मुञ्जप्रलवान्रौहिणपिष्टानि खरेभ्यः सिकता इत्यथ प्रायणीयेन चरति प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्य पूर्वाँ शान्तिमुपयन्ति नमो वाच इत्यथाग्रेण गार्हपत्यं तृणानि सँस्तीर्य तदेतत्परिघर्म्यँ सर्वँ सँसादयन्त्यत्र सम्राडासन्दीमत्र स्थूणां गोदोहनीमत्र छागायै शङ्कुमित्यथोत्तरेण गार्हपत्यँ स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति तं प्रादेशमात्रं परिमण्डलं प्रवृञ्जनीयं खरं करोत्यथैनँ सिकताभिराभ्राशिनं करोत्यथोत्तरेणाहवनीयँ स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति
तं प्रादेशमात्रं परिमण्डलमुद्वासनीयं खरं करोत्यथैनँ सिकताभिराभ्राशिनं करोत्यथोत्तरे शलाखण्डे स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति
तं चतुरश्रं निष्यन्दनवन्तमुच्छिष्टखरं करोत्यथिनँ सिकताभिराभ्राशिनं करोत्यथाध्वर्युः प्रचरणीयं महावीरँ शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयत्
अथैनं मौञ्जेन वेदेनापिदधात्यथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधाति
तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथैतावुपशयौ महावीरौ वेदाभ्यां परिगृह्याग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राचीनबिलौ सादयत्यथैतामभ्रिमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने सादयत्यथैतां मृदमतिशिष्टामग्रेणाहवनीयं

पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने सादयत्यथैताँ स्थूणां गोदोहनीं छागायै शङ्कुमित्यादाय जघनेन दक्षिणेन गार्हपत्यं परिक्रम्य दक्षिणया द्वारोपनिर्हृत्य होतुः संदर्शे स्थूणां निहत्य्मौञ्जेन दाम्ना घर्मदुघो वत्सं बध्नन्ति तमुत्तरेण छागायै शङ्कुं निहत्य छागां निग्रथ्नन्ति
प्रत्युब्जति छगलम्
अथैतेनैव यथेतमेत्य निष्क्रमयन्ति वृषलान्
ह्वयन्ति होतारं ह्वयन्ति ब्रह्माणं ह्वयन्ति प्रतिप्रस्थातारं ह्वयन्ति प्रस्तोतारं ह्वयन्त्याग्नीध्रम्परिश्रयन्ति द्वाराणि
पत्नीशाले पत्नीं परिश्रयन्ति
परिस्तृणन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चात्र पूर्वाँ शान्तिमुपयन्ति येषामनुपेता भवति ५

अथाध्वर्युः सपवित्राः प्रोक्षणीराददान आह ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्यग्नीद्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं विहर प्रस्तोतः सामानि गायेति
तद्ब्रह्मा प्रसौति यजुर्युक्तँ सामभिराक्तखं त्वा विश्वैर्देवैरनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पारयिष्णुं स्तुभो वहन्तु सुमनस्यमानं स नो रुचं धेह्यहृणीयमानो भूर्भुवः सुवरोमिन्द्रवन्तः प्रचरतेत्यथाध्वर्युः प्रचरणीयं महावीरं प्रोक्षति यमाय त्वा मखाय त्वा सूर्यस्य हरसे त्वेत्यभिप्राप्नुवन्परान्परान्संभारान्प्रोक्षति
तमेव प्रतिप्रस्थाता प्रवर्ग्यं विहरत्यथाहवनीये
कार्ष्मर्यमयान्परिधीन्परिदधाति
तदुपसादयति षडौदुम्बराञ्छकलान्वैकङ्कतीं च समिधं गार्हपत्ये त्रयोदश वैकङ्कतान्परिधीन्सुवर्णरजतौ च रुक्मौ मुञ्जप्रलवान्रौहिणपिष्टानीत्यथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य धृष्टीभ्यां प्रतीचोऽङ्गारान्निरूह्य तेषु रौहिणकपाले उपदधात्यथ दारुणसंयुतानि पिष्टानि संयुत्य रौहिणौ पुरोडाशावधिश्रयत्यथाज्यं निर्वपत्यथाज्यमधिश्रयत्युभयं पर्यग्निकृत्वा रौहिणौ पुरोडाशौ श्रपयत्येतस्मिन्काले प्रतिप्रस्थाता मौञ्जेन वेदेन होमार्थानि पात्राणि संमृशति महावीरँ स्रुवं पिन्वने रौहिणहवनी उपयमनमित्यथ

प्रतिप्रस्थाताज्यमुत्पूय रौहिणौ पुरोडाशावुपस्तीर्णाभिघारितावुद्वास्य रौहिणहवनीभ्यां परिगृह्यान्तर्वेद्यासादयति
दक्षिणं परिधिसन्धिमन्वेकम्
उत्तरं परिधिसन्धिमन्वितरम्प्राञ्चौ पूर्वाह्णिके
प्रत्यञ्चावापराह्णिकेऽथाध्वर्युः प्रचरणीयं महावीरँ शफाभ्यां परिगृह्य सव्ये पाणौ समावृत्याज्यस्थाल्याः सकृदुपहतेनाज्येन गार्हपत्येऽनवानँ संतताः सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहा अपानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा मनसे स्वाहा वाचे सरस्वत्यै स्वाहेति चतस्र उत्तरा यथोपपादं दक्षाय स्वाहा क्रतवे स्वाहा जसे स्वाहा बलाय स्वाहेत्यथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्त्वित्येतस्मिन्काले प्रतिप्रस्थाता राजतँ रुक्मं प्रवृञ्जनीये खर उपगूहति पृथिवीं तपसस्त्रायस्वेत्यथ मुञ्जप्रलवान्व्यतिषज्यादीपयत्यर्चिरसि शोचिरसि ज्योतिरसि तपोऽसीति
तान्प्रवृञ्जनीये खरे संप्रकीर्य तेषु प्रचर्णीयं महावीरँ सँसादयति ६

सँसीदस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषम्मियेध्य सृज प्रशस्त दर्शतमित्यथैनमाज्येन पूरयत्यञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः । पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादीदित्यथास्य प्रादेशेन दिशो व्यास्थापयत्यनाधृष्या पुरस्तादग्नेराधिपत्य आयुर्मे दा इति पुरस्तात्
पुत्रवती दक्षिणात इन्द्रस्याधिपत्ये प्रजां मे दा इति दक्षिणतः
सुषदा पश्चाद्देवस्य सवितुराधिपत्ये प्राणं मे दा इति पश्चादाश्रुतिरुत्तरतो मित्रावरुणयोराधिपत्ये श्रोत्रं मे दा इत्युत्तरतो
विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्ये ब्रह्म मे दाः क्षत्रं मे दास्तेजो मे धा वर्चो मे धा यशो मे धास्तपो मे धार्मनो मे धा इत्युपरिष्टादथेमामभिमृशति मनोरश्वासि भूरिपुत्रा विश्वाभ्यो मा नाष्ट्राभ्यः पाहि सूपसदा मे भूयार्मा मा हिँसीरित्यथ धृष्टीभ्यामुदीचोऽङ्गारान्निरूहति तपो ष्वग्ने अन्तराँ अमित्रान्तपा शँ समररुषः परस्य । तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयास इति
तैरेनं प्रदक्षिणं परिचिनोति चित स्थ परिचितः स्वाहा मरुद्भिः

परिश्रयस्वेत्यथैनं त्रयोदशभिर्वैकङ्कतैः परिधिभिः परिचिनुतोऽध्वर्युश्च प्रतिप्रस्थाता च
मा असीति प्राञ्चावध्वर्युः
प्रमा असीत्युदञ्चौ प्रतिप्रस्थाता
तावेवमेव व्यतिषङ्गं प्रतिमा असि संमा असि विमा अस्युन्मा असीत्यथैनं त्रयोदशं परिधिं दक्षिणत ऊर्ध्वाग्रं निमिनोत्यन्तरिक्षस्यान्तर्धिरसीत्यथैनँ सौवर्णेन रुक्मेनापिदधाति दिवं तपसस्त्रायस्वेत्यथैनमुपतिष्ठत आभिर्गीर्भिश्छुक्रं ते अन्यदर्हन्बिभर्षि सायकानि धन्वेति
प्रज्वलिते रुक्ममपकर्षति ७

अथ धवित्राण्यादत्ते
गायत्रमसीत्यन्यतरत्त्रैष्टुभमसीत्यन्यतरद्जागतमसीत्यन्यतरत्
तैर्तैरेनं पश्चात्प्राङ्जान्वाच्योर्ध्वं धूनोति मधु मध्वित्युत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति

तयोरन्यतरदाग्नीध्रायोत्प्रयच्छत्यथैनं त्रिः प्रदक्षिणं परियन्ति प्रणवेप्रणवे धून्वन्तस्
त्रिः परीत्योत्तरतस्तिष्ठन्त्यथ धवित्राण्यादत्तेऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति
तयोरन्यतरदाग्नीध्रायोत्प्रयच्छत्यथैनं पर्युपविशन्ति
पश्चात्प्राङ्मुखोऽध्वर्युरुपविशति
पुरस्तात्प्रत्यङ्मुखः प्रतिप्रस्थातोत्तरतो दक्षिणामुख आग्नीध्रस्
त एवमेव प्रणवेप्रणवे धून्वन्त आसत उपसमासमुल्मुकान्याप्याययन्तो महावीरम्
अथ यत्र होतुरभिजानाति याभिर्वर्तिकां ग्रसिताममुञ्चतमिति तदेनमुपोत्थाय रोचयतोऽध्वर्युश्च यजमानश्च दश प्राचीर्दश भासि दक्षिणेत्येतेतानुवाकेन
अथ यत्र होतुरभिजानात्यप्रस्वतीमश्विना वाचमस्मे इति
तद्धवित्राण्युपोद्यच्छन्तेऽथ यत्र होतुरभिजानात्यरूरुचदुषसः पृश्निरग्रिय इति
तद्रुचितो घर्म इत्युक्त्वा यथेतं त्रिः पुनः प्रतिपरियन्ति निधाय
धवित्राण्यवकाशैरवेक्षमाणा उपतिष्ठन्तेऽपश्यं गोपामिति प्रतिपद्याशीमहि

त्वा मा मा हिँ सीरित्यातोऽथ गार्हपत्यमुपतिष्ठते त्वमग्ने गृहपतिर्विशामसि विश्वासां मानुषीणां शतं पूर्भिर्यविष्ठ पाह्यँ हसः समेद्धारँ शतँ हिमास्तन्द्राविणँ हार्दिवानमिहैव रातयः सन्त्वित्यन्तर्हिते प्रतिप्रस्थाता वेदे पत्नीं वाचयति त्वष्ट्रीमती ते सपेयेत्यान्तादनुवाकस्यैतस्मिन्काले प्रतिप्रस्थाता दक्षिणँ रौहिणं जुहोत्यहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषाँ स्वाहेति ८

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इत्यादायाभिमन्त्रयतेऽदित्यै रास्नासीति दोहनं कँसं पिन्वने इति प्रतिप्रस्थातापरेण परिक्रम्याथैतां घर्मदुघं त्रिरुपाँ शु देवनामभिराह्वयतीड एह्यदित एहि सरस्वत्येहीति त्रिरुच्चैर्दक्षिणया द्वारोपनिष्क्रम्य यदस्यै नाम भवति तेनासावेह्यसावेहीत्यथैनाँ रशनयाभिदधात्यदित्या उष्णीषमसीति वायुरस्यैड इति घर्मदुघो वत्समभिमृशत्यथैनमुपावसृजति पूषा त्वोपावसृजत्वश्विभ्यां प्रदापयेति धयन्तमनुमन्त्रयते यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे करिति प्रत्तायामुन्नयत्युस्र घर्मँ शिँ षोस्र घर्मं पाहि घर्माय शिँ षेति नियुज्य संधायोपसीदति बृहस्पतिस्त्वोपसीदत्विति स्तनान्संमृशति दानव स्थ पेरवो विश्वग्वृतो लोहितेनेत्यथ यत्र होतुरभिजानात्या दशभिर्विवस्वत इति तदेनां पिन्वने पिन्वयत्यश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्यतिशिष्टं कँसे दोहयत्येतस्मिन्काले प्रतिप्रस्थाता पिन्वने छागां पिन्वयति तूष्णीम्

अथ यत्र होतुरभिजानात्युत्तिष्ठ ब्रह्मणस्पत इति तत्प्रतिप्रस्थात्रे पयसी संप्रदायैतेनैव यथेतमेत्य शफोपयमानादत्ते गायत्रोऽसीत्यन्यतरत्त्रैष्टुभोऽसीत्यन्यतरद्जागतमसीत्युपयमनम् अथ यत्र होतुरभिजानात्युपद्रव पयसा गोधुगोषमिति तत्पयसी आह्रियमाणे अभिमन्त्रयते सहोर्जो भागेनोप मेहीन्द्राश्विना मधुनः सारघस्य घर्मं पात

वसवो यजता वडित्यथ पुरस्तात्प्रत्यञ्चावुपविश्य महावीरे पयसी अवनयतोऽध्वर्युश्च प्रतिप्रस्थाता चाध्वर्युः पूर्वो गोपयोऽवनयति स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि स्वाहेत्यथास्योष्माणमन्वीक्षते मधु हविरसि सूर्यस्य तपस्तपेत्येतस्मिन्काले प्रतिप्रस्थाता छागापयोऽवनयति तूष्णीम्
उभयँ समानीयाध्वर्युस्तृतीयमवनयत्यत्र यत्कँसे पयस्तदुपयमने समवनयति प्रत्यूह्याङ्गारान्
अथाध्वर्युः प्रचरणीयं महावीरँ शफाभ्यां परिग्राह्णाति ९

द्यावापृथिवीभ्यां त्वा परिगृह्णामीति
वेदेनाधस्तादुपमृज्योपयमनेनोपयच्छत्यन्तरिक्षेण
त्वोपयच्छामीत्यथैनमादायोपोत्तिष्ठति देवानां त्वा पितृणामनुमतो भर्तुँ शकेयमिति

प्राङ्हरति तेजोऽसि तेजोऽनु प्रेह्यग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात्सूर्यो दिवो दिविस्पृङ्मा मा हिँसीरन्तरिक्षस्पृङ्मा मा हिँसीः पृथिविस्पृङ्मा मा हिँसः सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्यथ वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेति पञ्चानवानम्
एवमेव द्वे उत्तरे
षडुत्तराणि यथोपपादमग्नये त्वा वसुमते स्वाहा सोमाय त्वा रुद्रवते स्वाहा वरुणाय त्वादित्यवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा यमाय त्वाङ्गिरस्वते पितृमते स्वाहेति
विश्वा आशा दक्षिणसदिति दक्षिणत आसीनं ब्रह्माणमीक्षते
विश्वान्देवानयाडिहेति पश्चादासीनँ होतारं सव्येनात्याक्रामञ्जपति स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना स्वाहाग्नये यज्ञियाय शं यजुर्भिरिति
यजमानमतिवाचयत्यश्विना घर्मं पातँ हार्दिवानमहर्दिवाभिरूतिभिरनु वां द्यावापृथिवी मँसातामित्युच्चैराश्राव्याह घर्मस्य यजेति
वषट्कृते जुहोति स्वाहेन्द्रायेति

स्वाहेन्द्रा वडित्यनुवषट्कृते हुत्वा वाचयति घर्ममपातमश्विना
हार्दिवानमहर्दिवाभिरूतिभिरनु वां द्यावापृथिवी ग्रमँ सातां तं प्राव्यं
यथावट्नमो दिवे नमः पृथिव्यैहृथा॥४॥६॥ॐ दिवि धा इमं यज्ञं यज्ञमिमं
दिवि धा दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छ पञ्च प्रदिशो गच्छ
देवान्घर्मपान्गच्छ पितॄन्घर्मपान्गच्छेत्येतस्मिन्काले प्रतिप्रस्थाता
पिन्वनेनोपयमनादुपहत्य प्रचरणीयं महावीरं
पूरयत्यथैनमन्तःपरिध्यभिपीपयतोऽध्वर्युश्च प्रतिप्रस्थाता च सहैवेषे पीपिह्यूर्जे
पीपिहि ब्रह्मणे पीपिहि क्षत्राय पीपिह्यद्भ्यः पीपिह्योषधीभ्यः पीपिहि
वनस्पतिभ्यः पीपिहि द्यावापृथिवीभ्यां पीपिहि सुभूताय पीपिहि
ब्रह्मवर्चसाय पीपिहि यजमानाय पीपिहि मह्यमित्युपाँशूक्त्वा ज्यैष्ठ्याय
पीपिहीत्युच्चैर्
अथैनमनुदिशमात्मानमभि पीपयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा
भूत्यै त्वेत्यत्र यन्महावीरे पयस्तदुपयमने
समवनयत्यथोदङ्ङत्याक्रम्याथैतदुपयमनमन्तर्वेदि प्राचीनबिलँ
सादयत्येतस्मिन्काले प्रतिप्रस्थाता राजतँ रुक्ममुद्वासनीये खर उपगूहति
तस्मिन्प्रचरणीयं महावीरँ सादयति १०

धर्मासि सुधर्मामेन्यस्मे ब्रह्माणि धारय क्षत्राणि धारय विशं धारय नेत्त्वा
वात स्कन्दयादित्यथ यद्यभिचरेदमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं
गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य
षडौदुम्बराञ्छकलान्याचति
तेषामेकैकेनोपयमनादुपहत्य पूर्वार्ध आहवनीयस्य प्रश्चोतयति पूष्णे शरसे
स्वाहेत्यथैनमन्तराञ्जनं मध्यमे परिधौ सँस्पृष्टँ सादयत्येवमेव
द्वितीयेनोपयमनादुपहत्य पूर्वार्ध एवाहवनीयस्य प्रश्चोतयति ग्रावभ्यः
स्वाहेति
तं तथान्तराञ्जनं मध्यमे परिधौ सँस्पृष्टँ सादयत्
एवमेव तृतीयेनोपयमनादुपहत्य मध्यत आहवनीयस्य प्रश्चोतयति प्रतिरेभ्यः
स्वाहेति
तं तथैवान्तराञ्जनं मध्यमे परिधौ सँस्पृष्टँ सादयत्येवमेव
चतुर्थेनोपयमनादुपहृत्यापरार्ध आहवनीयस्य प्रश्चोतयति द्यावापृथिवीभ्याँ

स्वाहेत्यथैनमूर्ध्वाञ्जनं भस्मान्त उपगूहत्येवमेव पञ्चमेनोपयमनादुपहत्य दक्षिणार्ध आहवनीयस्य प्रश्चोतयति पितृभ्यो घर्मपेभ्यः स्वाहेत्यथैनं बहिराञ्जनं दक्षिणे परिधौ सँस्पृष्टँ सादयत्यथैतँ षष्ठँ शकलँ सर्वेषु लेपेषु समज्योपयमनादन्तत उपहत्योत्तरार्ध आहवनीयस्य प्रश्चोतयति रुद्राय रुद्रहोत्रे स्वाहेत्यथैनमुत्तरेण शालाया अतीकाशेनानन्वीक्षमाणो निरस्यत्यमुना सह निरर्थं गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्यातिशिष्टाञ्छकलानद्भिः सँस्पर्श्याहवनीयेऽनुप्रहरत्येतस्मिन्काले प्रतिप्रस्थातोत्तरँ सौहिणं जुहोत्यहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषाँ स्वाहेत्यत्रैताँ समिधं मध्यत आहवनीयस्याभ्यादधाति तूष्णीं तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोति भूः स्वाहेत्यथैतदुपयमनमन्तर्वेदि प्राचीनबिलँ सादयित्वा तस्मिन्नग्निहोत्रविधिं चेष्टित्वा
स यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति हुतँ हविर्मधु हविरिन्द्रतमेऽग्नौ पिता नोऽसि मा मा हिँ सीरश्याम ते देव घर्म मधुमतो वाजवतः पितुमतोऽङ्गिरस्वतः स्वधाविनोऽशीमहि त्वा मा मा हिँ सीरित्य्
अथैतदुपयमनं परिकर्मी वाग्नीध्रो वोच्छिष्टखरे मार्जायित्वान्तर्वेदि प्राचीनबिलँ सादयित्वा तस्मिन्सुवर्णरजतौ च रुक्मौ प्रास्य मदन्तीरप आनीय हिरण्यवतीभिर्मार्जयन्ते ११

हिरण्यवर्णाः शुचयः पावका इति चतसृभिरत्रैव मदन्तीरपो निनीयाज्यस्थाल्याः स्रुवेणोपघातं घर्मप्रायश्चित्तानि जुहोति प्राणाय स्वाहा पूष्णे स्वाहेत्येताभ्यामनुवाकाभ्याम्
अथैतदुपयमनमन्तर्वेदि प्राचीनबिलँ सादयित्वा तदेतत्परिघर्म्यँ सर्वँ समवशमयन्नाह घर्मायोत्साद्यमानायानुब्रूहीत्यथैतदुपयमनमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राचीनबिलँ सादयति स्वाहा त्वा सूर्यस्य रश्मिभ्य इत्यथोत्तराँ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेत्यथापराह्ण आपराह्णिकेन प्रवर्ग्येण प्रचरति
तस्य यद्विहितं विहितमेवास्य तत्
समानं कर्मा दक्षिणस्य रौहिणस्य होमादथ दक्षिणँ रौहिणं जुहोति रात्रिर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषाँ स्वाहेत्येवमेवोत्तरँ रौहिणं

जुहोति
समानं कर्मा समिदाधानादत्रैतां समिधं मध्यत
आहवनीयस्याभ्यादधात्यपीपरो माह्नो रात्र्यै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरिति सायमपीपरो मा रात्रिया अह्नो मा पाहीति प्रातः

प्रातर्मन्त्रेणात ऊर्ध्वं पूर्वाह्णिकेऽभ्यादधाति
सायंमन्त्रेणापराह्णिके
तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः
समानं कर्मा संप्रैषात्
अथैतदुपयमनमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्रतीचीनबिलँ सादयति स्वाहा त्वा नक्षत्रेभ्य इत्यथोत्तराँ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति
स एवमेव प्रवर्ग्येण प्रचरति त्र्यहँ षडहं द्वादशाहँ संवत्सरं चतुरो वा मासाँ स्तापश्चितेऽग्नौ
प्रवर्ग्यं भक्षयित्वा संवत्सरं न माँ समश्नीयाद्न रामामुपेयाद्न मृन्मयेन पिबेद्नास्य राम उच्छिष्टं पिबेत्
तेज एव तत्सँश्यतीति ब्राह्मणम् १२

प्रवर्ग्यमुद्वासयिष्यन्नुपकल्पयते त्रीञ्छालाकानिध्माँ स्त्रीणि सतान्युदकुम्भौ दधि मधुमिश्रं ग्रुमुष्टिमवकाभारं विँशतिमौदुम्बरीः समिधो मुञ्जप्रलवान्नौहिणपिष्टानि खरेभ्यः सिकता इत्य्
अत्र पूर्वाँ शान्तिमुपयन्ति नमो वाच इत्यथाग्रेणाहवनीयं तृणानि सँस्तीर्य तदेतत्परिघर्म्यँ सर्वँ सह सँसादयन्त्यत्र सम्राडासन्दीमत्र स्थूणां गोदोहनीमत्र छागायै शङ्कमित्यथैतौ खरौ नानैव सतयोः समुप्यात्रैव सह सँसादयन्त्यथैतमुच्छिष्टखरं परिकर्मी वाग्नीध्रो वा सते समुप्य दक्षिणया द्वारोपनिर्हृत्य मार्जालीयदेशे निवपत्यथैतेनैव यथेतमेत्य निष्क्रमयन्ति वृषलान्
ह्वयन्ति पत्नीं ह्वयन्ति होतारं ह्वयन्ति ब्रह्माणं ह्वयन्ति प्रतिप्रस्थातारं ह्वयन्ति

प्रस्तोतारं ह्वयन्त्याग्नीध्रम्परिश्रयन्ति द्वाराण्यथितां पत्नीमुदग्दशेन
वाससान्तर्दधति
परिस्तृणन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चात्र पूर्वां शान्तिमुपयन्ति येषामनुपेता
भवत्यथ गार्हपत्य आज्यं विलाप्योत्पुनात्येतस्मिन्काले प्रतिप्रस्थाताहवनीये
शालाकमिध्ममादीप्य मुखदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति
तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या ते दिवि शुग्या
गायत्रे छन्दसि या ब्राह्मणे या हविर्धाने तां त एतेनावयजे स्वाहेति
तमत्रैव प्रास्यापरमादीप्य नाभिदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति
तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या तेऽन्तरिक्षे शुग्या
त्रैष्टुभे छन्दसि या राजन्ये याग्नीध्रे तां त एतेनावयजे स्वाहेति

तमत्रैव प्रास्यापरमादीप्य जानुदघ्ने धारयन्पुरस्तात्प्रत्यङ्मुखस्तिष्ठति
तमध्वर्युः पश्चात्प्राङ्मुखस्तिष्ठन्स्रुवाहुत्याभिजुहोति घर्म या ते पृथिव्यां शुग्या
जागते छन्दसि या वैश्ये या सदसि तां त एतेनावयजे स्वाहेति
तमत्रैव प्रास्य विवृत्य द्वाराण्यथ प्रवर्ग्यमादाय पूर्वया द्वारोपनिष्क्रामन्त्यनु
नोऽद्यानुमतिरन्विदनुमते त्वमिति द्वाभ्याम्
अथ महावेदिमवक्रम्य प्रस्तोतारमाह प्रस्तोतः साम गायेति
साम्ना प्रस्तोतान्ववैति
त्रिर्निधनमुपैति
पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणम्
अथाभिक्रामन्ति   १३

दिवस्त्वा परस्पाया अन्तरिक्षस्य तनुवः पाहि पृथिव्यास्त्वा धर्मणा
वयमनुक्रामाम सुविताय नव्यस इति
विषुवति द्वितीयं निधनमुपयन्त्यथाभिक्रामन्ति ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य
तनुवः पाहि विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यस
इत्युपरवकाले तृतीयं निधनमुपयन्त्यथाभिक्रामन्ति प्राणस्य त्वा परस्पायै
चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यस
इत्यथोत्तरेणोत्तरवेदिमुपरमन्ति

स यो बलवाँ स्तमाहानेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं
परिषिञ्चन्परीहीति
स तथा करोति
परिषिच्यमाने यजमानं वाचयति वल्गुरसि शंयुधायाः शिशुर्जनधायाश्छं च
वक्षि परि च वक्षीति

निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथोत्तरनाभिमभिमृशति
चतुःस्रक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्म सप्रथा अप द्वेषो अप
ह्वरोऽन्यद्व्रतस्य सश्चिमेत्यथैतौ खरावुत्तरेणोत्तरनाभिमवकिरति
तं धृष्टीभ्यां प्राग्दीर्घं खरं करोति
तस्मिन्सुवर्णं हिरण्यं निधाय कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथैनँ
रौहिणपिष्टैरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य सिकताभिरनुप्रकिरत्यथाध्वर्युः
प्रचरणीयं महावीरँ शफाभ्यां परिगृह्य दध्ना मधुमिश्रेण पूरयति
घर्मैतत्तेऽन्नमेतत्पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च
प्यासिषीमहीत्यथैनमभिपूरयति महीनां पयोऽसि विहितं देवत्रा ज्योतिर्भा
असि वनस्पतीनामोषधीनाँ रसो वाजिनं त्वा वाजिनोऽवनयाम इत्यथैनं
पूर्वार्धे खरस्य सादयत्यूर्ध्वं मनः सुवर्गमिति १४

अथैतावुपशयौ महावीरौ वेदाभ्यां परिगृह्य दध्ना मधुमिश्रेण पूरयित्वाग्रेण
प्रचरणीयं महावीरँ सँस्पृष्टौ सादयत्यथैतां प्रचरणीं दध्ना मधुमिश्रेण
पूरयित्वोपरिष्टान्महावीरेषु प्रतीचीनबिलाँ सादयत्यथैतौ रुक्मौ दध्ना
मधुमिश्रेण समज्याभितः प्रचरणीयं महावीरँ सँस्पृष्टौ सादयत्यथैते पिन्वने
दध्ना मधुमिश्रेण पूरयित्वाभितः प्रचरणीयं महावीरं प्रतीचीनबिले सँस्पृष्टे
सादयत्
अथैतं मौञ्जं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्याग्रेण महावीरान्प्रतीचीनाग्रँ
सँस्पृष्टं विस्तृणात्यथैतौ शफौ दध्ना मधुमिश्रेण समज्य जघनेन प्रचरणीयं
महावीरं तिरश्चीनाग्रौ व्यतिषक्तौ सँस्पृष्टौ सादयत्यथैते रौहिणहवनी दध्ना
मधुमिश्रेण समज्य शफाग्राभ्यां प्रतीचीनाग्रे सँस्पृष्टे सादयत्यथैता
दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन रौहिणहवनी
प्रतीचीनाग्राः सँस्पृष्टा विस्तृणात्यथैतं कुशमयं वेदं विस्रस्य दध्ना

मधुमिश्रेण समज्य जघनेन प्रचरणीयं महावीरं प्रतीचीनाग्रँ सँस्पृष्टं
विस्तृणात्यथैते स्थूणे दध्ना मधुमिश्रेण समज्य जघनेन शफौ प्रतीचीनाग्रे
सँस्पृष्टे सादयत्यथैतदुपयमनं दध्ना मधुमिश्रेण पूरयित्वोपरिष्टात्स्थूणयोः
प्रतीचीनबिलँ सादयत्यथैतद्रज्जुद्रव्यं विस्रस्य दध्ना मधुमिश्रेण
समज्यात्रैवोपयमने
समवशमयत्यथैतान्कार्ष्मर्यमयान्परिधीन्धवित्रदण्डानिति विस्रस्य दध्ना
मधुमिश्रेण समज्योपरिष्टादुपयमनं
तिरश्चीनाग्रान्व्यतिषक्तान्सँस्पृष्टान्विस्तृणात्यथैतामभ्रिं दध्ना मधुमिश्रेण समज्य
जघनेन स्थूणे तिरश्चीनाग्राँ सँस्पृष्टाँ सादयत्यथैते धृष्टी दध्ना मधुमिश्रेण
समज्याभ्र्यग्राभ्यां प्रतीचीनाग्रे सँस्पृष्टे सादयत्य्
अथैते धवित्रे दध्ना मधुमिश्रेण समज्य जघनेन धृष्टी सँस्पृष्टे सादयत्यथैता
दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन धवित्रे प्रतीचीनाग्राः
सँस्पृष्टा विस्तृणात्यथैतामाज्यस्थालीं दध्ना मधुमिश्रेण पूरयित्वा जघनेनाभ्रिँ
सँस्पृष्टाँ सादयत्यथैतद्धवित्रं दध्ना मधुमिश्रेण समज्य
तेनाज्यस्थालीमपिदधात्यथैते रौहिणकपाले दध्ना मधुमिश्रेण समज्य
जघनेनाज्यस्थालीँ सँस्पृष्टे सादयत्यथैतँ स्रुवं दध्ना मधुमिश्रेण पूरयित्वा
जघनेनाज्यस्थालीमन्तरेण रौहिणकपाले प्रतीचीनबिलँ सँस्पृष्टँ सादयत्यथैतं
कुशमयं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्य जघनेनाज्यस्थालीं
प्रतीचीनाग्रँ सँस्पृष्टं विस्तृणात्यथैतामासन्दीं विस्रस्य दध्ना मधुमिश्रेण
समज्यात्रैवोत्तरतः सँस्पृष्टाँ सादयत्यथैतां मृदमतिशिष्टां दध्ना मधुमिश्रेण
समज्यान्तरेण सक्थिनी निवपति   १५

घर्मैतत्तेऽन्नमेतत्पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च
प्यासिषीमहीत्यथैनँ सिकताभिरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य
रौहिणपिष्टैरनुप्रकीर्य कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रोर्णोत्यपि वाभितः
प्रचरणीयं महावीरं परिचिनोत्यादित्यमण्डलवदथैनमुपतिष्ठतेऽयं यः
पुरुषरूपोऽसि स न आस्ये न तिष्ठसि । नोर्ध्वो न तिर्यग्विधां तेऽनु
विहितोऽस्मि विधां मेऽनु विहितोऽसि यस्त्वमसि सोऽहमस्मि योऽहमस्मि
स त्वं नाकमारोह सह यजमानेन साकमित्य्
अथ ग्रुमुष्टिमादाय दध्ना मधुमिश्रेणावोन्नत्यस्कान्द्यौः पृथिवीमस्कानृषभो

युवा गाः । स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजनि । आ स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहीत्यथ प्रस्तोतारमाह प्रस्तोतर्वार्षाहरँ साम गायेष्टाहोत्रीयं चेति
स यो बलवाँस्तमाहानेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन्परीहीति
परिषिच्यमाने यजमानं गन्धर्वयजूँषि वाचयति रन्तिर्नामासि दिव्यो गन्धर्व इति प्रतिपद्येन्द्रो दक्षं परिजानादहीनमित्यातो निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्यथैनमुपतिष्ठत एतत्त्वं देव घर्म देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्सोमपीथानु मेहि सह प्रजया सह रायस्पोषेणेत्यथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति
तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपसृश्य ज्योतिष्मत्यादित्यमुपतिष्ठत उद्वयं तमसस्परीत्यथैनमवकाभारेण प्रतिच्छाद्य गोप्तारँ समादिशति वयोभ्यो महावीरं गोपाय
प्रस्तोतः श्यैतेनान्वेहीति प्रस्तोतारमाहाथैतेनैव यथेतमेत्य गार्हपत्ये द्वे स्रुवाहुती जुहोत्युदु त्यं चित्रमित्
अथाहवनीयमुपतिष्ठन्त इममू षु त्यमस्मभ्यँ सनिं गायत्रं नवीयाँ समग्ने देवेषु प्रवोच इत्यथाग्नीध्रदेशं द्रुत्वाग्नीध्रदेश उत्तराँ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वेति १६

अथातो घर्मप्रायश्चित्तानि व्याख्यास्यामोऽथ यदि प्रवर्ग्यमप्रवृत्तमादित्योऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्युपसदा प्रचर्य श्वो भूते प्रवर्ग्येण प्रचरेदथ यदि प्रवर्ग्यं प्रवृत्तमादित्योऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथापरस्यां द्वारि सूत्रेण हिरण्यं प्रग्रथ्य प्रचरेदथ यदि प्रवृत्तः प्रपतेद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथैनमुच्छ्रयत्यूर्ध्व ऊ षु ण ऊतय ऊर्ध्वो नः पाह्यँहस इति द्वाभ्याम्
अथैनमाज्येन पूरयत्यञ्जन्ति यं प्रथयन्तो न विप्रा इत्यथ यदि विधुर्वा प्रदरो वा जायतेऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युन्द्योल्मुकेनाभितपति विधुं दद्राणं यदृते चिदभिश्रिष इति द्वाभ्यां सँहैव रोहति

यद्यु वै सर्वश एव भिद्यत एतान्येव कपालान्यवाञ्जनं पिष्ट्वा यैषा
मृत्प्रायश्चित्ताय परिशेते तया सँसृज्य कृत्वा पक्त्वाच्छृद्य निदधात्यथान्यं
प्रचरणीयं महावीरं प्रवृणक्त्यथ यदि प्रमत्ता अतिपरियन्ति गार्हपत्ये तिस्रः
स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्य्
अथ पुनरूर्जा सह रय्येति पुनः प्रतिपरियन्त्यथ यद्युद्यतः प्रपतेद्गार्हपत्ये
तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथैनमभिमृशति मा नो घर्म व्यथितो
विव्यथो नो मा नः क्रतुभिर्हीडितेभिरस्मानिति द्वाभ्याम्
अथ यदि घर्मदुघं वा महावीरं वा वयोऽभिप्रस्रावयेत्तावुष्णोदकेन
प्रक्षालयेदुप नो मित्रावरुणाविहावतमित्यथ गार्हपत्ये नव
स्रुवाहुतीर्जुहुयादिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने
अयास्युद्वयं तमसस्पर्युदु त्यं चित्रम्वयः सुपर्णा इत्यथ यदि घर्मदुघं न
विन्देतान्यां दोहयेदथ यद्यन्यां न विन्देताजां दोहयेदथ यद्यजां न
विन्देतार्कक्षीरैः प्रचरेदथ यद्यर्कक्षीरं न विन्देत यवपिष्टानि व्रीहिपिष्टानि
श्यामाकपिष्टानि वाद्भिः सँसृज्य तैः प्रचरेदप्यद्भिः प्रचरेद्न त्वेव न
प्रचरेद्यहीनां पयोऽसीत्युक्तं महावीरेऽवनयनम्
अस्कान्द्यौः पृथिवीमिति स्कन्नानुमन्त्रणम्
अथ यदि विद्युदापतेद्गार्हपत्ये स्रुवाहुतिं जुहुयाद्या
पुरस्ताद्विद्युदापतदित्येतैर्यथारूपम्
प्राणाय स्वाहा पूष्णे स्वाहेत्युक्तानि घर्मप्रायश्चित्तानि
यत्किंचिद्धर्मकार्यविपर्यासे चैता आहुतीर्जुहुयाद्नमस्ते घर्म भूपतये स्वाहा
नमस्ते घर्म भुवनपतये स्वाहा नमस्ते घर्म भूतानां पतये स्वाहा घर्माय
स्वाहाश्विभ्याँ स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा प्रजापतये स्वाहा ब्रह्मणे
स्वाहेत्य्
अथाषाढां त्र्यालिखितामुत्तरलक्ष्माणमुपधायात्र घर्मेष्टकां कुलायिनीं
चोपदधात्युदस्य शुष्माद्भानुरिति घर्मेष्टकां यास्ते अग्न आर्द्रा योनयो या इति
कुलायिनीं संचितमग्निँ सामभिरुपस्थायोक्थेनानुशस्तमुत्तरे श्रोणयन्ते
तिष्ठन्नग्निमभिमृशत्यग्निरसि वैश्वानरोऽसि
इत्येतेनानुवाकेनात्राध्वर्यवेऽग्निदक्षिणां ददाति शतँ सहस्रमन्विष्टकं वा
१७

प्रवर्ग्यवति सोमे दधिघर्मं भक्षयन्ति भूर्भुवः सुवर्मयि त्यदिन्द्रियं महदित्येतेनानुवाकेनाथ घोरास्तनूरनुदिशति
यास्ते अग्ने घोरास्तनुव तनुवस्स्निक्च स्त्रीहीतिश्च स्त्रीहितिश्चेति घोरास्तनुवो धुनिश्च ध्वान्तश्चेति राजसूयिको गण उग्रश्च धुनिश्चेत्याग्निचित्योऽथ यदि घर्मदुघं वा महावीरं वा स्तेनोऽपहरेद्गार्हपत्ये स्रुवाहुतिं जुहुयादहोरात्रे त्वोदीरयतामिति
खडिति वाचः क्रूराणीत्यथ यद्येकसृको वाश्येन तमनुमन्त्रयते वि गा इन्द्र विचरन्स्पाशयस्वेत्यथास्मा उभयतआदीप्तमुल्मुकं क्षिपेदग्ने अग्निना संवदस्व मृत्यो मृत्युना संवदस्वेत्यथैनमुपतिष्ठते सकृत्ते अग्ने नमो द्विस्ते नमस्त्रिस्ते नम इत्य्
अथ यदि गृध्रो वाश्येत तमनुमन्त्रयतेऽसृङ्मुखो रुधिरेणाव्यक्त इत्यथ यद्यार्ता वागुदियात्तामनुमन्त्रयते यदेतद्वृकसो भूत्वेत्यथ यदि भयेडकः काकपिञ्जको वाश्येत तमनुमन्त्रयते यदीषितो यदि वा स्वकामीत्यथ यदि सालावृकी वाश्येत तामनुमन्त्रयते दीर्घमुखि दुर्हणिवत्यथ यद्युलूकोलूकी वाश्येत तमनुमन्त्रयत इत्थादुलूक आपप्तदित्यथ यद्युन्मत्ता वागुदियात्तामनुमन्त्रयते यदेतद्भूतान्यन्वाविश्येत्यथ यदि घर्मदुघं वा महावीरं वा वयोऽभिप्रपतेत्तमनुमन्त्रयते प्रसार्य सक्थ्यौ पतसीत्यथ यदि घर्मदुघं वा महावीरं वा क्रिमय उपाधिगच्छेयुस्तानद्भिः प्रक्षालयेदत्रिणा त्वा क्रिमे हन्मीत्यथ यदि प्रवृत्तं प्रवर्ग्यं भ्रातृव्योऽभिप्रपद्येत गार्हपत्ये स्रुवाहुतिं जुहुयादाहरावद्येत्यथैनमनुव्याहरिष्यन्भवति
तमनुव्याहरेद्ब्रह्मणा त्वा शपामीत्यथ यं द्वेष्टि तस्य दक्षिणं द्वार्बाहुमनुप्रचालयेदुत्तुद शिमिजावरीति
स योऽन्य एतेभ्यो वाश्येत तस्मा उभयतआदीप्तमुल्मुकं क्षिपेदुत्तुद शिमिजावरीत्यथ यद्युद्धून्वन्निव वातो वायात्तमनुमन्त्रयते भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवो भुवोऽधायि भुवोऽधायि भुवोऽधायीत्य्
अथ यद्यवृतः शालां प्रपद्येताभिर्गीर्भिर्यदतो न ऊनमित्येतया प्रपद्येत यद्यु वै प्रवृत एतयैव १८

अथातोऽवान्तरदीक्षां व्याख्यास्याम उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा

दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य
मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य
आसनानि कल्पयत्यग्रेणाग्निम्प्रवर्ग्याय कल्पयामि घर्माय कल्पयामि
महावीराय कल्पयामि सम्राज्ञे कल्पयामीति
दक्षिणेनाग्निम्ब्रह्मणे कल्पयामि प्रजापतये कल्पयामीत्युत्तरेणाग्निमृषिभ्यो
मन्त्रकृद्भ्यो मन्त्रपतिभ्यः कल्पयामि देवेभ्यो घर्मपेभ्यः कल्पयामीत्यथ
दक्षिणतः प्राचीनावीती पितृभ्यो घर्मपेभ्यः कल्पयामि यमायाङ्गिरस्वते
पितृमते कल्पयामीत्यथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्राय रुद्रहोत्रे
कल्पयामीत्यथाप उपस्पृश्य सर्वाभ्यः प्रवर्ग्यदेवताभ्यः कल्पयामीति

प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः
प्रवर्ग्यदेवतास्तर्पयत्यग्रेणाग्निम्प्रवर्ग्यं तर्पयामि घर्मं तर्पयामि महावीरं
तर्पयामि सम्राजं तर्पयामीति
दक्षिणेनाग्निम्ब्रह्माणं तर्पयामि प्रजापतिं तर्पयामीत्युत्तरेणाग्निमृषीन्मन्त्रकृतो
मन्त्रपतीँस्तर्पयामि देवान्घर्मपाँस्तर्पयामीत्यथ दक्षिणतः प्राचीनावीती
पितॄन्घर्मपाँस्तर्पयामि यममङ्गिरस्वन्तं पितृमन्तं तर्पयामीत्यथाप
उपस्पृश्योत्तरतो यज्ञोपवीती रुद्रँ रुद्रहोतारं तर्पयामीत्यथाप उपस्पृश्य सर्वाः
प्रवर्ग्यदेवतास्तर्पयामीति
चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति
पृथिवी समिदित्येतैः प्रतिमन्त्रम्
अथ देवता उपतिष्ठतेऽग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे
राध्यताम्वायो व्रतपत आदित्य व्रतपते व्रतानां व्रतपते शुक्रियं व्रतं
चरिष्यामि तच्छकेयं तन्मे राध्यतामित्यथैतेषामनुवाकानां प्रभृतीर्वाचयति
प्रथमोत्तमयोर्वाथैनँ सँशास्ति संमील्य वाचं यच्छेत्यथास्याहतेन वाससा
त्रिः प्रदक्षिणँ संमुखँ शिरो वेष्टयति चित स्थ परिचितः स्वाहा मरुद्भिः
परिश्रयस्वेति
प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः
प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाथास्तमित आदित्ये
ग्राममायन्ति
वाग्यतस्तिष्ठेदेताँ रात्रिमुपविशेत्संविशेद्वाथ प्रातरुदित आदित्ये ग्रामात्प्राचीं

वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेननुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वा वयः सुपर्णा इति वासो विमुच्याथास्य षट्तयमभिविदर्शयत्यग्निमप आदित्यं गां ब्राह्मणँ हिरण्यमिति त्रीनादितोऽनुदर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वाथास्य व्रतचर्यामुपदिशेद्न यानमारोहेद्न वृक्षमधिरोहेद्न कूपमवरोहेद्न छत्रं धारयीत
नोपानहौ धारयीत
नासन्द्याँ शयीत
न स्त्रिया न शूद्रेण संभाषेत
यदि संभाषेत ब्राह्मणेन संभाषेत
न सायं बुञ्जीत
यदि सयं भुञ्जीतावज्वलितं बुञ्जीत
न स्नायादष्टम्यां पर्वणि चोपवसेत्तदहश्च स्नायाद्वाग्यतस्तिष्ठेदेताँ रात्रिमुपविशेत्संविशेद्वामेध्यलोहितशवापपात्रदर्शने ज्योतिषां संदर्शनम् अमेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाँ श्रेष्ठो दीक्षे मा मा हासीरित्यथ यद्येनमभिवर्षत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेति जपति १९

संवत्सरमेतद्व्रतं चरेत्
संवत्सरँ हि व्रतं नातीत्येतस्मिँस्त्वेवैतत्संवत्सरेऽधीयीत
यद्यु वा एतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेदथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा
पूर्ववदुपाकृत्य ग्रामात्प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वाथाव्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादिति द्वाभ्याम्प्रदक्षिणमग्निं परिषिच्य

व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन्वाचयति द्यौः समिदित्येतैः प्रतिमन्त्रम्
अथ देवता उपतिष्ठत आदित्य व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधि वायो व्रतपतेऽग्ने व्रतपते व्रतानां व्रतपते शुक्रियं व्रतमचारिषं तदशकं तन्मेऽराधीति
मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा तस्यानध्यायानुपदिशेद्नाधीयीतास्तमित आदित्ये
नानुदिते

न विप्रुषिते
न पर्यावृत्ते
नाभ्रच्छायायां न ग्राम्यस्य पशोरन्ते
नारण्यस्य
नापामन्ते
न हरितयवान्प्रेक्षमाणो न हर्म्याणि
न शरीराणि
न लोहितमुत्पतितं दृष्ट्वा
न माँ समशित्वा
न श्राद्धं भुक्त्वा
न केशश्मश्रु वापयित्वा
न केशान्प्रसार्य
न दतो धावते
नाङ्क्ते
नाभ्यङ्क्ते
नार्द्रः
नार्द्रेण वाससा
नार्द्र इत्यथ स्वाध्यायमधीयीतापरेणाग्निं दर्भेष्वासीनो दर्भान्धारयमाणः पराचीनँ स्वाध्यायमधीयीत
यत्र क्वचाशान्तिकृतं पश्येत्पुनरेव शान्तिं कृत्वाधीयीताधीत्य चोत्तमेन

प्रवर्ग्यायोपनिष्क्रम्य नाप्रविश्य ग्राममन्यदधीयीतान्यदधीयीत २०

दशमः प्रश्नः

उखाः संभरिष्यन्नुपकल्पयतेऽश्वं च गर्दभं च तयोरेव रशने मौञ्ज्यौ वा कुशमय्यौ वाभ्रिं च ब्राह्मणसंपन्नां मृदं च भावितां करणीयां वल्मीकवपां कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भँ हिरण्यमर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि वैश्यँ सप्तदशँ सूनामधिकरणीमुखाकृतं कुशलमित्यथामावास्येन वा हविषेष्ट्वा नक्षत्रे वाग्रेण शालाँ शम्यान्यासे गर्तं खानयति
तद्भावितां मृदमवलेपयति
समां बिलेन करोति
तदुपसादयति कृष्णाजिनं च पुष्करपर्णं च योक्त्रमुदकुम्भँ हिरण्यमित्यथ विषुवति स्फ्येनोद्धत्यावोक्ष्य वल्मीकवपां निदधाति
तां दक्षिणतो वैश्यो गोपायन्नास्तेऽथोत्तरँ शालाखण्डमग्रेण स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति
तं परिमण्डलं खरं करोत्यथैनँ सिकताभिराभ्राशिनं करोति
तं कुशतरुणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति
तस्योदीचीं द्वारं कुर्वन्ति
तदुपसादयत्यर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिन-लोमानि सूनामधिकरणीमुखाकृतं कुशलमित्यथैतावश्वगर्दभावग्रेण शालां पल्पूलितौ तिष्ठतोऽन्तर्वेद्यभ्रिं निदधात्युत्तरे वेद्यन्ते रशने परिस्तृणन्ति
दक्षिणत उपविशतो ब्रह्मा च यजमानश्चाथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये सावित्राणि जुहोत्यन्वारब्धे यजमाने १

युञ्जानः प्रथमं मन इति षड्चोऽनन्तर्हिता देव सवितरित्यृगेषेमं नो देव सवितरिति यजुरेतद्
ऋचा वा यजुषा वावस्यत्याहुतिं नवमीँ हुत्वोपतिष्ठति ऋचा स्तोमँ समर्धयेत्यथाभ्रिमादत्ते देवस्य त्वा सवितुः प्रसव इति चतुर्भिर्पर्यायैस् तामग्रेणाहवनीयं पर्याहृत्य दक्षिणत आसीनाय ब्रह्मणे प्रयच्छत्यथ

रशनामादत्त इमामगृभ्णन्रशनामृतस्येति
तयाश्वमभिदधाति प्रतूर्तं वाजिन्नाद्रवेत्येवमेव द्वितीयाँ रशनामादत्ते
तया गर्दभमभ्दधाति युञ्जाथाँ रासभं युवं योगेयोगे तवस्तरमिति द्वाभ्याम्
अश्वं पूर्वं नयन्ति
तमनुमन्त्रयते प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्यन्वञ्चं गर्दभं पूष्णा सयुजा सह
पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीति
प्रदक्षिणी वैश्यं कुर्वते
वैश्यः पृच्छति पुरुषाः किमच्छेथेत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम इतीतरे
प्रत्याहुरथ वल्मीकवपामुपतिष्ठतेऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम
इत्यथोपातियन्त्यन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु
सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततानेत्यथैतेनाश्वेन प्राचा
मृदमाक्रमयत्यागत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमिति द्वाभ्याम्
अथास्य पृष्ठं मर्मृज्यते द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षँ समुद्रस्ते
योनिः । विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यत इत्यत्र यं यजमानो द्वेष्टि
तमश्वस्याधस्पदं ध्यायत्यथैनं प्राञ्चमुत्क्रमयत्युत्क्रामोदक्रमीदिति द्वाभ्याम्
अथैतं पदाशयमद्भिरुपसृजति २

आपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः । तासाँ
स्थानादुज्जिहतामोषधयः सुपिप्पला इत्यथ स्रुचि चतुर्गृहीतं गृहीत्वा
दक्षिणेऽवान्तरशफे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति जिघर्म्यग्निं मनसा
घृतेनेत्
अपरं चतुर्गृहीतं गृहीत्वोत्तरेऽवान्तरशफे हिरण्यं निधाय
संपरिस्तीर्यैवाभिजुहोत्या त्वा जिघर्मि वचसा घृतेनेत्यपोद्धृत्य
हिरण्यमभ्रिमादाय पदं परिलिखति परि वाजपतिः कविः परि त्वाग्ने पुरं
वयं त्वमग्ने द्युभिरिति तिसृभिः
खनति देवस्य त्वा सवितुः प्रसवे ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमिति द्वाभ्याम्
अथोत्तरतः पार्श्वतः संभाराणां प्रचीनाग्राणि तृणानि सँस्तीर्य तेषूपरि
कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणात्यथापां पृष्ठमसीति
पुष्करपर्णमाहरति
तदुपरिष्टात्कृष्णाजिने निधायाथैने संमृशति शर्म च स्थः सं वसातामिति

द्वाभ्याम्
अपोद्धृत्य पुष्करपर्णमष्टाभिर्मृदँ हरति ३

पुरीष्योऽसि विश्वभरा इति
तासां चतस्रो गायत्र्यश्चतस्रस्त्रिष्टुभः
स पिण्डंपिण्डं वैवर्चा हरत्यपि वाष्टाभिरेकमेव पिण्डँ हरत्यथैतमवटं विश्वलोपेन पूरयित्वाद्भिरुपसृजति सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम्। देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यमित्यथोपरिष्टात्पुष्करपर्णं मृदि निधाय समुच्चित्य कृष्णाजिनस्यान्तान्योक्त्रेणोपनह्यति सुजातो ज्योतिषा सह शर्म वरूथमासदः सुवः । वासो अग्ने विश्वरूपँ संव्ययस्व विभावसो इत्यथैनमादायोपोत्तिष्ठत्युदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति द्वाभ्याम्

अथैनमाहरति स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु । चित्रः शिशुः परि तमाँ स्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गा इत्यथैनं गर्दभ आसादयति स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहन इत्यथैनमुपतिष्ठते शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभिशूशुचो मान्तरिक्षं मा वनस्पतीनित्यश्वं पूर्वं नयन्ति
तमनुमन्त्रयते प्रैतु वाजी कनिक्रददित्यन्वञ्चं गर्दभं नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥ रासभो वां कनिक्रदत्सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः ॥ वृषाग्निं वृषणं भरन्नपां गर्भँ समुद्रियम्। अग्न आयाहि वीतय इत्यथेमे समीक्षत ऋतँ सत्यमृतँ सत्यमिति प्रदक्षिणी वैश्यं कुर्वते
वैश्यः पृच्छति पुरुषाः किं भरथेत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इतीतरे प्रत्याहुरथैनं खर उपावहरन्त्योषधयः प्रतिगृह्णीताग्निमेतमोषधयः प्रतिमोदध्वमेनमिति द्वाभ्याम्
अद्भिरभ्युक्ष्याश्वगर्दभावुत्सृजन्त्यपो रशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जते ४

अथैनं विस्त्रँ सयति वि पाजसा पृथुना शोशुचान
इत्यतहिनमद्धिरुपसृजत्यापो हि ष्ठा मयोभुव इति तिसृभिरनुच्छन्दसम्

अथैनमर्मकपालैः शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति
सँसृजति मित्रः सँसृज्य पृथिवीमयद्दमाय त्वा सँसृजामीति द्वाभ्याम्
अथैनँ संभरति रुद्राः संभृत्य पृथिवीमिति
पिण्डं करोति मखस्य शिरोऽसीति
यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णात्यथ तृतीयं मृदोऽपच्छिद्य
त्रीन्पिण्डान्करोति
तेषामेकमुखाकृते प्रयच्छति सँसृष्टां वसुभी रुद्रैरित्यनुमन्त्रयते वसवस्त्वा
कृण्वन्तु गायत्रेण छन्दसेत्यतिशिष्टायै मृदोऽर्धं प्रयच्छति सिनीवाली
सुकपर्देत्यनुमन्त्रयते रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसेति
सर्वामन्ततो मृदं प्रयच्छत्युखां करोतु शक्त्येत्यनुमन्त्रयत आदित्यास्त्वा
कृण्वन्तु जागतेन छन्दसा विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन
छन्दसेत्यथ वै भवति
प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय
त्र्युद्धिं करोतीति
स यदेव त्रिर्हरति त्रिरनुलिम्पति तेन त्र्युद्धिस्
तां प्रादेशमात्रीमूर्ध्वामपरिमितां तिरश्चीं करोत्यथास्यै त्र्यङ्गुले वा चतुरङ्गुले
वा रास्नां पर्यस्यत्यदित्यै रास्नासीत्यथास्या अनुदिशमष्टावश्रीरुन्नयति
रानासन्धिषु चाश्रिसन्धिषु चाष्टौ स्तनान्करोति
नवाश्रिमभिचरतः कुर्यादिति ब्राह्मणम्
अस्तनां नवमीं करोत्यथास्यै बिलं गृह्णात्यदितिस्ते बिलं गृह्णातु पाङ्क्तेन
छन्दसेत्यथैनां खरे निदधाति कृत्वाय सा
महीमुखामित्यान्तादनुवाकस्यैवमेव द्वितीयां करोत्येवं तृतीयां तूष्णीं पञ्च
चर्षभाँ स्तिस्रश्च मण्डलेष्टकाः ५

अथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति
तासूपवातासूपकल्पयत एकविँशतिं वृष्णो अश्वस्य शकृत्पिण्डानभ्रिमग्निं
पचनमित्यथाश्वशकमादीप्य मुख्यामुखां धूपयति वसवस्त्वा धूपयन्तु

गायत्रेण छन्दसेति प्रतिपद्य वरुणस्त्वा धूपयत्वित्यातोऽन्तरतश्च बाह्यतश्च सुधूपितां कृत्वा निदधात्येवमेव द्वितीयां धूपयत्येवं तृतीयां तूष्णीं पञ्च चर्षभाँ स्तिस्रश्च मण्डलेष्टका अथोत्तरेण शालामुरुबिलमिवावटं खानयत्यदितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत्खनत्ववटेति
तं पचनेनावस्तीर्य तस्मिन्मुख्यामुखां प्रवृणक्ति देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूख इत्येवमेव द्वितीयां प्रवृणक्त्येवं तृतीयां तूष्णीं पञ्च चर्षभाँ स्तिस्रश्च मण्डलेष्टकास् ताः प्राचीर्वोदीचीर्वायातयत्यथैनाः पचनेनोपरिष्टात्संप्रच्छाद्य मृदावलिम्पति चतुरङ्गुलमनुदिशमादीपनायातिशिनष्टचथोपोषति ६

धिषणास्त्वेति पुरस्ताद्गनास्त्वेति दक्षिणतो वरूत्रयस्त्वेति पश्चाद्जनयस्त्वेत्युत्तरतोऽथैनाः परिददाति मित्रैतामुखां पचैषा मा भेद्येतां ते परिददाम्यभित्त्या इति
ता अह्ना वा रात्र्या वा पच्यन्ते
यदि प्रातरुपोषति सायमुपैति यदि सायं प्रातस्तासु पक्वासूपकल्पयते गोपयश्छागापयो धृष्टिमश्मसंदावँ सतँ संदँ शं खारीँ शिक्यं कृष्णाजिनमित्येतत्समादायाभ्यैत्यभीमां महिना दिवम्मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम्॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम्। द्युम्नं चित्रश्रवस्तममित्यथ धृष्टिमादाय मुख्याया उखाया अङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्येत्यथैनामुच्छ्रयत्युत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्यथैनामाशये प्रतिष्ठापयत्यपद्यमाना पृथिव्याशा दिश आपृणेत्यतैनाँ संदँ शेन परिगृह्य सतेऽवधाय छागापयसाच्छृणत्ति ७

वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसेति प्रतिपद्य विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसेत्यातोऽन्तरतश्च बाह्यतश्च स्वाच्छृणां कृत्वा गोपयसाभिविष्यन्दयत्येवमेव द्वितीयामाच्छृणत्त्येवं तृतीयां तूष्णीं पञ्च चर्षभाँ स्तिस्रश्च मण्डलेष्टका अथ यदि विधुर्वा प्रदरो वा जायतेऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युद्द्योल्मुकेनाभितपति

सँहैव रोहति
यद्यु वै सर्वश एव भिद्यत एतान्येव कपालान्यवाञ्चनं पिष्ट्वा यैषां
मृत्प्रायश्चित्ताय परिशेते तया सँसृज्य कृत्वा पक्त्वाच्छृद्य निदधाति

तासां यदा श्वसथ उपरमत्यथैनाः खायाँ समवधाय
कृष्णाजिनेनोपरिष्टात्संप्रच्छाद्योत्तरे शालाखण्डे शिक्य आसजति
ता आ कालात्परिशेरे ८

अथैतस्मिन्नेव पूर्वपक्षे वायव्येन पशुना यजते
तस्य तदुपक्लृप्तं भवति यत्पशुना यक्ष्यमाणस्य संग्रामे हतयोरश्वस्य च
वैश्यस्य च शिरसी
दीव्यन्त ऋषभं पचन्ते
वृष्णिं च बस्तं चाहरन्त्येतत्सर्पशिरोऽथास्यैषा पूर्वेद्युरेव पाशुबन्धिकी
वेदिर्विमिता भवति
तां परिस्तीर्य स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं
चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्यावृता चात्वालं
परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्याग्नेरावृताग्निं
प्रणयत्यग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँस्तब्ध्वा
संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवँ स्वधितिँ स्रुचश्च संमृड्ढि
तूष्णीं पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः
पशुशीर्षाणि विद्धीत्यध्वर्युरेव प्रसिद्धं पाशुबन्धिकं कर्म चेष्टत्यथ
प्रतिप्रस्थाता याचत्येकविँशतिं माषान्पर्णशाखां मृत्पिण्डमुदपात्रमुत्कुषीँ
सप्तधा वितृण्णां वल्मीकवपाँ संदँ शमित्
एतत्समादाय पशुषीर्षाण्यभ्यैति
दक्षिणत एतत्पुरुषशिर उपशेतेऽग्रेणेतराण्यथ प्राचीनावीतं कृत्वा
सप्तभिर्माषैः पुरुषशिरः परिकीर्य त्रिरपसलैः पर्णशाखया परिकर्षति ९

अहरहर्नयमानो गामश्वं पुरुषं जगत्। वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यम

इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिन इत्यपरैः सप्तभिः परिकीर्यैव परिकर्षति ते राजन्निह विविच्यन्तेऽथा यन्ति त्वामुप । देवाँश्च ये नमस्यन्ति ब्राह्मणाँश्चापचित्यतीत्यथादत्ते दक्षिणेन वल्मीकवपाँ सव्येन संदँ शेन पुरुषशिरः
प्राणैः प्राणान्संनिधायाशये वल्मीकवपां
निदधात्यथैतत्पुरुषशिरोऽभ्युक्ष्योत्कुष्य प्रक्षाल्य
मृदाभिलिम्पत्यनभिलिम्पन्प्राणान्
अथेतराणि त्रयेणैव निस्तिष्ठन्त्यभ्युत्कुष्यैव प्रक्षाल्य
मृदाभिलिम्पन्त्यनभिलिम्पन्तः प्राणान्

अथैनान्यद्भिः प्रोक्षणतो निदधाति
तान्या कालात्परिशेरे १०

अथ पशोः सामिधेनीकल्पः
प्र वो वाजा अभिद्यव इत्येकादश
समास्त्वाग्न ऋतवो वर्धयन्त्विति दश
तासां ज्योतिष्मतीमपोद्धृत्य नव धाय्यालोके दधात्यथ पृथुपाजवत्यौ धाय्ये दधात्यथ युक्ष्वा हि देवहूतमानित्येतां दधाति
ताः पराचीरनूच्यमानाश्चतुर्विंशतिः संपद्यन्ते
ज्योतिष्मतीं त्वेवोत्तमामन्वाहाथ हिरण्यगर्भः समवर्तताग्र
इत्याघारमाघारयत्यथात आप्रीणामेव मीमाँ सोर्ध्वा अस्य समिधो भवन्तीति द्वादश
तासां तानूनपातीमपोद्धृत्य नाराशँ सीं वसिष्ठानां दधात्यपोद्धृत्य नाराशँ सीं तानूनपातीमन्येषां गोत्राणाम्

अथ पीवोऽन्नान्नायेऽनु यमिति वपायै यः प्राणतो य आत्मदा इति पशुपुरोडाशस्य प्र वायुमच्छा नो नियुद्भिरिति हविष इति नु यदि मिश्रो भवति
यद्यु वै सर्ववायव्य एव भवति पीवोऽन्नान्नायेऽनु यमित्येतासां द्वे वपायै द्वे

पशुपुरोडाशस्य द्वे हविषोऽथ यदि सर्वप्राजापत्य एव भवति यः प्राणतो य आत्मदा इत्येतासां द्वे वपायै द्वे पशुपुरोडाशस्य द्वे हविषः सर्वसँस्थां पशोः कुर्वन्त्यथैतानि पशुशीर्षाण्यभिपर्यग्निकृतान्युत्तरे शालाखण्डे शिक्येष्वासजत्यथैतत्सर्पशिर स्पन्द्यया विग्रथ्य शिक्यपाशे प्रग्रथ्नाति
तान्या कालात्परिशेरे ११

अथापरपक्षः प्रतिधीयते
स उपकल्पयत इष्टकाश्चाग्निदक्षिणाश्च यदि रात्रिभृतं चेष्यमाणो भवति यद्यु वै संवत्सरभृतं दीर्घोऽध्वाजिरिति नाद्रियेत
स उपकल्पयत औदुम्बरीमुख्यासन्दीं तस्याः प्रादेशमात्राः पादा भवन्त्यरत्निमात्राणि शीर्षाण्यनूच्यानि सा मौञ्जीभी रज्जुभिर्व्यूता भवत्येकसराभिः फलकाभिस्तीर्णा मृदावलिप्ता षडुद्यामं द्वादशोद्यामं वा मौञ्जँ शिक्यं मुञ्जकुलायं क्रमुकमाज्यसंयुतं वैकङ्कतीं च शमीमयीं च समिधौ सप्तौदुम्बरीः समिधस्तिस्रो नानावृक्ष्या एकविँशतिनिर्बाधँ रुक्मं प्रज्ञाता आग्निष्टोमिकाः संभारा जुष्टे देवयजने शाला कारिता भवत्यथिनं तीर्थादानीय पवयित्वा त्रिहविषमग्निदीक्षणीयामिष्टिं निर्वपत्याग्नावैष्णवमेकादशकपालमदित्यै घृते चरुं वैश्वानरं द्वादशकपालमिति
तस्यै तावन्त्युत्सीदन्ति यावन्ति दीक्षणीयाययथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघातमग्निदीक्षाहुतीर्जुहोति १२

आकूतिमग्निं प्रयुजँ स्वाहा मनो मेधामग्निं प्रयुजँ स्वाहा चित्तं विज्ञातमग्निं प्रयुजँ स्वाहा वाचो विधृतिमग्निं प्रयुजँ स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहेत्यथ स्रुचि चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाँ स्रुचमौद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेत्यत्रैतत्पूर्णपात्रमन्तर्वेदि निनयत्यथाग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छत्यथ मुख्यामुखां याचति

तस्याँ शकृत्पिराडान्पूतितृणानीति संप्रकीर्याज्यस्त्रुवं
प्रत्यस्याहवनीयस्यान्तमेष्वङ्गारेषु प्रवृणक्ति मा सु भित्था दृँहस्वेति द्वाभ्याम्
अथिनां परिददाति मित्रैतामुखां तपैषा मा भेद्येतां ते परिददाम्यभित्त्या इत्यथ
वै भवति
यदि भिद्येत तैरेव कपालैः सँसृजेदिति
सा यदि भिद्यत एतान्येव कपालान्यवाञ्चनं पिष्ट्वा यैषा मृत्प्रायश्चित्ताय
परिशेते तया सँसृज्य कृत्वा पक्त्वाच्छृद्य निदधात्यथान्यां प्रवृणक्त्यथ वै
भवत्यम्बरीषादन्नकामस्यावदध्यादित्यथ वै भवति
यं कामयेत यजमानं भ्रातृव्यमस्मै
जनयेयमित्यन्यतस्तस्याहृत्यावदध्यादित्यथ वै भवति
यो गतश्रीः स्यान्मथित्वा तस्यावदध्यादित्यथ वै भवति
यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य स्यादिति
स य एवैष उखायै संतापाज्जायते तस्मिन्मुञ्जकुलायमवदधाति या ते अग्न
ओजस्विनी तनूरोषधीषु प्रविष्टा तां त एतेनावयजे स्वाहेत्यथ
क्रुमुकमाज्यसंयुतमवदधाति द्रवन्नः सर्पिरासुतिरित्यथ वैकङ्कतीं च
शमीमयीं च समिधावादधाति परस्या अधि संवत इति वैकङ्कतीं परमस्याः
परावत इति शमीमयीम्
अथ सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुपतिष्ठतेऽथ पञ्चौदुम्बरीः
समिध आदधाति १३

यदग्ने यानि कानि च यदत्त्युपजिह्विका रात्रिँ रात्रिमप्रयावं नाभा पृथिव्या
याः सेना अभीत्वरीरित्यथैनं पञ्चर्चेन रात्तोघ्नेनोपतिष्ठते कृणुष्व पाजः प्रसितिं
न पृथ्वीमित्यथ तिस्रो नानावृक्ष्याः समिधोऽभ्यज्यादधाति दँ ष्ट्राभ्यां
मलिम्लूनित्याश्वत्थीं ये जनेषु मलिम्लव इति वैकङ्कतीं यो
अस्मभ्यमरातीयादिति शमीमयीम्
अथ सँशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे औदुम्बरी
वाचयन्नेवाभ्यादधात्यत्र कृष्णाजिने यजमानं वाचयति
मुष्टी चैव न करोति वाचं च न यच्छत्यथैतामासन्दीं व्यस्तशिक्यपाशां
जघनेनाहवनीयं निदधाति
तस्यामिराड्वाभ्यां परिगृह्योख्यमासादयति १४

मातेव पुत्रं पृथिवी पुरीष्यमग्निँ स्वे योनौ बिभर्त्युखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्त्वित्यथासीन उत्तरनिर्बाधँ रुक्मं प्रतिमुञ्चते दृशानो रुक्म इत्यथ शिक्यपाशं प्रतिमुञ्चते विश्वा रूपानि प्रतिमुञ्चते कविर्नक्तोषासेति द्वाभ्यां तूष्णीं कृष्णाजिनमुत्तरम्
अथैनमवेक्षते सुपर्णोऽसि गरुत्मान्त्रिवृत्ते शिरो गायत्रं चक्षु स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाँस्यङ्गानि धिष्णियाः शफा यजूँषि नामेत्यथैनमुद्गृह्णाति सुपर्णोऽसि गरुत्मान्दिवं गच्छ सुवः पतेति
पुरस्तादेवास्यैते दीर्घाः शिक्यपाशाः कारिता भवन्ति

सोऽत्र वैव सति क्रमतेऽपि वैनमुपोद्यच्छते   १५

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आ रोह पृथिवीमनुविक्रमस्व निर्भक्तः स यं द्विष्म इति चतुर्भिरनुच्छन्दसं तृतीये चतुर्थमनुवर्तयति न चतुर्थाय प्रक्रामति
नाहवनीयमुपात्येत्यथाक्रन्ददित्येतामन्वाहाथ दक्षिणमँ समभि पर्यावर्ततेऽग्नेऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति चतसृभिरथोदङ्पर्यावृत्य कृष्णाजिनमुन्मुच्य शिक्यपाशामुन्मुञ्चत उदुत्तमं वरुण पाशमस्मदित्यथैनमाहरत्या त्वाहार्षमग्ने बृहन्नुषसामूर्ध्वो अस्थादिति द्वाभ्याम्
अत्र यं कामयेत राजन्यँ राष्ट्रँ स्यादिति तं मनसा ध्यायेद्राष्ट्रमेव भवतीति ब्राह्मणम्
अथिनं यथाहृतं प्रतिपर्याहृत्यान्तर्वेद्यासादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहँ साभिरत्र मुष्टी च करोति वाचं च यच्छत्यथास्मै व्रतं प्रदास्यन्नन्नपतीयाँ समिधमभ्यादधाति वा जपति वान्नपतेऽन्नस्य नो देहीत्यथोख्यमुपसमिन्द्धे येन देवा ज्योतिषोर्ध्वा उदायन्निति स यावत्कृत्वोऽस्मै व्रतं प्रदास्यन्भवत्येवमेवान्नपतीयाँ समिधमभ्यादधाति वा जपति वैवमुख्यमुपसमिन्द्धेऽथ प्रातरुदित आदित्ये विसृष्टायां वाचि वात्सप्रेणोपतिष्ठते दिवस्परि प्रथमं जज्ञे अग्निरित्येतेनैकादशर्चेन

स एवमेव पूर्वेद्युः प्रक्रामत्युत्तरेद्युरुपतिष्ठतेऽथास्योपवसथीयेऽहन्वात्सप्रँ संपद्यते १६

अथातः प्रयाणस्यैव मीमाँसा
दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते सँसृजन्ति व्रते संबध्नन्ति व्रतदुघयोर्वत्सवादधति यदाधेयं भवति नीडे गार्हपत्यं प्रौग आहवनीयमित्यथोख्यमुद्यच्छत उदु त्वा विश्वे देवा इत्यथैनमनसः प्रौग आसादयति सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहँ साभिरथैतानासन्दीपादान्फलकेषु यथासुष्ठु विनिबध्नन्ति मध्यमे वँशे शिक्यपाशं प्रग्रथ्नन्त्यपि वारणयोरग्नीन्समारोह्य प्रयाति भद्रादभि श्रेयः प्रेहि प्रेदग्ने ज्योतिष्मान्याहीति द्वाभ्याम्
अथ यद्यक्ष उत्सर्जत्यक्रन्ददित्येतामन्वाहाथावसिते घृतानुषिक्ताँ समिधमभ्यादधाति समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन स्वाहेति गायत्र्या ब्राह्मणस्य प्रप्रायमग्निर्भरतस्य शृणव इति त्रिष्टुभा राजन्यस्य
स यावत्कृत्वः प्रयास्यन्भवत्येवमेवैतत्सर्वं करोति १७

अथातो भस्मन एवातिवृद्धस्य मीमाँसा
भस्म चेदतिवर्धते स उपकल्पयते सतमयोदर्वीँ संदँशमित्येतत्समादाय यत्रापस्तद्यन्ति सोख्या
अथैतमग्निँ संदँशेन परिगृह्य सतेऽवधायायोदर्व्याप्सु भस्म प्रवेशयत्यापो देवीः प्रतिगृह्णीत भस्मैतदप्स्वग्ने सधिष्टव गर्भो अस्योषधीनामिति तिसृभिरनुच्छन्दसम्
अथैनं ज्योतिष्मतीभ्यां प्रत्यवदधाति प्रसद्य भस्मना योनिम्पुनरासद्य सदन-मपश्चेति द्वाभ्याम्
अथ पुनरूर्जा सह रय्येति द्वाभ्यां पुनरुदैत्यथोख्यमुपसमिन्द्धे पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्यथैनं यथाहृतं प्रतिपर्याहृत्य यजमानायतने तिष्ठन्नुपतिष्ठते बोधा स बोधीत्यान्तादनुवाकस्य
स यावत्कृत्वो भस्मातिवर्धत एवमेवैतत्सर्वं करोत्यथातः कालायैवोपशेते

संभारेभ्यः   १८

अथातः क्रयस्यैवोपवसथः पर्याप्लवते
स उपकल्पयते पञ्चशतमिष्टका अपरिमिता अपस्या नैर्ऋतीः
कृष्णास्तिस्रस्तुषपक्वा भस्म पुरीषमूषान्सिकता
इत्यथोपवसथीयेऽहन्देवयजनमध्यवस्यत्येदमगन्मापेतेति द्वाभ्याम्
अथ महावेदिं विमिमीत एतानेव ज्यायसः प्रक्रमान्प्रक्रम्याक्ष्णया मानेन
प्रमाय समन्तँ स्पन्द्यया परितनोति
पृष्ठ्यामातनोत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते पुरुषमात्रेण
वेणुना समपक्षपुच्छम्
अरत्निना पक्षौ द्राघीयाँसौ भवतः
षड्विधं वा सप्तविधं वा द्वादशविधं वा यावद्विधं वा चेष्यमाणो
भवत्यथैनमक्ष्णया मानेन प्रमाय समन्तँ स्पन्द्यया परितनोत्य्
अनुस्पन्द्यं लेखां लिखत्यपोद्धृत्य स्पन्द्यां कर्षूः खानयन्त्युच्छ्रयन्त्यपस्या
दक्षिणतश्च पश्चाच्च वर्षीयसीः कुर्वन्त्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रात्रिम्
अथाध्वर्युरपररात्र आद्रुत्य सँशास्ति त्रिस्तनव्रतं दोहयतेत्यथैतमग्निँ सते
समुप्य दक्षिणतो ज्वलयन्त आसतेऽथैतदग्न्यायतनँ शकृत्पिण्डेन परि-
लेपयति
तस्मिँश्चतस्रः प्राचीरिष्टका आयातयति द्वे पुरस्तात्समीची द्वे पश्चात्समीची
अथैनं प्रदक्षिणं त्रयोदशभिरिष्टकाभिः परिचिनोत्यन्विष्टकं लेखां
लिखत्यपोद्धृत्येष्टकाः कर्षूः खानयन्त्युच्छ्रयन्त्यपस्या दक्षिणतश्च पश्चाच्च
वर्षीयसीः कुर्वन्ति   १९

अथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया
देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यत्र संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः
पुरीषमसीति पुरीषं संज्ञानमसि कामधरणमित्यूषान्मयि ते कामधरणं
भूयादिति सिकता अथैनान्संप्रयौति सं या वः प्रियास्तनुवः सं प्रिया

हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो
ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः ।
कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता इत्यथोर्ध्वचित उपदधाति चित
स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्य्
अथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य सं ते पयाँसीति त्रिष्टुभा
राजन्यस्य
यथासुष्ठु यथाशर्करमनुव्यूहति
तस्मिँश्चतस्रः प्राचीर्याजुषीरुपदधाति २०

अयँ सो अग्निरग्ने दिवो अर्णमच्छा जिगास्यग्ने यत्ते दिवि वर्चः
पृथिव्याम्पुरीष्यासो अग्नय इति
द्वे पुरस्तात्समीची इडामग्न इति दक्षिणामयं ते योनिर्ऋत्विय इत्युत्तरां द्वे
पश्चात्समीची चिदसीति दक्षिणाम्परिचिदसीत्युत्तराम्
अथैनं प्रदक्षिणं त्रयोदशभिर्लोकं पृणाभिः परिचिनोति लोकं पृण छिद्रं
पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति
तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति
ता अस्य सूददोहसः सोमँ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा
रोचने दिव इत्यथावद्रुत्य कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो
दिवीति
तयादेवतं कृत्वा सूददोहसं करोतीति न्वा इयं प्रथमा चितिर्निष्ठीयत एवमेव
द्वितीया निष्ठीयत एवं तृतीयैवं चतुर्थ्येवं पञ्चमी
तान्यदि चेष्यत आदित्योऽभ्युदियाद्वाचंयमोऽध्वर्युं यजमानोऽन्वारभत
उख्यमेवाध्वर्युरादत्ते प्रतिसमेधनीयं प्रतिप्रस्थाता
तौ पुरस्तात्प्रत्यञ्चौ समितमिति चतसृभिः संनिवपतोऽथ शिक्यादुखां
निरूहति २१

मातेव पुत्रं पृथिवी पुरीष्यमग्निँ स्वे योनावभारुखा । तां विश्वैर्देवैर्ऋतुभिः
संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चत्विति
तां नावेक्षेतेत्याहुः शुग्वत्येव हि भवतीति
तस्यामन्यत्रावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं

वाथैनाँ सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्योत्तरे शालाखण्डे निदधात्येवमेव द्वितीयां पूरयत्येवं तृतीयां ता श्रा कालात्परिशेरेऽथ वैश्वानर्या शिक्यमादत्ते यदस्य पारे रजसः शुक्रं ज्योतिरजायत । तन्नः पर्षदति द्विष इत्यथ याचति नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा श्रासन्दीँ रुक्मस्य प्रबन्धनमुदपात्रमित्येतत्समादाय दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणँ स्पष्टं भवति प्रदरो वा
तदेतत्पराचीनपाशँ शिक्यं न्यस्यत्यग्ने वैश्वानर स्वाहेति
शिक्यपाशमनु पराचीर्नैर्ऋतीरुपदधाति नमः सु ते निर्ऋते विश्वरूपे यत्ते देवी निर्ऋतिराबबन्ध यस्यास्ते श्रस्याः क्रूर श्रासञ्जुहोमीत्युपास्यत्यासन्दीँ रुक्मस्य प्रबन्धनम्
श्रथोपतिष्ठतेऽसुन्वन्तमयजमानमिच्छ देवीमहं निर्ऋतिं वन्दमान इति द्वाभ्याम्
श्रथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा श्रायन्ति

हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य गार्हपत्यमुपतिष्ठन्ते निवेशनः संगमनो वसूनामित्याहवनीयमु हैक उपतिष्ठन्तेऽयमितोऽधि गार्हपत्यो भविष्यतीति
२२

श्रथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्य प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं प्रयच्छतेत्याह्वयति सुब्रह्मण्यः सुब्रह्मण्यां त्रिस्तनव्रतं प्रयच्छति स पुच्छादेवाग्रे चतुरः प्रतीचः प्रक्रमान्प्रक्रामति दक्षिणा पञ्चमं तत्स्फ्यं निदधाति
स उपरवाणां कालोऽथ महावेद्या उत्तरादँ सीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं त्रयोदशं तदाग्नीध्र उपसीदति
स उत्करस्य कालोऽथोपरवाणां कालात्स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धतादाग्नीध्रस्त्रिर्हरति

यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन्संप्रैषमाह वेदिकारा वेदिं कल्पयतेति यथासंप्रैषं ते कुर्वन्त्यथ कार्ष्णाजिनीरुपानह उपमुञ्चन्ते चिते त्वेत्यध्वर्युराचिते त्वेति प्रतिप्रस्थाता मनश्चिते त्वेति ब्रह्मा तपश्चिते त्वेति यजमानश्चिते त्वा चिते त्वेत्येव वा सर्वेऽपि वा तूष्णीमेवाथ याचति धनुर्बाणवच्चतुरोऽश्मन ऐन्द्रीमिष्टकां विभक्तिमुदपात्रं दर्भस्तम्बं दूर्वामाज्यस्थालीँ सस्रुवामित्येतत्समादायोत्तरे श्रोणयन्ते सँसादयन्त्य् अथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथादत्ते धनुर्बाणवच्चतुरोऽश्मन इत्येतत्समादाय जघनेन दक्षिणेनाग्निं परीत्याग्रेण यूपावटीयँ शङ्कुं तिष्ठन्धनुरधिज्यं कृत्वायत्यान्तःशर्करमिषुं निहन्ति २३

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पश इत्यावृह्याश्मानमुपदधाति यो नः पुरस्तादघायुरभिदासत्येतँ सोऽश्मानमृच्छत्वित्यथ दक्षिणस्य पक्षस्य दक्षिणे पक्षोपप्लव आयत्यान्तःशर्करमिषुं निहन्त्यावृह्याश्मानमुपदधाति यो नो दक्षिणत इत्यथ पुच्छस्यापरे पुच्छोपप्लव आयत्यान्तःशर्करमिषुं निहन्त्यावृह्याश्मानमुपदधाति यो नः पश्चादित्यथोत्तरस्य पक्षस्योत्तरे पक्षोपप्लव आयत्यान्तःशर्करमिषुं निहन्त्यावृह्यश्मानमुपदधाति यो न उत्तरत इति

दिक्षूपदधातीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोत्यथैतामैन्द्रीमिष्टकामाक्रमणं प्रत्युपदधाति स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान्वृषभो यो मतीनाम्। यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राँ भितृन्धि वाजानिति
तयादेवतं कृत्वा सूददोहसं करोत्यथ दक्षिणतो विभक्तिमुपदधात्यग्न आयाहि वीतय इति
तयादेवतं कृत्वा सूददोहसं करोत्यथाधिद्रुत्य स्वयमातृणणीयँ शङ्कुमुद्वृह्योदपात्रमुपनिनीय दर्भस्तम्बमुपदधाति वाक्त्वा समुद्र उपदधात्विति वा तूष्णीं वाथैनँ स्रुवाहुतिभिरभिजुहोति

सजूरब्दोऽयावभिरिति पञ्चभिरथ दूर्वामुपदधात्यायने ते परायणे दूर्वा रोहन्तु पुष्पिणीः । उत्सो वा तत्र जायातै ह्रदो वा पुण्डरीकवानिति
तयादेवतं कृत्वा सूददोहसौ करोत्यथास्यैतत्पुरस्तादेवौदुम्बरं युगलाङ्गलं कारितं भवति २४

षड्गवं वा द्वादशगवं वा
तस्य वरत्राः संमृशति सं वरत्रा दधातन निष्कृताहावमवटमिति द्वाभ्यां
युनक्ति सीरा युञ्जन्ति कवयो युगा युनक्त सीरेति द्वाभ्यां
कृषति लाङ्गलं पवीरवं शुनं नः फाला इति द्वाभ्यां सीतां प्रत्यवेक्षते कामं कामदुघे धुक्ष्व घृतेन सीतेति द्वाभ्यां स पुच्छादेवाग्रे तिस्रः प्राचीः सीताः कृषत्युत्तरायै श्रोणेर्दक्षिणमँ समभि तिस्रो दक्षिणायै श्रोणेरुत्तरमँ समभि तिस्रो दक्षिणात्पक्षादुत्तरं पक्षमभि तिस्रोऽथैतान्विमुच्य
प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीच उत्सृजति
त एतेऽध्वर्योर्भवन्ति यदि दक्षिणावता यजते
यद्यु वै सत्रियोऽग्निर्यथागवं व्युदचन्ति
यत्रैवानड्वागस्तद्युगलाङ्गलम्
अथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति
स पुच्छादेवाग्रे तिस्रः प्राचीः सीता वपति या जाता ओषधय इति तिसृभिरनुच्छन्दसम्
उत्तरायै श्रोणेर्दक्षिणमँ समभि तिसृभिर्दक्षिणायै श्रोणेरुत्तरमँ समभि
तिसृभिर्दक्षिणात्पक्षादुत्तरं पक्षमभि पञ्चभिश्चतुर्दशभिर्वपतीति ब्राह्मणम्
अथ दिग्भ्यो लोष्टान्समस्यति
सोऽत एव प्राङ्द्रुत्वा बहिःशर्कराल्लोष्टमादत्ते
तमन्तःशर्करं न्यस्यति २५

मा नो हिँसीज्जनिता यः पृथिव्या इत्यथ दक्षिणं पक्षमनुद्रुत्य
बहिःशर्कराल्लोष्टमादत्ते
तमन्तःशर्करं न्यस्यत्यभ्यावर्तस्व पृथिवीत्यथ पुच्छमनुद्रुत्य
बहिःशर्कराल्लोष्टमादत्ते
तमन्तःशर्करं न्यस्यत्यग्ने यत्ते शुक्रं यच्चन्द्रमित्यथोत्तरं पक्षमनुद्रुत्य

बहिःशर्कराद्द्वौ लोष्टावादत्त इषमूर्जमहमित आदद इति
तयोरन्यतरमन्तःशर्करं न्यस्यत्या नो गोषु विशत्वौषधीष्विति
तां दिशमितरं निरस्यति यस्यामस्य दिशि द्वेष्यो भवति जहामि सेदि-
मनिराममीवामित्याददान एवैतां दिशमभि संपादयेदित्येतदेकं यजुषा
यजुर्विपरिहरेदित्येतदपरम्
अथ महावेद्या उत्तरादँसीयाच्छङ्कोर्वेद्यन्तेन त्रीन्प्रतीचः प्रक्रमान्प्रक्रामत्युदञ्चं
चतुर्थं तच्चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं
निवपत्युत्तरनाभिमुत्साद्य सिकता निवपत्यग्ने तव श्रवो वय इति
षड्भिरनुच्छन्दसम्
अथोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया
देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य
सं ते पयाँसीति त्रिष्टुभा राजन्यस्य
यथासुष्ठु यथाशर्करमनुव्यूहति   २६

अथैतां महाचितिँसँसादयन्त्यग्रेण शालामुच्छ्राय्यां वा चर्मणि वा
द्वाविँशतिं च दर्भपुञ्जीलानि पयःप्रोक्षं चाज्यप्रोक्षं चाश्वं चौत्तरवेदिकाँश्च
संभारान्बार्हस्पत्यत्रयोदशाश्च कुम्भेष्टकास्तावत एव हिरण्यशल्कान्सतं
चोदकुम्भं च पुष्करपर्णं च रुक्मं च हिरण्मयं च पुरुषं स्रुचौ च सर्पशिरश्च
सर्वं च स्वयमातृण्णानिकोतं दश च स्कन्ध्या अवकाश्च या उ चान्या
उपधास्यन्भवति ता दधि च मधुमिश्रं कूर्मं चौदुम्बरं चोलूखलमुसलँ
सर्वौषधं चोखाश्च पशुशीर्षाणि चेति

द्वाविँशतिं दर्भपुञ्जीलानि पयःप्रोक्षेऽवधाय तैः प्रोक्षत्यग्नीन्वोऽग्निभ्यो
जुष्टान्प्रोक्षामीति वा तूष्णीं वाग्निनाग्निः समिध्यत इत्याज्यप्रोक्षेणाथ
संप्रैषमाहाग्निभ्यः प्रणीयमानेभ्योऽनुब्रूहीति
यदि होता न कामयते यजमान एव पुरीष्यासो अग्नय इत्येतामेकां
त्रिरन्वाहाथाग्निप्रथमाः प्रतिपद्यन्तेऽथैतेनाश्वेन प्राचाधिद्रवति   २७

अभ्यस्थाद्विश्वाः पृतना अरातीरित्यथ दक्षिणमँसमभ्यवक्रामन्तमनुमन्त्रयते
यदक्रन्दः प्रथमं जायमान इत्युत्तरे श्रोण्यन्ते सँसादयन्त्य्

अथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथ पुच्छसन्धौ चात्मसन्धौ च सतं निदधात्यथोदकुम्भं पर्यस्यत्यादत्ते
दक्षिणेन कुम्भँ सव्येन कुम्भीँ सतात्पूरयित्वा हिरण्यशल्कौ प्रत्यस्य या एता
दक्षिणादँ सात्स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति
२८

हिरण्यवर्णाः शुचयः पावका यासाँ राजा वरुणो याति मध्य इति द्वाभ्याम्
एवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरायै श्रोणेः
स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति तृतीयया च
चतुर्थ्या चैवमेव पूरयित्वैवं प्रत्यस्य या एता दक्षिणायै श्रोणेः
स्वयमातृण्णामभ्याद्रवन्ति तासु विषुवत्यनुसीतमुपदधाति पञ्चम्या च षष्ठ्या
चैवमेव पूरयित्वैवं प्रत्यस्य या एता उत्तरादँ सात्स्वयमातृण्णामभ्याद्रवन्ति
तासु विषुवत्यनुसीतमुपदधाति सप्तम्या चाष्टम्या चैवमेव पूरयित्वैवं
प्रत्यस्य या एता दक्षिणात्पक्षात्स्वयमातृण्णामभ्याद्रवन्ति तासु
विषुवत्यनुसीतमुपदधाति नवम्या च दशम्या चैवमेव पूरयित्वैवं प्रत्यस्य
या एता उत्तरात्पक्षात्स्वयमातृण्णामभ्याद्रवन्ति तासु
विषुवत्यनुसीतमुपदधात्येकादश्या च द्वादश्या च

तासां बार्हस्पत्यं मध्य उपदधाति दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या
संभव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्यनुसीतमुपदधातीति ब्राह्मणं
तयादेवतं कृत्वा सूददोहसः करोति २९

अथोत्तरवेदेरावृतोत्तरवेदिमलङ्करोत्यथोत्तरवेद्यामपां पृष्ठमसीति
पुष्करपर्णमुपदधाति
तयादेवतं कृत्वा सूददोहसं करोत्यथोत्तरवेद्यामेवोत्तरनिर्बाधँ रुक्ममुपदधाति
ब्रह्म जज्ञानमित्यथैनमक्ष्णया पञ्चगृहीतेन व्याघारयति कृणुष्व पाजः प्रसितिं
न पृथ्वीमित्यथ दक्षिणतः प्राञ्चँ हिरण्मयं पुरुषमुपदधाति हिरण्यगर्भः
समवर्तताग्र इत्यथैनमभिमृशति द्रप्सश्चस्कन्देति

तयादेवतं कृत्वा सूददोहसौ करोत्यथोत्तरतः प्रक्रमवेलायाँ
स्रुचावुपदधात्याज्यस्यपूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीं दक्षिणां
कार्ष्मर्यमयीमुत्तरामौदुम्बरीमियमसीति कार्ष्मर्यमयीमसावसीत्यौदुम्बरीं
मनसैव
तयादेवतं कृत्वा सूददोहसौ करोत्यथ दक्षिणे प्रललाटे सर्पशिर उपदधाति
नमो अस्तु सर्पेभ्य इति तिसृभिरनुच्छन्दसम्
अपि वा यतौच्चारं जनपदस्य जन्यं भयं मन्यते
तयादेवतं कृत्वा सूददोहसं करोति ३०

अथ स्वयमातृण्णां यजुषा करोति ध्रुवासि धरुणास्तृता विश्वकर्मणा सुकृता
। मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृँहेत्य्
अथैनामश्वमवघ्राप्याविदुषा ब्राह्मणेन सहाधिद्रुत्योपदधाति यथैतस्य पुरुषस्य
प्राणैः प्राणाः संनिधीयेरन्नापिधीयेरन्भूः प्रजापतिस्त्वा
सादयत्वित्यनुद्रुत्याग्निस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया
देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यनु प्राण्यात्प्रथमाँ
स्वयमातृण्णामुपधायेत्यनुप्राणित्यथैष ब्राह्मणो वरं ददात्यथ स्रुचि
चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा
घृतेनेत्यङ्गुष्ठाभ्यामन्वारभ्यान्वारोहं वाचयति पृथिवीमाक्रमिषं प्राणो मा मा
हासीदित्यपरे बिले हिरण्येष्टकामुपदधाति तेजोऽसि तेजो मे यच्छ पृथिवीं
यच्छ पृथिव्यै मा पाहीति
तां जघनेन प्रक्रमवेलायां मण्डलेष्टकामुपदधाति पृथिव्युदपुरमन्नेन विष्टेति
दक्षिणतो रेतःसिचमुपदधाति पृथिवी रेतःसिक्सा मे रेतो दधातु सा मे रेतः
प्रजनयत्विति
तयादेवतं कृत्वा सूददोहसः करोति ३१

अथैता दश स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये द्वे द्वियजुषी विराजं च
विश्वज्योतिषं च सयुजं चाषाढां च द्वे संयान्यवृतव्ये उपदधाति मधुश्च
माधवश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीत्यथ द्वियजुषी उपदधाति
काण्डात्काण्डात्प्ररोहन्ती या शतेन प्रतनोषीति द्वाभ्यां दूर्वेष्टकाम्
अथ हिरण्यमूर्ध्नीमुपदधाति यास्ते अग्ने सूर्ये रुचो या वो देवाः सूर्ये रुच इति

विराजं च विश्वज्योतिषं च विराट्ज्योतिरधारयद्बृहस्पतिस्त्वा
सादयत्वित्युत्राम्
अथ सयुजमुपदधातीन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीत्य्
अथाषाढां त्र्यालिखितामुत्तरलक्ष्माणमुपदधात्यषाढासि सहमानेत्यथ
संयान्यावुपदधात्यग्नेर्यान्यसि देवानामग्नेयान्यसीति
तयादेवतं कृत्वा सूददोहसः करोति ३२

अथोत्तरेण त्र्यालिखितामुपविश्य याचति दधि च मधुमिश्रं कूर्मं च
तं दध्ना मधुमिश्रेणाभ्यनक्ति मधु वाता ऋतायत इति तिसृभिरनुच्छन्दसम्
अथैनमवकाभारेण परिवेष्ट्य पुरस्तात्प्रत्यञ्चमुपदधाति मही द्यौः पृथिवी च
नश्चतस्र आशाः प्रचरन्त्वग्नय इति द्वाभ्याम्
अथैनँ शङ्कुभिः परिणिहन्त्यभितोऽनवसर्पणाय
तयादेवतं कृत्वा सूददोहसं करोत्यथात्रैव तिष्ठन्याचत्यौदुम्बरं
चोलूखलमुसलँ सर्वौषधं च
तदेतत्प्रादेशमात्रमुलूखलं भवत्यरत्निमात्रं मुसलं तस्मिन्सर्वौषधमवहन्त्यूर्जो
भागोऽस्यूर्जः पवित्रमूर्गन्नमन्नाद्यायेत्यथैनदुत्तरतः प्रक्रमवेलायामुपदधाति
तद्विष्णोः परमं पदमिति
लोकंपृणामुत्तरतो मुसलं करोति
तयादेवतं कृत्वा सूददोहसौ करोत्यथ मुख्यामुखां याचति
तस्यामन्तरवस्त्राविणी द्वे स्रुवाहुती जुहोत्यग्ने युक्ष्वा हि ये तवेति दक्षिणे
बिले जुहोति युक्ष्वा हि देवहूतमानित्युत्तरेऽथैनामुत्तरतः
प्रक्रमवेलायामुपदधाति ध्रुवासि पृथिवि सहस्व पृतन्यत इति
लोकंपृणे उत्तरत इतरे करोति
तयादेवतं कृत्वा सूददोहसः करोत्यथितत्पुरुषशिरो याचति
तस्य प्राणेषु हिरण्यशल्कान्प्रत्यस्यति द्रप्सश्चस्कन्देत्यास्येऽभूदिदं विश्वस्य
भुवनस्य वाजिनमिति दक्षिणस्यां नासिकायामग्नेर्वैश्वानरस्य
चेत्युत्तरस्यामग्निर्ज्योतिषा ज्योतिष्मानिति दक्षिणेऽक्षिण रुक्मो वर्चसा
वर्चस्वानित्युत्तर ऋचे त्वेति दक्षिणे कर्णे रुचे त्वेत्युत्तरेऽथ स्रुचि चतुर्गृहीतं
गृहीत्वा दक्षिणेऽक्षिण जुहोति चित्रं देवानामुदगादनीकमित्यपरं चतुर्गृहीतं
गृहीत्वोत्तरेऽक्षिण जुहोति चित्रं देवानामिति

समान्या जुहोतीति ब्राह्मणम्
अथैनद्दध्ना मधुमिश्रेण पूरयति समित्स्रवन्ति सरितो न धेना
इत्यान्तादनुवाकस्याथैनत्प्राचीनमुत्तानमुखायामुपदधाति ३३

आदित्यं गर्भं पयसा समञ्जन्नित्यनुद्रुत्येमं मा हिँसीर्द्विपादं पशूनामिति
मयुमारण्यमनु ते दिशामीति शुचमनूत्सृजति
ललाटे हिरण्येष्टकामुपदहाति विश्वकर्मा दिशां पतिरित्यथ पुरस्तात्प्रत्यङ्मुख
उपविश्यान्तरात्मन्नश्वस्य शिर उपदधाति वातस्य ध्राजिं वरुणस्य
नाभिमित्यनुद्रुत्येमं मा हिँसीरेकशफं पशूनामिति
गौरमारण्यमनु ते दिशामीति शुचमनूत्सृजति
ललाटे हिरण्येष्टकामुपदधाति प्रजापतिर्दिशां पतिरित्यथ पश्चात्प्राङ्मुख
उपविश्यान्तरात्मन्नृषभस्य शिर उपदधात्यजस्रमिन्दुमरुषं
भुरण्युमित्यनुद्रुत्येमँ समुद्रँ शतधारमुत्समिति
गवयमारण्यमनु ते दिशामीति शुचमनूत्सृजति
ललाटे हिरण्येष्टकामुपदधाति रुद्रो दिशां पतिरित्यथ दक्षिणत उदङ्मुख
उपविश्यान्तरात्मन्वृष्णेः शिर उपदधाति वरूत्रिं त्वष्टुर्वरुणस्य
नाभिमित्यनुद्रुत्येमामूर्णायुं वरुणस्य मायामित्युष्ट्रमारण्यमनु ते दिशामीति
शुचमनूत्सृजति

ललाटे हिरण्येष्टकामुपदधाति वरुणो दिशां पतिरित्यथोत्तरतो दक्षिणामुख
उपविश्यान्तरात्मन्बस्तस्य शिर उपदधाति यो अग्निरग्नेस्तपसोऽधि जात
इत्यनुद्रुत्याजा ह्यग्नेरजनिष्ट गर्भादिति
शरभमारण्यमनु ते दिशामीति शुचमनूत्सृजति
ललाटे हिरण्येष्टकामुपदधात्यग्निर्दिशां पतिरित्यन्तेषु तस्य
व्युदूह्योपदध्यादिति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोति ३४

अथापस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्च पुरस्तात्प्रतीचीरुपदधाति
पञ्च दक्षिणतः पञ्च पश्चात्प्राचीः पञ्चोत्तरतश्छन्दस्यास्
तयादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधात्ययं पुरो भुवस्तस्य
प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रं

गायत्रादुपाँ शुरुपाँ शोस्त्रिवृत्त्रिवृतो रथंतरँ रथंतराद्वसिष्ठ ऋषिः
प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्य इति
दश प्राचीरायातयति स्वयमातृण्णाया अयं दक्षिणा विश्वकर्मेति
दश दक्षिणा आयातयति स्वयमातृण्णाया अयं पश्चाद्विश्वव्यचा इति
दश प्रतीचीरायातयति स्वयमातृण्णाया इदमुत्तरात्सुवरिति
दशोदीचीरायातयति स्वयमातृण्णाया इयमुपरि मतिरिति
दशभिरुपरिष्टात्प्रदक्षिणं परिचिनोत्यक्ष्णयोपदधातीति ब्राह्मणं तयादेवतं
कृत्वा सूददोहसः करोत्यथ संयत उपदधात्यायुषः प्राणँ संतन्विति द्वादश
तिस्रस्तिस्रो दिक्षु न मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्
अथापानभृत उपदधाति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं
त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः
सानग ऋषिरिति
वाचयति पितरः पितामहा इति
दक्षिणेन प्राणभृतो दश प्रतीचीरायातयति स्वयमातृण्णामभि दक्षिणा
दिशामिति
जघनेन प्राणभृतो दशोदीचीरायातयति स्वयमातृण्णामभि प्रतीची
दिशामित्युत्तरेण प्राणभृतो दश प्राचीरायातयति स्वयमातृण्णामभ्युदीची
दिशामित्यग्रेण प्राणभृतो दश दक्षिणा आयातयति स्वयमातृण्णामभ्यूर्ध्वा
दिशामिति
बाह्येन प्राणभृतो दशभिरुपरिष्टादपसलैः परिचिनोति
विषूचीरुपदधातीति ब्राह्मणम्
अपानभृद्भिश्चितिराप्यते
तयादेवतं कृत्वा सूददोहसः करोत्यथाग्निँ सर्वतोमुखं चिनुते ३५

गायत्रीं पुरस्तादुपदधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं
मधे
तयादेवतं कृत्वा सूददोहसः करोत्यथाग्नेरङ्गान्युपदधाति प्राच्या त्वा दिशा
सादयामि गायत्रेण छन्दसाग्निना देवतयाग्नेः शीर्ष्णाग्नेः शिर उपदधामि
दक्षिणया त्वा दिशा सादयामि प्रतीच्या त्वा दिशा सादयाम्युदीच्या त्वा

दिशा सादयाम्यूर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसेति
तयादेवतं कृत्वा सूददोहसः करोत्यथोत्तरतः प्राजापत्यामुपदधाति
संवत्सरस्य प्रतिमामिति

तां जघनेन प्रक्रमवेलायां प्राञ्चमृषभमुपदधाति त्वामग्ने वृषभं चेकितानमिति
तयादेवतं कृत्वा सूददोहसौ करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं
पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति
तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति
ता अस्य सूददोहसः सोमँ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा
रोचने दिव इति
प्राच्यात्र लोकंपृणया प्रसौत्यग्निं प्राचीभिः सम्प्रच्छादयन्ति
संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ
चितिक्लृप्तयाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्र्यैतां
चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां
प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रात्रिम् ३६

अथ द्वितीयेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरत्यथ कार्ष्णाजिनी
उपानहावुपमुञ्चेते अध्वर्युश्च यजमानश्चाथ द्वाभ्यामात्मन्यग्निं गृःनीते मयि
गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति

कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो दिवीति
तयादेवतं कृत्वा सूददोहसं करोत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां
प्रचरत्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रातिर्म्
अथ तृतीयेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्याज्यस्थालीँ सस्रुवां
विभक्तिमुदपात्रं पञ्च च स्कन्ध्या अवकाश्च या उ चान्या उपधास्यन्भवति ता
एतत्समादायोत्तरे श्रोणयन्त सँसादयन्त्यथ द्वाभ्यामात्मन्यग्निं गृणीते मयि

गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथाधिद्रुत्य प्रथमे संचिताहुती जुहोत्यग्न उदधे तत्त्वा यामीति
दक्षिणतो विभक्तिमुपदधात्यग्निं दूतं वृणीमह इति
तयादेवतं कृत्वा सूददोहसं करोति ३७

अथैताः पञ्च स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये द्वे सयुजावेकाँ संयानीम्
ऋतव्ये उपदधाति शुक्रश्च शुचिश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीत्यथ
सयुजावुपदधात्याघाराभ्यां त्वा सयुजा युजा युनज्मि तेजसा त्वा सयुजा
युजा युनज्मीत्यथ संयानीमुपदधाति वायोर्यान्यसीति
तयादेवतं कृत्वा सूददोहसः करोत्यथाश्विनीरुपदधाति
ध्रुवक्षितिर्ध्रुवयोनिरिति पञ्चैकैकां दिक्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्
अथर्तव्या उपदधाति सजूरृतुभिः सजूर्विधाभिरिति पञ्चैकैकां दिक्ष्वेकां
मध्ये
समानप्रभृतयो भवन्ति समानोदर्का इति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः
करोत्यथ प्राणभृत उपदधाति प्राणं मे पाह्यपानं मे पाहीति पञ्चैकैकां
दिक्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ
वृष्टिसनीरुपदधात्यपस्पिन्वौषधीर्जिन्वेति पञ्चैकैकां दिक्ष्वेकां
मध्येऽनुपरिहाराँ सादयतीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोत्यथ
मूर्धन्वतीरुपदधाति विष्टम्भो वय इति चतस्रः पुरस्तादूर्ध्वँ सपातिनीस्
तयादेवतं कृत्वा सूददोहसः करोत्यथ वसस्या उपदधाति
त्र्यविर्वय इति पञ्च दक्षिणायाँ श्रोणयामुपदधाति पष्ठवाद्वय इति
पञ्चोत्तरस्याम्बस्तो वय इति दक्षिणेऽँस उपदधाति
वृष्णिर्वय इत्युत्तरे
व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति
सिँहो वय इत्युत्तरे
पुरुषो वय इति मध्ये

पुरुषेण चितिराप्यते
तयादेवतं कृत्वा सूददोहसः करोत्यथाग्निँ सर्वतोमुखं चितुतेऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणा उदीच्यात्र लोकंपृणया प्रसौत्यग्निमुदीचीभिः संप्रच्छादयन्ति
संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्तयाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्य्
आग्नेय्या त्रिष्टुभैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते वसन्त्येताँ रात्रिम् ३८

अथ चतुर्थेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
समानं पुरीषस्योपधानम्
अथ पञ्चमेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्याज्यस्थालीँ सस्रुवां विभक्तिमुदपात्रँ सर्वं च स्वयमातृण्णानिकोतं दश च स्कन्ध्या अवकाश्च या उ चान्या उपधास्यन्भवति
एतत्समादायोत्तरे श्रोणयन्ते सँसादयन्त्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथाधिद्रुत्य द्वितीये संचिताहुती जुहोत्यग्ने दुध्र तत्त्वा यामीति
दक्षिणतो विभक्तिमुपदधात्यग्निनाग्निः समिध्यत इति
तयादेवतं कृत्वा सूददोहसं करोत्यथ स्वयमातृण्णामश्वमवघ्राप्याविदुषा ब्राह्मणेन सहाधिद्रुत्योपदधाति भुव इन्द्राग्नी अव्यथमानामित्यनुद्रुत्य वायुस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
व्यन्यादिद्द्वतीयामुपधायेति
प्राणयापानिति
स व्यानोऽथैष ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा

घृतेनेत्यङ्गुष्ठाभ्यामन्वारभ्यान्वारोहं वाचयत्यन्तरिक्षमाक्रमिषं प्रजा मा मा हासीदित्
अपरे बिले हिरण्येष्टकामुपदधाति ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहीति
तां जघनेन प्रक्रमवेलायां मण्डलेष्टकामुपदधात्यधिद्यौरन्तरिक्षं ब्रह्मणा विष्टेति
दक्षिणतो रेतःसिचमुपदधात्यन्तरिक्षँ रेतःसिक्तन्मे रेतो दधातु तन्मे रेतः प्रजनयत्विति मनसैव
तयादेवतं कृत्वा सूददोहसः करोति ३९

अथैता दश स्कन्ध्याः प्राचीरायातयति चतस्र ऋतव्याः सम्राजं च विश्वज्योतिषं च द्वे सयुजौ द्वे संयान्यवृतव्या उपदधाति नभश्च नभस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीतीषश्चोर्जश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीति सम्राजं च विश्वज्योतिषं च सम्राट्ज्योतिरधारयद्विश्वकर्मा त्वा सादयत्वित्युत्तराम्
अथ सयुजावुपदधाति वर्चसा त्वा सयुजा युजा युनज्म्युक्थेभिस्त्वा सयुजा युजा युनज्मीत्यथ संयान्यावुपदधाति देवानां वायोयान्यस्यन्तरिक्षस्य यान्यसीति
तयादेवतं कृत्वा सूददोहसः करोत्यथ दिश्या उपदधाति राज्ञ्यसि प्राची दिगिति पञ्चैकैकां दिक्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ प्राणभृत उपदधात्यायुर्मे पाहि प्राणं मे पाहीति दश पुरस्तात्प्राचीस्
तासां ज्योतिष्मतीमुत्तमामुपदधाति
तयादेवतं कृत्वा सूददोहसः करोत्यथ बृहतीरुपदधाति मा छन्द इति द्वादश दक्षिणतः पृथिवी छन्द इति द्वादश पश्चादग्निर्देवतेति द्वादशोत्तरतस्
तयादेवतं कृत्वा सूददोहसः करोत्
मूर्धासि राडिति सप्त पुरस्तात्प्रतीचीरुपदधाति यन्त्री राडिति सप्त पश्चात्प्राची वालखिल्याभिश्चितिराप्यते
तयादेवतं कृत्वा सूददोहसः करोत्यथाग्निँ सर्वतोमुखं चिनुतेऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणाः

प्राच्यात्र लोकंपृणया प्रसौत्यग्निं प्राचीभिः संप्रच्छादयन्ति
संप्रच्छन्नं पलाशशास्वया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ
चितिक्लृप्तयाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या जगत्यैतां
चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां
प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रात्रिम् ४०

अथ षष्ठेऽन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
समानं पुरीषस्योपधानम्
अथ सप्तमेऽह्नयुदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्याज्यस्थालीँ सस्रुवां
विभक्तिमुदपात्रं पञ्च च स्कन्ध्या अवकाश्च या उ चान्या उपधास्यन्भवति ता
एतत्समादायोत्तरे श्रोणयन्ते सँसादयन्त्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि
गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथाधिद्रुत्य तृतीये संचिताहुती जुहोत्यग्ने गह्य तत्त्वा यामीति
दक्षिणतो विभक्तिमुपदधात्यग्निर्वृत्राणि जङ्घनदिति
तयादेवतं कृत्वा सूददोहसं करोत्यथैताः पञ्च स्कन्ध्याः प्राचीरायातयति द्वे
ऋतव्ये द्वे सयुजावेकाँ संयानीम्

ऋतव्ये उपदधाति सहश्च सहस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीत्यथ
सयुजावुपदधाति स्तोमेभिस्त्वा सयुजा युजा युनज्मि छन्दोभिस्त्वा सयुजा
युजा युनज्मीत्यथ संयानीमुपदधाति देवानामन्तरिक्षयान्यसीति
तयादेवतं कृत्वा सूददोहसः करोति ४१

अथाक्ष्णयास्तोमीया उपदधात्याशुस्त्रिवृदिति पुरस्तादुपदधाति व्योम
सप्तदश इति दक्षिणतो धरुण एकविँश इति पश्चाद्भान्तः पञ्चदश इत्युत्तर्तः
प्रतूर्तिरष्टादश इति पुरस्तादुपदधात्यभिवर्तः सविँश इति दक्षिणतो वर्चो
द्वाविँश इति पश्चात्तपो नवदश इत्युत्तरतो

योनिश्चतुर्विँश इति पुरस्तादुपदधाति गर्भाः पञ्चविँश इति दक्षिणत
ओजस्त्रिणव इति पश्चात्संभरणस्त्रयोविँश इत्युत्तरतः
क्रतुरेकत्रिँश इति पुरस्तादुपदधाति ब्रध्नस्य विष्टपं चतुस्त्रिँश इति दक्षिणतः
प्रतिष्ठा त्रयस्त्रिँश इति पश्चाद्नाकः षट्त्रिँश इत्युत्तरतोऽग्नेर्भागोऽसीति
पुरस्तादुपदधाति नृचक्षसां भागोऽसीति दक्षिणतो मित्रस्य भागोऽसीति
पश्चादिन्द्रस्य भागोऽसीत्युत्तरतो
वसूनां भागोऽसीति पुरस्तादुपदधात्यादित्यानां भागोऽसीति दक्षिणतोऽदित्यै
भागोऽसीति पश्चाद्देवस्य सवितुर्भागोऽसीत्युत्तरतो
धर्त्रश्चतुष्टोम इति पुरस्तादुपदधाति यावानां भागोऽसीति दक्षिणत ऋभूणां
भागोऽसीति पश्चाद्विवर्तोऽष्टाचत्वारिँश
इत्युत्तरतोऽन्यथानूच्यान्यथोपदधातीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः
करोत्य्
अथ सृष्टीरुपदधात्येकयास्तुवत प्रजा अधीयन्तेति सप्तदश
चतस्रो दक्षिणेऽँस उपदधात्यथ तिस्रोऽथ तिस्रोऽथ तिस्रोऽथ चतस्रो
दक्षिणादँसाद्दक्षिणाँ श्रोणिमभ्यायातयति
तयादेवतं कृत्वा सूददोहसः करोत्यथ व्युष्टीरुपदधातीयमेव सा या प्रथमा
व्यौच्छदिति पञ्चदश
तिस्रस्तिस्रो दिक्षु तिस्रो मध्ये
व्युष्टीभिश्चितिराप्यते
तयादेवतं कृत्वा सूददोहसः करोति ४२

अथाग्निँ सर्वतोमुखं चिनुतेऽग्नेरङ्गानि प्राजापत्यामृषभं लोकंपृणा उदीच्यात्र
लोकंपृणया प्रसौत्यग्निमुदीचीभिः संप्रच्छाद्यन्ति
संप्रच्छन्नं पलाशशाखया परिकर्षति लोकं पृण छिद्रं पृणेत्यथ
चितिक्लृप्तयाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्यानुष्टुभैतां
चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां
प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रात्रिम् ४३

अथाष्टमेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति

समानं पुरीषस्योपधानम्
अथ नवमेऽहन्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
सर्व एव कार्ष्णाजिनीरुपानह उपमुञ्चन्तेऽथ याचत्याज्यस्थालीँ सस्रुवां विभक्तिमुदपात्रँ सर्वं च स्वयमातृण्णानिकोतँ सप्त च स्कन्ध्या अवकाश्च या उ चान्या उपधास्यन्भवति ता
एतत्समादायोत्तरे श्रोण्यन्ते सँसादयन्त्यथ द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथाधिद्रुत्य चतुर्थे संचिताहुती जुहोत्यग्ने किँ शिल तत्त्वा यामीति
दक्षिणतो विभक्तिमुपदधात्यग्ने स्तोमं मनामह इति
तयादेवतं कृत्वा सूददोहसं करोत्यथैताः सप्त स्कन्ध्याः प्राचीरायातयति द्वे ऋतव्ये स्वराजं च विश्वज्योतिषं चैकाँ सयुजं द्वे संयान्यवृतव्ये उपदधाति तपश्च तपस्यश्चेत्यवकामनूपदधात्यग्नेर्योनिरसीति स्वराजं च विश्वज्योतिषं च स्वराट्ज्योतिरधारयत्प्रजापतिस्त्वा सादयत्वित्युत्तराम्
अथ सयुजमुपदधाति रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मीत्यथ संयान्यावुपदधात्यन्तरिक्षमस्यन्तरिक्षाय त्वेति
तयादेवतं कृत्वा सूददोहसः करोति ४४

अथासपत्ना उपदधात्यग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति सहसा जातानिति पश्चाद्चतुश्चत्वारिँश स्तोम इति दक्षिणतः षोडश स्तोम इत्युत्तरतस्
तासां पुरीषवतीं मध्य उपदधाति पृथिव्याः पुरीषमस्यप्सो नामेति
तयादेवतं कृत्वा सूददोहसः करोत्यथ विराज उपदधात्येवश्छन्दो वरिवश्छन्द इति चत्वारिँशतं दशदश दिक्षु न मध्येऽक्ष्णयोपदधातीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोत्
अथ स्तोमभागा उपदधाति रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येकत्रिँशतँ सप्तसप्त दिक्षु तिस्रो मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ नाकसद उपदधाति राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतय इति पञ्चैकैकां दिक्ष्वेकां मध्ये

तयादेवतं कृत्वा सूददोहसः करोत्यथ पञ्चचोडा
उपरिष्टान्नाकसदामुपदधात्ययं पुरो हरिकेशः सूर्यरश्मिरिति पञ्चैकैकां दिद्क्ष्वेकां मध्ये
तासां पश्चात्प्राचीमुत्तमामुपदधात्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायति
तयादेवतं कृत्वा सूददोहसः करोत्यथ छन्दाँस्युपदधात्यग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य तिस्रस्तिस्रो यथाम्नातं गायत्रीः पुरस्तादुपदधाति त्रिष्टुभो दक्षिणतो जगतीः पश्चादनुष्टुभ उत्तरतो बृहतीर्मध्य उष्णिहः पुरस्तादुपदधाति पङ्क्तीर्दक्षिणतोऽक्षरपङ्क्तीः पश्चादतिच्छन्दसमुत्तरतो द्विपदा मध्येऽपि वातिच्छन्दसं मध्ये द्विपदा उत्तरतस्
तयादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽँसे कृत्तिका उपदधात्यम्बा नामासि दुला नामासीति सप्त गुल्मकृतास्
तयादेवतं कृत्वा सूददोहसः करोत्यथ वृष्टिसनीरुपदधाति पुरोवातसनिरस्यभ्रसनिरसीति पञ्चैकैकां दिद्क्ष्वेकां मध्येऽनुपरिहारँ सादयतीति ब्राह्मणं तयादेवतं कृत्वा सूददोहसः करोत्यथादित्येष्टका उपदधाति सलिलाय त्वा सर्णीकाय त्वेत्यष्टौ द्वेद्वे दिक्षु न मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ घृतेष्टका उपदधात्यृचे त्वा रुचे त्वेति पञ्चैकैकां दिद्क्ष्वेकाम्मध्येऽनुपरिहारँ सादयतीति ब्राह्मणं
तयादेवतं कृत्वा सूददोहसः करोत्यथ यशोदा उपदधाति यशोदां त्वा यशसि सादयामीति पञ्चैकैकां दिद्क्ष्वेकां मध्ये
अथ भूयस्कृत उपदधाति भूयस्कृदसि वरिवस्कृदसीति पञ्चैकैकां दिद्क्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथाप्सुषद उपदधात्यप्सुषदसि श्येनसदसीति पञ्चैकैकां दिद्क्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ द्रविणोदा उपदधाति पृथिव्यास्त्वा द्रविणे सादयामीति पण्चैकैकां दिद्क्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथायुष्या उपदधाति प्राणं मे पाह्यपानं मे पाहीति सप्तैकैकां दिक्षु तिस्रो मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथर्तुनामान्युपदधाति यावा अयावा इति सप्तैकैकां दिक्षु तिस्रो मध्ये
तयादेवतं कृत्वा सूददोहसः करोति ४५

अथेन्द्रतनूरुपदधात्यग्निना विश्वाषाडिति द्वाविँशतिं पञ्चपञ्च दिक्षु द्वे मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ यज्ञतनूरुपदधाति
प्रजापतिर्मनसान्धोऽच्छेत इति त्रयस्त्रिँ शतमष्टावष्टौ दिक्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ ज्योतिष्मतीरुपदधाति ज्योतिष्मतीं
त्वा सादयामीति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ भूतेष्टका उपदधाति पृथिव्यै
स्वाहान्तरिक्षाय स्वाहेति द्वादश तिस्रस्तिस्रो दिक्षु न मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथाज्यानीरुपदधाति शतायुधाय
शतवीर्यायेति पञ्चैकैकां दिक्ष्वेकां मध्ये

तयादेवतं कृत्वा सूददोहसः करोत्यथ राष्ट्रभृत उपदधात्यग्ने
यशस्विन्यशसेममर्पयेति चतस्र एकैकां दिक्षु न मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथ दक्षिणेऽँसे पौर्णमासीमुपदधाति पूर्णा
पश्चादिति
तयादेवतं कृत्वा सूददोहसं करोत्यथ दक्षिण एवाँ से नक्षत्रेष्टका उपदधाति
कृत्तिका नक्षत्रमग्निर्देवतेत्यथैना रोचयत्यग्ने रुच स्थ प्रजापतेर्धातुः सोमस्य
ऋचे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वेत्यथैतं नक्षत्रपथँ
रोहिणीप्रभृत्या विशाखाभ्यामायातयति
दक्षिणादँ साद्दक्षिणाँ श्रोणिमभ्यायातयत्यथ पुच्छसन्धौ चात्मसन्धौ
चामावास्यामुपदधाति यत्ते देवा अदधुर्भागधेयमित्यथैतं
नक्षत्रपथमनूराधाप्रभृत्यापभरणीभ्य आयातयत्युत्तरायै श्रोणेरुत्तरमँ
समभ्यायातयत्यथोत्तर एवाँ से पौर्णमासीमुपदधाति पूर्णा पश्चादित्यसँस्पृष्टा
उपदधातीति ब्राह्मणं नक्षत्रेष्टकाभिश्चितिराप्यते
तयादेवतं कृत्वा सूददोहसः करोत्यथावद्रुत्य कृष्णमश्वमभिमृश्य
तनुपुरीषमुपदधाति पृष्टो दिवीति
तयादेवतं कृत्वा सूददोहसं करोत्यत्र षष्ठीं चितिं चिनुते संयच्च प्रचेताश्चेति
पञ्चैकैकां दिक्ष्वेकां मध्ये
तयादेवतं कृत्वा सूददोहसः करोत्यथाग्निँ सर्वतोमुखं चिनुतेऽग्नेरङ्गानि
प्राजापत्यामृषभं लोकंपृणाः

प्राच्यात्र लोकंपृणया प्रसौत्यग्निं प्राचीभिः संप्रच्छादयन्त्यथोदीचीभिः पाचीभिस्त्वेव निस्तिष्ठन्ति
यावद्दघ्नं चेष्यमाणो भवति तावद्दघ्नं चिनुतेऽथानभिमृष्टं चितिक्लृप्त्याभवति तदेताश्चतस्रः स्वयमातृण्णा याचति
ता दिक्षूपदधाति प्राणाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद व्यानाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदापानाय त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाचे त्वा चक्षुषे त्वा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ स्वयमातृण्णामश्वमवघ्राप्याविदुषा ब्राह्मणेन सहाधिद्रुत्योपदधाति सुवरायोस्त्वा सदने सादयामीत्यनुद्रुत्य सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यपान्यात्तृतीयामुपधायेत्यपानित्यथैष ब्राह्मणो वरं ददात्यथ स्रुचि चतुर्गृहीतं गृहीत्वा स्वयमातृण्णावकाशे जुहोति चित्तिं जुहोमि मनसा घृतेनेत्यङ्गुष्ठाभ्यामन्वारभ्यान्वारोहं वाचयति दिवमाक्रमिषं सुवरगन्मेत्यपरे बिले हिरण्येष्टकामुपदधाति सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीति
तां जघनेन प्रक्रमवेलायां मण्डलेष्टकामुपदधाति द्यौरपराजितामृतेन विष्टेति दक्षिणतो रेतःसिचमुपदधाति द्यौ रेतःसिक्सा मे रेतो दधातु सा मे रेतः प्रजनयत्विति

तयादेवतं कृत्वा सूददोहसः करोत्यथोत्तरतः प्रक्रमवेलायां विकर्णीमुपदधाति प्रोथदश्वो न यवसे अविष्यन्निति
तयादेवतं कृत्वा सूददोहसं करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्त्याभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या पङ्क्त्यैतां चितिमभिमृश्य द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते वसन्त्येताँ रात्रीम् ४६

अथैतस्मिन्नेव नवमेऽह्नि दशमायाह्न उपकल्पयते सहस्रँ हिरण्यशल्कान् ऊर्ध्वं त्रिभ्योऽपरिमितानित्येक आहुस्

ते यदि सहस्रं भवन्ति द्वेद्वे शते पत्त्रनाडीष्वेते भवतोऽथ दशमेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
समानं पुरीषस्योपधानम्
अथ पात्र्यामप आनीय हिरण्यशल्कान्संप्रकीर्य द्वाभ्यांद्वाभ्याँ शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति यत्प्राक्स्वयमातृण्णायै भवति सहस्रस्य प्रतिमा असीति यद्दक्षिणा स्वयमातृण्णायै भवति सहस्रस्य विमा असीति यत्प्रत्यक्स्वयमातृण्णायै भवति सहस्रस्योन्मा असीति यदुदक्स्वयमातृण्णायै भवत्यथ मध्यं द्वाभ्याँ शताभ्यां प्रोक्षति साहसरोऽसि सहस्राय त्वेत्यथोत्तरे श्रोण्यन्ते तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्याथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैत-दहः कर्म क्रियते
वसन्त्येताँ रात्रिम्
अथैतस्मिन्नेव दशमेऽह्न्येकादशायाह्न उपकल्पयतेऽर्कपर्णमजक्षीरं गावीधुकं चरुं तिसृधन्वमश्मानमुदकुम्भं मण्डूकमवकां वेतसशाखां दर्भस्तम्बमाज्यस्थालीँ सस्रुवां दीर्घवँ शं द्वादशमित्यथैकादशेऽह्न्युदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचरति
स दीर्घवँ शे स्रुवं प्रग्रथ्योत्तमे संचिताहुती जुहोत्यग्ने वन्य तत्त्वा यामीति
४७

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थातोत्तरस्य पक्षस्य चरमयेष्टकया प्रत्यूढपुरीषयोपरमत्यथैतस्यार्कपर्णस्य पुटमन्तरवस्त्राविणं कृत्वोदङ्तिष्ठन्मुखदघ्ने धारयन्नाहाहरानयेति
स यत्र धरेष्टकां प्राप्नोति तत्प्रतिपद्यते नमस्ते रुद्र मन्यव इत्यान्तमेतमनुवाकं निगद्य द्वितीयं तृतीयं चतुर्थस्य यत्राभिजानाति नमः क्षत्तृभ्य इति तत्स्वाहाकरोति
सोऽत एव प्राङावृत्य नाभिदघ्ने धारयन्संग्रहीतृभ्य इति प्रतिपद्यातिशिष्टमनुवाकस्य निगद्य पञ्चमँ षष्ठं सप्तमस्य यत्राभिजानाति नमो वर्ष्याय चेति तत्स्वाहाकरोति
सोऽत एव दक्षिणावृत्य जानुदघ्ने धारयन्नवर्ष्याय चेति प्रतिपद्यातिशिष्टमनुवाकस्य निगद्याष्टमं नवमं दशमम्

एकादशस्य यत्राभिजानाति य एतावन्तश्च भूयाँ सश्चेति तत्स्वाहाकरोति
सोऽत एव प्रत्यङावृत्य गुल्फदघ्ने धारयन्नमो रुद्रेभ्यो ये
पृथिव्यामित्येतद्यजमानं वाचयति

नाभिदघ्ने धारयन्नमो रुद्रेभ्यो येऽन्तरिक्ष इत्येतद्यजमानं वाचयति
ग्रीवदघ्ने धारयन्नमो रुद्रेभ्यो ये दिवीत्येतद्यजमानं वाचयत्यत्रैतदर्कपर्णं यं
द्वेष्टि तस्य संचरे पशूनां न्यस्यति
यद्यु वै न द्वेष्ट्याखुवटे न्यस्यत्यत्रैतं गावीधुकं चरुं चरमायामिष्टकायां
निदधाति यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश
तस्मै रुद्राय नमो अस्त्वित्यथैतत्तिसृधन्वं याचति
तेनोत्तरे श्रोणयन्ते तिष्ठन्नुपतिष्ठतेऽपि वानुपरिक्रामं यत्ते रुद्र पुरो धनुस्तद्वातो
अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र दक्षिणा धनुर्यत्ते
रुद्र पश्चाद्धनुर्यत्ते रुद्रोत्तराद्धनुर्यत्ते रुद्रोपरि धनुरित्यथैनदयाचितं ब्राह्मणाय
ददात्यथास्यैष उदकुम्भ उत्तरे श्रोणयन्तेऽश्मना सँस्पृष्टः शेते
स यो बलवाँस्तमाहानेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं
परिषिञ्चन्परीहीति
स तथा करोति
परिषिच्यमाने यजमानं वाचयत्यश्मन्नूर्जं पर्वते शिश्रियाणाम्वाते पर्जन्ये
वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि संभृतां तां न इषमूर्जं
धत्त मरुतः सँरराणा इत्यथैतं कुम्भमश्मना सँस्पृष्टँ सादयत्यश्मँस्ते क्षुदमु ते
शुगृच्छतु यं द्विष्म इति
निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येत्य्
अथैतस्मिन्नेव दीर्घवँशे प्रग्रथ्नाति मण्डूकमवकां वेतसशाखां
दर्भस्तम्बमिति
तेन यत्प्राक्स्वयमातृण्णायै भवति तद्विकर्षति समुद्रस्य त्वावकया हिमस्य
त्वा जरायुणेति   ४८

द्वाभ्यां पुरस्ताद्द्वाभ्यां दक्षिणतो द्वाभ्यां
पश्चाद्द्वाभ्यामुत्तरतोऽष्टाभिर्विकर्षतीति ब्राह्मणम्
अथैताश्चैव कार्ष्णाजिनीरुपानह एतं च दीर्घवँशँ संछिद्य चात्वाले

संप्रकिरन्त्यथ शान्तोऽग्निरित्याज्यस्थालीँ
सस्रुवामादायाधिद्रुत्याज्यस्थाल्याः स्रुवेणोपघातँ सर्पाहुतीर्जुहोति
समीची नामासि प्राची दिगिति पश्चादासीनः पूर्वे बिले जुहोत्योजस्विनी
नामासि दक्षिणा दिगित्युत्तरत आसीनो दक्षिणे बिले जुहोति
प्राची नामासि प्रतीची दिगिति पुरस्तादासीनोऽपरे बिले जुहोत्यवस्थावा
नामास्युदीची दिगिति दक्षिणत आसीन उत्तरे बिले जुहोत्यथैतेनैव
यथेतमेत्य यत्रैव प्रथममहौषीत्तद्द्वे जुहोत्यधिपत्नी नामासि वशिनी
नामासीत्यथावद्रुत्याग्निँ सामभिरुपस्थापयति
गायत्रेण पुरस्तादुपतिष्ठतेऽग्नेर्हृदयेन दक्षिणमुपपक्षँ रथंतरेण दक्षिणं पक्षं
वारवन्तीयेन दक्षिणाँ श्रोणिमृतुस्थायज्ञायज्ञियेन पुच्छँ श्यैतेनोत्तराँ श्रोणिं
बृहतोत्तरं पक्षं प्रजापतेर्गृहयेनोत्तरमुपपक्षं वामदेव्येन मध्यम्

अथाह होतरग्नेरुक्थेनाग्निमनुशँ सेति
यदि होता न कामयते यजमान एव जघनेन पुच्छं तृणानि सँस्तीर्य
तेषूपविश्याग्नेरुक्थेनाग्निमनुशँ सति पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रा
उशिजः पदानु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शँ
सिषदोमिति सकृद्वा त्रिर्वाथैनँ स्तुतशस्त्रयोर्दोहं वाचयतीष्टो यज्ञो
भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह
भक्षीयेत्यथापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्येतावदेवैतदहः कर्म क्रियते
वसन्त्येताँ रात्रिम् ४९

अथैतस्मिन्नेवैकादशेऽह्नि द्वादशायाह्न उपकल्पयत औदुम्बरँ स्रुवमौदुम्बरं
द्रोणमौदुम्बरं प्रसेकमौदुम्बरीं वितष्टिं तस्यां पञ्चगृहीतमाज्यं भवति दध्नः
पूर्णामौदुम्बरीं तिस्र औदुम्बरीः समिधस्तिस्रो नानावृक्ष्या नानावृक्ष्यमिध्मं
दधि मधुमिश्रं ग्रमुष्टिमवकाभारं पृश्निमश्मानमाज्यप्रोक्षं द्वितीयँ
होतारमप्रतिरथस्यानुवक्तारं विलीनोत्पूतस्याज्यस्य द्वौ वा त्रीन्वा
कुम्भान्ब्राह्मौदनिकान्व्रीहीन्सर्वौषधँ रोहितं चर्मानडुहं कृष्णायै श्वेतवत्सायै
अयो रथं चषालहोमीयँ शाकलान्परिधीनित्यथ द्वादशेऽह्न्युदित आदित्ये
प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य
सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छतेत्य्

आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम्
अर्धस्तनव्रतं प्रयच्छत्यथादत्ते पञ्चगृहीतमाज्यं दधि मधुमिश्रं
ग्रमुष्टिमवकाभारमित्येतत्समादायाधिद्रुत्याद्दण्या पञ्चगृहीतेन स्वयमातृण्णां
व्याघारयति नृषदे वडप्सुषदे वड्वनसदे वड्बर्हिषदे वट्सुवर्विदे
वडित्येतयैव स्रुचोपघातं दध्ना मधुमिश्रेण गन्धर्वाहुतीर्जुहोति
हेतयो नाम स्थ तेषां वः पुरो गृहा इति पश्चादासीनः पूर्वे बिले जुहोति
निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहा इत्युत्तरत आसीनो दक्षिणे बिले
जुहोति
वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहा इति पुरस्तादासीनोऽपरे बिले
जुहोत्यवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा इति दक्षिणत आसीन उत्तरे
बिले जुहोत्यथैतेनैव यथेतमेत्य यत्रैव प्रथममहौषीत्तद्द्वे जुहोत्यधिपतयो
नाम स्थ क्रव्या नाम स्थेत्यथाह प्रतिप्रस्थातरिममग्निं कूर्मपृषन्तं कुर्विति
तँ स कूर्मपृषन्तं करोति
नाप्रोक्षितमधितिष्ठत्यथ ग्रमुष्टिमादाय दध्ना मधुमिश्रेणावोक्षति ये देवा
देवानां ये देवा देवेष्वधि देवत्वमायन्निति ५०

द्वाभ्यां पुरस्तात्ताभ्यां दक्षिणतस्ताभ्यां
पश्चात्ताभ्यामुत्तरतोऽनुपरिचारमवोक्षतीति ब्राह्मणम्
अथैनमवकाभारेण प्रतिच्छाद्य गोप्तारँ समादिश्यावद्रुत्यापराह्णिकीभ्यां
प्रवर्ग्योपसद्भ्यां प्रचरत्यथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य
सुब्रह्मण्यामाह्वयाग्नीद्वैश्वानरमारुतान्निर्वप प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यँ
सँसादयोद्वासनायेति

त्रेधैतत्पदं कुर्वन्ति
गार्हपत्ये तृतीयमुपचमनीषु तृतीयं नि तृतीयं दधात्यथ प्रवर्ग्यस्यावृता
प्रवर्ग्यमुद्वास्याधिश्रयति वैश्वानरं द्वादशकपालं मारुताँश्च सप्तकपालान्
अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं
गृहीत्वाहवनीयेऽनीकवन्तं जुहोत्यग्निस्तिग्मेन शोचिषेत्यनुद्रुत्य सैनानीकेन
सुविदात्रो अस्मे इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव
वैश्वकर्मणानि जुहोति

य इमा विश्वा भुवनानि जुह्वदित्यनुद्रुत्य विश्वकर्मा ह्यजनिष्ट देव इति
जुहोत्यपरं चतुर्गृहीतं गृहीत्वा चक्षुषः पितेत्यनुद्रुत्य विश्वकर्मन्हविषा
वर्धनेनेति जुहोति
नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधातीति ब्राह्मणम्
अथ तिस्र औदुम्बरीः समिध आदधात्युदेनमुत्तरां नयेन्द्रेमं प्रतरां कृधि यस्य
कुर्मो हविर्गृह इत्यथाभ्यादधातीध्मं प्रणयनीयम्
उपोपयमनीः कल्पयन्ति चात्वालादथ संप्रैषमाहाग्नये
प्रणीयमानायानुब्रूह्यग्नीदेकस्फ्ययानुसंधेहि द्वितीयो
होताप्रतिरथमनुब्रवीत्विति
प्रतिपद्यत एष द्वितीयो होताप्रतिरथमाशुः शिशान इति
दशर्चं भवतीति ब्राह्मणम्
अथैतेनैव सहाग्निमाददते पृश्निमश्मानमाज्यप्रोक्षं
शाकलान्परिधीनित्यथैनमुद्यच्छत उदु त्वा विश्वे देवा इति
षड्भिर्हरतीति ब्राह्मणं
तासां द्वे परिगृह्यवती भवतोऽथ विषुवत्याग्नीध्रस्य काले पृश्निमश्मानं
निदधाति विमान एष दिव उक्षा समुद्र इति द्वाभ्याम्
अथ चतसृभिरा पुच्छादेतीन्द्रं विश्वा अवीवृधन्निति
धारयन्त्येतमग्निम्
अथैनँ संचितमाज्यप्रोक्षेण प्रोक्षति ५१

वसवस्त्वा रुद्रैः पुरस्तात्पान्त्विति पुरस्तात्पितरस्त्वा यमराजानः
पितृभिर्दक्षिणतः पान्त्विति दक्षिणत आदित्यास्त्वा विश्वैर्देवैः पश्चात्पान्त्विति
पश्चाद्द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पात्वित्युत्तरतो देवास्त्वेन्द्रज्येष्ठा
वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्त्वित्युपरिष्टादथैतेनैव सहाग्निनाधिद्रवति
प्राचीमनु प्रदिशं प्रेहि विद्वान्क्रमध्वमग्निना नाकमुख्यम्पृथिव्या
अहमुदन्तरिक्षमारुहं सुवर्यन्तो नापेक्षन्तेऽग्ने प्रेहि प्रथमो देवयतामिति
पञ्चभिर्धारयन्त्येतमग्निम्
अथ दध्नः पूर्णामौदुम्बरीँ स्वयमातृण्णायां जुहोति
नक्तोषासेति पुरोऽनुवाक्यामनूच्याग्ने सहस्राक्षेति जुहोत्यथ
प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयति सुपर्णोऽसि गरुत्मानिति

तिसृभिः सादयतीति ब्राह्मणम्
अथैनं विस्त्रस्याहुतिषाहं कृत्वाध्वराहुतिभिरभिजुहोत्यग्निर्यज्ञं नयतु
प्रजानन्मैनं यज्ञहनो विदन्देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं तिर स्वाहा
वायुर्यज्ञं नयतु प्रजानन्सूर्यो यज्ञं नयतु प्रजानन्यज्ञो यज्ञं नयतु प्रजानन्मैनं
यज्ञहनो विदन्देवेभ्यः प्रब्रूताद्यज्ञम्प्रप्र यज्ञपतिं तिर
स्वाहेत्यथावद्रुत्याग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ
स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादयेत्
अथाधिद्रुत्य शाकलान्परिधीन्परिधाय नानावृक्षयमिध्ममभ्यज्य
स्वाहाकारेणाभ्याधाय तिस्रो नानावृक्ष्याः समिध आदधाति प्रेद्धो अग्ने
दीदिहि पुरो न इत्यौदुम्बरीम्विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं ताँ
सवितुर्वरेण्यस्य चित्रामिति शमीमयीम्
अथ द्वे स्रुवाहुती जुहोति चित्तिं जुहोम्यग्ने तमद्येत्यथ स्रुचि चतुर्गृहीतं
गृहीत्वाज्यस्य पूर्णाँ स्रुचं जुहोति सप्त ते अग्ने समिधः सप्त जिह्वा इत्यत्र
जुह्वन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमवरुन्द्धे
दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्
तेजश्चैवास्मा इन्द्रियं च समीची दधादिति ब्राह्मणम्
अथात्रैव तिष्ठन्याचति वैश्वानरं द्वादशकपालं मारुताँश्च सप्तकपालान्
अथोपस्तीर्य सर्वश एव वैश्वानरमवदधदाहाग्नये वैश्वानरायानुब्रूहीति
द्विरभिघारयत्यत्याक्रम्याश्राव्याहाग्निं वैश्वानरं यजेति
वषत्कृते मध्ये जुहोत्यथैनँ स्रुवाहुतिभिरभिजुहोति सुवर्न घर्मः स्वाहेति
पञ्चभिरथ मारुतैः प्रचरति ५२

पर्युपस्तारं दर्विहोमाकारमीदृङ्चान्यादृङ्चेत्यनुद्रुत्य शुक्रज्योतिश्च
चित्रज्योतिश्चेति जुहोति
शुक्रज्योतिश्च चित्रज्योतिश्चेत्यनुद्रुत्य ऋतजिच्च सत्यजिच्चेति जुहोत्यृतजिच्च
सत्यजिच्चेत्यनुद्रुत्यर्तश्च सत्यश्चेति जुहोत्यृतश्च सत्यश्चेत्यनुद्रुत्य
योऽरण्येऽनुवाक्यो गणस्तमनुद्रुत्य जुहोति

योऽरण्येऽनुवाक्यो गणस्तमनुद्रुत्येदृक्षास एतादृक्षास इति जुहोतीदृक्षास
एतादृक्षास इत्यनुद्रुत्य मितासश्च संमितासश्च न इति जुहोति

मितासश्च संमितासश्च न इत्यनुद्रुत्येदृङ्चान्यादृङ्चेति जुहोति
तानभितो वैश्वानरं परिचिनोति
गणेन गणमनुद्रुत्य जुहोत्युच्चैर्वैश्वानरस्याश्रावयत्युपाँशु मारुताञ्जुहोतीति
ब्राह्मणम् ५३

अथैतं प्रसेकमग्नावायातयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं तस्य स्रुगिव
पूर्वार्धो भवत्येवमेव मध्यं चमस इव बुध्नस्
तस्मिँश्चतुर उपस्तृणान आहाप्रमत्तः संततमानय वसोर्धारां निगदिष्यामीति
स यत्र धाराग्निं प्राप्नोति तत्प्रतिपद्यतेऽग्नाविष्णू सजोषसेति सर्वामान्तं
वसोर्धाराम्
अत्रैतं प्रसेकमग्नावनुप्रहरत्यथैनँ सँस्रावेणाभिजुहोत्यथ यदाज्यमुच्छिष्यते
तस्मिन्ब्रह्मौदनं पचति
तं ब्राह्मणाश्चत्वारः प्राश्नन्ति
तेभ्यश्चतस्रो धेनूर्दद्यादिति ब्राह्मणम्
अथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति
तस्यौदुम्बरेण स्रुवेणोपधातं वाजप्रसवीयं जुहोति वाजस्येमं प्रसवः सुषुवे
अग्रे वाजो नः सप्त प्रदिश इति चतुर्दश स्रुवाहुतीरभिषेकाय प्ररेकं
परिशिनष्टयथैनमपिधाय प्रज्ञातं निदधात्यथ नक्तोषासेति कृष्णायै
श्वेतवत्सायै पयो जुहोत्
अथ षड्राष्ट्रभृतो जुहोत्यृताषाडृतधामेति
भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोत्यथ तिस्रो रुचो जुहोति यास्ते अग्ने
सूर्ये रुचो या वो देवाः सूर्ये रुचो रुचं नो धेहि ब्राह्मणेष्वित्यथ
पात्र्यामाज्यमानीयाञ्जलिनोपघातं वातनामानि जुहोति समुद्रोऽसि
नभस्वानार्द्रवानुः शंभूर्मयोभूरभि मा वाहि स्वाहा मारुतोऽसि मरुतां गणः
शंभूर्मयोभूरभि मा वाहि स्वाहावस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि
स्वाहेति
वातमु हैके जुह्वतो मन्यन्तेऽत्रैताञ्छाकलान्परिधीनग्नावनुप्रहरति
तदेतच्छाकलान्तम् ५४

अथ सदोहविर्धाने संमिनोति

सदोहविर्धाने संमित्याध्वरधिष्णियान्निवपति
तेषूपर्यग्निधिष्णियानुपदधाति ममाग्ने वर्चो विहवेष्वस्त्वित्याग्नीधीय एकां च याजुषीँ सप्त च लोकंपृणा अथ होतुर्धिष्णिय एकां चैव याजुषीमेकादश च लोकंपृणा अथेतरेष्वेकैकां चैव याजुषीँ सप्तसप्त च लोकंपृणा अथ मार्जालीय एकां च याजुषीं पञ्च च लोकंपृणा अथाग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति
तस्य प्रसिद्धं वपया चरित्वा वपाश्रपणी अनुप्रहृत्य वसतीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपति

तमनुवर्तन्तेऽष्टौ देवसुवाँ हवीँष्यग्नये गृहपतय इत्येतानि
तानि नानावघ्नन्ति
नाना श्रपयन्ति
नानाधान्यानि भवन्ति
प्रैषवाग्पशुपुरोडाशोऽनुब्रूहि यजेतीतरेषाँ हविषां स यत्र वारुणस्यावद्यन्नाह वरुणाय धर्मपतयेऽनुब्रूहीति तदुपभृति स्विष्टकृते सर्वेषाँ
सकृत्सकृदुत्तरार्धादवद्यति
द्विरभिघारयति
न प्रत्यनक्त्यत्याक्रम्याश्राव्याह वरुणं धर्मपतिं यजेति
वषट्कृते जुहोत्यथ वै भवत्यिष्टो वरुणो भवत्यनिष्टः स्विष्टकृदथास्य ब्रह्मा हस्तं गृह्णातीति
स यत्रेष्टो वरुणो भवत्यनिष्टः स्विष्टकृदथास्य ब्रह्मा हस्तं गृह्णाति   ५५

सविता त्वा प्रसवानाँ सुवतामग्निर्गृहपतीनाँ सोमो वनस्पतीनाँ रुद्रः पशूनां बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनामित्येतदेव सर्वं भवति ये देवा देवसुव स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायेत्यथैनं यजमानायतने तिष्ठन्तं प्राहैष वोऽमी राजेति येषाँ श्रेष्ठी भवति
सोमोऽस्माकं ब्राह्मणानां राजेतीतरे प्रत्याहुरथ भूर्भुवः सुवरिति वाचं विसृजते

द्वाभ्यां मुखं विमृष्टे प्रति त्यन्नाम राज्यमधायि सर्वे व्राता वरुणस्याभूवन्निति

गायत्रान्विष्णुक्रमान्क्रमते विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि
विष्णोर्विक्रान्तमसीत्यथ स्विष्टकृता चरति
न रौद्रस्येडामवद्यत्यपामेनमभ्यवहरन्ति गम्भिष्ठम्
इडान्ताः पुरोडाशाः संतिष्ठन्ते
पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येकेऽथ वसतीवरीः परिहृत्य पयाँसि
विशिष्योपवसन्ति ५६

अथातो महारात्र एव बुध्यन्ते
समानं कर्मा स्रुचाँ सादनात्
सादयित्वा स्रुचोऽग्निं योगेन युनक्त्यग्निं युनज्मीमौ ते पक्षौ चिदसि
समुद्रयोनिरिति तिसृभिरथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैति
यः क्रतुस्तमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय
यूपमभ्यैति
स्वर्वन्तं यूपमुत्सृज्यैकादशिनान्पशूनुपाकरोत्याग्नेयं कृष्णग्रीवँ सारस्वतीं
मेषीं बभ्रुँ सौम्यं पौष्णँ श्यामँ शितिपृष्ठं बार्हस्पत्यँ शिल्पं वैश्वदेवमैन्द्रमरुणं
मारुतं कल्माषमैन्द्राग्नँ सँहितमधोरामँ सावित्रं वारुणं पेत्वमिति
तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रतःसवनाय

तदृजुधा संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
स यत्र क्व च मध्यंदिनो भवति तदेतद्धिरण्यपात्रं मधोः पूरयित्वा सौर्या
चित्रवत्यावेद्याश्वमवघ्राप्य ब्रह्मणे ददाति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते

समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि हुत्वा त्रिभिर्मरुत्वतीयैश्चरति
सीदन्ति नाराशँसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो
माहेन्द्रायाथ पुरस्तादभिषेकस्य षट्पार्थानि जुहोत्यग्नये स्वाहा सोमाय
स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य सर्वौषधेन
पुरस्तात्प्रत्यञ्चमभिषिञ्चति
शीर्षतोऽभिषिञ्चत्या मुखादन्ववस्त्रावयति ५७

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो
यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि
बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणोऽमुष्य पुत्रोऽमुष्य
पौत्रोऽमुष्य नप्ताग्निसवेन इत्यथ भूर्भुवः सुवरिति वाचं विसृजते

द्वाभ्यां मुखं विमृष्टे
गायत्रान्विष्णुक्रमान्क्रमतेऽथोपरिष्टादभिषेकस्य षट्पार्थानि जुहोति ५८

इन्द्राय स्वाहा घोषाय स्वाहेति
द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यृजुधा
माध्यंदिनँ सवनँ संतिष्ठते
प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति
तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः
समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो नाना
दिश इत्येके
समानं कर्मा यज्ञायज्ञियस्य स्तोत्राद्यज्ञायज्ञियस्य स्तोत्र एकयाप्रस्तुतं
भवत्यथाग्निमभिमृशति नमस्ते अस्तु मा मा हिँसीरुद्नो दत्तोदधिं भिन्त्तेति
द्वाभ्यां समानं कर्मा पत्नीसंयाजेभ्यः

पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याध्वरिकाणि समिष्टयजूँषि हुत्वा
दशाग्निकान्युपजुहोति यदाकूतात्समसुस्रोदिति
समानं कर्मावभृथादथैतस्मिन्नवभृथे द्वितीयामवभृथाहुतिं जुहोति समुद्राय
वयुनाय सिन्धूनां पतये नम इति
प्रसिद्धोऽवभृथ उदयनीयेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति

तस्यै मैत्रावरुण्यामिद्वाध्यवदानीया भवति
सर्वसँस्थां पशोः कुर्वन्त्यथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं
गृहीत्वाज्यस्य पूर्णाँ स्रुचमग्नेर्विमोकं जुहोतीमँ स्तनमूर्जस्वन्तं
धयापामित्यथैनमुपतिष्ठते येऽग्नयः पुरीष्या इत्यथैनमाप्तिभिरुपतिष्ठत आपं
त्वाग्ने मनसेति नवभिरनुच्छन्दसम्
अथोदवसानीयया यजतेऽथ देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ
सौत्रामण्या यजते
संवत्सरं न कंचन प्रत्यवरोहति
न शीर्षमाँसं खादति न वयसां माँसं नाग्निं चित्वा
रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि धावेदुपावर्तेतान्नाद्यमेवाभ्युपवरत इति
ब्राह्मणम् ५९

एकादशः प्रश्नः

वाजपेयेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनँ सुवर्णरजतौ च
रुक्मौ बस्ताजिनँ शतमानँ हिरण्यँ सप्तदश सुवर्णानि कृष्णलानि हिरण्यपात्रं
मधोः पूर्णमौदुम्बरँ रथचक्रँ सप्तदशारँ सप्तदशफलकां च श्रितिं यूपं च तूपरं
चतुरश्रिँ सप्तदशारत्निं गोधूमकलापीमुष्णीषं नैवारँ सप्तदशशरावँ
सप्तदशोषपुटान्सप्तदश वायव्यानि सप्तदश पृथुबुध्नानुपयामान्सतं च वालं
च सप्तदश निष्कान्सप्तदश वसनानि सप्तदश वासोभारान्सप्तदश
रथान्सप्तदश दुन्दुभीन्सप्तदश हस्तिनः सप्तदश दास्यः सप्तदशानाँसि
युक्तानि सप्तदश गवाँ शतानि वयसोवयसो वा सप्तदश सहस्रं वा
तस्मिन्हि सर्वाणि वयाँसि भवन्ति
चतुर्विँशतिं पशूनेकपञ्चाशतमश्वान्खादिरीं वितृण्णीं वध्रैर्व्यूताम्प्रज्ञाता
आग्निष्टोमिकाः सम्भाराः

स ग्रीष्मस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षते

तस्य त्रयोदश दीक्षास्तिस्र उपसदः सप्तदश्यां प्रसुतोऽपि वा सप्तदश दीक्षास्तिस्र उपसद एकविँशत्यां प्रसुतोऽपि वा तिस्र एव दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः १

अथ वै भवति
सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति
दीक्षणीयां निर्वप्स्यन्सावित्रं जुहोति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः स्वाहेति
दीक्षाहुतीर्होष्यन्सावित्रं जुहोति
प्रायणीयां निर्वप्स्यन्सावित्रं जुहोत्यन्तर्हिरण्याँ होष्यन्सावित्रं जुहोति
पदेन चरति
पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वप्स्यन्सावित्रम्जुहोति
प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्यन्सावित्रं जुहोत्येतस्मिन्काले प्रतिप्रस्थाता दक्षिणे शालाखण्डेऽवटं खानयित्वा वाजपेयसुराँ संधापयति
महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं जुहोत्याहवनीयं प्रणेष्यन्सावित्रं जुहोति
रथवाहने सदोहविर्धाने संमेष्यन्सावित्रं जुहोत्यग्नीषोमौ प्रणेष्यन्सावित्रं जुहोतीति

दशान्तःशालमहौषीदथात आग्नीध्र एव होष्यति
यूपमुच्छ्रयिष्यन्सावित्रं जुहोति
यदाध्वर्युश्च यजमानश्च पुरस्तात्प्रत्यञ्चावञ्जन्तावभिसर्पतोऽथ प्रतिप्रस्थाता पश्चात्प्राङ्वासोभिर्वेष्टयन्नभिसर्पत्युदीचीनदशैर्वा विग्रथ्नाति धनुर्वेष्टीर्वा प्रवेष्टयत्येतस्मिन्काले प्रतिप्रस्थाता गोधूमकलापीमुभयतः समां कृत्वोष्णीषेण विग्रथ्नाति
तस्यां तक्षेष्टन्ति यक्षषाले
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यम्सावित्रं जुहोति

तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोति
पशुपुरोडाशं निर्वप्स्यन्सावित्रम्जुहोत्यनुसवनं त्रीणि
तानि सप्तदशापि वा सवनेसवन एव जुहुयादित्येतदपरम्
अथ पशुपुरोडाशं निर्वपति
तमनुवर्तन्तेऽष्टौ देवसुवाँ हवीँष्यग्नये गृहपतय इत्येतानि तेषामुक्तं चरणं
यथाग्नेर्विधायाम्
इडान्ताः पुरोडाशाः संतिष्ठन्ते

पत्नीसंयाजान्तः पशुर्
हृदयशूलान्त इत्येकेऽत्रैतान्दुन्दुभीननुदिशमासञ्जयति पञ्च दक्षिणायाँ श्रोणयां
पञ्चोत्तरस्यां चतुरो दक्षिणेऽँसे त्रीनुत्तरेऽँसे तथा हास्मै दिग्भयो वाचमवरुन्धत
इति ह स्माह बौधायनोऽग्रेणाग्नीध्रं गुल्मकृता आसक्ताः स्युरित्याञ्जीगविर्

अभितः सद इति कात्यः
अथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्ति २

अथातो महारात्र एव बुध्यन्ते
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यपो हाध्वर्युरभिद्रवत्येतस्मिन्काले
प्रतिप्रस्थाता वाजपेयसुराँ संपवय्य सशस्त्रामादाय दक्षिणया द्वारोपनिर्हृत्य
दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्यापरया द्वारया
हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य
पश्चादक्षमुपसादयत्यथाध्वर्युरद्भिरुदैति
सर्वान्क्रतूनुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहाद्
आग्रयणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृह्णात्युपयामगृहीतोऽसि नृषदं त्वा
द्रुषदमित्येताभिः पञ्चभिर्
अथैनान्दक्षिणार्धपूर्वार्धे खरस्य गुल्मकृतान्सादयति

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता सत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतँ सोमँ सूर्यस्य दुहिता वारेण शश्वता तनेति वायव्यमेवाध्वर्युरादत्त उपयामं प्रतिप्रस्थाताध्वर्युः पूर्वो वायव्येन द्रोणकलशात्सोमग्रहान्गृह्णात्यया विष्ठा
जनयन्कर्वराणीत्यनुद्रुत्योपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथ प्रतिप्रस्थातोपयामेन सतात्सुराग्रहान्गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसि प्रजापतये त्वेति गृह्णाति
प्रजापतये त्वेति सादयति नैव जुष्टं करोति न योनिं तावेवमेव व्यतिषङ्गं ग्रहान्गृह्णीतः सप्तदशेतरः सप्तदशेतरः
पुरोऽक्षमेवाध्वर्युः सोमग्रहान्द्विश्रेणि वा त्रिश्रेणि वोदीच आयातयति पश्चादक्षं प्रतिप्रस्थाता सुराग्रःन्द्विश्रेणि वा त्रश्रेणि वोदीच आयातयत्यथ षोडशिनं गृह्णात्यातिष्ठ वृत्रहन्रथमित्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति
समानं कर्माश्विनाद्ग्रहाद्

आश्विनं ग्रहं गृहीत्वा षड्रशना आडाय यूपमभ्यैति
स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमैन्द्रं मारुतीं गोवशाँ सप्तदश प्राजापत्यान्छ्यामानेकरूपान्सारस्वतीमन्ततः
अथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति
प्रहत्याभिहुत्याथैतान्नानादेवत्यान्पशून्पृथग्द्विगुणाभिरभिधाय पृथक्त्रिगुणासु नियुनक्त्यथैतान्समानदेवत्यान्पशून्पृथग्द्विगुणाभिरभिधायैकस्यां यूप्ययाम्नियुनक्त्यपि वा पशौ पशुं प्रसजति
सारस्वतीमन्ततो नियुज्याथैनान्प्रोक्ष्य निपाय्योपोक्ष्योदूह्य प्रोक्षणीधानम् ३

अथेध्मात्समिधमाददान आहाग्नये
समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मम्परि समिधँ शिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति

संमृष्टे स्त्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्त्रुचावुदङङत्याक्रम्य जुह्वा पशून्समज्य सादयित्वा स्त्रुचौ
प्रवरं प्रवृणीते
प्रसिद्धमृत्विजो वृणीते
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्त्रुचावादायात्याक्रम्याश्राव्याह समिद्धः प्रेष्येति
वषट्कृते जुहोति प्रेष्य प्रेष्येति
चतुर्थाष्टमयोः समानयमानोऽष्टमे सर्वँ समानयते
परि स्वाहाकृतीभ्यः सँस्रावँ शिनष्टि
दश प्रयाजानिष्ट्वोदङङत्याक्रम्य स्वरुशासैः पशून्समनक्ति

त एते नानादेवत्याः पशवो नानास्वरवो नानाशासा अथैते समानदेवत्याः
पशवः समानस्वरवो नानाशासाः
समानं कर्मा पर्यग्निकरणादथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते
तेषाँ सारस्वत्युत्तरार्ध्या भवत्याग्नेय उपचारत
आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगितरान्परिकर्मिण उदञ्चो
नयन्त्यनुपूर्वमव्यतिषजन्त
आग्नेयायैवाध्वर्युः पशवे निहन्यमानाय बर्हिरुपास्यति पृथगितरेभ्यस्
तत इतरान्प्राचो वोदीचो वा निघ्नन्त्यकृणवतो मायून्संज्ञपयतेत्युक्त्वैतेनैव
यथेतमेत्य पृषदाज्यावकाश आसत इह प्रजा विश्वरूपा रमन्तामस्मिन्यज्ञे
विश्वविदो घृताचीः । अग्निं कुलायमभिसंवसाना अस्माँ वन्तु पयसा
घृतेनेति
संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायूनकृषतेत्यथाभ्यैति शमितार
उपेतनेति
पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति
पृथगविशाखाभिरुपसज्येमां दिशं निरस्यत्यरातीयन्तमधरं कृणोमि यं
द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानिति ४

अथ प्रतिप्रस्थाता पत्नीमुदानयत्युदकमण्डलुमुत्थाप्य

सानुपूर्वं पशूनां प्राणानाप्याययत्यन्वगध्वर्युर्वपा
उत्खिदन्नेत्याग्नेयस्यैवाध्वर्युर्वपया प्रथमया प्रतिपद्यतेऽनूचीरितरा
आहरन्त्याग्नेयस्यैव वपायै प्रतितप्यमानायै बर्हिषोऽग्रमुपास्यत्युपेतरा
यच्छन्त्याग्नेयस्यैव वपाँ स्रुवाहुत्याभिजुहोत्युपेतरा यच्छन्त्यथ
स्वाहाकृतिप्रैषेण चरित्वा सँस्रावेण पृषदाज्यमभिघार्याग्नेयस्यैव
वपामभिघारयत्युपेतरा यच्छन्त्यथ पुरस्ताद्स्वाहाकृतिँ स्रुवाहुतिँ
हुत्वाथैतेषां नानादेवत्यानां पशूनामनुब्रूहि प्रेष्येति वपाभिश्चरत्यथैतेषाँ
समानदेवत्यानां पशूनां मुख्यस्य वपाँ समवलुम्पन्नाह प्रजापतय इत्युपाँ शु
छागानां वपानां मेदसोऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः
स्रुक्संभवत्यथेतराः पात्र्या वेडसूनेन वोपोद्यच्छन्ते
द्विरभिघारयत्यत्याक्रम्याश्राव्याह प्रजापतय इत्युपाँ शु छागानां वपां मेदः
प्रस्थितं प्रेष्येत्युच्चैर्
वषट्कृते वपा जुहोत्युपाँ शु सारस्वत्यै वपया चरत्यथोपरिष्टात्स्वाहाकृतिँ
स्रुवाहुतिँ हुत्वा वपाश्रपणीरनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्तेऽथ
पशून्विशास्ति शमितरित्याह यन्मारुत्या अनवदानीयं
तदभ्यर्धाच्छ्रपयतादित्यथ सावित्रँ हुत्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते ५

अथ सावित्रँ हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारवित्यत
एवोर्ध्वेन संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह चात्वाले रथचक्रं निमिनुत
रथवाहने रथमाधत्ताश्वान्पल्पूलयत यद्वास्यन्नसि तद्दक्षिणात
उपस्थापयाभिषोतार एत ह्वयत ग्रावस्तुतमेहि यजमानेति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहाद्
आग्रयणं गृहीत्वा षोडशिनमभिगृह्णातीन्द्रमिद्धरी वहत
इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्य
सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्य्
अथोक्थ्यं गृह्णाति
समानं कर्मा दाक्षिणेभ्यो

दाक्षिणानि होष्यन्याचत्याज्यस्थालीँ सस्रुवाँ स्रुचं वासस्
तस्यैतस्य वसनस्यान्तमायां दशायां निष्करज्जुः प्रग्रथिता
भवत्येतत्समादायाहैहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः
परीत्याग्रेण शालां तिष्ठते प्रतिप्रस्थात्र एतानि शस्त्राणि प्रयच्छत्यथाहैहि
यजमानेति
रथ एष दक्षिणे श्रोणयन्ते रथवाहन आहितो भवति
तमुपावहरतीन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं
धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति वाजस्य नु प्रसवे मातरं महीमदितिं नाम
वचसा करामहे यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता
धर्म साविषदित्यथाप्स्वश्वान्पल्पूलयत्यप्स्वन्तरमृतमप्सु भेषजमपामुत
प्रशस्तिष्वश्वा भवथ वाजिन इत्यथ दक्षिणं योग्यं युनक्ति वायुर्वा त्वा
मनुर्वा त्वा गन्धर्वाः सप्तविँशतिः । ते अग्रे अश्वमयुञ्जन्ते
अस्मिञ्जवमादधुरित्य्
अथास्य पृष्ठं मर्मृज्यतेऽपां नपादाशुहेमन्य ऊर्मिः
ककुद्मान्प्रतूर्तिर्वाजसातमस्तेनायं वाजँ सेदित्येवमेवोत्तरं योग्यं युनक्ति
तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति तयोरेवमेव पृष्ठे मर्मृज्यत
एतस्य योगमनु सर्वमाणिवद्युज्यतेऽधिकक्ष्यान्हस्तिनः कुर्वन्ति
प्रवेष्टयन्ति वासोभारान्वसनानां दशासु निष्करज्जूः प्रग्रथ्नन्ति
पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति
नयवत्यर्चाग्नीध्रे जुहोति
सृज्यन्ते दक्षिणा दक्षिणापथेन
स यत्किंचिद्ददाति हिरण्यमुखमेव ददात्यथ वासाँ सनाँ सि युक्तानि
गोअश्वँ हस्तिपुरुषमन्ततोऽदत्ता एवैते रथा अतिवर्तन्ते
नैतेऽन्यस्य सन्त आजिं धावन्ति
मनसैव स्वरथमध्वर्यवे ददाति मनसा समनुदिश्य दक्षिणास्
त्रिभिर्मरुत्वतीयैश्चरति
सीदन्ति नाराशँ सा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो
माहेन्द्राय ६

अथ याचति नैवारँ सप्तदशशरावं स एष क्षीरे शृतो भवति

तेन चरति बृहस्पतयेऽनुब्रूहि बृहस्पतिं यजेति
तमनिष्टस्विष्टकृतमपिधाय प्रज्ञातं निदधात्यथास्यैतत्पुरस्तादेवौदुम्बरे द्रोणे सर्वौषधं दध्नाज्येन समुदायुतं भवति
तस्यौदुम्बरेण स्रुवेणोपघातँ सप्तान्नहोमाञ्जुहोति वाजस्येमं प्रसवः सुषुवे अग्र इत्यभिषेकाय प्रेरेकं परिशिनष्ट्यथैनमपिधाय प्रज्ञातं निदधात्यथ पुरस्तादभिष्कस्य षट्पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवं उत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य सर्वौषधेन पुरस्तात्प्रत्यञ्चं अभिषिञ्चति
शीर्षतोऽभिषिञ्चत्या मुखादन्ववस्रावयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामि बृहस्पतेस्त्वा साम्राज्येनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता वाजपेयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते
द्वाभ्यां मुखं विमृष्टे
गायत्रान्विष्णुक्रमान्क्रमतेऽथोपरिष्टादभिषेकस्य षट्पार्थानि जुहोतीन्द्राय स्वाहा घोषाय स्वाहेति

द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यत्रैतस्य बार्हस्पत्यस्य स्विष्टकृता चरत्यथैनं आदायान्तरेण चात्वालोत्करावुन्दङ्ङुपनिष्क्रामत्युत्तरत एते रथा युक्तास्तिष्ठन्ति
तदेतान्यजुर्युजोऽश्वानवघ्रापयति वाजिनो वाजजितो वाजँ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमवजिघ्रतेत्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथमभिप्रैति विष्णोः क्रमोऽसि विष्णोः क्रान्तं असि विष्णोर्विक्रान्तमसीत्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यविति
रथमातिष्ठति देवस्याहँ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषमित्येतस्मिन्काले रथचक्रं निमितं ब्रह्मारोहति
तमत एवानुमन्त्रयते देवस्याहँ सवितुः प्रसवे बृहस्पतिहा वाजजिता वर्षिष्ठं नाकँ रुहेयमित्यथ यजमानमन्वास्थायोज्जितीर्वाचयत्यग्निरेकाक्षरेण

वाचमुदजयदिति सप्तदशाथास्मा अश्वाजिनीं प्रयच्छत्यश्वाजनि वाजिनि
वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजयेति
तया यथायुक्तमश्वान्क्षिपत्य्
अर्वासीति दक्षिणं सप्तिरसीति मध्यमम्वाज्यसीत्युत्तरम्
अथैतानाजिसृतोऽवख्यापयति वाजिनो वाजं धावत मरुतां प्रसवे जयत वि
योजना मिमीध्वमध्वन स्कभ्नीत काष्ठां गच्छतेत्यौदुम्बर्येषा स्थूणा
सप्तदशसु शम्याप्रव्याधेषु निमिता
तां काष्ठेत्याचक्षते तामाजिसृतोऽतीत्य मा गच्छत मो एनामप्राप्य
निवृततान्तःपक्षसमेनां कृत्वा सव्यानवगृह्य दक्षिणैरनुपरिवर्तयाध्वै मो
अप्रसूताः सर्पतेति ७

अथाहाभिसर्प यजमान माहेन्द्रं ग्रहं ग्रहीस्यामीत्यन्वारब्धे यजमाने माहेन्द्रं
ग्रहं गृह्णाति महाँ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा
जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेति
तदेतान्पञ्चैन्द्रानतिग्राह्यान्सह सँसादयत्यथाप उपस्पृश्य बर्हिषी आदाय
वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते माहेन्द्राय

प्रस्तुते साम्नि संप्रैषमाह ब्रह्मन्वाजिनाँ साम गयाजिसृत आजिं धावत
दुन्दुभीन्समाघ्नताभिषोतारोऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वादय
प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति
यथासंप्रैषं ते कुर्वन्ति
गायति ब्रह्मा वाजिनाँ साम
तं य एव कश्च परिकर्म्यावेष्टयति
धावन्त्याजिसृत
आघ्नन्ति दुन्दुभीन्
संप्रवदन्ति वाचः
संप्रोदिता वाचोऽनुमन्त्रयत इन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो
वाजमजयिदित्यथ रथान्धावतोऽनुमन्त्रयते वाजेवाजेऽवत वाजिनो न इति
चतसृभिरनुच्छन्दसं शाम्यन्ति घोषाः शस्त्राय

होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युर्
अभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहम्
अनूद्यच्छन्त इतरान्
उपोद्यच्छन्ते नाराशँसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति

वषट्कृते जुहोति
तदेतान्पञ्चैन्द्रानतिग्राह्यान्सह जुह्वति
वषट्कृतानुवाषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँसाननुप्रकम्पयन्ति
द्विर्हुतो माहेन्द्रः परिशेत
आयन्ति रथा
आगतान्रथान्दृष्ट्वा याचत्याज्यस्थालीँ सस्रुवां स यद्यस्मै रथप्रेषमाचक्षत
आग्नीध्र एतां जुहोत्युत स्मास्य द्रवतस्तुरण्यत इत्युभयेनैव
रथविमोचनीयं जुहोत्या मा वाजस्य प्रसवो जगम्यादिति ८

अथ याचति नैवारँ सप्तदशशरावँ सप्तदश सुवर्णानि कृष्णलानि हिरण्यपात्रं मधोः पूर्णमित्येतत्समादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत एते रथा युक्तास्तिष्ठन्ति
तदेतान्यजुर्युजोऽश्वानवघ्रापयति वाजिनो वाजजितो वाजँ ससृवाँसो वाजं जिगिवाँसो बृहस्पतेर्भागे निमृड्ध्वमित्यथैनमपिधाय प्रज्ञातं निदधात्यथ रथान्विमुच्यमानाननुमन्त्रयत इयं वः सा सत्या संधाभूद्यामिन्द्रेण समधद्ध्वमिति
दुन्दुभीनवस्यतोऽनुमन्त्रयतेऽजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वमिति तदेतं यजुर्युजँ रथं विमुञ्चति यथादत्तमितरान्व्यावर्तयन्त्युपसंगच्छन्त एनमेत आजिसृतस्

तेभ्य एकैकं कृष्णलं व्युत्प्रयच्छति
तानि साधँ समादाय हिरण्यपात्रं मधोः पूर्णमित्येकधा ब्रह्मण उपहरति  ९

तद्ब्रह्मा प्रतिगृह्योपावरोहत्यथाहाजिसृतो दक्षिणापथेनोपातीत्य दक्षिणाँ श्रोणिमभिनिश्रयध्वं मारुता अग्रेणाहवनीयं परीत्य दक्षिणमँ समुपसँश्रयध्वमिति
तदेनान्विमिताभ्यामभिविघ्नन्त्यथाहैहि यजमानेति
पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानँ सोमग्रहानुपस्थापयति  १०

संपृच स्थ सं मा भद्रेण पृङ्क्तेति
विपृच स्थ वि मा पाप्मना पृङ्क्तेति सुराग्रहान्
अथैताँ सुराँ सप्रेकामादायैताँश्च सुराग्रहानाजिसृद्भ्य उपहरन्ति
तां ते पिबन्तो रममाणा महीयमाना आसतेऽत्र यन्मारुत्या अनवदानीयं
तदुभयानन्तरेण पर्णशाखासु न्यस्यति
तत्समुत्क्रुश्य विमाथीकुर्वतेऽथ याचत्याज्यस्थालीँ सस्रुवां तार्प्यं
दर्भमयमित्येतत्समादायाहैहि यजमानेत्यन्वग्यजमानोऽनूची पत्न्याहवनीये
जुहोत्यन्वारब्धे यजमाने वाजश्च प्रसवश्चेति द्वादश स्रुवाहुतीरथ यजमानं
तार्प्यं परिधापयति क्षत्रस्योल्बमसीति
क्षत्रस्य योनिरसीति दर्भमयं पत्नीम्

अथैताँ श्रितिं यजमानायतनात्प्राचीं वोदीचीं वा यूपमभ्यायातयत्यथ
जायामामन्त्रयते जाय एहि सुवो रोहावेति
रोहाव हि सुवरितीतरा प्रत्याहाहं नावुभयोः सुवो रोक्ष्यामीति यजमानस्
त्वं नावुभयोः सुवो रोहेति पत्नी
तां दशभिः कल्पै रोहत्यायुर्यज्ञेन कल्पतामित्यान्तं गत्वा बाहू उद्गृह्णाति
सुवर्देवाँ अगन्मामृता अभूम प्रजापतेः प्रजा अभूमेत्यथेमं लोकं प्रत्यवेक्षते
समहं प्रजया सं मया प्रजा समहँ रायस्पोषेण सं मया रायस्पोष
इत्यथैनामुपावरोहति स यावति मन्यत एतावति मोदाप्स्यन्तीति
तदेनमासपुटैर्घ्नन्ति  ११

अन्नाय त्वेति पुरस्तादध्वर्युरन्नाद्याय त्वेति दक्षिणतो ब्रह्मा वाजाय त्वेति पश्चाद्धोता वाजजित्यायै त्वेत्युद्गातोत्तरतो
यद्यु वा एते न कामयन्तेऽध्वर्युरेव पुरस्ताद्धन्ति दक्षिणतः प्रतिप्रस्थाता पश्चादाग्नीध्र उन्नेतोत्तरतस्

तेषां तथा विभागो यथा दुन्दुभीनाम्
अत्रास्मै प्रत्यवरोहणत आसन्दीं निदधाति
तस्यां बस्ताजिनमास्तृणाति बस्ताजिने शतमानँ हिरण्यम्
अथ दक्षिणं पादँ हिरण्य उपावरोहत्यमृतमसीति
पुष्टिरसि प्रजननमसीति सव्यं बस्ताजिनेऽथैनमेतयासन्द्या सद आवहन्त्या वा व्रजत्यन्वायन्त्येनमेते चमसा
अत्रैतस्य बार्हस्पत्यस्येडामुपह्वयत
इडोपहूतं माहेन्द्रँ होता चैवाध्वर्युश्च संभक्षयतो नराशँ सपीतेन नाराशँ सान्
अत्रैतेषामतिग्राह्याणां मुख्ये पात्रे सँस्रावान्समवनीय यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वश एव चमसेषु व्यवनीय भक्षयेयुरित्येतदपरं
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति
संतिष्ठते माध्यंदिनँ सवनम् १२

अथ सावितँ हुत्वा प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र त इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामम्पशुभिश्चरति
तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो

नाना दिश इत्येके
समानं कर्मा ध्रुववद्भ्यश्चमसेभ्यो
ध्रुववद्भिश्चमसैश्चरित्वा
तिर्भिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्य
थ षोडशिना चरत्यथ प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वश एव
राजानमुन्नय मातिरीरिच इति
होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्ति
तदेतान्प्राजापत्यान्सह सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः
प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति

स्तुवते
तदेतद्बृहत्षमैकविँशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युर्
अभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतँ होतृचमसम्
अनूद्यच्छन्त इतरान्
उपोद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृते जुहोति
तदेतान्प्राजापत्यान्सह जुह्वति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्षः
प्रजापतिना पीतस्येत्यत्रैतेषां प्राजापत्यानां मुख्ये पात्रे सँस्रावान्समवनीय
यजमान एव प्रत्यक्षं भक्षयत्यपि वैनान्सर्वश एव चमसेषु व्यवनीय
भक्षयेयुरित्येतदपरम्
अत्र यन्मारुत्या अनवदानीयं तदृत्विग्भ्य उपहरति

तदेतत्समावच्छो विभज्य प्राश्नन्ति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद
ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढ
ीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गारांस्तानग्रेण होतारं
निवपत्युपसीदत्युपयष्टा गुदतृतीयैर्
अत्रैतानि गुदतृतीयान्येकादशधा कृत्वोपयष्टोपयजति
समानमत ऊर्ध्वं संतिष्ठते वाजपेयो
वाजपेयेनेष्ट्वा प्रत्यवरोहणीयेनाग्निष्टोमेन यजेत
संतिष्ठते वाजपेयः संतिष्ठते वाजपेयः १३

द्वादशः प्रश्नः

राजसूयेन यक्ष्यमाणो भवति
स पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्या आमावास्येन हविषेष्ट्वा दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः
संतिष्ठत एष प्रायणीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण
उदवसानीयान्तोऽथाष्टमेऽह्नयानुमतं निर्वपति
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य दक्षिणार्धे गार्हपत्यस्याष्टौ
कपालान्युपदधात्येकं प्रतिप्रस्थातोत्तरतो नैर्ऋताय
हविःपेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवशातयन्ती पिण्ड्ढीति
स ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समुप्य संयुत्यानुमतँ श्रपयत्यथ
ये प्रत्यञ्चः शम्याया अवशीयन्ते तान्प्रतिप्रस्थाता समुप्य संयुत्य नैर्ऋतँ
श्रपयत्याददत एतं नैर्ऋतमुपस्तीर्णाभिघारितं कृष्णं वासः
कृष्णतूषमन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय गार्हपत्ये स्रुवाहुतिं
जुहोति वीहि स्वाहाहुतिं जुषाण इत्यथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं
यन्ति यत्रास्य स्वकृतमिरिणँ स्पष्टं भवति प्रदरो वा

तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्याङ्गुष्ठाभ्यां परिगृह्य नैर्ऋतं जुहोत्येष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममँ हसः स्वाहेत्यत्र कृष्णं वासः कृष्णतूषं ददात्यथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति हस्तपादान्प्रक्षाल्यैतेनैव यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति स्वाहा नमो य इदं चकारेत्यथानुमतेन सँस्थां करोति
धेनुं ददाति १

अथ नवमेऽहन्यादित्यं चरुं निर्वपति
वरं ददात्यथ दशमेऽहन्याग्नावैष्णवमेकादशकपालम्वामनं वहिनं ददात्यथैकादशेऽहन्यग्नीषोमीयमेकादशकपालं हिरण्यं ददात्यथ द्वादशेऽहन्यैन्द्रमेकादशकपालम्
ऋषभं वहिनं ददाति
अथ त्रयोदशेऽहन्याग्नेयमष्टाकपालमैन्द्रं दध्यृषभं वहिनं ददात्यथोपातीत्याग्रयणहवींषि चतुर्दशेऽह्नि सरस्वत्यै चरम्वत्सतरीं ददात्यथ पञ्चदशेऽह्नि सरस्वते चरुम्वत्सतरं ददाति
यद्यु वै चतुर्दश्यामेवोपवसथः संपद्यत एवमेवैतदहरेताभ्यामिष्टिभ्यां नानाबर्हिर्भ्यां यजेताथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्ति वैश्वदेवं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ श्वो भूते वैश्वदेवहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ श्वो भूत इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपत्यभिहितो रथ उभाकाँ स्यकवचो गर्भिणीभिर्वा वडबाभिर्युक्तः साण्डैर्वाश्वैरावेष्ट्यो निष्कस्तद्ददात्यथ श्वो भूत इन्द्रायाँ होमुचे पुरोडाशमेकादशकपालं निर्वपत्यनभिहितो रथोऽकाँ स्यकवचोऽगर्भाभिर्वा वडबाभिर्युक्तो निरष्टैर्वाश्वैः श्लक्ष्णको निष्कस्तद्ददाति २

एते संतनी इत्याचक्षतेऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते
स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानश्चतुरो मास एति काममिष्ट्या कामं पशुबन्धेन कामं यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्ट्येष्ट्वा वरुणप्रघातहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ श्वो

भूते संतनीभ्यामेव प्रतिपद्यते
स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानोऽपराँश्चतुरो मास एति काममिष्ट्वा कामं पशुबन्धेन कामँ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्टयेष्ट्वा साकमेधहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते
स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानोऽपराँश्चतुरो मास एति काममिष्ट्या कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु संतन्येष्टयेष्ट्वा शुनासीरीयहविर्भिरिष्ट्वा पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ श्वो भूते संतनीभ्यामेव प्रतिपद्यते
स एवमेव संतनीभ्यामहरहर्विपर्यासं यजमानः सप्ताहान्येति काममिष्ट्या कामं पशुबन्धेनाथाष्टमेऽह्नीन्द्रतुरीयमाग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुम्
अन्वाहार्यमासाद्य वहिनीं धेनुं ददाति ३

अथ तदानीमेव पञ्चेध्मीयेन प्रतिपद्यते
पञ्चधाङ्गारान्निरूह्य पञ्चेध्मानभ्यादधाति पर्णमयं पुरस्तान्नैयग्रोधं दक्षिणत आश्वत्थं पश्चादौदुम्बरमुत्तरात्प्लाक्षं मध्येऽथैनानाज्येन व्याघारयति ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ये देवा दक्षिणसदो ये देवाः पश्चात्सदो ये देवा उत्तरसदो ये देवा उपरिषद इत्य्
अथोपवेषेणाङ्गारान्समूहति समूढँ रक्षः संदग्धँ रक्ष इदमहँ रक्षोऽभिसंदहामीत्यथैनान्स्रुवाहुतिभिरभिजुहोत्यग्नये रक्षोघ्ने स्वाहेति पञ्चभिरत्र प्रष्टिवाहिनँ रथं ददात्यथ याचति पर्णमयँ स्रुवमपामार्गसक्तून्प्रतिवसनीयं वासोऽन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादायोदञ्चो निष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणँ स्पष्टं भवति प्रदरो वा
तदेतदेकोल्मुकमुपसमाधाय संपरिस्तीर्य पर्णमयेन स्रुवेणापामार्गसक्तूञ्जुहोति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ रक्षसो वधं जुहोमि स्वाहेति
हतँ रक्ष इति स्रुवमनुप्रहरत्यवधिष्म रक्ष इत्युपतिष्ठतेऽत्र यद्वस्ते

तद्ददात्यथापो व्यतिषिच्य परास्य पात्रमनवेक्षमाणा आयन्ति
हस्तपादान्प्रक्षाल्यैतेन यथेतमेत्येन्द्रतुरीयेण सँस्थां करोत्यथ नवमेऽह्नि
पूर्वाणि देविकाहवींषि निर्वपत्यनुमत्यै चरुँ राकायै चरुं धात्रे पुरोडाशं
द्वादशकपालमित्यन्वाहार्यमासाद्य वत्सतरीं ददात्
अथ दशमेऽह्नयुत्तराणि देविकाहवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं
धात्र एव पुरोडाशं द्वादशकपालमित्यन्वाहर्यमासाद्य वत्सतरं
ददात्यथैकादशेऽह्नि त्रिषंयुक्तैः प्रतिपद्यत आग्नावैष्णवं
निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालम्वामन मृषभं वहिनं
ददात्यथ द्वादशेऽह्नयग्नीषोमीयमेकादशकपालं
निर्वपतीन्द्रासोमीयमेकादशकपालँ सौम्यं चरुम्बभ्रुं ददात्यथ त्रयोदशेऽह्नि
सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं श्यामं ददात्यथ
चतुर्दशेऽह्नि वैश्वानरं द्वादशकपालं निर्वपति
हिरण्यं ददात्यथ पञ्चदशेऽह्नि वारुणं यवमयं चरुम्
अश्वं ददाति ४

अथैनमामावास्येन हविषेजानँ रत्निनः पर्यवस्यन्ति दक्षिणतो वोदञ्चो पश्चाद्वा
प्राञ्चस्
तेषामवसितानां ब्रह्मैव दक्षिणाध्र्यो वापराध्र्यो वा भवति
स यत्किंच यज्ञपरिभोजनं ब्रह्मण एव तद्गृहे भवत्यथारण्योरग्नीन्समारोह्य
ब्रह्मणो गृहानध्यवसाय मथित्वाग्नीन्विहृत्य बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो
गृहे

शितिपृष्ठं ददात्यथारण्योरग्नीन्समारोह्य स्वान्यग्न्यायतनान्यभिप्रव्रजति
तं यन्तमनुमन्त्रयतेऽयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यादित्यथ
स्वान्यग्न्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्राय सुत्राम्णे
पुरोडाशमेकादशकपालं प्रतिनिर्वपत्यथास्यैतदहः श्वेतायै श्वेतवत्सायै पयो
दोहयित्वा समातच्य निदधात्यथ श्वो भूतेऽरण्योरग्नीन्समारोह्य राजन्यस्य
गृहानध्यवसाय मथित्वाग्नीन्विहृत्यैन्द्रमेकादशकपालँ राजन्यस्य गृह ऋषभं
ददाति
तथारण्योरग्नीन्समारोह्य स्वान्येवाग्न्यायतनान्यभिप्रव्रजति

तं तथैव यन्तमनुमन्त्रयते
यस्ययस्य गृहे यजते ससोऽनुमन्त्रयतेऽयं नो राजा वृत्रहा राजा हूत्वा वृत्रं वध्यादित्यथ स्वान्येवान्यायतनान्यध्यवसाय मथित्वाग्नीन्विहृत्येन्द्रायाँ होमुचे पुरोडाशमेकादशकपालं प्रतिनिर्वपति
प्रजातमेवास्यैतदहः श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्यैव निदधात्यथ तृतीयेऽह्नयादित्यं चरुं महिष्यै गृहे
धेनुं ददात्यथ चतुर्थेऽह्नि भगाय चरुं वावातायै गृहे
विचित्तगर्भां पष्ठैहीं ददात्यथ पञ्चमेऽह्नि नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं
कृष्णां कूटां ददात्यथ षष्ठेऽह्नयाग्नेयमष्टाकपालँ सेनान्यो गृहे
हिरण्यं ददात्यथ सप्तमेऽह्नि वारुणं दशकपालँ सूतस्य गृहे
महानिरष्टं ददात्यथाष्टमेऽह्नि मारुतँ सप्तकपालं ग्रामण्यो गृहे
पृश्निं ददात्यथ नवमेऽह्नि सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तं ददात्यथ दशमेऽह्नयाश्विनं द्विकपालँ संग्रहीतुर्गृहे
सवात्यौ ददात्यथैकादशेऽह्नि पौष्णं चरुं भागदुघस्य गृहे
श्यामं ददात्यथ द्वादशेऽह्नि रौद्रं गावीधुकं चरुमक्षावापस्य गृहे
शबलमुद्वारं ददाति
प्रसिद्धमेवास्यैतदहः श्वेतायै श्वेतवत्सायै पयो दोहयित्वा समातच्यैव निदधात्यथ त्रयोदशेऽह्नि मैत्राबार्हस्पत्यं भवति ५

अथ वै भवति
श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाँश्चाकर्णाँश्च
तण्डुलान्विचिनुयादित्यथ वै भवति
स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्म इति
राजैवायँ स्वयं कर्मभिः पूजितो भवति
स स्वयमेव वेदिं करोति स्वयमिध्माबर्हिः संनह्यति स्वयमाश्वत्थं पात्रं चतुःस्रक्तिं करोति स्वयमवपन्नायै शाखायै कर्णाँश्चाकर्णाँश्च
तण्डुलान्विचिनोत्य्
अथ वै भवति

ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्र इत्यथोत्तरतो भस्ममिश्रानङ्गारान्निरूह्य तेषु नवं पात्रमधिश्रित्य तिरः पवित्रमाज्यमानीय तिरः पवित्रमकर्णानोप्य तेन बार्हस्पत्यमपिदधाति
तं तथापिहितमन्तर्वेद्यासादयति
समानं कर्मा प्रयाजेभ्यः
पञ्च प्रयाजानिष्ट्वोदङङत्याक्रम्य सँस्रावेण बार्हस्पत्यमभिघार्य मैत्रमभिघारयति
बार्हस्पत्येन पूर्वेण प्रचरत्यथ मैत्रेण
बार्हस्पत्यस्य पूर्वस्य स्विष्टकृतेऽवद्यत्यथ मैत्रस्य
बार्हस्पत्यस्य पूर्वस्येडामवद्यत्यथ मैत्रस्यान्वाहार्यमासाद्यैतामेव श्वेताँ श्वेतवत्सां ददाति
संतिष्ठते मैत्राबार्हस्पत्यँ हविः ६

अथैतस्मिन्नेव पूर्वपक्ष उक्थ्यायाभिषेचनीयाय दीक्षते
तस्यापरिमिता दीक्षाः षडुपसदः
स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति

तस्य तया संपद्यतेऽथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा रोहिते चर्मणि राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथान्वहमुपसद्भिश्चरत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय रथवाहने सदोहविर्धाने संमिनोति
रथवाहने सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति
तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपति
तमनुवर्तन्तेऽष्टौ देवसुवाँ हवीँष्यग्नये गृहपतय इत्येतानि
तेषामुक्तं चरणं यथाग्नेर्विधायाम्
इडान्ताः पुरोडाशाः संतिष्ठन्ते

पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येकेऽत्रैतान्दुन्दुभीननुदिशमासञ्जयत्यथ
वसतीवरीः परिहृत्य पर्यां सि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्त
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्युक्थ्यं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा द्वे रशने आदाय यूपमभ्यैति
स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति
तस्यैद्न्राग्न उपालम्भ्यो भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति प्रातःसवनाय

तदृजुधा संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि होष्यन्याचत्याज्यस्थालीँ सस्रुवाँ स्रुचं
वासस्
तस्यैतस्य वसनस्यान्तमायां दशायां निष्करज्जुः प्रग्रथिता
भवत्येतत्समादायाहैहि यजमानेत्युत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः
परीत्याग्रेण शालां तिष्ठते प्रतिप्रस्थात्र एतानि शस्त्राणि प्रयच्छत्यथाहैहि
यजमानेति
रथ एष दक्षिणे श्रोणयन्ते रथवाहन आहितो भवति
तमुपावहरतीन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादित्यथैनं
धूर्गृहीतमन्तर्वेद्यभ्यववर्तयन्ति तूष्णीम्
अथाप्स्वश्वान्पल्पूलयति तूष्णीम्
अथ दक्षिणं योग्यं युनक्ति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि
यज्ञस्य योगेनेत्यथास्य पृष्ठं मर्मृज्यते तूष्णीम्
एवमेवोत्तरं योग्यं युनक्ति
तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति
तयोरेवमेव पृष्ठे मर्मृज्यत एतस्य योगमनु

सर्वमाणवद्युज्यतेऽधिकद्दयान्हस्तिनः कुर्वन्ति
प्रवेष्टयन्ति वासोभारान्
वसनानां दशासु निष्करज्जूः प्रग्रथ्नन्ति
पूगशो दक्षिणा आयातयत्यथ सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति

नयवत्यर्चाग्नीध्रे जुहोति
सृज्यन्ते दक्षिणा दक्षिणापथेन
स यत्किंचिद्ददाति हिरण्यमुखमेव ददात्यथ वासाँ स्यथ युक्तानि गोअश्वँ
हस्तिपुरुषमन्ततोऽदत्ता एवैते रथा अतिवर्तने
नैतेऽन्यस्य सन्त आजिं धावन्ति
मनसैव स्वरथमध्वर्यवे ददाति
मनसा चतुष्पात्क्षेत्रं ब्रह्मण आदिशति
मनसा समनुदिश्य दक्षिणास्त्रिभिर्मरुत्वतीयैश्चरति
सीदन्ति नाराशँ सा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो
महेन्द्राय ७

अथ याचति वैतसं द्रोणकलशँ षोडश वायव्यान्यथास्यैतत्पुरस्तादेव
षोडशतय्य आपो दिग्भ्यः संभृता दक्षिणस्य हविर्धानस्य प्राच्योऽक्षात्प्रतीच्य
उपस्तम्भनान्निहिताः शेरते

तासां वहन्त्यः पूर्वार्ध्या भवन्ति सारस्वत्योऽपरार्ध्याः
स वहन्तीरभिजुहोत्यर्थेत स्थापो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय
चितानाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा
स्थ राष्ट्रं दत्त स्वाहेति
गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य
पौत्राय दत्तेत्यपां पतिरसीत्यपांपतीयाः पुंनाम्नो वोत्सस्य समुद्रिया वा
वृषास्यूर्मिरित्यौर्म्या वृषसेनोऽसीति पल्वल्या व्रजक्षित स्थेति
कूप्यार्मरुतामोज स्थेति निवेष्ट्याः
सूर्यवर्चस स्थेत्यतिदृश्याः
सूर्यत्वचस स्थेत्यातपति वर्ष्यार्मान्दा स्थेति ह्रादुन्यो वाशा स्थेति पृस्वाः

शक्वरी स्थेति गोरुल्ब्या विश्वभृत स्थेति पयो जनभृत स्थेति दध्यग्नेस्तेजस्या स्थेत्याज्यम्
अपामोषधीनाँ रस स्थेति मध्वथ सारस्वतीरभिजुहोत्यपो
देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः ।
याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ राष्ट्रदा स्थ राष्ट्रं दत्त स्वाहेति

गृह्णाति पर्णमयेन राष्ट्रदा स्थ राष्ट्रममुष्मा आमुष्यायणायामुष्य पुत्रायामुष्य पौत्राय दत्तेत्यथैना वैतसे द्रोणकलशे समवनयति देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वम्महि वर्चः क्षत्रियाय वन्वाना इत्यथैना अन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छँसिनश्च सादयत्यनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्यत्र येऽर्थ्याः प्रेका अध्वर्योस्तानावसथँ हरन्त्यथ येऽनर्थ्या अपस्तानभ्यवहरन्ति अनभिहुतानाँ सारस्वतीनां वसतीवरीर्दशपेयाय परिशाययन्ति ८

अथात्रैव तिष्ठन्याचति दर्भनाडीँ शतमानँ हिरण्यं चत्वारि नानावृक्ष्याणि पात्राणि तार्प्यं चोष्णीषं चैकशतं च दर्भपुञ्जीलानि दध्युदुम्बरँ शष्पाणि धनुश्चेषूँश्चेति
स दर्भनाड्याँ शतमानँ हिरण्यं प्रग्रथ्नात्यनिभृष्टमसि वाचो बन्धुस्तपोजा इत्यथैनद्वैतसे द्रोणकलशेऽवदधाति सोमस्य दात्रमसीति

हिरण्येनोत्पुनाति शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृएन स्वाहा राजसूयाय चिताना इति
गृह्णाति पर्णमयेन सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः ।
पस्त्यासु चक्रे वरुणः सधस्थमपाँ शिशुर्मातृतमास्वन्तरिति
पुरस्तादासीनाय ब्रह्मणे प्रयच्छत्येतयैव गृहीत्वा दक्षिणत आसीनायौदुम्बरेण राजन्याय प्रयच्छत्येतयैव गृहीत्वा पश्चादासीनायाश्वत्थेन वैश्याय प्रयच्छत्येतयैव गृहीत्वोत्तरत आसीनाय नैयग्रोधेन जन्याय प्रयच्छत्यथैतं प्रेकमाग्नीध्रँ हृत्वापिधाय प्रज्ञातं निदधात्यथ यजमानं तार्प्यं परिधापयति क्षत्रस्योल्बमसीति

क्षत्रस्य योनिरसीत्यासजते तार्प्यम्
अभीव नाभिमुष्णीषं पर्यस्यत्यथैनमेकशतेन दर्भपुञ्जीलैः पवयति नित्येन पवनेनाथैनमुन्मृजन्नाशयति दध्युदुम्बरँ शष्पाणीत्यथैनमाविद्भिः प्राञ्चमानयत्याविन्नो अग्निर्गृहपतिसिति सप्तभिरनुच्छन्दसम्
अथैनं यजमानायतने तिष्ठन्तं प्राहैष वो भरता राजेति येषाँ श्रेष्ठी भवति सोमोऽस्माकं ब्राह्मणानाँ राजेतीतरे प्रत्याहुरथास्मै धनुः प्रयच्छतीन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति शत्रुबाधना स्थेतीषून्शत्रून्मे बाधध्वमितीतरः प्रतिगृह्णाति पात मा प्रत्यञ्चम्पात मा तिर्यञ्चम्विश्वाभ्यो मा नाष्ट्राभ्यः पातेत्यथ हिरण्यवर्णावुषसाँ विरोक इति त्रिष्टुभा बाहू उद्गृह्णात्यथैनँ सँशास्ति मनसैव दिशोऽनुप्रक्राम मनसोर्ध्वामनूज्जिहीष्वेत्यथैनं वाचयति ९

समिधमा तिष्ठोग्रामातिष्ठ विराजमा तिष्ठोदीचीमा तिष्ठोर्ध्वामा तिष्ठेत्यथात्रैव तिष्ठन्याचति मारुतं चैकविम्शतिकपालं वैश्वदेवीं चामिक्षां तस्य योऽरण्येऽनुवाक्यो गणस्तेन मध्यमानि कपालान्युपहितानि भवन्ति राजसूयगणाभ्यामितराणि
ताभ्यां चरति मरुद्भ्योऽनुब्रूहि मरुतो यजेति विश्वेभ्यो देवेभ्योऽनुब्रूहि विश्वान्देवान्यजेत्यनिष्टस्विष्टकृते एवैते हविषी अपिधाय प्रज्ञाते निदधात्यथ याचति शार्दूलचर्म सुवर्णरजतौ च रुक्मौ वाराही उपानहौ सीसं च लोहितायसं च

दक्षिणतः क्लीब आस्तेऽथ पुरस्तादभिषेकस्य षट्पार्थानि जुहोत्यग्नये स्वाहा सोमाय स्वाहेत्यथ यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्यत्यमृतमसि मृत्योर्मा पाहीत्यधस्ताद्रजतमुपास्यति दिद्योन्मा पाहीत्युपरिष्टात्सुवर्णँ शतातृण्णम्
अथावेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबँ सीसेन विध्यति सव्येन पादेन लोहितायसं निरस्यति निरस्तं नमुचेः शिर इत्यत्रास्मा

अभिषेकान्संप्रगृह्णन्ति
तान्सोऽवेक्षते   १०

सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाचँ सुवन्तां ते ते प्राणँ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रँ सुवन्तामित्यथ ब्रह्मणः पात्रमादाय तेनाभिषिञ्चत्यध्वर्युरेव यजुर्जपत्यभिषिञ्चन्तीतरे सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा क्षत्राणां क्षत्रपतिरस्यति दिवस्पायसवित्यथोर्ध्वा धाराः समुन्मृष्टे समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयाना इत्
अत्रैतेषामभिषेकाणां मुख्ये पात्रे सँस्रावान्समवनीय प्रतिहितस्य गृहानेत्यथान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इत्यत्रास्मा एष प्रतिहितो वरं ददात्यथ प्रतिहिताय पात्रं प्रयच्छन्नाहेदं ते पात्रं दायाद्यमसद्यदा त्वाभिषिञ्चामीदं तेऽसदित्यथैतेनैव यथेतमेत्याग्नीध्रे प्रेरकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेत्यत्रास्मै धनुः प्रयच्छति यदि पुरस्तादप्रत्तं भवति समुन्मृष्टे समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता राजसूयेनेत्यथ भूर्भुवः सुवरिति वाचं विसृजते
द्वाभ्यां मुखं विमृष्टे
गायत्रान्विष्णुक्रमान्क्रमतेऽथोपरिष्टादभिषेकस्य षट्पार्थानि जुहोतीन्द्राय स्वाहा घोषाय स्वाहेति
द्वादश भूतानामवेष्टीर्जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्यत्रैतयोर्हविषोः स्विष्टकृता चरत्यथैने अपिधाय प्रज्ञाते निदधाति   ११

अथ वाराहो उपानहावुपमुञ्चते पशूनां मन्युरसीति दक्षिणे पादे तवेव मे मन्युर्भूयादिति सव्येऽथेमामभिमृशति नमो मात्रे पृथिव्या इति तस्यां दक्षिणं पादमुपावहरति माहं मातरं पृथिवीँ सिँसिषमिति मा मां माता पृथिवी हिँ सीदिति सव्यम्
अथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति विष्णोः क्रमोऽसि विष्णोः

क्रान्तमसि विष्णोर्विक्रान्तमसीत्युत्तरत एते रथा युक्तास्तिष्ठन्ति
तान्दृष्ट्वैव प्रतिहितोऽवतिष्ठत्यथ प्रतिहितस्य धनुरादायाधिज्यं कृत्वा
रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिश्रयते
तं तदानीमेव प्रतिहितोऽन्वातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति
त्रिष्टुभान्वारभत इति ब्राह्मणम्
अथ प्रतिहिताय धनुः प्रयच्छन्नाह राजन्य एष षट्त्रिँशत्सु शम्याप्रव्याधेषु
निर्जयेन सहस्रेणावसितस्तस्मा इषुमस्यतादपैनँ राध्नुताज्जित्वैनं
दक्षिणापथेनात्याकुरुतादिति
राजन्य एव सँशिष्टो भवति राजपुत्रस्त इषुमसिष्यति स त्वापरात्स्यति तस्मा
उत्तरवर्ग्येण संमृज्येषु प्रयच्छतादिति

स तथा करोति १२

अथाहाभिसर्प यजमान माहेन्द्रं ग्रहं ग्रहीष्यामीत्यन्वारब्धे यजमाने माहेन्द्रं
ग्रहं गृह्णाति महाँ इन्द्रो य ओजसेत्यनुद्रुत्योपयामगृहीतोऽसि महेन्द्राय त्वा
जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिर्महेन्द्राय त्वेत्यथैतान्मणीन्याचति राजतमौदुम्बरँ
सौवर्णमिति
त एते नानासूत्रेष्वोता भवन्ति
तानुत्तरस्य हविर्धानस्य मध्यमे वँशे प्रग्रथ्याप उपस्पृश्य बर्हिषी आदाय
वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते माहेन्द्राय
प्रस्तुते साम्नि संप्रैषमाहाजिसृत आजिं धावत
दुन्दुभीन्समाघ्नताभिषोतारोऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वादय
प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति

यथासंप्रैषं ते कुर्वन्ति
धावन्त्याजिसृत आघ्नन्ति दुन्दुभीन्
संप्रवदन्ति वाचः
संप्रोदिता वाचोऽनुमन्त्रयते

शाम्यन्ति घोषाः शस्त्राय
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छतेतं माहेन्द्रं ग्रहम्
अनूद्यच्छन्त इतरान्
उपोद्यच्छन्ते नाराशँसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमस्येति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विर्नाराशँसानमुपकम्पयन्ति
द्विर्हुतो माहेन्द्रः परिशेत आयन्ति रथा आगतान्रथान्दृष्ट्वा जपति
समहमिन्द्रियेण वीर्येण सं मयेन्द्रियं वीर्यमिति
अथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामत्युत्तरत एते रथा युक्तास्तिष्ठन्ति
तान्दृष्ट्वैव प्रतिहितोऽवतिष्ठत्यथ प्रतिहितस्य धनुरादायाधिज्यं कृत्वा
रथमातिष्ठति मरुतां प्रसवे जेषमित्याप्तं मन इति कूबरमभिनिश्रयते

तं तदानीमेव प्रतिहितोऽन्वातिष्ठति प्रससाहिषे पुरुहूत शत्रूनिति
त्रिष्टुभान्वारभत इति ब्राह्मणम्
अथ प्रतिहिताय धनुः प्रयच्छन्नाहेदं ते धनुर्दायाद्यमसद्यदा त्वाभिषिञ्चामीदं तेऽसदित्यथैतेनैव यथेतमेत्यान्तरेण चात्वालोत्करावुपातीत्य पूर्वया द्वारा हविर्धानं प्रपाद्य प्राञ्चँरथमावर्त्य तिष्ठति १३

तदेतान्मणीन्याचति राजतमौदुम्बरँसौवर्णमिति
सव्ये हस्ते राजतं प्रतिमुञ्चत इयदस्यायुरस्यायुर्मे धेहीति दक्षिण औदुम्बरमूर्गस्यूर्जं मे धेहीति दक्षिण एव सौवर्णं युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्यत्रास्मा आमिक्षामुपोद्यच्छते
तस्यां दक्षिणँहस्तमुपावहरति मित्रोऽसीति वरुणोऽसीति सव्यम्
अथैनामभिमृशति समहं विश्वैर्देवैरित्यथैनामपिधाय प्रज्ञातां निदधाति
तदेतान्मणीनेकस्मिन्सूत्र आवयति मध्यत औदुम्बरं करोति

तान्ग्रीवासु प्रतिषज्यैतेनैव यथेतमेत्याग्रेणाग्नीध्रं प्राञ्चँ रथमावर्त्यावतिष्ठत्य्
अथाग्नीध्रे रथविमोचनीया जुहोत्यग्नये गृहपतये स्वाहेति चतस्रः
स्रुवाहुतीरथास्यैतत्पुरस्तादेवाग्रेणाग्नीध्रँ रथवाहनं प्रागीषं योग्यकृतमुपस्थितं
भवति
तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधाति
सुवर्गादेवैनं लोकादन्तर्दधाति
हँ सः शुचिषदित्यादधाति
ब्रह्मणैवैनमुपावहरति ब्रह्मणादधात्यतिच्छन्दसादधातीति ब्राह्मणम्
अथास्यैतत्पुरस्तादेव जघनेनाग्नीध्रं चतुरपस्रावं वाष्टापस्रावं वा विमितं
कारितं भवति
तस्य मध्यत औदुम्बरीमासन्दीं निमिनोति क्षत्रस्य नाभिरसीति
तस्यामुत्तरमष्टनमधीवासमास्तृणाति क्षत्रस्य
योनिरसीत्यथैनामासीदत्यासीदन्तमनुमन्त्रयते स्योनामासीद सुषदामासीद
मा त्वा हिँसीदिति
मा मा हिँसीदितीतरः प्रत्याहासन्नमभिमन्त्रयते निषसाद धृतव्रतो वरुणः
पस्त्यास्वा सम्राज्याय सुक्रतुरित्य्
अथैनमृत्विजः पर्युपविशन्ति
पुरस्तादध्वर्युरुपविशति दक्षिणतो ब्रह्मा पश्चाद्धोतोद्गातोत्तरतस्
ततः प्राञ्चो वोदञ्चो वा रत्निनः
सोऽध्वर्युमभिवदति १४

ब्रह्मा३निति
त्वँ राजन्ब्रह्मासीत्याहाध्वर्युः सवितासि सत्यसव इति
ब्रह्मा३निति ब्रह्माणं त्वँ राजन्ब्रह्मासीत्याह ब्रह्मेन्द्रोऽसि सत्यौजा इति
ब्रह्मा३निति होतारं त्वँ राजन्ब्रह्मासीत्याह होता मित्रोऽसि सुशेव इति
ब्रह्मा३निति उद्गातारं त्वँ राजन्ब्रह्मासीत्याहोद्गाता वरुणोऽसि सत्यधर्मेति
सुश्लोका३इँ ति क्षत्तारं त्वँ राजन्सुश्लोकोऽसीत्याह क्षत्ता
सुमङ्गला३इँ ति संग्रहीतारं त्वँ रजान्सुमङ्गलोऽसीत्याह संग्रहीता
सत्यराजा३निति भागदुघं त्वँ राजन्सत्यराजासीत्याह भागधुक्
सप्त पुण्यनाम्नोऽभ्युद्याथास्मै स्फ्यं प्रयच्छतीन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे

रध्येति
तेन ते रध्यासमितीतरः प्रतिगृह्णाति
तँ संप्रयच्छति सूताय सूतग्रामणिने सजाताय सजातग्रामणिने
संग्रहीत्रेऽक्षावापगोव्यच्छाभ्यामन्ततस्
तेन तौ मध्यतोऽधिदेवनमुद्धत्य तिस्रः पञ्चाशतः सौवर्णानक्षान्निवपतोऽथास्मै
पञ्चाक्षानपच्छिद्य प्रयच्छति दिशोऽभ्ययँ राजाभूदिति
ताँस्तदानीमेवाक्षेष्वपिसृजत्यथैतमोदनमुद्धवते
नानाँ शिनौ ब्रह्मा च यजमानश्च समानाँ शिनौ सूतग्रामणिनौ समानाँ शिनौ
क्षत्तसंग्रहीतारौ
स यो नु मताक्ष इव स राज्ञ आसन उपविश्य
चतुःशतमक्षानपच्छिद्याहोद्भिन्नँ राज्ञ इति
तानेव मनाक्समन्तानिव कृत्वाह कृतं ब्राह्मणस्येत्यथैतमोदनमुद्धवते
समानाँ शिनौ ब्रह्मा च यजमानश्च नानाँ शिनौ सूतग्रामणिनौ नानाँ शिनौ
क्षत्तसंग्रहीतारौ
स यः पराजयते तस्यैनं कुले क्षत्ता पाचयति
यावदेष ओदनः पच्यते तावदेष होता शौनःशेपमाख्यापयते हिरण्मये
कशिपावासीनस्
तस्मा अध्वर्युः प्रतिगृणाति हिरण्मये कूर्च आसीनः १५

ओँ होतस्तथा होतः सत्यँ होतररात्स्म होतरिति
यद्यु वै होता नाध्येत्यन्य उ होत्राशँ सी शँ सति
तस्मा उ प्रतिप्रस्थाता प्रतिगृणाति

परःशतं भवतीति ब्राह्मणं यदैष ओदनः पक्वो भवत्यथैनमेकधोद्धृत्य ब्रह्मण
उपहरति
तस्मा एताँश्चैव मणीन्ददाति शतं विपथं चतुष्पात्क्षेत्रम्
अथ होत्रे ददाति शतं विपथँ हिरण्मयं कशिप्वथोद्गात्रे ददाति शतं विपथम्
अथाध्वर्यवे ददाति शतं विपथँ स्वरथं तिस्रः पञ्चाशतः
सौवर्णानक्षान्हिरण्मयं कूर्चमित्यत्रैभ्य एतन्निर्जयँ सहस्रं चतुर्धा कृत्वा
ददत्यथैनमेतयासन्द्या सद आवहन्त्या वा व्रजत्यन्वायन्त्येनमेते चमसा

अत्रैतयोर्हविषोरिडामुपह्वयत इडोपहूतं माहेन्द्रँ होता चैवाध्वर्युश्च संभक्षयतो नराशँ सपीतेन नाराशँ सान्
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथेन्द्राय त्वेन्द्राय त्वेत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति
संतिष्ठते माध्यंदिनँ सवनम्प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं ग्रःणात्य्
अथोक्थ्यं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभ्यां चरति
तयोर्नाना मनोते नाना देवते नाना प्रत्यभिमर्शनौ नाना वसाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो नाना दिश इत्येके
समानं कर्मावभृथादथैतस्मिन्नवभृथ उपाददते चार्मपक्ष्यावुपानहौ
प्रप्लाव्य वाराही चार्मपक्षीभ्यामुदेति
सोऽपामन्ते जुहोत्यपां नप्त्रे स्वाहेति
विषुवति दर्भस्तम्बे जुहोत्यूर्जो नप्त्रे स्वाहेति
पुनरेत्य गार्हपत्ये जुहोत्यग्नये गृहपतये स्वाहेति
प्रसिद्धोऽवभृथ उदयनीयेष्टयेष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै प्रसिद्धं वपया चरित्वा नैव श्मश्रूणि वपते न केशान्
संतिष्ठत एष उक्थ्योऽभिषेचनीयश्चतुस्त्रिँ शपवमानः सहस्रदक्षिण उदवानीयान्तः १६

अथास्यैषा पुरस्तादेव जुष्टे देवयजने सप्तसु शम्याप्रव्याधेषु शाला कारिता भवति
सोऽत्रैवाग्नेयमष्टाकपालं निर्वपति

हिरण्यं ददाति

शम्यान्यास उदवसाय वसति
सारस्वतं चरुम्वत्सतरीं ददाति
द्वितीये शम्यान्यास उदवसाय वसति
सावित्रं द्वादशकपालम्
उपध्वस्तं ददाति
तृतीये शम्यान्यास उदवसाय वसति
पौष्णं चरुं श्यामं ददाति
चतुर्थे शम्यान्यास उदवसाय वसति
बार्हस्पत्यं चरुं शितिपृष्ठं ददाति
पञ्चमे शम्यान्यास उदवसाय वसत्यैन्द्रमेकादशकपालम्
ऋषभं ददाति
षष्ठे शम्यान्यास उदवसाय वसति
वारुणं दशकपालम्महानिरष्टं ददात्यथ
सप्तमेऽहञ्छालामध्यवस्यत्येतदेवाहर्दीक्षतेऽथ वै भवति
सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति पुण्डरिस्रजां प्रयच्छतीत्यथैनं
तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानीय दीक्षणीयामिष्टिं निर्वपति
तस्याँ सँस्थितायां मुष्टी चैव न करोति वाचं च न यच्छति
निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनम्
अथ प्रायणीयामिष्टिं निर्वपति
हविष्कृता वाचं विसृजतेऽत्रास्मा एतद्धविरुच्छिष्टं प्रयच्छन्ति व्रतभाजनम्
अथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा दशभिः साण्डैर्वत्सतरै राजानं क्रीत्वोह्यातिथ्यं
निर्वपत्यातिथ्येन प्रचर्य पुरस्तादुपसदाँ सौम्यं चरुम्बभ्रुं ददात्यथ मध्यमे
उपसदावन्तरेण त्वाष्ट्रमष्टाकपालं शुण्ठं ददात्यथोपरिष्टादुपसदां वैष्णवं
त्रिकपालम्वामनं ददात्यथाहवनीयं प्रणयत्य्
आहवनीयं प्रणीय सदोहविर्धाने संमिनोति
सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता
यूपमुच्छ्रयति
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति

तस्य प्रसिद्धं वपया चरित्वा सारस्वतीर्वसतीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपतीडान्तः पशुपुरोडाशः संतिष्ठते
पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येकेऽथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैति १७

अग्निष्टोमं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा द्वे रशने आदाय यूपमभ्यैति
स्वर्वन्तं यूपमुत्सृज्याग्नेयं पशुमुपाकरोति
तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा प्रसर्पन्ति प्रातःसवनाय
पूर्वस्यां द्वारि सूतग्रामण्यावुपतिष्ठतोऽपरस्यां क्षत्तसंग्रहीतारौ
प्रसर्पतः पृच्छतः का ते माता का ते मातामहीति
स य आ दशम्यै संपादयत्यति तँ सृजन्त्य्
अथ यो न संपादयति दीर्घवँ शेन तमुपानुदन्ति
स य आह वैश्या मे माता सावित्रीति वाति तँ सृजन्ति विशो विवाहान्गोप्तार इति वदन्तो दशदशात्र चमसमभिसंजानत ऋजुधा
प्रातःसवनँ संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि हुत्वा प्राकाशावध्वर्यवे ददाति
स्रजमुद्गात्रे रुक्मँ होत्रेऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां द्वादश पष्ठौहीर्ब्रह्मणे वशां मैत्रावरुणायर्सभं ब्राह्मणाच्छँ सिने वाससी नेष्टापोतृभ्याँ स्थूरि यवाचितमच्छावाकायानड्वाहमग्नीधे
भार्गवो होता भवति
श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयमग्निष्टोमसामम्

ऋजुधा माध्यंदिनँ सवनँ संतिष्ठते
प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभ्यां चरति
तयोर्नाना मनोते नाना देवते नाना प्रत्यभिमर्शनौ नाना वसाहोमौ समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो नाना दिश इत्येके

समानं कर्मावभृथात्
प्रसिद्धोऽवभृथ उदयनीययेष्टयेष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते श्मश्रूण्येव वपते न केशान्
संतिष्ठत एषोऽग्निष्टोमः सप्तदशो दशपेयः सहस्रदक्षिण उदवसानीयान्तः
१८

अथ पञ्चहविषा दिशामवेष्ट्या यजत आग्नेयमष्टाकपालं
निर्वपत्यैन्द्रमेकादशकपालं वैश्वदेवं चरुं मैत्रावरुणीमामिक्षां बार्हस्पत्यं चरुमित्यथ वै भवति
हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयति
स हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयत्यन्वाहार्यमासाद्यैता आदिष्टदक्षिणा ददात्यथ द्विपशुना पशुबन्धेन यजत आदित्यां मल्हां गर्भिणीमालभते मारुतीं पृश्निं पष्ठौहीं गर्भिण्यादित्या भवत्यगर्भा मारुत्यादित्यया पूर्वया प्रचरति मारुत्योत्तरयोच्चैरादित्याया आश्रावयत्युपाँशु मारुत्यै
संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ सात्यदूतानाँ हविर्भिर्यजतेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुँ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालम्
अन्वाहार्यमासाद्य तिसृधन्वँ शुष्कदृतिं ददाति
तं प्रतिराजभ्यः प्रहिणोति
स यः प्रतिगृह्णाति मित्रो म इति तं वेदाथ यो न प्रतिगृह्णात्यमित्रो म इति तं

वेदाथ पूर्वैः प्रयुजाँ हविर्भिर्यजत आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुँ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालम्
अन्वाहार्यमासाद्य दक्षिणँ रथवाहनवाहं ददात्यथ
पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाँ हविर्भिर्यजते
सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुम्
अन्वाहार्यमासाद्योत्तरँ रथवाहनवाहं ददाति १९

अत्रैतद्द्वादशाहं व्रतं चरत्याङ्क्ते
न दतो धावतेऽभ्यङ्क्ते
न प्रमन्दयते
युध्यते युद्ध आगतेऽग्निहोत्रोच्छेषणव्रतो वा यजमानो भवति
भक्तमु पत्न्या आहरन्त्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने तिस्रः शालाः कारिता भवन्ति
स दक्षिणाध्याँ शालामध्यवसाय मथित्वाग्नीन्विहृत्य प्रतीचीनस्तोमाय केशवपनीयायातिरात्राय दीक्षते

तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यजनीयेऽहन्सुत्या संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यतिरात्रं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मावभृथात्
प्रसिद्धोऽवभृथ उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति

तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते यानि कानि च लोमानि वापयते
संतिष्ठत एष प्रतीचीनस्तोमः केशवपनीयोऽतिरात्रः सहस्रदक्षिण उदवसानीयान्तोऽथ मध्यमाँ शालामध्यवसाय मथित्वाग्नीन्विहृत्य व्युष्टये द्विरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे सतोऽमावास्याया उपवसथीयेऽहन्पूर्वमहः संपत्स्यत उत्तरस्मिन्नुत्तरमिति

संतिष्ठते व्युष्टिद्विरात्रोऽथोत्तराध्याँ शालामध्यवसाय मथित्वाग्नीन्विहृत्योदयनीयायाग्निष्टोमाय दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः
संतिष्ठत एष उदयनीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तोऽथ देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ सौत्रामण्या यजते
संतिष्ठते राजसूयोऽर्धसप्तदशैर्मासैः
संतिष्ठते राजसूयः संतिष्ठते राजसूयः  २०

त्रयोदशः प्रश्नः

अथात इष्टीर्व्याख्यास्यामस्
तासाँ सकृत्प्रदिष्टमेव दार्शपौर्णमासिकं तन्त्रं दार्शपौर्णमासिकः सँस्कारः
सर्वाः प्रथमाः सर्वा मध्यमाः सर्वा उत्तमा यथाकालं पर्वतिथ्या निर्वप्येद्या आदिष्टस्थाना अथ या अनादिष्टस्थाना यानि पूर्वपक्षस्य पुण्याहान्येतत्तीर्थानि भवन्ति या अनार्तेष्टयोऽथ या आर्तेष्टय उपाधिगमकालास्ता भवन्ति
यथैतदभ्युद्धृताभ्युदिताभिनिम्रुक्ताविजातेति
व्युदितमग्न्यन्वाधानं नित्यं व्रतोपायनं यावत्सिद्धि याजमानमनुसँहरेदन्यत्रावापदेवताभ्यस्
तासां याः सोपनामास्ता उपाँश्वथेतरा उच्चैरादेशादेव
सप्तदश सामिधेन्यो जानीयाद्यथैतन्मानवी ऋचौ धाय्ये कुर्यादुष्णिहककुभौ धाय्ये त्रिष्टुभौ संयाज्ये
वार्त्रघ्नावाज्यभागौ पूर्वपक्षे

वृधन्वन्तावपरपक्ष इत्यौपमन्यवो यानि हवींषि कामेन वा दक्षिणया वा व्यपेतानि स्युर्नानाबर्हीँष्येव तानि जानीयाद्
आदेशादेव दक्षिणाव्यपेतँ समानबर्हिर्भवति यथा दिशामवेष्टिर्नेष्टीरुपाँशुयाजोऽनुसमेति
यद्देवत्यँ हविस्तद्देवत्ये याज्यापुरोऽनुवाक्ये
पुरस्तात्स्विष्टकृत उपहोमा यासामुक्ता उपहोमा वासोदक्षिणाः काम्या इष्टयो या अनादिष्टदक्षिणा गोदक्षिणः पशुबन्धो नित्योऽन्वाहार्य इतीन्वा इमा इष्टीर्व्याख्याताः   १

अथ वै भवत्यैन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम इति
तस्या एते भवत उभा वामिन्द्राग्नी अश्रवँ हीत्यैन्द्राग्नमेकादशकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेति
तस्या एते भवत इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नमेकादशकपालं निर्वपेत्संग्राममुपप्रयास्यन्निति
तस्या एते भवत इन्द्राग्नी नवतिं पुरः शुचिं नु स्तोममित्यैन्द्राग्नमेकादशकपालं निर्वपेत्संग्रामं जित्वेति
तस्या एते भवत उभा वामिन्द्राग्नी अश्रवँ हीत्यैन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्निति
तस्या एते भवत इन्द्राग्नी रोचना दिवः श्नथद्वृत्रमिति
पौष्णं चरुमनुनिर्वपेदिति
तस्या एते भवतो वयमु त्वा पथस्पते पथस्पथ इति
क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्येति
तस्या एते भवतः क्षेत्रस्य पतिना वयं क्षेत्रस्य पत इत्यैन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदिति

तस्या एते भवतो ये संग्रामं जिग्युषः   २

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते पथोऽन्तिकाद्बर्हिरनड्वाहं तस्या एते भवतोऽग्ने नया

देवानामित्यन्वाहार्यमासाद्यानड्वाहं ददात्यग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदिति
तस्या एते भवतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीत्यग्नये
रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यँ रक्षाँसि सचेरन्नित्यथ वै भवति
निशितायां निर्वपेत्परिश्रिते याजयेदिति
स निशायां महारात्र उत्थायाग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपति
परिश्रिते याजयति
कृणुष्व पाजः प्रसितिं न पृथ्वीमित्येतस्यानुवाकस्य पञ्चदश सामिधेनीः
पराचीरन्वाह
तस्या एते भवतो रक्षोहणम्वि ज्योतिषेत्यथ पुरस्तात्स्विष्टकृतः
स्रुवाहुतिमुपजुहोत्युत स्वानासो दिवि षन्त्वग्नेरिति ३

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति
तस्या एते भवतस्त्वमग्ने रुद्र आ वो राजानमित्यग्नये सुरभिमते
पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा
बिभीयादिति
तस्या एते भवतोऽग्निर्होता साध्वीमकरित्यग्नये क्षामवते पुरोडाशमष्टाकपालं
निर्वपेत्संग्रामे संयत्त इति
तस्या एते भवतोऽक्रन्ददग्निस्त्वे वसूनीत्यथ वै भवत्य्
अभि वा एष एतानुच्यति येषां पूर्वाअरा अन्वञ्चः प्रमीयन्ते
पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदिति
तस्या एते भवतोऽथ वै भवत्यभि वा एष एतस्य गृहानुच्यति यस्य
गृहान्दधत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदिति
तस्या एते भवतः ४

अथ वै भवत्यग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति
तस्या एते भवतस्तुभ्यं ता अङ्गिरस्तमाश्याम तं काममग्न इत्यग्नये यविष्ठाय
पुरोडाशमष्टाकपालं निर्वपेत्स्पर्धमानः क्षेत्रे वा सजातेषु वेति
तस्या एते भवतः श्रेष्ठं यविष्ठ भारत स श्वितान इत्यग्नये यविष्ठाय
पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाण इति

तस्या एते भवतोऽग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामिति
तस्या एते भवत आयुष्ट आयुर्दा अग्न इत्यग्नये जातवेदसे पुरोडाशमष्टापकालं निर्वपेद्भूतिकाम इति
तस्या एते भवतस्तस्मै ते दिवस्परीत्यग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्काम इति
तस्या एते भवतः शुचिः पावक दृशानो रुक्म इत्यग्नये तेजस्वते पुरोडाशमष्टाकपालं निर्वपेत्तेजस्काम इति
तस्या एते भवत आ यदिषे नृपतिं स तेजीयसेत्यग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत्सीक्षमाण इति
तस्या एते भवतोऽग्ने सहन्तमाभर तमग्ने पृतनासहँ रयिमिति ५

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्त्स्यामिति
तस्या एते भवत उक्षान्नाय वशान्नाय वक्षा हि सूनो इत्यग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामिति
तस्या एते भवतोऽग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामिति
तस्या एते भवतोऽग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावीत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्या एता भवन्त्यग्न आयूँ षि पवसेऽग्ने पवस्वाग्ने पावक स नः पावकाग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्यन्वाहार्यमासाद्य हिरण्यं ददात्येतामेव निर्वपेच्चक्षुष्काम इति
तस्या एता भवन्ति ६

अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकाम इति
तस्या एता भवन्ति यस्त्वा हृदा कीरिणा मन्यमानो यस्मै त्वँ सुकृते जातवेदस्त्वे सु पुत्र शवस उक्थौक्थे सोम इन्द्रं ममादेत्यग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामिति
तस्या एते भवतोऽग्ने रसेनापो अन्वचारिषमित्यग्नये वसुमते

पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामिति
तस्या एते भवतो वसुर्वसुपतिस्त्वामग्ने वसुपतिं वसूनामित्यग्नये वाजसृते
पुरोडाशमष्टाकपालं निर्वपेत्संग्रामे संयत्त इति
तस्या एते भवतस्त्वामग्ने वाजसातममयं नो अग्निरित्यग्नयेऽग्निवते
पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुरिति
तस्या एते भवतोऽग्निनाग्निः समिध्यते त्वँ ह्यग्ने अग्निनेत्य्
अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र
उद्वायेदपर आदीप्यानूद्धृत्य इत्याहुस्तत्तथा न कार्यं यद्भागधेयमभि पूर्व
उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति
तान्येवावक्षाणानि संनिधाय मन्थेदिति
स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि
जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति
छन्दोभिरेवैनँ स्वाद्योनेः प्रजनयतीति ब्राह्मणम्
अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेदिति
तस्या एते भवत उदग्ने शुचयस्तव वि ज्योतिषेति ७

अथ वै भवति
वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमान
इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्या एता भवन्ति वैश्वानरो न
ऊत्या त्वमग्ने शोचिषा शोशुचानोऽव ते हेड उदुत्तमं दधिक्राव्णो
अकारिषमा दधिक्रा इत्यन्वाहार्यमासाद्य हिरण्यं ददात्येतामेव
निर्वपेत्प्रजाकाम इति
तस्या एते भवन्ति
वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति
तस्या एते भवतो वैश्वानरस्य दँ सनाभ्यो बृहद्जातो यदग्न इति
वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वातिपाद्येति
तस्या एते भवतो वैश्वानरो न ऊत्या पृष्टो दिवीत्याग्नेयमष्टाकपालं
निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्निति

तस्या एता भवन्त्यग्निर्मूर्धा भुवो वैश्वानरो न ऊत्या त्वमग्ने शोचिषा

शोशुचान इति
वैश्वानरं द्वादशकपालं निर्वपेन्मारुतँ सप्तकपालं ग्रामकाम इत्यथ वै भवत्याहवनीये वैश्वानरमधिश्रयति गार्हपत्ये मारुतम्
अनूच्यमान आसादयतीति
काले प्रत्यञ्चं वैश्वानरमासादयत्यनूच्यमानासु सामिधेनीषु मारुतं तस्य एता भवन्ति वैश्वानरो न ऊत्या पृष्टो दिवि मरुतो यद्ध वो दिवो या वः शर्मेति
८

आदित्यं चरुं निर्वपेत्संग्राममुपप्रयास्यन्निति
तस्या एते भवतोऽदितिर्न उरुष्यतु महीमू षु मातरमिति
वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति
तस्या एते भवतो वैश्वानरो न ऊत्यास्माकमग्ने मघवत्सु धारयेति
वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वेति
तस्या एते भवतो वैश्वानरो न ऊत्यर्तावानमिति
वैश्वानरं द्वादशकपालं निर्वपेत्सममानयोः पूर्वोऽभिद्रुह्येति
तस्या एते एव भवतो वैश्वानरं द्वादशकपालं निर्वपेदविं प्रतिगृह्येति
तस्या एते भवतो वैश्वानरो न ऊत्या त्वमग्ने शोचिषा शोशुचान इति
वैश्वानरं द्वादशकपालं निर्वपेदुभयादत्प्रतिगृह्याश्वं वा पुरुषं वेति
तस्या एते एव भवतो वैश्वानरं द्वादशकपालं निर्वपेत्सनिमेष्यन्निति
तस्या एते भवतो वैश्वानरो न ऊत्या वैश्वानरस्य सुमतौ स्यामेति ९

अथ वै भवति
यो वै संवत्सरं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेदिति

स एतमेव वैश्वानरं पुनरागत्य निर्वपति
यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्या इति ब्राह्मणम्
अथ वै भवति
यया रज्ज्वोत्तमां गामाजेत्तां भ्रातृव्याय प्रहिणुयादिति
स यया रज्ज्वोत्तमां गामाजति तां भ्रातृव्याय प्रहित्य भ्रातृव्यस्य गोष्ठे

न्यस्यति
निर्ऋृतिमेवास्मै प्रहिणोतीति ब्राह्मणं तस्या एते भवतः   १०

अथ वै भवत्यैन्द्रं चरुं निर्वपेत्पशुकाम इति
तस्या एते भवत इन्द्रं वो विश्वतस्परीन्द्रं नर इतीन्द्रायेन्द्रियावते
पुरोडाशमेकादशकपालं निर्वपेत्पशुकाम इति
तस्या एते भवत इन्द्रियाणि शतक्रतोऽनु ते दायीतीन्द्राय घर्मवते
पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकाम इति
तस्या एते भवत आ यस्मिन्त्सप्त वासवा आमासु पक्वमैरय इतीन्द्रायार्कवते
पुरोडाशमेकादशकपालं निर्वपेदन्नकाम इति
तस्या एते भवत इन्द्रमिद्गाथिनो बृहद्गायन्ति त्वा गायत्रिण इतीन्द्राय घर्मवते
पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकाम
इति
तस्य एता भवन्त्या यस्मिन्त्सप्त वासवा आमासु पक्वमैरय इन्द्रियाणि
शतक्रतोऽनु ते दायीन्द्रमिद्गाथिनो बृहद्गायन्ति त्वा गायत्रिण इति   ११

इन्द्रायाँहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यादिति
तस्या एते भवतोऽँहोमुचे विवेष यन्मेतीन्द्राय वैमृधाय
पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि प्रवेपेरन्राष्ट्राणि वाभि समियुरिति

तस्या एते भवतो वि न इन्द्र मृधो जहि मृगो न भीम इतीन्द्राय त्रात्रे
पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेति
तस्या एते भवतस्त्रातारमिन्द्रम्मा ते अस्याँ सहसावन्नितीन्द्रायार्काश्वमेधवते
पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदिति
तस्या एते भवतोऽनवस्ते रथम्वृष्णे यत्त इति   १२

इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इति
तस्या एते भवतोऽन्वह मासा अनु ते दायीतीन्द्राण्यै चरुं निर्वपेद्यस्य
सेनासँशितेव स्यादित्यथ वै भवति
बल्बजानपीध्मे संनह्येत्

तान्सहेध्मेनाभ्यादध्यादिति
तान्सहैवेध्मेनाभ्यादधाति
तस्या एते भवत इन्द्राणीमासु नारिषु नाहमिन्द्राणि रारणेतीन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत्संग्रामे संयत्त इति
तस्या एते भवतो यो जात एवा ते मह इन्द्रोऽत्युग्र इत्येतामेव निर्वपेद्यो हतमना इव स्यादिति
तस्या एते भवत एतामेव निर्वपेद्यः स्वयंपाप इव स्यादिति
तस्या एते एव भवतः १३

इन्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरिति
तस्या एते भवतो मा नो मर्धीरा तू भरेतीन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेति
तस्या एते भवतः प्रदातारँ हवामहे प्रदाता वज्रीतीन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वापरुध्यमानो वा इति

तस्या एते भवत इन्द्रः सुत्रामा तस्य वयँ सुमतौ यज्ञियस्येति
योऽलँ श्रियै सन्सदृङ्समानैः स्यात्तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदित्यथ वै भवति
रेवती पुरोऽनुवाक्या भवति शान्त्या अप्रदाहाय शक्वरी याज्येति
तस्या एते भवतो रेवतीर्नः प्रो ष्वस्मै पुरोरथमिति १४

अथ वै भवत्याग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरित्यथ वै भवति
प्रति वै परस्तादभिचरन्तमभिचरन्ति
द्वेद्वे पुरोऽनुवाक्ये कुर्यादतिप्रयुक्त्या इति
स द्विर्द्विः पुरोऽनुवाक्यामन्वाह
त्रिस्त्रिर्हविषामवद्यति
तस्या एता भवन्त्यग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवो बृहस्पत एवा पित्र इत्येतयैव यजेताभिचर्यमाण इति

तस्या एता एव भवन्त्याग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नोपनमेदि-
ति
तस्या एते भवतोऽग्नाविष्णू अग्नाविष्णू इत्याग्नावैष्णवं घृते चरुं
निर्वपेच्चक्षुष्काम इति
तस्या एते एव भवतः १५

अथ वै भवतीन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां
प्रतिनिर्वपेद्भ्रातृव्ये यजमाने
नास्येन्द्रियं वीर्यं वृङ्क्ते
पुरा वाचः प्रवदितोर्निर्वपेदिति
स पुरा वाचः प्रवदितोर्महारात्र उत्थायाग्नावैष्णवमष्टाकपालं
निर्वपेत्प्रातःसवनस्याकाले
सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति
तस्या एता भवन्त्यग्नाविष्णू अग्नाविष्णू प्र णो देव्या नो दिवो बृहस्पत एवा
पित्र इत्य्
आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यंदिनस्य सवनस्याकाले
सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति
तस्या एता एव भवन्त्याग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याकाले
सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति
तस्या एता एव भवन्ति
मैत्रावरुणमेककपालं निर्वपेद्वशायै काल इति
तस्या एते भवत आ नो मित्रावरुणा प्र बाहवेति १६

यो ब्रह्मवर्चसकामः स्यात्तस्मा एतँ सोमारौद्रं चरुं तिष्यापूर्णमासे निर्वपेदिति
स यो ब्रह्मवर्चसकामः स्यात्स तैष्यां पौर्णमास्याँ सोमारौद्रं चरुं निर्वपति
परिश्रिते याजयत्यथ वै भवति
श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणम्
आज्येन मार्जयन्ते
यावदेव ब्रह्मवर्चसं तत्सर्वं करोत्यति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा
भवितोरिति

मानवी ऋचौ धाय्ये कुर्यादिति
मन्चू देववतो रथ इत्येतासां द्वे धाय्यालोके दधाति
तस्या एते भवतः सोमारुद्रा विवृहतं विषूचीं सोमारुद्रा युवमेतानीति १७

यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति
तस्य एते भवतः सोमपूषणेमौ देवविति
सोमारौद्रं चरुं निर्वपेत्प्रजाकाम इति
तस्या एते भवतः सोमारुद्रा विवृहतं विषूचीं सोमारुद्रा युवमेतानीति

सोमारौद्रं चरुं निर्वपेदभिचरन्निति
तस्या एते एव भवतः
सोमारौद्रं चरुं निर्वपेज्ज्योगामयावीत्येतयेष्ट्या यन्दयमाण उपकल्पयते
होतानड्वाहं तस्या एते एव भवतोऽन्वाहार्यमासाद्य होतानड्वाहं ददाति
सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति
सोऽपरक्षेत्रमर्यादायामध्यवसाय मथित्वाग्नीन्विहृत्य सोमारौद्रम्चरुं
निर्वपत्यथ वै भवति
वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिष स्तृणीयादर्धं
नार्धमिध्मस्याभ्यादध्यादर्धं न
स्व एवास्मा आयतने भ्रातृव्यं जनयतीति ब्राह्मणं तस्या एते भवतः १८

अथ वै भवत्यैन्द्रमेकादशकपालं निर्वपेन्मारुतँ सप्तकपालं ग्रामकाम इत्यथ
वै भवत्याहवनीय ऐन्द्रमधिश्रयति गार्हपत्ये मारुतम्
अनूच्यमान आसादयतीति
काले प्रत्यञ्चमैन्द्रमासादयत्यनूच्यमानासु सामिधेनीषु मारुतं तस्या एता
भवन्तीन्द्रं वो विश्वतस्परीन्द्रं नरो मरुतो यद्ध वो दिवो या वः शर्मेति
एतामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं
दध्यामित्यैन्द्रस्यावद्यन्ब्रूयादिन्द्रायानुब्रूहीतीन्द्रं वो
विश्वतस्परीत्यन्वाहात्याक्रम्याश्राव्याह मरुतो यजेति
या वः शर्मेति यजति
मारुतस्यावद्यन्ब्रूयान्मरुद्भ्योऽनुब्रूहीति

मरुतो यद्ध वो दिव इत्यन्वाहात्याक्रम्याश्राव्याहेन्द्रं यजेतीन्द्रं नर इति यजति
स्व एवैभ्यो भागधेये समदं दधाति वितृँ हाणास्तिष्ठन्तीति ब्राह्मणम्

एतामेव निर्वपेद्यः कामयेत कल्पेरन्निति
यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान्यथायथं कल्पयति
कल्पन्त एवेति ब्राह्मणं तस्या एता भवन्ति याः पूर्वस्याः  १९

ऐन्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इत्येतयेष्ट्या
यक्ष्यमाण उपकल्पयत उपाधाय्यपूर्वयं वासोऽथ वै भवत्यैन्द्रस्यावदाय
वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादित्यृस ऐन्द्रस्यावदाय
द्विर्वैश्वदेवस्यावद्यत्यथैन्द्रस्योपरिष्टादिन्द्रियेणैवास्मा उभयतः
सजातान्परिगृह्णातीति ब्राह्मणं तस्या एते भवतो भरेष्विन्द्रम्ममत्तु न
इत्यन्वाहार्यमासाद्योपाधाय्यपूर्वयं वासो ददाति
पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकाम इत्यथ वै भवति
प्रियवती याज्यानुवाक्ये भवत इति
तस्या एते भवतः प्रिया वो नाम हुवे तुराणां श्रियसे कं भानुभिरिति
यः समानैर्मिथो विप्रियः स्यात्तमेतया संज्ञान्या याजयेदिति
स यैः संजिज्ञासीत तेषूपसमेतेष्वग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपति
सोमाय रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं
वरुणायादित्यवते चरुमिति
तस्या एते भवतोऽग्निः प्रथमो वसुभिर्नो अव्यात्सं नो देवो वसुभिरिति  २०

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति
तस्या एते भवतो यज्ञो देवानां शुचिरप इत्यृ
आदित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वापरुध्यमानो
वेत्यथादितेऽनुमन्यस्वेत्यपरुध्यमानोऽपरोद्धुः पदपाँ
सूनादत्तेऽथैनानादायाहरत्युपप्रेत मरुतः सुदानव एना विश्पतिनाभ्यमुँ
राजानमित्यथैनान्यजमानस्याञ्जलावावपति सत्याशीरितीह मन
इत्युपनिगृह्णीतेऽत्रैतान्पदपाँ सूनसंचरे परावपत्यत्र यं यजमानो द्वेष्टि तं मनसा
ध्यायति

तस्या एते भवतो धारयन्त आदित्यासस्तिस्रो भूमीर्धारयन्निति
यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेद्शुक्लाँश्च कृष्णाँश्च विचिनुयादित्यथ वै भवति
ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदिति
तस्या एते भवतस्त्यान्नु क्षत्रियान्न दक्षिणेत्यादित्या वै देवतया विड्विशमेवावगच्छतीति ब्राह्मणम्
अथ वै भवत्यवगतास्य विडनवगतँ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेदिति
तस्या एते भवत इमं मे वरुण तत्त्वा यामीति
वारुणं वै राष्ट्रम्
उभे एव विशं च राष्ट्रं चावगच्छतीति ब्राह्मणम् २१

अथ वै भवति
यदि नावगच्छेदिममहमादित्येभ्यो भायं निर्वपाम्यामुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदिति

निरुप्योपरमत्यथावगच्छते सँसादयति
तस्या एते भवतो यज्ञो देवानामादित्यानामवसा नूतनेनेत्यादित्या एवैनं भागधेयं प्रेप्सन्तो विशमवगमयन्तीति ब्राह्मणम्
अथ वै भवति
यदि नावगच्छेदाश्वत्थान्मयूखान्सप्त मध्यमेषायामुपहन्यादिति
प्रागीषमनोऽवस्थापयित्वाश्वत्थान्मयूखान्सप्त मध्यमेषायामुपहन्ति
मध्यममुपहत्य त्रीन्प्रतीचस्त्रीन्प्राच
आयातयतीदमहमादित्यान्बध्नाम्यामुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्धवीरा विशमवगमयन्तीति ब्राह्मणम्
अथ वै भवति
यदि नावगच्छेदेतमेवादित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्संनह्येत्
तान्सहेध्मेनाभ्यादध्यादिति
तान्सहैवेध्मेनाभ्यादधात्यनपरुध्यमेवावगच्छतीति ब्राह्मणम्
अथ वै भवत्याश्वत्था भवन्ति

मरुतां वा एतदोजो यदश्वत्थ ओजसैव विशमवगच्छति
सप्त भवन्ति
सप्तगणा वै मरुतो गणश एव विशमवगच्छतीति ब्राह्मणं तस्या एते एव
भवतः २२

अथ वै भवति
यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्याँ शतकृष्णलां निर्वपेदित्येतयेष्ट्या
यक्ष्यमाण उपकल्पयते शतँ सुवर्णानि कृष्णलानि नवं पात्रं
प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा प्रजापतये
जुष्टं निर्वपामीति चतुरो मुष्टीन्कृष्णलानां निर्वपति
हविष्कृता वाचं विसृज्य गार्हपत्ये नवं पात्रमधिश्रित्य तिरः
पवित्रमाज्यमानीय तिरः पवित्रं कृष्णलान्यावपत्य्
अथाज्यं निर्वपत्यथाज्यमधिश्रित्योभयं पर्यग्निकृत्वान्तर्वेद्यासादयत्यथ वै
भवति
चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या इत्यष्टौ देवताया
अवद्यति चत्वारि स्विष्टकृतेऽष्टाविडायै चत्वार्यवान्तरेडाया एकं
प्राशित्रायैकं यजमानायाज्यमेव जुह्वतो जुह्वत्याज्यं प्राश्नन्तः
प्राश्नन्त्यथैनान्येकधोद्धृत्य ब्रह्मण उपहरति
तस्या एते भवतो हिरण्यगर्भः प्रजापत इति २३

यो ब्रह्मवर्चसकामः स्यात्तस्मा एतँ सौर्यं चरुं निर्वपेदित्येतयेष्ट्या यक्ष्यमाण
उपकल्पयते पञ्च सुवर्णानि कृष्णलानि सुवर्णरजतौ च रुक्मवथैतं चरुँ
श्रपयित्वाभिघार्योदञ्चमुद्वास्य सुवर्णरजताभ्याँ रुक्माभ्यां
परिगृह्यान्तर्वेद्यासादयति
समानं कर्मा प्रयाजेभ्योऽथ वै भवति
प्रयाजेप्रयाजे कृष्णलं जुहोतीति
स प्रयाजेप्रयाज एव कृष्णलमन्ववधाय जुहोति
तस्या एते भवत उदु त्यं चित्रमित्यन्वाहार्यमासाद्य सुवर्णरजतौ रुक्मौ
ददात्याग्नेयमष्टाकपालं निर्वपेत्सावित्रं द्वादशकपालं भूम्यै चरुं यः कामयेत
हिरण्यं विन्देय हिरण्यं मोपनमेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते

हिरण्यं तस्या एता भवन्ति स प्रत्नवद्दिन काव्या हिरण्यपाणिमूतये वाममद्य
सवितर्बडित्था पर्वतानां स्तोमासस्त्वा विचारिणीत्य्
अन्वाहार्यमासाद्य हिरण्यं ददात्येतामेव निर्वपेद्धिरण्यं वित्त्वेति
तस्या एता एव भवन्त्येतामेव निर्वपेद्यस्य हिरण्यं नश्येदिति
तस्या एता एव भवन्ति २४

यः सोमवामी स्यात्तस्मा एतँ सोमेन्द्रँ श्यामाकं चरुं निर्वपेदिति
तस्या एते भवत ऋदूदरेणापान्तमन्युरिति
सोमवामी वा अन्यो भवत्यन्यः सोमातिपवितो भवति
यः सोमातिपवितः स्यात्तस्मा एतँ सोमेन्द्रँ श्यामाकं चरुं निर्वपेदिति
तस्या एते भवतः प्र सुवानः सबाधस्त इत्यग्नये दात्रे पुरोडाशमष्टाकपालं
निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकाम इत्येतयेष्ट्या
यक्ष्यमाण उपकल्पयते दधि मधु घृतमपो यवानित्यथ देवस्य त्वा सवितुः
प्रसव इति प्रतिपदं कृत्वाग्नये दात्रे जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां
निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्राय प्रदात्रे जुष्टं निर्वपामीति चतुर एव
व्रीहीणाम्
एतामेव प्रतिपदं कृत्वा प्रजापतये जुष्टं निर्वपामीति चतुरो यवानां तेषां
व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवान्
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनाद्
अध्युप्य दक्षिणार्धे गार्हपत्यस्याष्टौ
कपालान्युपदधात्येकादशोत्तरतोऽथैतान्यवानुलूखले परिक्षुद्य गार्हपत्य
एककपालमधिश्रित्य धाना भर्जन्ति
यदैते हविषी अधिपृणक्ति तदैता धानाश्चतुष्टयेनोपसृजति दध्ना मधुना
घृतेनाद्भिरिति
तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने शतिनः प्रदातारँ हवामहे
प्रदाता वज्री घृतं न पूतमुभे सुश्चन्द्र सर्पिष इति २५

यो यज्ञविभ्रष्टः स्यात्तस्मा एतामिष्टिं
निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालँ सौम्यं चरुमित्यथ वै

भवत्याग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेदिति
स आग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयति
तेजश्चैवास्मिन्ब्रह्मवर्चसं च समीची दधातीति ब्राह्मणं तस्या एता भवन्ति स
प्रत्नवद्िन काव्येन्द्रं वो विश्वतस्परीन्द्रं नरस्त्वं नः सोम या ते धामानीति
अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदिति
तस्या एते भवतोऽग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयमष्टाकपालं
निर्वपेद्ब्रह्मवर्चसकाम इति
यो ब्रह्मवर्चसकामः स्यात्सोऽग्नीषोमीयमष्टाकपालँ श्यामाकानां निर्वपति
तस्या एते भवतोऽग्नीषोमाविमँ सु मेऽग्नीषोमा हविषः प्रस्थितस्येति

सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैव्याद्बिभीयादिति
तस्या एते भवत आप्यायस्व सं त इति
ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद्ग्रामकाम इत्यथ वै भवति
गणवती याज्यानुवाक्ये भवत इति
तस्या एते भवतो गणानां त्वा गणपतिँ हवामहे स इज्जनेनेत्येतामेव निर्वपेद्यः
कामयेत ब्रह्मन्विशं वि नाशयेयमिति
मारुती याज्यानुवाक्ये कुर्यादिति
तस्या एते भवतो मरुतो यद्ध वो दिवो या वः शर्मेति   २६

अर्यम्णे चरुं निर्वपेत्सुवर्गकाम इति
तस्या एते भवतसर्यमायाति ये तेऽर्यमन्नित्यर्यम्णे चरुं निर्वपेद्यः कामयेत
दानकामा मे प्रजाः स्युरिति
तस्या एते भवतोऽर्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामिति
तस्या एते एव भवतो यो राजन्य आनुजावरः स्यात्तस्मा
एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदित्यथ वै भवति
बुध्नवती अग्रवती याज्यानुवाक्ये भवत इति
तस्या एते भवतो बुध्नादग्रमङ्गिरोभिर्गृणानो बुध्नादग्रेण विमिमाय मानैरिति
यो ब्राह्मण आनुजावरः स्यात्तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेदित्यथ
वै भवति
बुध्नवती अग्रवती याज्यानुवाक्ये भवत इति

तस्या एते भवतो महान्मही अस्तभायद्वुध्नाद्यो अग्रमभ्यर्त्योजसेति २७

अथ वै भवति
यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति
तस्या एते भवतो नवोनवो भवति जायमानो यमादित्या अँ
शुमाप्याययन्तीति

यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे
पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ इत्यथ देवस्य त्वा
सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्राय राज्ञे जुष्टं निर्वपामीति चतुरो
मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्रायाधिराजायेन्द्राय स्वराज्ञ
इति चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य गार्हपत्य एकादशोत्तानानि
कपालान्युपदधात्यथ वै भवत्युत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय
त्रयः पुरोडाशा भवन्ति
त्रय इमे लोका एषां लोकानामाप्तय्युत्तरौत्तरो ज्यायान्भवतीति
स उत्तरमुत्तरमेव ज्यायाँ सं करोति
सर्वेषामभिगमयन्नवद्यतीति
सोऽवद्यन्नाहेन्द्राय राज्ञेऽनुब्रूहीति
प्राच्यां दिशि त्वमिन्द्रासि राजेत्यनूच्येन्द्रो जयाति न पराजयाता इति यजति
सोऽवद्यन्नाहेन्द्रायाधिराजायानुब्रूहीतीन्द्रो जयाति न पराजयाता
इत्यनूच्यास्येदेव प्ररिरिचे महित्वमिति यजति
सोऽवद्यन्नाहेन्द्राय स्वराज्ञेऽनुब्रूहीत्यस्येदेव प्ररिरिचे महित्वमित्यनूच्य प्राच्यां
दिशि त्वमिन्द्रासि राजेति यजति
व्यत्यासमन्वाहानिर्दाहायेति ब्राह्मणम् २८

य इन्द्रियकामो वीर्यकामः स्यात्तमेतया सर्वपृष्ठया याजयेदित्येतयेष्ट्या
यक्ष्यमाण उपकल्पयतेऽश्वमृषभं वृष्णिं बस्तमित्यथ देवस्य त्वा सवितुः
प्रसव इति प्रतिपदं कृत्वेन्द्राय राथंतराय जुष्टं निर्वपामीति चतुरो

मुष्टीन्व्रीहीणां निर्वपत्य्
एतामेव प्रतिपदं कृत्वेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवताय इति चतुरश्चतुरो मुष्टीनेकैकस्यै देवतायै
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युष्य गार्हपत्ये द्वादशोत्तानानि कपालान्युपदधात्यथ वै भवत्युत्तानेषु कपालेष्वधिश्रयत्ययातयामत्वाय
द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय
समन्तं पर्यवद्यतीति
सोऽवद्यन्नाहेन्द्राय राथंतरायानुब्रूहीत्यभि त्वा शूर नोनुम इत्यनूच्य त्वामिद्धि हवामह इति यजति
सोऽवद्यन्नाहेन्द्राय बार्हतायानुब्रूहीति
त्वामिद्धि हवामह इत्यनूच्य यद्द्याव इन्द्र त इति यजति
सोऽवद्यन्नाहेन्द्राय वैरूपायानुब्रूहीति
यद्द्याव इन्द्र त इत्यनूच्य पिबा सोममिन्द्र मन्दतु त्वेति यजति
सोऽवद्यन्नाहेन्द्राय वैराजायानुब्रूहीति
पिबा सोममिन्द्र मन्दतु त्वेत्यनूच्य कदा चन स्तरीरसीति यजति
सोऽवद्यन्नाहेन्द्राय शाक्वरायानुब्रूहीति
कदा चन स्तरीरसीत्यनूच्य रेवतीर्नः सधमाद इति यजति
सोऽवद्यन्नाहेन्द्राय रैवतायानुब्रूहीति
रेवतीर्नः सधमाद इत्यनूच्याभि त्वा शूर नोनुम इति यजति
व्यत्यासमन्वाहानिर्दाहायेति ब्राह्मणम् २९

अन्वाहार्यमासाद्याश्वमृषभं वृष्णिं बस्तमिति ददात्येतयैव यजेताभिशस्यमान इति
यैव पूर्वा सेयं यश्चक्षुष्कामः स्यात्तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालँ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालमिति

तस्या एते भवन्त्युदग्ने शुचयस्तव वि ज्योतिषोदु त्यं चित्रमुदग्ने शुचयस्तव वि ज्योतिषेत्युपहूतायामिडायामनहितमग्नीधे भवत्यथ यजमानाय त्रीन्पिण्डान्प्रयच्छत्युदु त्यं जातवेदसं सप्त त्वा हरितो रथे चित्रं

देवानामुदगादनीकमिति पिराडान्प्रयच्छति
चन्नुरेवास्मै प्रयच्छति
यदेव तस्य तदिति ब्राह्मणम्वैश्वदेवीँ सांग्रहणीं निर्वपेद्ग्रामकाम इति
वैश्वदेवं चरुँ संगृह्णन्त इव श्रपयन्त्यथ ध्रुवोऽसि ध्रुवोऽहँ सजातेषु
भूयासमिति परिधीन्परिदधाति
तस्या एते भवतो विश्वे देवा विश्वे देवा इत्यथ पुरस्तात्स्विष्टकृतः
स्रुवाहुतीरुपजुहोत्यामनमस्यामनस्य देवा इति तिस्रः ३०

अथ वै भवत्यग्निं वा एतस्य शरीरं गच्छति सोमँ रसो वरुण एनं
वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति
यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं
निर्वपेदित्येतयेष्ट्या यन्यमाण उपकल्पयते खादिरं नवं पात्रं नवनीतमाज्यं
यावतीः समा एष्यन्मन्येत तावन्मानं च प्रवर्तम्
अथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपति
सौम्यं चरुं वारुणं दशकपालँ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमिति

समानं कर्माज्यावेन्नणात्
स आज्यावेन्नणेऽनुवर्तयति यन्नवमैत्तन्नवनीतमभवदिति
समानं कर्मा स्रुचाँ सादनात्
सादयित्वा स्रुचोऽथैतं प्रवर्तं खादिरे नवे पात्र उपस्तीर्णाभिघारितँ सह
हविर्भिरन्तर्वेद्यासादयति
समानं कर्मा प्रयाजेभ्यः
प्रयाजैश्चरित्वा हविर्भिश्चरति
तस्या एता भवन्त्यायुष्ट आयुर्दा अग्न आप्यायस्व सं तेऽव ते हेड उदुत्तमम्प्र
णो देव्या नो दिवोऽग्नाविष्णू अग्नाविष्णू इत्यथ पुरस्तात्स्विष्टकृतः
स्रुवाहुतीरुपजुहोति ३१

अश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहेन्द्रस्य प्राणोऽसि तस्य
ते ददातु यस्य प्राणोऽसि स्वाहा मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां यस्य
प्राणोऽसि स्वाहा विश्वेषां देवानां प्राणोऽसि तस्य ते ददतु येषां प्राणोऽसि

स्वाहेति
हुत्वाहुत्वैव सँस्रावैः प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैतं प्रवर्तमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधात्यथ यजमानमाज्यमवेक्षयति घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः । तत्त्वा विष्णुः पर्यपश्यत्तत्त्वेडा गव्यैरयदित्यथ ब्रह्मणो हस्तमन्वारभ्यर्त्विजः पर्याहुः पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपाँ शोर्वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्यायि बृहद्रथंतरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया अग्नेस्त्वा मात्रया जगत्यै वर्तन्याग्रयणस्य वीर्येण देवस्त्वा सवितोत्सृजतु जीवातवे जीवनस्याया इत्य्
अथ हिरण्याद्घृतं निष्पिबति
निष्पिबन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियँ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैतं प्रवर्तमद्भिः प्रक्षाल्य दक्षिणे कर्ण आबध्नीत आयुष्टे विश्वतो दधदित्यथैनमनुपरिवर्तयत आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथास्य ब्रह्मा हस्तं गृह्णात्यग्निरायुष्मानित्यान्तादनुवाकस्य ३२

यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति
तस्या एते भवत इमं मे वरुण तत्त्वा यामीति
यद्यपरं प्रतिग्राही स्यात्सौर्यमेककपालमनुनिर्वपेदिति
तस्या एते भवत उदु त्यं चित्रमित्यथापोऽवभृथमवैत्यथ वै भवत्यपोनप्त्रीयं चरुं पुनरेत्य निर्वपेदिति

तस्या एते भवतोऽपां नपात्समन्या यन्तीति
यः पाप्मना गृहीतः स्यात्तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते दधि पय आमिक्षाया इत्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्रावरुणाभ्यां जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपति
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य दक्षिणार्धे गार्हपत्यस्यैकादश

कपालान्युपदधाति
यदैतं पुरोडाशमधिपृणक्ति तदैतामामिक्षां गार्हपत्ये श्रपयत्यथैतं
पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्यामिक्षया संप्रच्छाद्यान्तर्वेद्यासादयति ३३

अथ वै भवति
पयस्यायां पुरोडाशमवदधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव
चतुर्धा व्यूहति
दिक्ष्वेव प्रतितिष्ठति
पुनः समूहतीति
स आमिक्षां पुरोडाशाच्चतुर्धा कृत्वा व्यूहति या वामिन्द्रावरुणा यतव्या
तनूस्तयेममँहसो मुञ्चतं या वामिन्द्रावरुणा सहस्या रक्षस्या तेजस्या
तनूस्तयेममँहसो मुञ्चतमिति
पुनः समूहति समूह्यावद्यतीति
तस्या एते भवत इन्द्रावरुणयोरहमिन्द्रावरुणा युवमध्वराय न इत्यथ
पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति यो वामिन्द्रावरुणावग्नौ स्रामस्तं
वामेतेनावयज इत्यष्टौ ३४

अथ वै भवति
यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते
पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवतेऽग्नये प्रतीकवत इति

तस्या एता भवन्ति प्रप्रायमग्निः प्र ते यक्षि प्र त इयर्मि मन्म भुवो वि
पाजसा वि ज्योतिषा स त्वमग्ने प्रतीकेन तँसुप्रतीकँसुदृशँस्वञ्चमिति
यो भ्रातृव्यवन्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाँहोमुचे
पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावत इत्यथ वै
भवति
त्रयस्त्रिँशत्कपालं पुरोडाशं निर्वपतीति
य एवैते त्रय एकादशकपालास्त एवैत उक्ता भवन्ति
तस्या एता भवन्त्यँहोमुचे विवेष यन्मा वि न इन्द्रेन्द्र क्षत्रमिन्द्रियाणि
शतक्रतोऽनु ते दायीति

यो भ्रातृव्यवान्त्स्यात्स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय
पुरोडाशमष्टाकपालं निर्वपेत्
तँ शृतमासन्नमेतेन यजुषाभिमृशेदिति
तँ शृतमासन्नमेतेन यजुषाभिमृशत्योजोऽसि सहोऽसि बलमसि भ्राजोऽसि
देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरहमनेन
हविषामुं भ्रातृव्यमभिभूयासमिति
यद्वा हि देवहूतमानित्येतस्यानुवाकस्य सप्तदश सामिधेनीः पराचीरन्वाह
तस्या एते भवतः सखायः सं वः सम्यञ्चं सँसमिद्युवसे वृषन्निति ३५

यः प्रजाकामः स्यात्तस्मा एतं प्रजापत्यं गार्मुतं चरुं निर्वपेदिति
तस्या एते भवतः प्रजापते स वेदेति
यः पशुकामः स्यात्तस्मा एतँ सोमापौष्णं गार्मुतं चरुं निर्वपेदिति

तस्या एते भवतः सोमापूषणेमौ देवविति
चित्रया यजेत पशुकाम इति
श्वश्चित्रयेत्युपवसत्यथ प्रातराग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं
त्वाष्ट्रमष्टाकपालँ सरस्वत्यै चरुँ सरस्वते चरुँ सिनीवाल्यै
चरुमैन्द्रमेकादशकपालमिति
तस्या एते भवन्त्यग्निना रायिमश्नवद्गोमाँ अग्न आप्यायस्व सं त इह
त्वष्टारमग्रियं तन्नस्तुरीपमप्र णो देव्या नो दिवः पीपिवाँ सँसरस्वतो ये ते
सरस्व ऊर्मयः सिनीवालि या सुपाणिरिन्द्रं वो विश्वतस्परीन्द्रं नर इत्यथ
पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्ने गोभिर्न आगहीति पञ्चर्चो द्वे यजुषी
३६

कारीर्या यक्ष्यमाणो भवति
स उपकल्पयते कृष्णं वासः कृष्णतूषं कृष्णमश्वं कृष्णँ संदानं कृष्णाजिनं
कृष्णमधु करीरसक्तून्कृष्णां कुम्भीमामपक्वां कृष्णमनस्त्रिगधं कृष्णमविं
कृष्णं वर्षाहूस्तम्बं वैतसमिध्माबर्हिरित्यथ यजमानायतने कृष्णं वासः
कृष्णतूषं निदधात्यथाग्रेणाहवनीयं कृष्णमश्वं कृष्णेन संदानेन
संदित्यान्तर्वेदि कृष्णाजिने कृष्णमधु करीरसक्तून्निवपत्य्

उत्करे कुम्भीं निमिनोत्यथाग्रेणोत्करं प्रागीषमन स्थापयित्वा
तस्याग्रेणोपस्तम्भनं कृष्णामविं निग्रथ्नात्युत्तरेणाहवनीयं कृष्णं वर्षाहूस्तम्बं
वैतसमिध्माबर्हिरिति निदधात्यथ यजमानः कृष्णं वासः कृष्णतूषं परिधत्ते
३७

मारुतमसि मरुतामोजोऽपां धारां भिन्द्धीति
रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीवति
पुरोवातमेव जनयति वर्षस्यावरुद्ध्या इति ब्राह्मणम्
अथैतमश्वँ संदानात्प्रमुच्योत्तरवर्ग्येणाभिविद्मिपत्यभिक्रन्द स्तनय गर्भमाधा
इति
स यदि विधूनुते यदि मेहति यदि शकृत्करोति वर्षिष्यतीत्येव वेदाथ
वातनामानि जुहोति पुरोवातो वर्षञ्जिन्वरावृत्स्वाहेत्यष्टवथान्तर्वेदि
कृष्णाजिने मधुषा करीरसक्तून्संयौति मान्दा वाशाः शृन्ध्यूरजिराः ।
ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः । मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह
मावतेति
तिस्रः पिण्डीः कृत्वा समुच्चित्य कृष्णाजिनस्यान्तान्संदानेनोपनह्यति वृष्णो
अश्वस्य संदानमसि वृष्ट्यै त्वोपनह्यामीत्यथैना अनसः प्रथमायां
गधायामाबध्नाति ३८

देवा वसव्या अग्ने सोम सूर्येत्यहोरात्रे उपरमति
द्वितीयस्यामाबध्नाति देवाः शर्मण्या मित्रावरुणार्यमन्नित्य्
अहोरात्रे एवोपरमति
तृतीयस्यामाबध्नाति देवाः सपीतयोऽपां नपादाशुहेमन्नित्यहोरात्रे
एवोपरमत्यथ वै भवति
यदि वर्षेत्तावत्येव होतव्यमिति
यदि चैव वर्षति यदि नोभयेनैव पिण्डीर्जुहोति स्रुवोपस्तीर्णाभिघारिता
दिवा चित्तमः कृण्वन्त्या यं नर उदीरयथा मरुतः समुद्रत इत्यथासां
धूममन्वीक्षतेऽसितवर्णा हरयः सुपर्णा इति
यदि न वर्षेच्छ्वो भूते हविर्निर्वपेदग्नये धामच्छदे पुरोडाशमष्टाकपालं
निर्वपेन्मारुतँ सप्तकपालँ सौर्यमेककपालमिति

तस्या एता भवन्ति त्वं त्या चिदच्युताग्ने भूरीणि तव जातवेदो दिवो नो वृष्टिं मरुतो ररीध्वम्पिन्वन्त्यपो मरुतः सुदानव उदु त्यं चित्रमित्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यौर्वभृगुवच्छुचिमप्नवानवदाहुव इति तिस्रोऽथैतां कुम्भीमद्भिः पूरयति सृजा वृष्टिं दिव आद्भिः समुद्रं पृणेति सा यदि दीर्यते यदि भिद्यते वर्षिष्यतीत्येव वेदाथाविमभिजुहोत्यब्जा असि प्रथमजा बलमसि समुद्रियमिति
सा यदि विधूनुते यदि मेहति यदि शकृत्करोति वर्षिष्यतीत्येव वेदाथ वर्षाहूस्तम्बमभिजुहोति ३९

उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिमित्यथैनमाहवनीयेऽनुप्रहरति हिरण्यकेशो रजसो विसार इत्यथास्य धूममन्वीक्षत आ ते सुपर्णा अमिनन्त एवैरित्यथान्तर्वेदि तिष्ठन्कृष्णाजिनमवधूनोति ये देवा दिविभागा इत्यान्तादनुवाकस्य संतिष्ठते कारीर्यथातोऽञ्जःसवकारीर्याग्नेयमष्टाकपालं निर्वपति श्रपयित्वासादयति
तस्याः पञ्चदश सामिधेन्यः पञ्च प्रयाजा वार्त्रघ्नावाज्यभागवथ हविषोऽग्निर्मूर्धा भुव इति
त्रिष्टुभौ संयाज्ये
याभिश्चैव पिण्डीराबध्नाति याभिश्च जुहोति याभ्यां च धूममन्वीक्षते ताः सँसिध्यन्ति
संतिष्ठतेऽञ्जःसवकारीरी ४०

अथ वै भवति
त्रैधातवीयेन यजेताभिचरन्वाभिचर्यमानो वा सहस्रेण वा यक्ष्यमाणः सहस्रेण वेजानो यो वा यक्ष्य इत्युक्त्वा न यजत इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते सहस्रँ हिरण्यं तार्प्यं धेनुमित्यथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुरो मुष्टीन्व्रीहीणां निर्वपत्येतामेव प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुरो यवानाम् एतामेव प्रतिपदं कृत्वेन्द्राविष्णुभ्यां जुष्टं निर्वपामीति चतुर एव व्रीहीणां तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्य्

उपोद्यच्छन्ते यवान्
हविष्कृता वाचं विसृजते
समानं कर्माधिवपनादध्युप्य गार्हपत्ये द्वादश कपालान्युपदधात्यथ वै भवति
द्वादशकपालः पुरोडाशो भवति
ते त्रयश्चतुष्कपालास्
त्रिष्षमृद्धत्वाय
त्रयः पुरोडाशा भवन्ति
त्रय इमे लोका एषां लोकानामाप्त्यै युत्तरौत्तरो ज्यायान्भवतीति
स उत्तरमुत्तरमेव ज्यायाँ सं करोति यवमयं मध्येऽथ वै भवति ४१

सर्वाणि छन्दाँस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्
त्रिष्टुभो वा एतद्वीर्यं यत्ककुदुष्णिहा जगत्यै
यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाँस्यवरुन्द्ध इति
प्र सो अग्ने तवोतिभिरित्येतासां द्वे धाय्यालोके दधात्यथाग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति सरूपत्वायेति ब्राह्मणं
सर्वेषामभिगमयन्नवद्यतीति
तस्या एते भवतः सं वां कर्मणोभा जिग्यथुरित्यन्वाहार्यमासाद्य सहस्रँ हिरण्यं तार्प्यं धेनुमिति ददाति
यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान्घ्नँश्चरेदिति तस्मा
एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदित्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्मयं दाम
तस्या एते भवतोऽस्मे इन्द्राबृहस्पती बृहस्पतिर्नः परिपातु
पश्चादित्यन्वाहार्यमासाद्य हिरण्मयं दाम ददाति ४२

वैश्वानरं द्वादशकपालं निर्वपेदनिष्ट्वाग्रयणेन नवान्नं जग्धा यो वान्यस्याग्निषु यजेत यस्य वान्योऽग्निषु यजेत
सोऽरण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य वैश्वानरं द्वादशकपालं निर्वपति
तस्या एते भवतो वैश्वानरो न ऊत्या पृष्टो दिवीत्यग्नये तन्तुमते

पुरोडाशमष्टाकपालं निर्वपेद्विच्छिन्नाग्निहोत्रो यो श्रा कामयेत प्रजायै मे तन्तुर्न विच्छिद्येतेति
सोऽरणयोरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपेदिति
तस्या एते भवतस्त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाग्ने पृष्ठं वयमारुहेम श्रथा देवैः सधमादं मदेम ॥ स्वयं कृणवानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्नँ सधस्थमनुपश्यमान श्रा तन्तुमग्निर्दिव्यं ततानेति
स्विष्टवत्यौ संयाज्ये हव्यवाहमभिमातिषाहं रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यन्तं पुरन्धिमग्निँ स्विष्टकृतमाहुवेम ॥ स्विष्टमग्ने श्रभि तत्पृणाहि विश्वा देव पृतना श्रभिष्य । उरुं नः पन्थां प्रदिषन्विभाहि ज्योतिष्मद्धेह्यजरं न श्रायुरित्यग्नये व्रतभृते पुरोडाशमष्टाकपालं निर्वपेद्य श्राहिताग्निरश्रु कुर्यादिति
तस्या एते भवतस्त्वमग्ने व्रतभृच्छुचिर्देवाँ श्रासादया इह । श्रग्ने हव्याय वोढवे ॥ व्रता नु बिभ्रद्व्रतपा श्रदाभ्यो यजानो देवाँ श्रजरः सुवीरः । दधद्रत्नानि सुविदानो श्रग्ने गोपाय नो जीवसे जातवेद इत्य्
श्रथ यस्याग्नयो वृथाग्निभिः सँसृज्येरन्मिथो वान्यस्य वाग्निभिः
सोऽरणयोरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याग्नये विविचये पुरोडाशमष्टाकपालं निर्वपत्यग्नये व्रतपतय इति
तस्या एता भवन्ति वि ते विष्वग्वातजूतासो श्रग्ने त्वामग्ने मानुषीरीडते विशस्त्वमग्ने व्रतपा श्रसि यद्वो वयं प्रमिनाम व्रतानीति
संतिष्ठन्त इष्टयः संतिष्ठन्त इष्टयः ४३

## चतुर्दशः प्रश्नः

श्रथ वै भवति
प्रजापतिरकामयत प्रजाः सृजेयेति
स तपोऽतप्यत
स सर्पानसृजत
सोऽकामयत प्रजाः सृजेयेति
स द्वितीयमतप्यत

स वयाँस्यसृजत
सोऽकामयत प्रजाः सृजेयेति
स तृतीयमतप्यत
स एतं दीक्षितवादमपश्यत्
तमवदत्ततो वै स प्रजा असृजतेति
तत्पृच्छन्ति कतमत्तत्तपस्यत्तपस्तप्त्वा दीक्षितवादं वदतीत्यथ वै
भवत्यङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति
साक्षादेव दीक्षातपसी अवरुन्द्ध इत्येतदिति ब्रूयादित्यथ वै भवति
यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति
नीलमस्य हरो व्येतीति
सोऽमेध्यं दृष्ट्वा जपत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाँ श्रेष्ठो दीक्षे मा
मा हासीरित्याह
नास्माद्दीक्षापक्रामति
नास्य नीलं न हरो व्येतीति ब्राह्मणम्
अथ वै भवति
यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य
निर्घ्नन्तीति
सोऽभिवृष्यमाणो जपत्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा
तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते
नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्तीति ब्राह्मणम्
अथ वै भवत्यग्निर्वै दीक्षितस्य देवता
सोऽस्मादेतर्हि तिर इव यर्हि यातीति
सोऽस्मात्समारूढस्तिर इव भवति

सोऽरणयोरग्नीन्त्समारोह्य बृहस्पतिवत्यर्चा प्रयाति
भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह
ब्रह्म वै देवानां बृहस्पतिस्
तमेवान्वारभते
स एनँ संपारयतीति ब्राह्मणम्प्रजातमपाँ संयानस्योक्तमध्यवसानस्याथ वै
भवति

यो वै सोमँ राजानँ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाँ साम्राज्यं
छन्दाँसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः
पुरस्तात्सोमस्य क्रयादेवमभिमन्त्रयेतेति
स पुरस्तात्सोमस्य क्रयादेवमभिमन्त्रयते १

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताद्छन्दोमानाँ साम्राज्यं गच्छेति मे सोमाय ब्रूतादिति
साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति
गच्छति स्वानाँ साम्राज्यमिति ब्राह्मणम्
अथ वै भवति
यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति
ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रतितिष्ठतीति
प्रजापतौ मनसीति ब्रूयात्
त्रिरवजिघ्रेदिति
स त्रिरवजिघ्रति प्रजापतौ त्वा मनसि जुहोमि इत्येषा वै तानूनप्त्रस्य प्रतिष्ठा
य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणम्
अथ वै भवति
यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति
यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदिति

स यतो मन्यतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयत्येषा वा अध्वर्योः प्रतिष्ठा
य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणम्
अथ वै भवति
यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्
तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्या इति
तदेतदन्यत्र हविर्यज्ञेभ्योऽभिक्रामं जुहोतीति हविर्यज्ञेषु भवत्यथ वै भवति
यो वा अध्वर्योः स्वं वेद स्ववानेव भवति

स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वं
यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत्स्वादियादिति
स वायव्यं चैव चमसं चान्वारभ्याश्रावयति
स्वादेव नैतीति ब्राह्मणम्
अथ वै भवति
यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठित स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोम स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादित्युन्नयनँ ह्येव चमसस्य ग्रहणं स ग्रहं वैव गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति
प्रत्येव सोमँ स्थापयति प्रति स्तोमं प्रत्युक्थानि
प्रति यजमानस्तिष्ठति प्रत्यध्वर्युरिति ब्राह्मणम् २

अथ वै भवति
यज्ञं वा एतत्संभरन्ति यत्सोमक्रयण्यै पदं
यज्ञमुखँ हविर्धाने
यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति
स यर्हि हविर्धाने प्राची प्रवर्तयति तर्हि तेन पदतृतीयेन पत्न्यक्षधुरमुपानक्ति

यज्ञमुख एव यज्ञमनुसंतनोतीति ब्राह्मणम्
अथ वै भवति
प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाँसि प्रवर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून्यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणँ हरेदिति
स यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणँ हरति
तेनैवैनं भागिनं करोतीति ब्राह्मणम्
अथ वै भवति
यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणँ हरन्ति
स वैव स्यान्निर्मन्थ्यं वा कुर्यादिति

स यद्यहैनं करिष्यन्भवति नैनमन्वानयतेऽजस्र एवाप्येष दीप्यमानः शेते
यद्यु वा एनमन्वानयते तस्य पशुवेलायामुल्मुकमादायारणी उपसंगृह्य पूर्वः
पशोः प्रतिपद्यते
निर्मन्थ्येनात्र पशुँ श्रपयन्ति
वपया तत्सहोल्मुकमाहरन्ति यजमानस्य सात्मत्वायेति ब्राह्मणम्
अथ वै भवति
यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति
स यावन्ति पशोरवदानानि नश्यन्ति तावत्कृत्व आज्यस्य
प्रत्याख्यायमवद्यति
सैव ततः प्रायश्चित्तिरिति ब्राह्मणम्
अथ वै भवति
ये पशुं विमथ्नीरन्यस्तान्कामयेतार्तिमार्च्छेयुरिति कुविदङ्गेति
नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयादिति

स कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहोति
नमोवृक्तिमेवैषां वृङ्क्ते
ताजगार्तिमार्च्छन्तीति ब्राह्मणं यद्यु वा एकचरं विमथ्नीते शामित्र एतां
जुहोति
प्रज्ञातमुपाकरणस्योक्तमपाव्यानां चरणम्ब्राह्मणमुत्तरम् ३

अथ वै भवति
यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान्भवति
यो यथादेवतं न देवताभ्य आवृश्च्यते
वसीयान्भवत्याग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमाग्नेय्या स्रुचो
वायव्यया वायव्यान्यैन्द्रिया सदसिति
स आग्नेय्यर्चाग्नीध्रमभिमृशति वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया
वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुपचरति
न देवताभ्य आवृश्च्यते वसीयान्भवतीति ब्राह्मणम्
उक्तमौदुम्बराणां महापरिधीनां परिधानम्
उक्तँ स्रुचाँ सादनम्

उक्तं पात्राणामभिमर्शनम्
अथ वै भवतीष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत
आसन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इति पुरा
प्रातरनुवाकाज्जुहुयादिति
पुरा प्रातरनुवाकान्महारात्र उत्थायाग्नीध्र आसन्यां जुहोत्यासन्यान्मा
मन्त्रात्पाहि कस्याश्चिदभिशस्त्याः स्वाहेत्यात्मन एव तदध्वर्युः पुरस्ताच्छर्म
नह्यतेऽनार्त्या इति ब्राह्मणम्

अथ वै भवति
यो वै छन्दोभिरभिभवति स सँसुन्वतोरभिभवतीति
स सँसुन्वतोर्महारात्र उत्थायाग्नीध्रे तिस्रोऽभिभूतीर्जुहोत्य्संवेशाय
त्वोपवेशाय त्वा गायत्रिया अभिभूत्यै स्वाहा संवेशाय त्वोपवेशाय त्वा
त्रिष्टुभोऽभिभूत्यै स्वाहा संवेशाय त्वोपवेशाय त्वा जगत्या अभिभूत्यै
स्वाहेत्यथ द्वे प्राणाहुती जुहोति प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा
हासिष्टमित्यथ वै भवति
देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाँ सोमः समृच्छते
संवेशाय त्वोपवेशाय त्वेत्याह
छन्दाँसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाँसि वृङ्क इति ब्राह्मणम्
अथ वै भवति
यस्य भूयाँसो यज्ञक्रतव इत्याहुः स देवता वृङ्क इति
यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत इत्युक्थ्यं क्रतुमुपैति
यद्युक्थ्यः स्यादतिरात्रं कुर्वीतेत्यतिरात्रं क्रतुमुपैति
यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान्भवतीति ब्राह्मणम्
इति न्वा अध्वर्युतोऽथ छन्दोगतः
प्रेतिवन्ति चैतिवन्ति चाज्यानि भवन्त्यभिजित्यै
मरुत्वतीः प्रतिपदो विजित्ययुभे बृहद्रथंतरे भवत इति न्वै छन्दोगतोऽथ
होतृतः
सजनीयँ शस्यं विहव्यँ शस्यमगस्त्यस्य कयाशुभीयँ शस्यमिति न्वा
एकाहयाजिनोऽथ सत्त्रिणां महारात्र उत्थानं चैव समानं पञ्चाभिभूतीर्द्वे
प्राणाहुती

ते यथाक्रत्वेव यन्त्यादिष्टान्येवाहान्युपयन्त्युक्तं निग्राभ्यासु वाचनम्
अथ वै भवत्योषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोम इति
सोऽभिषोष्यन्नोषधीभ्योऽधि राजानं निर्याचतेऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भाग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यन्ताँ सवनाय सोममित्याहौषधीभ्य एवैनँ स्वायै विशः स्वायै देवतायै निर्याच्याभिषुणोतीति ब्राह्मणम्
अथ वै भवति
यो वै सोमस्याभिषूयमाणस्य प्रथमोऽँशु स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून्यजमानस्य निर्हन्तोस्तमभिमन्त्रयेतेति
स यः सोमस्याभिषूयमाणस्य प्रथमोऽँशु स्कन्दति तमभिमन्त्रयेता मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामाशास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घातायेति ब्राह्मणम्
अत्रैषा द्रप्सानुमन्त्रणीया
तामितराभिः सह वक्ष्यामोऽथ वै भवति ४

यो वै देवान्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु
यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपाँशु गृह्णीयाद्यानूर्ध्वाँस्तानुपब्दिमत इति
स यान्प्राचीनमाग्रयणाद्ग्रहान्ग्रह्णाति तानुपाँशु गृह्णाति
यानूर्ध्वाँस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान्मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्विति ब्राह्मणं ते यत्र बहिष्पवमानँ स्रप्स्यन्तो भवन्ति तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्यग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहेति
माध्यंदिने पवमाने तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाँ सुमतौ स्याम स्वाहेत्यार्भवे पवमाने तथैव

समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोतीदं तृतीयँ सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहेत्यथ वै भवत्यायतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतना ऐन्द्रवायवमादायाघारमाघारयेदिति
स ऐन्द्रवायवमादायाघारमाघारयत्यध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय । विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम स्वाहेति
सौम्या एव तदाहुतीरायतनवतीः करोत्य्
आयतनवान्भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति
ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति य एवं वेदेति ब्राह्मणम्
अथ प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः सँस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यँ रायस्पोषँ सुवीर्यँ संवत्सरीणाँ स्वाहेत्यथ वै भवति
मनुः पुत्रेभ्यो दायं व्यभजत्
स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्
स आगच्छत्
सोऽब्रवीत्कथा मा निरभागिति
न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते
ते सुवर्गं लोकं न प्रजानन्ति
तेभ्य इदं ब्राह्मणं ब्रूहि
ते सुवर्गं लोकं यन्तो य एषां पशवस्ताँस्ते दास्यन्तीति
तदेभ्योऽब्रवीदिति
तत्पृच्छन्ति किमेभ्यस्तदुवाचेत्यपाव्यानि सन्तनीर्द्रप्सानुमन्त्रणीया अच्छावाकीया स्तोत्रीयाः शस्त्रीयाः सत्यं वदत श्रद्धा वो मा विगादित्येतदेभ्यस्तदुवाचेति
तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छदित्युक्तस्यैष कर्मणोऽनुवादोऽथ द्वे प्रवृताहुती जुहोति
जुष्टो वाचो भूयासमृचा स्तोमँ समर्धयेत्युपरिष्टात्तृतीया
तामु तत्रैव वक्ष्यामोऽथ द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द यस्ते द्रप्सो यो द्रप्सो

यस्ते द्रप्स इत्यथ वै भवत्यध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्यसिति

ते यत्र बहिष्पवमानँ सर्पन्ति तत्प्रह्व एवाध्वर्युः प्रथमो बर्हिषी धुवानः सर्पति वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्याह
वाचमेव तद्यज्ञमुखे युनक्तीति ब्राह्मणम्
अथ वै भवति
वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानँ सर्पन्ति
पराञ्चो हि यन्ति
पराचीभि स्तुवते
वैष्णव्यर्चा पुनरेत्योपतिष्ठत इति
स वैष्णव्यर्चा पुनरेत्योपतिष्ठते
यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितमित्याह
यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययतीति ब्राह्मणम् ५

अथ वै भवति
यो वै पवमानानामन्वारोहान्विद्वान्यजतेऽनु पवमानानारोहति
न पवमानेभ्योऽवच्छिद्यत इति
बहिष्पवमाने पञ्चम्यां प्रस्तुतायां वाचयति श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेति
माध्यंदिने पवमानेऽष्टम्यां प्रस्तुतायां वाचयति सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यार्भवे पवमाने नवम्यां प्रस्तुतायां वाचयति सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्याहैते वै पवमानानामन्वारोहास्
तान्य एवं विद्वान्यजतेऽनु पवमानानारोहति
न पवमानेभ्योऽवच्छिद्यत इति ब्राह्मणम्

अथ वै भवति

यो वै पवमानस्य संततिं वेद सर्वमायुरेति
न पुरायुषः प्रमीयते
पशुमान्भवति
विन्दते प्रजां
पवमानस्य ग्रहा गृह्यन्तेऽथ वा अस्यैतेऽगृहीता द्रोणकलश आधवनीयः
पूतभृत्तान्यदगृहीत्वोपाकुर्यात्पवमानं विच्छिन्द्यात्
तं विच्छिद्यमानमध्वर्योः प्राणोऽनु विच्छिद्येतोपयामगृहीतोऽसि प्रजापतये
त्वेति द्रोणकलशमभिमृशेदिति
स प्रजापतये त्वेति द्रोणकलशमभिमृशतीन्द्राय त्वेत्याधवनीयं
विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं
पवमानमेव तत्संतनोति
सर्वमायुरेति
न पुरायुषः प्रमीयते
पशुमान्भवति
विन्दते प्रजामिति ब्राह्मणम्
अथ वै भवति
त्रीणि वाव सवनान्यथ तृतीयँ सवनमवलुम्पन्त्यनँशु कुर्वन्त उपाँशुँ
हुत्वोपाँशुपात्रेऽँशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयादिति
स य एवैष उपाँशुपात्रेऽँशुः प्रास्तो भवति तं माध्यंदिनीय
ऋजीषेऽपिसृज्याभिषुणोति
यदाप्याययति तेनाँशुमद्यदभिषुणोति तेनर्जीषि
सर्वाण्येव तत्सवनान्यँशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोतीति
ब्राह्मणम् ६

अथातो दीर्णप्रवृत्तानामेव मीमाँसा
द्रोणकलशे दीर्णे वा प्रवृत्ते वा पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये
जुहोत्यन्वारब्धे यजमाने विधुं दद्राणँ समने बहूनां युवानँ सन्तं पलितो
जगार । देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान स्वाहेत्य्
अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य स्वधाँ संभरति भूतिः
सोमेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यादिति

स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति
स यद्यु ह दीर्णो भवति प्रतिलिम्पत्येनं यद्यु वै प्रवृत्त उच्छ्रित्यैनं बर्हिषी
अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं
प्रस्कन्दयत्याधवनीये दीर्णे वा प्रवृत्ते वा तथैव पात्र्यां चतुर्गृहीतं
गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते
जठरेव पादाः । तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यँ
स्वाहेत्यथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य तथैव स्वदाँ
संभरति भूतिः सोमेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यादिति
स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति
स यद्यु ह दीर्णो भवति प्रतिलिम्पत्येनं यद्यु वै प्रवृत्त उच्छ्रित्यैनं बर्हिषी
अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयति
पूतभृति दीर्णे वा प्रवृत्ते वा तथैव पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये
जुहोत्यन्वारब्धे यजमाने द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि
विद्वान्। तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनुहाय जार्यै स्वाहेत्य्
अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य तथैव स्वधाँ संभरति
भूतिः सोमेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यादिति
स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति
स यद्यु ह दीर्णो भवति प्रतिलिम्पत्येनं यद्यु वै प्रवृत्त उच्छ्रित्यैनं बर्हिषी
अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयत्याग्रयणे
दीर्णे वा प्रवृत्ते वा तस्य पुरोरुचा हुत्वोच्छ्रित्यैनं बर्हिषी अन्तर्धाय
स्वधामानयत्यपोद्धृत्य बर्हिषी द्रोणकलशादेवाप्तुं प्रस्कन्दयत्य्
अथान्यस्मिन्ग्रहे दीर्णे वा प्रवृत्ते वा तस्यैव पुरोरुचा हुत्वोच्छ्रित्यैनं बर्हिषी
अन्तर्धाय स्वधामानयत्यपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयति ७

अथ वै भवति
देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत
ते देवा एतं महायज्ञमपश्यन्
तमतन्वताग्निहोत्रं व्रतमकुर्वत
तस्माद्द्विव्रतः स्याद्द्विर्ह्यग्निहोत्रं जुह्वति
पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत

दाश्र्यं यज्ञमाग्नेयं पशुमकुर्वत
वैश्वदेवं प्रातःसवनमकुर्वत
वरुणप्रघासान्माध्यंदिनँ सवनँ साकमेधान्पितृयज्ञं
त्र्यम्बकाँस्तृतीयसवनमकुर्वतेति
तत्पृच्छन्ति कतमः स महायज्ञ इत्ययमेव चातुर्मास्यः सोम उक्तो भवत्यथो खलु य एव कश्च सौम्योऽध्वरः स महायज्ञस्

तमेषामसुरा यज्ञमन्ववाजिगाँ सन्
तं नान्ववायन्
तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति
तदध्वरस्याध्वरत्वं
ततो देवा अभवन्परासुरा य एवं विद्वान्त्सोमेन यजते भवत्यात्मना परास्य भ्रातृव्यो भवतीति ब्राह्मणम्
अथ समस्तँ राजानमुपतिष्ठते परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान्देवान्परिभूमाँ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शँ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृज इति
चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं कामं कामयते
तमादिश्योन्मृष्टेऽथावकाशैश्चरति
प्राणाय मे वर्चोदा वर्चसे पवस्वेत्युपाँ
शुपात्रमवेक्षतेऽपानायेत्यन्तर्यामपात्रम्व्यानायेत्युपाँ शुसवनम्वाच इत्यैन्द्रवायवं दक्षक्रतुभ्यामिति मैत्रावरुणं श्रोत्रायेत्याश्विनं चक्षुर्भ्यामिति शुक्रामन्थिनवात्मन इत्याग्रयणम्
अङ्गेभ्य इत्युक्थ्यम्
आयुष इति ध्रुवम्प्रतिष्ठाया इत्यृतुपात्रे माध्यंदिने सवने
न प्रातःसवने
वीर्यायेत्यतिग्राह्यं वा षोडशिनं वावेक्षते
विष्णोर्जठरमसीति द्रोणकलशमवेक्षत इन्द्रस्य जठरमसीत्याधवनीयं
विश्वेषां देवानां जठरमसीति पूतभृतम्
अथ समस्तमेव राजानमुपतिष्ठते कोऽसि को नाम कस्मै त्वा काय त्वा यं

त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदँ सुप्रजाः प्रजया भूयासँसुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृज इति

चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं कामं कामयते तमादिश्योन्मृष्ट आयुरुन्मृजे भूतिमुन्मृजे ब्रह्मवर्चसमुन्मृजेऽमुष्य प्राणमुन्मृज इदमुन्मृज इति यमेव तर्पयति
स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्यां श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति
ताजक्प्रधन्वतीति ब्राह्मणम्
उक्तँ स्फ्यविघनानामुपस्थानम्
उक्तँ संप्रसर्पणस्योक्तो भक्षानुवाकः ८

उक्तं पृषदाज्यस्याविकृतस्य ग्रहणम्
उक्तो दधिघर्मोऽथ वै भवति
यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वावमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत्स्कन्देद्यजमानः प्रमायुकः स्यादित्यथ वै भवति
पशवो वै पृषदाज्यं
पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यँ स्कन्दति
यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णादिति ब्राह्मणम्
अथ वै भवति
प्राणो वै पृषदाज्यं
प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यँ स्कन्दति
यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति

हिरण्यमवधाय गृह्णातीति
स्कन्ने पृषदाज्ये कँसं वा चमसं वा याचति
तमन्तर्वेदि निधाय तस्य स्वधाँ संभरति भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यादिति

स्कन्नमनुमन्त्रयते भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये
स्वाहेत्यथैतस्याँ स्रुच्यवदधाति शतमानँ हिरण्यं नित्ये ग्रहणे
वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तम इत्यपोद्धृत्य
हिरण्यमश्वमवघ्राप्य सादयत्यथातोऽमेध्यभूतस्यैव श्वावघ्रातस्य
ध्वाङ्क्षावमृष्टस्य कीटावपन्नस्येति यदु चान्यदमेध्यं मन्यते
सर्वश एवैताँ स्रुचमप्सु प्रवेश्याथान्यस्याँ स्रुच्यवदधाति शतमानँ हिरण्यं
नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तम इत्यपोद्धृत्य
हिरण्यमश्वमवघ्राप्यैव सादयत्यथ वै भवति
वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यँ स्कन्दति
वैष्णव्यर्चा पुनर्गृह्णातीति
स वैष्णव्यर्चा पुनर्गृह्णाति
यज्ञो वै विष्णुर्यज्ञेनैव यज्ञँ संतनोतीति ब्राह्मणं ते यत्रान्तःशालं प्रचरिष्यन्तो
भवन्ति तदाह ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुहीति
तद्ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा
स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्योँ प्रचरतेति प्रतिष्ठेतीह हविर्यज्ञेषु
भवति

यत्राह ब्रह्मन्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह
तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात्साम्नः
सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य
सवितुः प्रसवे भूरिन्द्रवन्त स्तुतेति प्रातःसवने
भुव इन्द्रवन्त स्तुतेति माध्यंदिने
सुवरिन्द्रवन्त स्तुतेति तृतीयसवने
स्तुते स्तुतस्य दोहं वाचयति स्तुतस्य स्तुतमस्यूर्जं मह्यँस्तुतं दुहामा मा
स्तुतस्य स्तुतं गम्यादिति
शस्त्रे शस्त्रस्य दोहं वाचयति शस्त्रस्य शस्त्रमस्यूर्जं मह्यँ शस्त्रं दुहामा मा
शस्त्रस्य शस्त्रं गम्यादिति
तयोरुभयोरभ्यासं वाचयतीन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे
सत्याशीर्देवेषु भूयाद्ब्रह्मवर्चसं मागम्यादित्यथ यज्ञस्य पुनरालम्भं जपति
यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो

अस्माँ धिपतीन्करोतु वयँ स्याम पतयो रयीणामित्यथ वै भवति
यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे
स य स्तुतशस्त्रयोर्दोहमविद्वान्यजते तं यज्ञो दुहे
स इष्ट्वा पापीयान्भवति
य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे
स इष्ट्वा वसीयान्भवति
स्तुतस्य स्तुतमस्यूर्जं मह्यँस्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यँ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्

तं य एवं विद्वान्यजते दुह एव यज्ञम्
इष्ट्वा वसीयान्भवतीति ब्राह्मणम्
उक्तँ होत्रकाणाँ संतर्पणम्
उक्तानि वैश्वकर्मणान्युक्तमाशिरोऽवनयनम्
उक्ता ध्रुवस्य चर्याथ वै भवति ९

यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्रवर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्यैति
स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनँ सवनं वोक्थं वाचीत्याह माध्यंदिनँ सवनं प्रतिगीर्योक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि
सप्तपदा शक्वरी
शाक्वरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्त इति ब्राह्मणम्
अथ वै भवति
ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दाँ सि संपादयेत्
तेजः प्रातःसवन आत्मन्दधीतेन्द्रियं माध्यंदिने सवने पशूँस्तृतीयसवन इत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्योक्थं वाचीत्याह माध्यंदिनँ सवनं प्रतिगीर्योक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य
सप्तैतान्यक्षराणि

सप्तपदा शक्वरी
शाक्वराः पशवो जागतं तृतीयसवनं
तृतीयसवन एव प्रतिगरे छन्दाँसि संपादयत्यथो पशवो वै जगती
पशवस्तृतीयसवनं
पशूनेव तृतीयसवन आत्मन्धत्त इति ब्राह्मणम्

अथ वै भवति
यद्वै होताध्वर्युमभ्याह्वयत आव्यमस्मिन्दधाति
तद्यन्नापहनीत पुरास्य संवत्सराद्गृह आवेवीरन्शोँसा मोद इवेति प्रत्याह्वयत
इति
सोऽभ्याहूतः शोँसा मोद इवेति प्रत्याह्वयते
तेनैव तदपहत इति ब्राह्मणम्
अथ वै भवति
यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते
यदभिप्रतिगृणीयाद्यथायतया समृच्छते तादृगेव तद्यदर्धर्चाल्लुप्येत यथा
धावद्भ्यो हीयते तादृगेव तत्
तदाहुर्नाशाप्रतिगरी स्यादाशाप्रतिगरी ह वा अभि वा प्रतिगृणात्यर्धर्चाद्वा
लुप्यते
प्रणौतीत्येव प्रणौयादपानितीत्येवापान्याद्य एवं विद्वान्प्रतिगृणात्यन्नाद एव
भवत्यास्य प्रजायां वाजी जायत इति ब्राह्मणम्
अथ वै भवतीयं वै होतासावध्वर्युर्यदासीनः शँसत्यस्या एव तद्धोता
नैत्यास्त इव हीयम्
अथो इमामेव तेन यजमानो दुहे
यत्तिष्ठन्प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति
तिष्ठतीव ह्यसवथो अमुमेव तेन यजमानो दुहे
यदासीनः शँसति तस्मादितःप्रदानं देवा उपजीवन्ति
यत्तिष्ठन्प्रतिगृणाति तस्मादमुतःप्रदानं मनुष्या उपजीवन्ति
यत्प्राङासीनः शँसति

प्रत्यङ्तिष्ठन्प्रतिगृणाति तस्मात्प्राचीनँरेतो धीयते प्रतीचीः प्रजा जायन्ते इति

ब्राह्मणम्
अथ वै भवति
यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्रवर्तयति
पराङावर्तत इति
सोऽभ्याहूतः पराङावर्तते
वज्रमेव तन्निकरोतीति ब्राह्मणम्
उक्तं प्रतिनिर्ग्राह्याणां ग्रहणम्
उक्तँ सँस्रावस्यापिधानम्
उक्तमुपाँश्वन्तर्यामयोरनुमन्त्रणम्
उक्ता द्विदेवत्यानां चर्या १०

अथातोऽतिग्राह्याणामेव ग्रहणं स यद्येको यदि वा बहव
आग्रयणमेवैनान्गृहीत्वा गृह्णाति
माहेन्द्रस्यैव होममनु हूयन्ते
स आग्नेयं गृह्णात्यग्न आयूँषि पवस इत्यनुद्रुत्योपयामगृहीतोऽस्यग्नये त्वा तेजस्वते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरग्नये त्वा तेजस्वत इत्यथैनँ होष्यन्नवेक्षतेऽग्ने तेजस्विन्तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति
जुहोति दीक्षायै च त्वा तपसश्च तेजसे जुहोमीति
हुत्वा वाचयति तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीदिति
भक्षयति मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधात्वित्यथैन्द्रं गृह्णात्युत्तिष्ठन्नोजसा सहेत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वौजस्वते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वौजस्वत इत्य्
अथैनँ होष्यन्नवेक्षत इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति
हुत्वा वाचयत्योजोविदस्योजो मा मा हासीन्माहमोजो हसिषं मा मामोजो हासीदिति

भक्षयति मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधात्वित्यथ सौर्यर्चा सौर्यं गृह्णाति तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत इत्यथैनँ होष्यन्नवेक्षते सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति
जुहोति वायोश्च त्वापां च भ्राजसे जुहोमीति
हुत्वा वाचयति सुवर्विदसि सुवर्मा मा हासीन्माहँ सुवर्हासिषं मा माँ सुवर्हासीदिति
भक्षयति मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधात्विति
ते वा एते पृष्ठ्यस्य षडहस्योत्तरेष्वहःसु गृह्यन्त एकविँशे त्रिणवे त्रयस्त्रिँशे विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वायाप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वायेति ब्राह्मणम्
अथोपाकरणं जपति वायुर्हिंकर्तेत्यार्त्विज्यं वा करिष्यञ्छस्त्रं वा प्रतिगरिष्यन्नेतद्यजुर्जपतीडा देवहूरिति

प्रियो हैवार्त्विज्यस्य भवति
प्रश्नँ संव्याख्यास्यन्नेतद्यजुर्जपन्सभां प्रपद्यतेऽभि हैव तं प्रश्नं जयति ११

अथातोऽँश्वदाभ्ययोरेव ग्रहणम्
अँ श्वदाभ्यौ ग्रहीष्यन्नुपकल्पयते द्वे औदुम्बरे नवे पात्रे तयोश्चतुःस्रक्त्यँ शुपात्रं भवति श्लक्ष्णमदाभ्यपात्रं ते सुवर्णरजताभ्याँ रुक्माभ्यां पर्यस्ते भवतः शतमानं च हिरण्यम्
अथोपनद्धस्य राज्ञस्त्रीनँ शून्प्रबृहति वसवस्त्वा प्रबृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्रबृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा प्रबृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहीत्यथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य
द्वादशभिराधावैराधूनोति मान्दासु ते शुक्र शुक्रमाधूनोमीति प्रतिपद्य शुक्रासु ते शुक्र शुक्रमाधूनोमीत्यातोऽथैतस्मिन्नदाभ्यपात्रेऽँशूनुपसंगृह्य गृह्णाति शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो

धारा असश्चतेत्यथैनमादायोपोत्तिष्ठति ककुहँ रूपं वृषभस्य रोचते
बृहदित्यैति सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगा इत्येत्याहवनीये
जुहोत्यन्वारब्धे यजमाने यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम
सोमाय स्वाहेत्यथ प्रदक्षिणमावृत्य राजन्येवाँ शूनपिसृजत्युशिक्त्वं देव
सोम गायत्रेण छन्दसाग्नेः प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन
छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं देव सोम जागतेन छन्दसा
विश्वेषां देवानां प्रियं पाथो अपीहीत्य्
अथाह प्रतिप्रस्थातरुदकँसेन वा मोदचमसेन वा जघनेनाहवनीयं
प्रत्युपलम्बस्वेति
स तथा करोत्यथैतद्धिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ बध्नीते
नासिकायां वा प्रग्रथ्नात्यथ सकृदभिषुतस्य राज्ञोऽँशुं गृह्णाति वामदेव्यमिति
साम मनसा गायमानोऽनवानम्प्रजापतये त्वेति गृह्णाति प्रजापतये त्वेति
जुहोत्यथ हिरण्यमभिव्यनित्या नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वेत्यथान्तर्वेद्यद्भिर्मार्जयत इन्द्राग्नी मे
वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे
धत्तमश्विना ॥
दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत्। परि विश्वानि काव्या
नेमिश्चक्रमिवाभवदित्यध्वर्योरेतद्धिरण्यं भवति
ब्राह्मणमुत्तरम् १२

अथातः पृश्नीनामेव ग्रहणं संतृप्तँ राजानं दशधा व्यूह्याभिमृशति वायुरसि
प्राणो नामेति दशभिर्दश
ते वा एते संवत्सरस्याक्षीयेष्वहःसु गृह्यन्ते

यत्र क्व चैवैनान्गृह्णीयादित्येतदपरम्
अथातः परःसाम्नामेव ग्रहणं ते वा एते परःसामानः
पुरस्ताद्वैषुवतात्त्र्यहमन्वहमितः पराञ्चो गृह्यन्तेऽथ वैषुवतेऽह्नि पराञ्चश्चार्वाञ्चश्च
गृह्यन्तेऽथोर्ध्वं वैषुवतात्त्र्यहमन्वहमावृत्तानेव गृह्णाति
प्रजापतिर्देवासुरानसृजतेति ब्राह्मणमेवाथ वै भवत्यावृश्चयते वा
एतद्यजमानोऽग्निभ्यां यदेनयोः शृतंकृत्याथान्यत्रावभृथमवैत्यायुर्दा अग्ने

हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादिति
सोऽवभृथमवैष्यन्नायुर्दां दशमीं जुहोत्यायुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमाँ स्वाहेत्याहुत्यैवैनौ शमयति नार्तिमार्च्छति यजमान इति ब्राह्मणम्
उक्तं बर्हिषः पर्युपोषणम्
उक्तँ सक्तुहोमस्याथ वै भवति
यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयादिति
स्नातकः पुरूषमानोऽरण्ये प्रदाव्यं
दहन्तमुपाधिगम्याञ्जलिनोपस्तीर्णाभिघारितान्सक्तून्प्रदाव्ये जुहोति विश्वलोप विश्वदावस्य त्वासञ्जुहोमि स्वाहेति

हस्तौ प्रध्वँसयतेऽग्धादेकोऽहुतादेकः समसनादेकः । ते नः कृण्वन्तु भेषजँ सदः सहो वरेण्यमित्यथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति पवमानः सुवर्जन इत्येतेनाष्टर्चेन
शुद्धो हैव शुचिः पूतो मेध्यो भवत्यथ वै भवत्यह्नां
विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेदिति
समां विजिज्ञासमानो महारात्र उत्थायाह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरुदित आदित्ये विप्रुषित आददत
एतमपूपमुपस्तीर्णाभिघारितं पर्णसेवाभ्यां परिगृह्य
तत्सह पूतितृणानि भवन्त्यन्तमागारादेकोल्मुकमुदपात्रमित्येतत्समादाय तां दिशं यन्ति यत्रास्य कक्ष स्पष्टो भवति
तदेतदेकोल्मुकमुपसमाधायापूपमादीपयति पर्णसेवाभ्यां परिगृह्य
तत्सह पूतितृणानि भवन्ति
तेन कक्षमुपोषत्यथैनमुद्गृह्णात्यत्र विज्ञानमुपैति
यदि दहति पुण्यसमं भवति यदि न दहति पापसमम्
एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्त्रमुपयन्तीति ब्राह्मणम्
अत्रैतमपूपं प्राश्याप उपस्पृश्य गृहानेत्यृषभो गोषु जीर्यति तेन यक्ष्यमाणो भवति

तस्य तदुपक्लृप्तं भवति यत्पशुना यक्ष्यमाणस्याथ यद्युत्स्रक्ष्यन्भवति तस्य

निहत्य दक्षिणं कर्णमाजपति शिवस्त्वष्टः पिशङ्गरूप इति द्वाभ्याम्
अथैनं गोष्वपिसृजते १३

एतं युवानं परि वो ददामीत्यपियन्तमनुमन्त्रयते त्वां गावोऽवृणत राज्याय त्वाँ हवन्त मरुतः स्वर्काः । वर्ष्मन्क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनीत्यथेतरं त्वाष्ट्रं वैन्द्रं वा प्राजापत्यं वा पशुमालभत एता हि साण्डस्य देवतास्
तस्योपाकरणीययोरनुवर्तयति नमो महिम्न उत चक्षुषे त इत्यथास्य वपां जुहोति देवानामेष उपनाह आसीदित्यथास्य हविर्जुहोति पिता वत्सानां पतिरघ्नियानामिति
समानमुत्तरं पशुकर्म
वशया यक्ष्यमाण आह गर्भमीक्षध्वमिति
ते चेद्गर्भं पश्यन्ति संप्रच्छाद्य वशां वपयाद्रवन्त्यथास्यै वपां जुहोति सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः । बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु स्वाहेति
वशामनुमन्त्रयते यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्यै तां देवैः समजीगममित्यथ याचत्यष्टाप्रूड्हिरण्यं कोशं चान्तरकोशं च वासश्चोष्णीषं चाथैतद्धिरण्यमद्भिः प्रक्षाल्य वाससोपनह्योष्णीषेण विग्रथ्य दह्रे कोशेऽवधाय महति कोशेऽवदधाति
स आह प्रत्यञ्चं गर्भमन्तरेण सक्थिनी प्रतिनिवर्तयतेति
तं निवर्त्यमानमनुमन्त्रयत आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद । भूम्याश्चतस्रः प्रदिशस्ताभिरावर्तया पुनरित्युल्बाद्गर्भं विस्रस्यमानमनुमन्त्रयते वि ते भिनद्मि तकरीम्वि योनिं वि गवीन्यौ । वि मातरं च पुत्रं च वि गर्भं च जरायु च । बहिस्ते अस्तु बालितीत्यथैतं गर्भँ संदँ शेन परिगृह्याद्भिरभ्युक्ष्य शामित्रे प्रतितपति
तस्याभ्यर्धाद्वसाहोमं प्रश्चोतयत्यथैतं गर्भमन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं चोपातिगृत्य तं दक्षिणतः प्राञ्चमायातयन्पञ्चहोत्रा सादयत्यथ वशायै हविषा चरत्यथ पुरस्तात्स्विष्टकृतो गर्भस्यावद्यन्नाह विष्णवे शिपिविष्टायानुब्रूहीत्यथ वै भवति
पुरस्तान्वै नाभ्या अन्यदवद्येदुपरिष्टादन्यदिति

स पुरस्तान्नाभ्या अन्यदवद्यत्युपरिष्टादन्यद्द्विरभिघारयत्याश्राव्याह विष्णुँ शिपिविष्टं यजेति
वषट्कृते जुहोत्युरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम्।
एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनानु प्रथताँ स्वाहेत्य्
अथ स्विष्टकृता चरत्यथैतं गर्भं यथाहृतं प्रतिपर्याहृत्योत्तरार्ध आहवनीयस्य प्रत्यञ्चमायात्य भस्मनाभिसमूहति मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां पिपृतां नो भरीमभिरित्यध्वर्योरितत्कोशमिश्रं भवति
ब्राह्मणमुत्तरम् १४

अजवशया यक्ष्यमाणो भवति
स यान्यहान्यमेघसंपन्नानि मन्यते तेष्वाग्नेयमष्टाकपालं निर्वपति
या एता ब्राह्मणाभिविहिता देवतास्तासामेनामेकस्यै देवताया आलभते
तस्या उपाकरणीययोरनुवर्तयत्या वायो भूष शुचिपा इति
नियोजनेऽनुवर्तयत्याकूत्यै त्वा कामाय त्वा समृधे त्वेति
पर्यग्नौ क्रियमाणे पञ्च किक्किटाकारं जुहोति किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते प्राणं वायवे स्वाहा किक्किटा ते चक्षुः सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याँ स्वाहा किक्किटा ते वाचँ सरस्वत्यै स्वाहेत्यथैनामन्तरेण चात्वालोत्करावुदीचीं नीयमानामनुमन्त्रयते त्वं तुरीया विशिनी वशासि सकृद्यत्त्वा मनसा गर्भ आशयत्। वशा त्वं विशिनी गच्छ देवान्त्सत्याः सन्तु यजमानस्य कामा इत्युपासनेऽनुवर्तयत्यजासि रयिष्ठा पृथिव्याँ सीदोर्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भा इत्य्
अथास्यै वपां जुहोति तन्तुं तन्वन्नजसो भानुमन्विहीत्यथास्यै हविर्जुहोति मनसो हविरसि प्रजापतेर्वर्ण इत्यथास्या अवदानानां प्राश्नाति गात्राणां ते गात्रभाजो भूयास्मेत्यथ वै भवति
तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो भवति
यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत्सर्वं वा प्राश्नीयादित्युत्सन्नमेतस्या अप्सु प्रवेशनम्
एतेनैवास्यै मन्त्रेणावदानानां प्राश्याथेतरदग्नावनुप्रहरेदिति
बौधायनोऽनुनिधायमेनामद्यादित्याञ्जीगविरित्यथ वै भवति

सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्
त एवैतया यजेरन्
तेषामेवैषाप्तेति
तेषामु हैवैनयैको यजते १५

अथातो जयानामेव होमो जयान्होष्यनुपकल्पयते बाधकँ स्रुवं च स्रुचं च
बाधकान्परिधीञ्छरमयं बर्हिर्वैभीदकमिध्ममित्यथ वृथाग्निमुपसमाधाय
शरमयं बर्हि स्तीर्त्वा बाधकान्परिधीन्परिधाय वैभीदकमिध्ममभ्यज्य
स्वाहाकारेणाभ्याधाय बाधकेन स्रुवेणोपघातं जुहोति चित्तं च स्वाहा
चित्तिश्च स्वाहेति त्रयोदश स्रुवाहुतीरपि वा बाधकेन स्रुवेण बाधक्याँ स्रुचि
चतुर्गृहीतं गृहीत्वा सर्वान्मन्त्रान्समनुद्रुत्य जुहोति चित्तं च चित्तिश्चाकूतं
चाकूतिश्च विज्ञातं च विज्ञानं च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च
रथंतरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः
समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहेत्य्
अथ वै भवति
देवासुराः संयत्ता आसन्स इन्द्रः प्रजापतिमुपाधावत्
तस्मा एताञ्जयान्प्रायच्छत्
तानजुहोत्
ततो वै देवा असुरानजयन्
यदजयन्तज्जयानां जयत्वं स्पर्धमानेनैते होतव्या जयत्येव तां पृतनामिति
ब्राह्मणम्
अथ वै भवति
येन कर्मणेर्त्सेत्तत्र होतव्या इति
स यत्कर्मेर्त्सेदिदं मे समृध्येतेति
तस्मिन्नभ्यातानाञ्जुहुयादित्यभ्यातानान्होष्यन्नुपकल्पयते पर्णमयँ स्रुवं च स्रुचं
च पर्णमयान्परिधीन्कुशमयं बर्हिः पर्णमयमिध्ममित्यथ वृथाग्निमुपसमाधाय
कुशमयं बर्हि स्तीर्त्वा पर्णमयान्परिधीन्परिधाय पर्णमयमिध्ममभ्यज्य
स्वाहाकारेणाभ्याधाय पर्णमयेन स्रुवेणोपघातं जुहोत्यग्निर्भूतानामधिपतिः स
मावत्विति सप्तदश स्रुवाहुतीर्हुत्वा वाचयति पितरः पितामहासित्यपि वा
पर्णमयेन स्रुवेण पर्णमय्याँ स्रुचि चतुर्गृहीतं गृहीत्वा सर्वान्मन्त्रान्समनुद्रुत्य

हुत्वान्ततो वाचयति पितरः पितामहा इत्यथ समस्तानामेव
होमोऽभ्यातानानेवाग्रे जुहुयादथ जयानथ राष्ट्रभृतो ब्राह्मणमुत्तरम् १६

अथ वै भवति
राष्ट्रकामाय होतव्या इति
राष्ट्रकामाय होष्यन्नुपकल्पयते शम्यापरिधीनित्यथ वृथाग्निमुपसमाधाय
शम्यापरिधीन्परिधाय निशायाँ शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोति
ऋताषाड़तधामेति
राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमवरुन्द्धे
राष्ट्रमेव भवतीति ब्राह्मणम्
अथ वै भवत्यात्मने होतव्या इत्यात्मने होष्यन्वृथाग्निमुपसमाधाय निशायाँ
शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोति
राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव
राष्ट्रमवरुन्द्धे
वसिष्ठः समानानां भवतीति ब्राह्मणम्
अथ वै भवति
ग्रामकामाय होतव्या इति
ग्रामकामाय होष्यन्नधिदेवने वृथाग्निमुपसमाधाय निशायाँ शम्यापरिधौ द्विः
स्वाहाकारँ राष्ट्रभृतो जुहोति
राष्ट्रं वै राष्ट्रभृतो राष्ट्रँ सजाता राष्ट्रेणैवास्मै राष्ट्रँ सजातानवरुन्द्धे
ग्राम्येव भवतीति ब्राह्मणम्
अथ वै भवत्यधिदेवने जुहोत्यधिदेवन एवास्मै सजातानवरुन्द्धे
त एनमवरुद्धा उपतिष्ठन्त इति ब्राह्मणम्
अथ वै भवति
रथमुख ओजस्कामस्य होतव्या इत्योजस्कामस्य होष्यन्नुपर्यग्नौ रथमुखं
प्रगृह्य निशायाँ शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोत्योजो वै राष्ट्रभृत
ओजो रथ ओजसैवास्मा ओजोऽवरुन्द्ध ओजस्व्येव भवतीति ब्राह्मणम्
अथ वै भवति

यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या यावन्तोऽस्य रथाः

स्युस्तान्ब्रूयाद्युङ्ध्वमिति
राष्ट्रमेवास्मै युनक्तीति ब्राह्मणम्
अथ वै भवत्याहुतयो वा एतस्याक्लृप्ता यस्य राष्ट्रं न कल्पते
स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभिजुहुयादिति
स स्वरथस्यैव दक्षिणं चक्रं प्रवृह्योपर्यग्नौ रथनाडीं प्रगृह्य निशायाँ
शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोत्याहुतीरेवास्य कल्पयति
ता अस्य कल्पमाना राष्ट्रमनुकल्पत इति ब्राह्मणम् १७

अथ वै भवति
संग्रामे संयत्ते होतव्या इति
संग्रामे संयत्ते होष्यन्नुपकल्पयते मान्धुकमिध्ममित्यथ
प्रत्यमित्रमग्निमुपसमाधाय मान्धुकमिध्ममभ्यज्य स्वाहाकारेणाभ्याधाय
निशायाँ शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोत्यङ्गारा एव
प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्तीति ब्राह्मणम्
अथ वै भवति
य उन्माद्येत्तस्मै होतव्या इत्युन्मत्ताय होष्यन्नुपकल्पयते
नैयग्रोधमौदुम्बरमाश्वत्थं प्लाक्षमित्यथ वृथाग्निमुपसमाधायैतमिध्ममभ्यज्य
स्वाहाकारेणाभ्याधाय निशायाँ शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो
जुहोत्येते वै गन्धर्वाप्सरसां गृहाः
स्व एवैनानायतने शमयतीति ब्राह्मणम्
अथ वै भवत्यभिचरता प्रतिलोमँ होतव्या इत्यभिचरन्होष्यन्स्वकृत इरिणे
प्रदरे वामुतोऽर्वाचो वृथाग्निमुपसमाधाय निशायाँ शम्यापरिधौ द्विः
स्वाहाकारँ राष्ट्रभृतो जुहोति

यद्वाचः क्रूरं तेन वषट्करोति
वाच एवैनं क्रूरेण प्रवृश्चति
ताजगार्तिमार्च्छतीति ब्राह्मणम्
अथ वै भवत्यस्य कामयेतान्नाद्यमाददीयेति तस्य सभायामुत्तानो निपद्य
भुवनस्य पते इति तृणानि संगृह्णीयादिति
स यस्य कामयेतान्नाद्यमाददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत

इति तृणानि संगृह्णात्यथैनान्यादाय हरतीदमहममुष्यामुष्यायणस्यान्नाद्यँ हरामीत्याहान्नाद्यमेवास्य हरति
षड्भिर्हरतीति ब्राह्मणम्
अथैनानि स्वस्यां वा सभायाँ स्वेषु वामात्येष्वपिसृजति
प्रजापतिनैवास्यान्नाद्यमादायर्तवोऽस्मा अनुप्रयच्छन्तीति ब्राह्मणम्
अथ वै भवति
यो ज्येष्ठबन्धुरपभूतः स्यात्तँ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा तस्मै होतव्या इति
स यो ज्येष्ठबन्धुरपभूतः स्यात्तँ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा निशायाँ शम्यापरिधौ द्विः स्वाहाकारँ राष्ट्रभृतो जुहोति
वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं
वर्ष्मणैवैनं वर्ष्म समानानां गमयतीति ब्राह्मणम्
अथ वै भवति
चतुःशरावो भवति
दिक्ष्वेव प्रतितिष्ठति
क्षीरे भवति
रुचमेवास्मिन्दधात्युद्धरति शृतत्वाय
सर्पिष्वान्भवति मेध्यत्वाय
चत्वार आर्षेयाः प्राश्नन्ति
दिशामेव ज्योतिषि जुहोतीति ब्राह्मणम् १८

अथ वै भवति
देविका निर्वपेत्प्रजाकाम इति
प्रथमं धातारं प्रजाकामस्य करोति
प्रथमं पशुकामस्य
मध्यतो ग्रामकामस्य
मध्यतो ज्योगामयाविनः
प्रथमं यक्ष्यमाणस्योत्तममीजानस्य
प्रथमं मेधाकामस्य
मध्यतो रुक्कामस्य

ता वा एताः क्षीरे शृता भवन्ति
ता यत्सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वेप्रथमे निरुप्य धातुस्तृतीयं निर्वपेत्
तथो एवोत्तरे निर्वपेत्
तथैनं न प्रदहन्त्यथो यस्मै कामाय निरुप्यते तमेवाभिरुपाप्नोतीति ब्राह्मणम्
अथ वै भवति
यत्सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उपधत्ते यजमानोऽहोरात्राणि
वा एतस्येष्टका य आहिताग्निर्यत्सायंप्रातर्जुहोत्यहोरात्राण्येवाप्त्वेष्टकाः
कृत्वोपधत्ते
दश समानत्र जुहोति
दशाक्षा विराड्
विराजमेवाप्त्वेष्टकां कृत्वोपधत्तेऽथो विराज्येव यज्ञमाप्नोति
चित्यश्चित्योऽस्य भवति
तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनमिति
स यत्र दशोषित्वा प्रयास्यन्भवति तदग्निष्ठेऽनसि समवशमयन्ते यदस्य
समवशमयितव्यं भवत्यवास्त्वेव तद्यत्ततोऽर्वाचीनं रुद्रः खलु वै
वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाग्निरनूत्थाय
हन्याद्वास्तोष्पतीयं जुहोति
भागधेयेनैवैनँ शमयति
नार्तिमार्च्छति यजमान इति ब्राह्मणम्
अथ वै भवति
यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते
जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तद्
अहुतमस्य वास्तोष्पतीयँ स्याद्दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ
वास्तोष्पतीयं जुहोतीति
स यत्र दक्षिणो युक्तो भवति सव्योऽयुक्तस्तत्प्रत्याच्छेद्यां पर्णमय्याँ स्रुचि
चतुर्गृहीतं गृहीत्वाहवनीये वास्तोष्पतीयं जुहोति
वास्तोष्पते प्रतिजानीह्यस्मानित्यनुद्रुत्य वास्तोष्पते शग्मया सँसदा त इति
जुहोत्यत्रैताँ स्रुचमुपनिधाय सव्यं युक्त्वा प्रयात्युभयमेवाकरपरिवर्गमेवैनँ
शमयतीति ब्राह्मणम्
अथ वै भवति

यदेकया जुहुयाद्दर्विहोमं कुर्यात्
पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वायेति ब्राह्मणम्
अथ वै भवति
यद्धुत आदध्याद्रुद्रं गृहानन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा
यज्ञवेशसं वादहनं वा तादृगेव तदयं ते योनिर्ऋत्विय इत्यरण्योः
समारोहयत्येष वा अग्नेर्योनिः
स्व एवैनं योनौ समारोहयत्यथो खल्वाहुर्यदरण्योः समारूढो
नश्येदुदस्याग्निः सीदेत्पुनराधेयः स्यादिति
या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्त्समारोहयत इति
स आत्मन्त्समारोहयते या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा
वसूनि कृण्वन्नस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं
जातवेदो भुव आजायमानः सक्षय एहीत्यथैनमुपावरोहयत उपावरोह
जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजाँ रयिमस्मासु
धेह्यजस्रो दीदिहि नो दुरोण इति

यजमानो वा अग्नेर्योनिः
स्वायामेवैनं योन्याँ समारोहयत इति ब्राह्मणम् १९

उक्तोऽन्वारम्भोऽथ वै भवत्यृषयो वा इन्द्रं प्रत्यक्षं नापश्यन्
तं वसिष्ठः प्रत्यक्षमपश्यत्
सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ
मेतरेभ्य ऋषिभ्यो मा प्रवोच इति
तस्मा एतान्त्स्तोमभागानब्रवीत्
ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्तेति
तस्मादाहुर्वासिष्ठं ब्रह्मत्वमिति
स यत्राह ब्रह्मन्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा प्रसौति देव सवितरित्येतां
प्रतिपदं कृत्वा रश्मिरसि क्षयाय त्वा क्षयं
जिन्वेत्येतस्यानुवाकस्यैकेइकमुपादाय प्रसौति
स एवमेव प्रसुवन्द्वादशभिरग्निष्टोमं प्रसौति त्रयोदशभिर्वाजपेयमेकान्नत्रिँ
शतातिरात्रँ सर्वैरप्तोर्यामं स यत्र राथंतराय सन्धये प्रसर्पन्ति तदाह

वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति
स एवमेव
प्रसौत्याप्तोर्यामादथातोऽतिक्रामाणामेवाभिचरन्भ्रातृव्यवान्स्पर्धमानोऽभिचरणी
यशिल्पान्यायात्य संवत्सरमेतैः क्रमैः क्रमेताग्निना देवेन पृतना जयामि
गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण
पूर्वजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे
प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः
क्रमेणात्येनान्क्रामामीन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन
स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण
सहजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे
प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः
क्रमेणात्येनान्क्रामाम्य्
विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन
वामदेव्येन साम्ना वषट्कारेण
वज्रेणापरजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे
प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः
क्रमेणात्येनान्क्रामामीत्यपि वाभिचरणीयास्विष्टिष्वनुवर्तेतापि
वापोद्धत्येतरान्क्रमान्संवत्सरमेतैः क्रमैः क्रमेतोक्तँ शुक्रामन्थिनोरधिद्रवणम्
अथातोऽतीमोक्षाणामेव
वैश्वकर्मणानि हुत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा
गार्हपत्ये जुहोत्यन्वारब्धे यजमाने २०

ये देवा यज्ञहनः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो
वयँ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति ये देवा यज्ञमुषः
पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयँ
स्वाहेत्यथाग्नीध्रमभिप्रैत्यागन्म मित्रावरुणा वरेणया रात्रीणां भागो युवयोर्यो
अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिव
इत्यथाग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे जुहोत्यन्वारब्धे यजमाने ये
देवा यज्ञहनोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयँ
स्वाहेत्य्

अपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एव जुहोति ये देवा यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयँ स्वाहेत्यथाहवनीयमभिप्रैति यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाँसीत्यथाहवनीयं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयँ स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति ये देवा यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयँ स्वाहेत्यथाहवनीयमुपतिष्ठते येनेन्द्राय समभरः पयाँस्युत्तमेन हविषा जातवेदः । तेनाग्ने त्वमुत वर्धयेमँ सजातानाँ श्रैष्ठ्य आधेह्येनमिति
यज्ञहनो वै देवा यज्ञमुषः सन्ति
त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य
ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाँस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेतीति ब्राह्मणम्
अपि वा तिस्र एव गार्हपत्ये जुहोति तिस्र आग्नीध्रे तिस्र आहवनीयेऽपि वा गार्हपत्याज्ञपन्ननुद्रवेदाहवनीयादुक्तोदवसानीयेष्टिरत्रैतां तृतीयां प्रवृताहुतिं जुहोति सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः स्वाहेत्
अथाभिचरन्बभ्रुवे बभ्रुवत्सायै कार्ष्मर्यमयेन पात्रेण पयो जुहोति सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते स्वाहेति
साक्षादस्य हृदयं भित्त्वान्त्राणि परिकासयातै
स्तृणुते हैव तं भ्रातृव्यम्
अथ येनास्यर्त्विजाँ स्पर्धा स्यात्तमाह मास्य चमसमनुप्रसृपतादभिमर्शनं करिष्यामीति
तस्यैतेनैव मन्त्रेण चमसं जुहुयात्
तमूर्ध्वोऽवाङ्वा राजातिपवत उक्तं पात्नीवतस्य श्रयणम्
उक्तमादित्यग्रहस्योद्धननम्
उक्ता प्रायणीयस्य स्रुवाहुतिरुक्तोदयनीयस्योक्तं यूपस्योपस्थानम् २१

उक्तानि पत्नीयजूँष्येवमेवैताः स्रुचो यथैतद्ब्राह्मणम्
उक्तो दधिग्रहोऽथ वै भवत्याज्यग्रहं गृह्णीयात्तेजस्कामस्येति
बर्हिषी अन्तर्धायाज्यग्रहं गृह्णाति
सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येत्यँशूनुपसंगृह्य सोमग्रहं गृह्णात्यथैतं
महाव्रतीयेऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्व
इत्यनुद्रुत्योपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति

परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेत्यथातः प्राणग्रहाणामेव ग्रहणं
संतृप्तँ राजानं पुञ्जीकृत्वा नवाँशून्प्राच आयातयत्ययं पुरो भुवस्तस्य प्राणो
भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाँ
शुरुपाँशोस्त्रिवृत्त्रिवृतो रथंतरँ रथंतराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया
प्राणं गृह्णामि प्रजाभ्य इत्ययं दक्षिणा विश्वकर्मेति नव दक्षिणा आयातयति
अयं पश्चाद्विश्वव्यचा इति नव प्रतीच आयातयतीदमुत्तरात्सुवरिति नवोदीच
आयातयतीयमुपरि मतिरिति नवोपरिष्टात्
प्रदक्षिणं पर्यायातयति
तानपानभृद्भिः प्रत्यूहति प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं
त्रिवृत्स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः
सानग ऋषिरिति
वाचयति पितरः पितामहाः परेऽवर इति ये पुरस्ताद्भवन्ति
दक्षिणा दिशामिति ये दक्षिणतो भवन्ति
प्रतीची दिशामिति ये पश्चाद्भवन्त्युदीची दिशामिति य उत्तरतो भवन्त्यूर्ध्वा
दिशामिति य उपरिष्टात्
प्रदक्षिणं पर्यायातिता भवन्ति
ते वा एते प्रायणीयोदयनीययोरेव नियुक्ता दशमेऽहंस्तदु
रात्रिसत्त्रेष्वप्यग्निष्टोम आमयाविन उपसृतो वा गृह्णीयादगदो हैव भवति
२२

अथ वै भवत्युभये वा एते प्रजापतेरध्यसृज्यन्तेति ब्राह्मणमेव
युवँसुराममश्विनेति सौत्रामण्यामेव भवत्यथ वै भवतीयं वा अग्निहोत्रीयं वा
एतस्य निषीदति यस्याग्निहोत्री निषीदति

तामुत्थापयेदिति
स यस्याग्निहोत्री निषीदति
तामुत्थापयत्युदस्थाद्देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात्। इन्द्राय कृगवती भागं मित्राय वरुणाय चेत्यथ वै भवत्यवर्तिं वा एषैतस्य पाप्मानं प्रतिख्याय निषीदति यस्याग्निहोत्र्युपसृष्टा निषीदति
तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति
स यस्याग्निहोत्र्युपसृष्टा निषीदति तामेतदेव दुग्ध्वा ब्राह्मणाय ददाति
न चास्यात ऊर्ध्वमन्नमत्त्यथ वै भवति
पृथिवीं वा एतस्य पयः प्रविशति यस्याग्निहोत्रं दुह्यमानँ स्कन्दति तदभिमन्त्रयेतेति
स यस्याग्निहोत्रं दुह्यमानँ स्कन्दति तदभिमन्त्रयते
यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः । पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो अस्तु तन्मयीत्याह
पय एवात्मन्गृहेषु पशुषु धत्तेऽप उपसृजत्यद्भिरेवैनदाप्नोतीति ब्राह्मणम्
अथ वै भवति
यो वै यज्ञस्यार्तेनानार्तँ सँसृजत्युभे वै ते तर्ह्यार्च्छत आर्च्छति खलु वा एतदग्निहोत्रं यद्दुह्यमानँ स्कन्दति यदभिदुह्यादिति

स यस्याग्निहोत्रं दुह्यमानँ स्कन्दति नैनदभिदोग्धि
तदेव यादृक्कीदृक्च होतव्यम्
अथान्यां दुग्ध्वा पुनर्होतव्यम्
अनार्तेनैवार्तं यज्ञस्य निष्करोतीति ब्राह्मणम्
अथ वै भवति
यद्युद्द्रुतस्य स्कन्देद्यत्ततोऽहुत्वा पुनरेयाद्यज्ञं विच्छिन्द्याद्यत्र स्कन्देत्तन्निषद्य पुनर्गृह्णीयादिति
स यत्रैव स्कन्दति तदेव स्थालीं निधायातिशिष्टमानीय पुनरभ्युन्नीय तदेव यादृक्कीदृक्च होतव्यम्
अथान्यां दुग्ध्वा पुनर्होतव्यम्
अनार्तेनैवार्तं यज्ञस्य निष्करोतीति ब्राह्मणम्
अथ वै भवति

वि वा एतस्य यज्ञश्छिद्यते यस्याग्निहोत्रेऽधिश्रिते श्वान्तरा धावति
रुद्रः खलु वा एष यदग्निर्यद्गामन्वत्यावर्तयेद्रुद्राय
पशूनपिदध्यादपशुर्यजमानः
स्याद्यदपोऽन्वतिषिञ्चेदनाद्यमग्नेरापोऽनाद्यमाभ्यामपिदध्याद्गार्हपत्याद्भस्मादाये
दं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्धवँ सयन्नुद्द्रवेदिति
स वैष्णव्यर्चाहवनीयाद्धवँ सयन्नुद्द्रवति
यज्ञो वै विष्णुर्यज्ञेनैव यज्ञँ संतनोतीति ब्राह्मणम्
अथ भस्मना शुनः पदमपि वपति शान्त्या इति ब्राह्मणम् २३

अथ वै भवति
नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं
यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति
दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेदथाग्निमथाग्निहोत्रमिति
स यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति दर्भेण हिरण्यं प्रबध्य परिकर्मी पूर्वः
प्रतिपद्यतेऽन्वग्ब्राह्मण आर्षेय
इध्मेनान्वगात्मनाग्निहोत्रेणाथैतद्धिरण्यमाहवनीयस्यायतने
सादयित्वापोद्धृत्य हिरण्यं प्रदक्षिणमावृत्येध्मं प्रतिष्ठापयत्यथ वै
भवत्यग्निहोत्रमुपसाद्यातमितोरासीत
व्रतमेव हतमनुम्रियतेऽन्तं वा एष आत्मनो गच्छति यस्ताम्यत्यन्तमेष यज्ञस्य
गच्छति यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति
पुनः समन्य जुहोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति ब्राह्मणम्
अथ वै भवति
वरुणो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचति
वारुणं चरुं निर्वपेत्
तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणम्
अथ वै भवति
नि वा एतस्याहवनीयो गार्हपत्यं कामयते नि गार्हपत्य आहवनीयं
यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति
चतुर्गृहीतमाज्यं पुरस्ताद्धरेदथाग्निमथाग्निहोत्रमिति
स यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति चतुर्गृहीतेनाज्येन परिकर्मी पूर्वः

प्रतिपद्यतेऽन्वग्ब्राह्मण आर्षेय
इध्मेनान्वगात्मनाग्निहोत्रेणाथैतदाज्यमाहवनीयस्यायतने
सादयित्वापोद्धृत्याज्यमथेध्मं प्रतिष्ठापयत्यथ वै भवति
पराची वा एतस्मै व्युच्छन्ती व्युच्छति यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेत्युषाः
केतुना जुषतां यज्ञं देवेभिरन्वितम्। देवेभ्यो मधुमत्तमँ स्वाहेति
प्रत्यङ्ङिनषद्याज्येन जुहुयात्प्रतीचीमेवास्मै विवासयतीति ब्राह्मणम्
अथ वै भवत्यग्निहोत्रमुपसाद्यातमितोरासीत
व्रतमेव हतमनुम्रियतेऽन्तं वा एष आत्मनो गच्छति यस्ताम्यत्यन्तमेष यज्ञस्य
गच्छति यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति
पुनः समन्य जुहोत्यन्तेनैवान्तं यज्ञस्य निष्करोतीति ब्राह्मणम्

अथ वै भवति
मित्रो वा एतस्य यज्ञं गृह्णाति यस्याग्निमनुद्धृतँ सूर्योऽभ्युदेति
मैत्रं चरुं निर्वपेत्
तेनैव यज्ञं निष्क्रीणीत इति ब्राह्मणम्
अथ वै भवति
यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेद्यदाहवनीयमनुद्वाप्य गार्हपत्यं
मन्थेद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यद्वै यज्ञस्य वास्तव्यं क्रियते तदनु
रुद्रोऽवचरति
यत्पूर्वमन्ववस्येद्वास्तव्यमग्निमुपासीत
रुद्रोऽस्य पशून्घातुकः स्यादाहवनीयमुद्वाप्य गार्हपत्यं मन्थेदिति
स आहवनीयमुद्वाप्य गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि
जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति
छन्दोभिरेवैनँ स्वाद्योनेः प्रजनयतीति ब्राह्मणम्
अथ वै भवति
गार्हपत्यं मन्थति
गार्हपत्यं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते
स यदुद्वायति तदनु पशवोऽपक्रामन्तीत्यथैनमुपतिष्ठत इषे रय्यै रमस्व सहसे
द्युम्नायोर्जे पत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ
समिन्धाताम्सम्राडसि विराडसीति २४

अथ वै भवति
वज्रो वै चक्रं
वज्रो वा एतस्य यज्ञं विच्छिनत्ति यस्यानो वा रथो वान्तराग्नी
यात्याहवनीयमुद्वाप्य गार्हपत्यादुद्धरेदिति
स आहवनीयमुद्वाप्य गार्हपत्यादिध्ममुद्धरति यदग्ने पूर्वं प्रभृतं पदँ हि ते
सूर्यस्य रश्मीनन्वाततान । तत्र रयिष्ठामनुसंभरैतं सं नः सृज सुमत्या
वाजवत्येति
पूर्वेणैवास्य यज्ञेन यज्ञमनुसंतनोतीति ब्राह्मणम्
अथैनमुपतिष्ठते त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं
वितन्वत इत्यग्निः सर्वा देवता देवताभिरेव यज्ञँ संतनोतीति ब्राह्मणम्
अथाग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपत्य्
अन्वाहार्यमासाद्यानड्वाहं ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ वै भवति
यस्य प्रातःसवने सोमोऽतिरिच्यते माध्यंदिनँ सवनं
कामयमानोऽभ्यतिरिच्यत इति
स प्रातःसवने सोमेऽतिरिक्ते प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वश
एव राजानमुन्नय मातिरीरिच इति
होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति
स्तुवते
तदेतद्गायत्रँ साम पञ्चदशं गौर्धयति मरुतामिति धयद्वतीषु कुर्वन्ति
होत्र एषोत्तमेति प्राहुः
समानमत ऊर्ध्वम्
अथ वै भवति
यस्य माध्यंदिने सवने सोमोऽतिरिच्यत आदित्यं तृतीयसवनं
कामयमानोऽभ्यतिरिच्यत इति
स माध्यंदिने सवने सोमेऽतिरिक्ते प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः
सर्वश एव राजानमुन्नय मातिरीरिच इति

होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
तदेतद्गौरिवीतँ साम सप्तदशं बण्महाँ असि सूर्येत्येतासु कुर्वन्ति
होत्र एषोत्तमेति प्राहुः
समानमत ऊर्ध्वम्

अथ वै भवति
यस्य तृतीयसवने सोमोऽतिरिच्येतोक्थ्यं कुर्वीत
यस्योक्थ्येऽतिरिच्येतातिरात्रं कुर्वीत
यस्यातिरात्रेऽतिरिच्यते तं वै दुष्प्रज्ञानमित्यतिरात्रेऽतिरिक्ते प्राङायन्नाह
होतुश्चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिच इति
होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी
आदाय वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
तदेतद्बृहत्सामैकविँशं वैष्णवीषु शिपिविष्टवतीषु कुर्वन्ति
होत्र एषोत्तमेति प्राहुः
समानमत ऊर्ध्वम् २५

इति नु छन्दोगबह्वृचेषु कामयमानेषु
ते चेन्न कामयेरन्प्रातःसवनेऽतिरिक्ते याँ स्थालीमलँ राज्ञेऽतिशिष्टाय मन्यते
तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति
त्रिरभिविष्यन्दयति
सोऽभिविष्यन्दमानः सर्व आग्रयणः संपद्यते
तं त्रिरभिहिंकृत्य परिमृज्य सादयति
माध्यंदिने सवनेऽतिरिक्ते तथैव याँ स्थालीमलँ राज्ञेऽतिशिष्टाय मन्यते
तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति
त्रिरभिविष्यन्दयति

सोऽभिविष्यन्दमानः सर्व एवाग्रयणः संपद्यते
तं तथैव त्रिरभिहिंकृत्य परिमृज्य सादयति
तृतीयसवनेऽतिरिक्ते हारियोजनमेवात्राभिविष्यन्दयति
न हि पुनर्ग्रहणं विद्यतेऽथातो ध्रुवस्यैव परिहीणस्य मीमाँ
सैन्द्राग्निभ्यामेनमृग्भ्यां परिगृह्य जुहुयादिन्द्राग्नी वै देवानां पुनःपुनरभ्युपाकारं यजामह इत्येतदेकम्
आश्विनीभ्यामेनमृग्भ्यां परिगृह्य जुहुयादश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीत्येतदेकम्वैष्णवीभ्यामेनमृग्भ्यां परिगृह्य जुहुयाद्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यत इत्येतदेकम्
अवभृथेनैनँ सहाभ्यवहरेद्यथा मेऽन्यानि सोमलिप्तानि पात्राण्येवं म एव भविष्यतीत्येतदेकम्बर्हिषैनँ सहाभ्युपोषेदेष वा अग्निर्वैश्वानरो यत्प्रदाव्योऽग्नय एष वैश्वानराय गृह्यते
ध्रुव एवमग्नौ वैश्वानरे हुतो भविष्यतीत्येतदपरम्
अथ पुनर्दीक्षते
यज्ञो ह वै यज्ञस्य प्रायश्चित्तिरिति न्वेकाहयाजिनोऽथ सत्रिणाम्मार्जालीये परिष्यन्दं निष्यन्दनवन्तं कृत्वा तदेनं निनयन्ति
श्वो भूते हि ते सोष्यन्तो भवन्ति २६

उक्तः सँसवोऽथ वै भवत्यार्तिं वा एते नियन्ति येषां दीक्षितानां प्रमीयते
तं यदववर्जेयुः क्रूरकृतामिवैषां लोकः स्याद्
आहर दहेति ब्रूयादिति
दीक्षितं चेदुपतपद्विन्देदाग्नीध्रीयशयनो ह भवति
तदस्मै भक्षानाहरन्ति यावदलं भक्षाय मन्यते
स यद्यहागदो भवति पुनरैति
यद्यु वै प्रैति सर्वेभ्योऽग्निभ्योऽङ्गारान्निर्वर्त्यारण्योरग्नीन्समारोह्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेनैनं दहेयुस्
तं त्रिरात्रेण शीतीकृत्वा संचिनुयुस्
ते तथाकृतेन षडहसँस्थां काङ्क्षेयुरथ सँस्थिते षडहेऽस्थिकुम्भं याचति
तस्मिन्संचितमवधाय तं दक्षिणतो वेद्यै निधाय सर्पराज्ञिया ऋग्भि स्तुयुरियं वै सर्पतो राज्ञ्यस्या एवैनं परिददति

व्यृद्धं तदित्याहुर्यत्स्तुतमननुशस्तमिति
होता प्रथमः प्राचीनावीती मार्जालीयं परीयाद्यामीरनुब्रुवन्सर्पराज्ञीनां कीर्तयेदिति
तेषां तथा परीतानामध्वर्युर्जघन्यः पर्येत्यथ यज्ञोपवीतं कृत्वा यथेतं त्रिः पुनः प्रतिपरियन्ति
तेषां तथा परीतानामध्वर्युः पूर्वः पर्येत्यथैनमादायान्तरेण चात्वालोत्करावश्मानं चास्थिकुम्भं च निधायाद्भिरवोक्षत्यप नः शोशुचदघमिति
तस्मिन्मैत्रावरुणाग्रान्ग्रहान्गृह्णन्त्यथातिशिष्टँ सत्रस्यासते
तस्यावभृथवेलायामस्थिकुम्भं निधायाद्भिरवोक्षत्येतदवभृत उ वैवैष भवत्यपि वा योऽस्य स्वो नेदिष्ठी स्यात्तस्य स्थाने तं दीक्षयेत्

संवत्सरेऽस्थीनि याजयन्त्यथ वै भवति २७

असुर्यं वा एतस्माद्वर्णं कृत्वा पशवो वीर्यमपक्रामन्ति यस्य यूपो विरोहति त्वाष्ट्रं बहुरूपमालभेतेति
सत्त्रिणां चेद्यूपो विरोहेत्संप्रच्छिद्यास्य चषालँ सवनीयस्य त्वाष्ट्रमुपालम्भ्यं कुर्युरपि वा त्वाष्ट्रं ब्रह्मौदनँ श्रपयित्वैताः शाखाः प्रवृश्चेयुः प्र वा तक्ष्णुयुरपि वा त्वाष्ट्रीः स्रुवाहुतीर्हुत्वैताः शाखाः प्रवृश्चेयुः प्र वा तक्ष्णुयुरपि वा त्वाष्ट्रे त्वष्ट्र इत्येव ब्रूयादित्य्
अथ वै भवत्यार्तिमेते नियन्ति येषां दीक्षितानामग्निरुद्वायति
यदाहवनीय उद्वायेद्यत्तं मन्थेद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेद्यदाहवनीय उद्वायेदाग्नीध्रादुद्धरेद्यदाग्नीध्र उद्वायेद्गार्हपत्यादुद्धरेद्यद्गार्हपत्य उद्वायेदत एव पुनर्मन्थेदत्र वाव स निलयते
यत्र खलु वै निलीनमुत्तमं पश्यन्ति तदेनमिच्छन्ति
यस्माद्दारोरुद्वायेत्तस्यारणी कुर्यात्
क्रमुकमपि कुर्याततिति
स यस्माद्दारोरुद्वायति तस्यारणी कृत्वा क्रमुकशकलमन्ववधाय तान्येवावक्षाणानि संनिधाय मन्थेदिति
स तान्येवावक्षाणानि संनिधाय मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि

जातवेदाः । स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति

छन्दोभिरेवैनँ स्वाद्योनेः प्रजनयतीति ब्राह्मणम् २८

अथ यद्याहवनीयगार्हपत्यावुद्वायेयातां गार्हपत्यं
मथित्वाग्नीध्रीयादाहवनीयमुद्धरेद्यद्याग्नीध्रीयगार्हपत्यावुद्वायेयातां गार्हपत्यं
मथित्वाग्नीध्रीयमुद्धरेदथ यद्याग्नीध्रीयाहवनीयावुद्वायेयातां
गार्हपत्यादाग्नीध्रीयमुद्धत्य तत आहवनीयमुद्धरेदथ यदि सर्व
एवोद्वायेयुर्गार्हपत्यं मथित्वाग्नीध्रीयमुद्धृत्य तत आहवनीयमुद्धरेदित्यथ वै
भवति
गार्हपत्यं मन्थति
गार्हपत्यो वा अग्नेर्योनिः
स्वादेवैनं योनेर्जनयति
नास्मै भ्रातृव्यं जनयतीति ब्राह्मणम्
अथ वै भवति
यस्य सोम उपदस्येत्सुवर्णँ हिरण्यं द्वेधा
विच्छिद्यर्जीषेऽन्यदाधूनुयाज्जुहुयादन्यदिति
स यस्य सोम उपदस्यति तत्सुवर्णँ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनोति
मुख्ये चमसेऽन्यदवधाय जुहोति
सोममेवाभिषुणोति सोमं जुहोतीति ब्राह्मणम्
अथ वै भवति
सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत्
तत्सुवर्णँ हिरण्यमभवद्यत्सुवर्णँ हिरण्यं कुर्वन्ति प्रिययैवैनं तनुवा
समर्धयन्तीति ब्राह्मणम्
अथ वै भवति
यस्याक्रीतँ सोममपहरेयुः क्रीणीयादेव
सैव ततः प्रायश्चित्तिरिति ब्राह्मणम्
अथ वै भवति
यस्य क्रीतमपहरेयुरादाराँश्च फाल्गुनानि चाभिषुणुयादित्यादाराः क्षुद्रतृणानि

फाल्गुनानि हैमवतानि
तेषामलाभे श्वेतकानां प्रतिनिधिर्विज्ञायते
तृतीयस्यामितो दिवि सोम आसीत्
तं गायत्र्याहरत्
तस्य पर्णमच्छिद्यत
तत्पर्णोऽभवत्
तत्पर्णस्य पर्णत्वमिति
तस्मात्पर्णत्सरूणामेवाभिषवः कार्य इति
शृतेन प्रातःसवने श्रीणीयादिति
शृतमेतद्भवति
दध्ना मध्यंदिन इति
दध्येतद्भवति
नीतमिश्रेण तृतीयसवन इति
विमथितँ सपिलकमुद्धृतं प्राङ्नवनीतभावादित्येतदाचक्षतेऽग्निष्टोमः सोमः स्याद्रथंतरसामा
य एवर्त्विजो वृताः स्युस्त एनं याजयेयुरिति
त एवैनं याजयन्त्येकां गां दक्षिणां दद्यादित्येकां गामत्र दक्षिणां ददाति
यदिह दास्यन्भवति तदमुत्र ददाति
पुनः सोमं क्रीणीयाद्यज्ञेनैव तद्यज्ञमिच्छति
सैव ततः प्रायश्चित्तिरिति ब्राह्मणम्
अथ वै भवति
सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः कामेभ्यः सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्त्रायागुरत
एतावान्खलु वै पुरुषो यावदस्य वित्तँ सर्ववेदसेन यजेतेत्यतिरात्रं विश्वजितमुपयन्त्यथात्र सर्ववेदसं ददाति
सर्वपृष्ठोऽस्य सोमः स्यात्
सर्वाभ्य एव देवताभ्यः सर्वेभ्यः कामेभ्यः सर्वेभ्य स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीत इति ब्राह्मणम् २९

पवमानः सुवर्जन इति सौत्रामण्यामेष भवति

ब्राह्मणमुत्तरम्
अथ वै भवति
तस्माद्वैश्वदेवेन यजमानः संवत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत
तस्माद्वरुणप्रघासैर्यजमानः परिवत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत
तस्मात्साकमेधैर्यजमान इदावत्सरीणाँ स्वस्तिमाशास्त इत्याशासीत
तस्माच्छुनासीरीयेण यजमानोऽनुवत्सरिणाँ स्वस्तिमाशास्त
इत्याशासीतेत्यथ वै भवत्यग्नेः कृत्तिकाः शुक्रं परस्ताज्ज्योतिरवस्तादिति
नक्षत्रेष्टकाभिर्विकल्पन्त इति ब्रुवतेऽथ वै भवति
यत्पुण्यं नक्षत्रं तद्वट्कुर्वीतोपव्युषमिति
प्रातः कुर्वीत
संगवे कुर्वीत
मध्यंदिने कुर्वीतापराह्णे कुर्वीत
सायं कुर्वीत
यावति तत्र सूर्यो गच्छेद्यत्र जघन्यं पश्येत्तावति कुर्वीत
यत्कारी स्यात्पुण्याह एव कुरुत इति
ब्राह्मणमुत्तरे ब्राह्मणमुत्तरे ३०

पञ्चदशः प्रश्नः
अश्वमेधेन यक्ष्यमाणो भवति राजा विजिती सार्वभौमः
स एतद्देवयजनं जोषयत आश्विनं प्रागाश्विनं दक्षिणाश्विनं प्रत्यगाश्विनमुदक्
छिन्दन्ति वृक्षान्प्र स्थलानि भिन्दन्ति प्रति निम्नान्पूरयन्ति किँ शारूणि
निरस्यन्ति
नदीनां तीर्थानि सर्वतःप्रस्रवणानि पल्वलानि कुर्वन्त्यथैतौ ह्रदौ मध्यतो
देवयजनस्य जोषयते सँस्राविणावनुपदासिनौ पुण्यनामानौ यद्येवं विन्दन्ति
यद्यु वा एवं न विन्दन्ति खात्वैनावभिवाह्याभिर्वाभिहार्याभिर्वाद्भिः पूरयन्ति
यथा त्वेव सँस्राविणावनुपदासिनौ पुण्यनामानौ भवतस्तथा
तावपरेण मध्यतो देवयजनं जोषयते द्विस्तावद्यथाग्नेर्विधायां तच्छालां
कुर्वन्ति प्राचीनवँशां दिक्षवतीकाशां दक्षिणतो वर्षीयसीं तस्यै
दक्षिणतोऽश्वशालां कुर्वन्ति
तदश्वत्थानाँ श्लीषाणामवाचीनाग्राणामश्वव्रजं कुर्वन्त्यथास्यैते संभारा

उपक्लृप्ता भवन्त्यश्वो रूपीयो योऽस्य सदश्वानाँ सत्तमस्तस्यान्येऽपरिमिता निरमणा निरष्टाः कृष्णश्च चतुरक्षो द्वौ दासावनुजायै च पुत्रोऽन्वाधेयायै च जरत्पूर्वा चैषीकश्चाभ्यूहः सैध्रकं च मुसलं पौँश्चलेयश्च चत्वारि शतानि गोप्तॄणाँ शतं तल्प्यानाँ राजपुत्राणाँ शतमराज्ञामुग्राणाँ शतँ सूतग्रामणीनाँ शतं क्षत्तसंग्रहीतॄणां चत्वारो महान्त ऋत्विजस्

तानन्वितरे
तान्कालेऽपदातीन्समावहन्ति १

आ सुब्रह्मण्यायाश्चतुष्टयीरापो दिग्भ्यः संभृताश्चतुरः साहस्रान्निष्कान्सुवर्णरजतौ च रुक्मौ द्वे अन्ये हिरण्ये द्वौ वीणागाथिनौ ब्राह्मणं च राजन्यं च द्वे रशने मौञ्जीं च कुशमयीं चोभे त्रयोदशारत्न्यवेतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यथ चित्रयेत्यरण्योरग्नीन्समारोह्य शालामभिप्रैति ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे । तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहीत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन्विहृत्य गार्हपत्यमुपतिष्ठते नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीति नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीत्यन्वाहार्यपचनं
नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहीत्याहवनीयम्
अथास्यैतत्पुरस्तादेव जघनेनाश्वशालामेकापस्त्रावं विमितं कारितं भवति तद्व्थाग्निमुपसमाधाय मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयासाय स्वाहेत्येकादश
शतायुर्वै पुरुषः शतवीर्य आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत इति ब्राह्मणम्
अथ केशश्मश्रु वापयित्वा लोमानि सँहृत्य नखानि निकृत्य दतो धाव्य स्नातावहते वाससी परिदधाते
उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतोऽहतवाससवथाभ्यां व्रतोपायनीयं पाचयति

तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्याथापराह्णे मुखयोर्हिरण्ये अन्वस्येते २

सुवर्णं यजमानो रजतं पत्नी रजतानि वा यदि बह्व्यो भवन्त्यथास्य वाचंयमस्य सायमग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेते राजगृहाः सूतग्रामण्यः क्षत्तसंग्रहीतारः कारुविशा इति
तेभ्यः पष्ठौहीं वेहतं ददाति
तां ते पचमाना रमयन्तो जागरयन्त आसतेऽथ प्रातराचाममाचामन्तौ हिरण्ये प्रोथतस्
ते पौँश्चलेय आदत्तेऽथादित्यमुद्यन्तमुपतिष्ठन्ते द्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमोऽनुशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नम इत्य्
अथ वैश्वदेवीँ सांग्रहणीं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठते
यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता चतुष्टयीष्वप्सु ब्रह्मौदनँ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेतँ रजतँ रुक्मं प्रक्षालितमवदधाति
तस्यामेनमसंघ्नन्निवोद्धरति सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथोपरिष्टात्सुवर्णँ रुक्मं प्रक्षालितमवदधात्यथैतान्महत ऋत्विज उत्तरतोऽनुदिशमुपवेश्यताननुपूर्वमाचमय्य तेभ्य एनं भूमिँ स्पृशन्ननुच्छिन्दन्निवोपोहति ३

स आह ब्राह्मणाश्च राजानश्चानेन माश्वेन मेध्येन स्वस्ति समापयाता ब्रह्मज्यताया इति
तं तथेतीतरे प्रत्याहुरनेन त्वामश्वेन मेध्येन स्वस्ति समापयिष्यामो ब्रह्मज्यताया इत्यथ ब्रह्मज्यतामस्मै संजानतेऽथैनान्सँशास्ति सकृत्सकृत्प्राश्याप्रत्यवमृशन्तो धारयाध्वा इत्यथैतस्मिन्सर्पिरासेचने रशने संतर्प्य परिकर्मिणे प्रयच्छति
द्विरपरं प्राश्य प्रशँसन्ति राद्धस्ते ब्रह्मौदन इति

तेभ्यश्चतुरः साहस्त्रान्निष्कान्ददाति सुवर्णरजतौ च रुक्मवत्र ये
क्षत्रस्याभिषेक्तारस्तेऽध्वर्युमभिषिञ्चन्ति
स आह ब्राह्मणाश्च राजानश्चाध्वर्युरेतौ द्वौ संवत्सरौ राजा भविष्यति तस्य
शुश्रूषध्वं यो हास्य न शुश्रूषिष्यते सर्वस्वं तं ज्यास्यन्तीत्यथाध्वर्युरेतौ द्वौ
संवत्सरौ राजा भवति
यजमान इतीतरमाचक्षते
स आह ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति
बधानेतीतरः प्रत्याह देवेभ्यः प्रजापतये तेन राध्नुहीति ४

अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामाददं इत्यादायाभिमन्त्रयत इमामगृभ्णन्रशनामृतस्येति
तयाश्वमभिदधात्यभिधा असि भुवनमसि यन्तासि धर्तासि सोऽग्निं वैश्वानरँ
सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राडयन्तासि यमनो धर्तासि धरुण
इत्येवमेव द्वितीयाँ रशनामादत्ते
तयैवमेवाश्वमभिदधाति
ते अश्वस्यानुपृष्ठमनुपृणक्त्येतस्मिन्काले ऽनुजायै च पुत्रोऽन्वाधेयायै च
श्वबन्धाभ्याँ श्वानमभिधत्तोऽथैष पौँश्चलेयो जरत्पूर्वया सव्यं जानु वेष्टयित्वा
सैध्रकेण मुसलेन श्वानमनूपतिष्ठतेऽथाध्वर्युः पुरस्तात्प्रतिपद्यते सह शतेन
तल्प्यानाँ राजपुत्राणाम्ब्रह्मा दक्षिणतः सह शतेनाराज्ञामुग्राणां होता पश्चात्सह
शतेन सूतग्रामणीनाम्
उद्गातोत्तरतः सह शतेन क्षत्तसंग्रहीतृणाम्मध्येऽश्वः श्वा चाथ दक्षिणँ
ह्रदमभिप्रयान्ति
द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा
क्रोडादश्वमभिधावयन्ति
तमध्वर्युः पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायँ राजा वृत्रं
वध्यादिति
तस्यानु प्रोक्षणँ शतं तल्प्या राजपुत्राः प्रोक्षन्ति
ब्रह्मा दक्षिणत उदङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायँ
राजाप्रतिधृष्योऽस्त्विति
तस्यानु प्रोक्षणँ शतमराजान उग्राः प्रोक्षन्ति

होता पश्चात्प्राङ्मुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायँ राजास्यै विशो बहुग्वै बह्वश्वायै बह्वजाविकायै बहुव्रीहियवायै बहुमाषतिलायै बहुहिरण्यायै बहुहस्तिकायै बहुदासपुरुषायै रयिमत्यै पुष्टिमत्यै बहुरायस्पोषायै बहुसर्वधनायै राजास्त्विति
तस्यानु प्रोक्षणँ शतँ सूतग्रामण्यः प्रोक्षन्त्युद्गातोत्तरतो
दक्षिणामुखस्तिष्ठन्प्रोक्षत्यनेनाश्वेन मेध्येनेष्ट्वायँ राजा सर्वमायुरेत्विति
तस्यानु प्रोक्षणँ शतं क्षत्तसंग्रहीतारः प्रोक्षन्ति
दिग्भ्योऽश्वँ समुक्षन्तीति ब्राह्मणम्
अथास्यैष पौँश्चलेयः सँशिष्टोः भवति यदा त्वोपमी वाम्यथ शुनः प्रहरासीत्
उपमीवत एष पौँश्चलेयः सैध्रकेण मुसलेन शुनः प्रहन्ति
तमत एवानुमन्त्रयते ५

यो अर्वन्तं जिघाँसति तमभ्यमीति वरुण इति
तमश्वस्याधस्पदमुपास्य दक्षिणापप्लावयति परो मर्तः परः श्वेत्यथास्य ब्रह्मा हस्तं गृह्णाति ब्रह्मणो वा यजमानोऽहं च त्वं च वृत्रहन्त्संबभूव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मँसतै भद्रा इन्द्रस्य रातय
इत्यत्रैतमैषीकमभ्यूहं मौञ्जीभ्याँ रज्जुभ्यामन्तयोरभिदधाति
तत्सह वेतसशाखोपसंबद्धा भवति
तदेतेन शतं तल्प्या राजपुत्रा विविच्यन्ते
तेषामनु विवेकमितरे
द्वे अन्यतरमन्तँ शते गृह्णीतो द्वे अन्यतरमन्तँ शते
अथैनान्सँशास्त्यनेनैषीकेणाभ्यूहेनाभ्युदूहन्त इव
पुरस्तात्प्रत्यञ्चमूर्मिणाश्वमभिधावयाता इत्यभिधाव्यमानेऽध्वर्युर्यजमानं वाचयत्यभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानँ रजाँसि । स्वेना हि वृत्रँ शवसा जघन्थ न शत्रुरन्तं विविदद्युधा त इत्यथैनँ संवेष्ट्य
दक्षिणापप्लावयत्यथैतमश्वं प्रदक्षिणमावर्त्य शालामानयति यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतँ स्तोतरेतेन पथा पुनरश्वमावर्तयासि न इति

तमध्वर्युः पूर्वाभि स्तोकीयाभिरन्वैत्यग्नये स्वाहा सोमाय

स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदस्य स्तोका
उपरमन्त्यथैतमश्वमग्रेण शालां प्राञ्चँ स्थापयित्वा प्रपद्याश्वस्य सावित्राणि
जुहोत्यग्नये स्वाहा वायवे स्वाहेति सप्ताथ सावित्रमष्टाकपालं
प्रातर्निर्वपत्यासाद्य पुरस्ताद्धागञ्जुहोत्यग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पञ्च
पुरस्तात्स्विष्टकृतस्त्र्योऽशीतिमश्वचरितान्युपजुहोतींकाराय स्वाहेंकृताय
स्वाहेत्यसमुदिते त्रयोदश प्रद्रावाञ्जुहोत्यायनाय स्वाहा प्रायणाय स्वाहेति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथैतमश्वं प्रदक्षिणमावर्त्य पूर्वया द्वारा
शालाम्प्रपाद्यान्तर्वेदि प्राञ्चँ स्थापयित्वाह ६

यद्वा इदमाहुः पदेपदे ह वा अश्वस्य मेध्यस्याध्वर्युर्जुहोतीहैव वयं तद्धोष्यामो
यथा नः पदेपदे हुतं भविष्यतीति
तस्य पत्सु धृतीर्जुहोत्यक्षणया वा पर्यारिणीर्वेह धृतिः स्वाहेह विधृतिः
स्वाहेह रतिः स्वाहेह रमतिः स्वाहेत्यथैनं प्राञ्चमुत्क्रामय्य प्रोक्षति प्रजापतये
त्वेति पुरस्तादिन्द्राग्निभ्यां त्वेति दक्षिणतो वायवे त्वेति पश्चाद्विश्वेभ्यस्त्वा
देवेभ्य इत्युत्तरतो देवेभ्यस्त्वेत्यधस्तात्सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टादथैन-
मतिप्रोक्षेण प्रोक्षति कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै
त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा
विश्वेभ्यस्त्वा भूतेभ्य इत्
अथास्य रूपाणि जुहोत्यञ्ज्येताय स्वाहाञ्जिसक्थाय स्वाहा कृष्णाय स्वाहा
श्वेताय स्वाहेत्येताभ्यामनुवाकाभ्याम्
अथास्योपोत्थायाश्वनामभिर्दक्षिणं कर्णमाजपति विभूर्मात्रा प्रभूः पित्राश्वोऽसि
हयोऽस्यत्योऽसि नरोऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि
ययुर्नामासीत्यथैनमुपतिष्ठत आदित्यानां पत्वान्विहीत्यथैनँ
रशनाभ्यामुत्सृजति भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा
विश्वेभ्यस्त्वा भूतेभ्य इत्यथैनं देवताभ्यः परिददाति देवा आशापाला एतं
देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायतेत्यत्रास्मा
एतानपरिमितान्निरमणान्निरष्टानुपावसृजन्त्यत्रैनमेतानि चत्वारि शतानि
गोप्तृणामनुयुञ्जते प्रास्तकवचा विततवरूथा यथा युद्धाय तथा
तेभ्यः पक्वाशनं प्रसौति ७

स आह ब्राह्मणाश्च राजानश्च यस्येमे पक्वाशनमुपावहरिष्यन्ते मयाप्रसूता मोपवादिष्टेति
स आह ब्राह्मणाश्च राजानश्च बहिर्देवयजनाद्वाहनं व्युदचध्वं यस्यायं वडबाधिः सँसृज्यते सर्वस्वं तं ज्यास्यन्तीति
ते बहिर्देवयजनाद्वाहनं व्युदचन्तेऽश्वैश्चैव साराडैश्चरन्त्यश्वतरैश्च
न वडबाभिर्नाश्वतरीभिर्
अथैतौ वीणागाथिनावतिप्रगृह्णीतोऽथैष ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपचथा इत्येवं मिश्रास्तिस्रो गाथाः कामचारोऽश्वस्य स्नानाच्चैवैनं गोपायन्ति वाहनाच्चाथ यद्यश्वमुपतपद्विन्दत्याग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरित्यथ यदि नावगच्छत्यग्नये वैश्वानराय द्वादशकपालो मृगाखर इत्यथ यदि वडबाधिः सँसृज्यतेऽग्नयेऽँहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागो यद्यभिवाति रौद्रो यदि स्रावः पौष्णो यद्यप्सु वारुणो यदि काणः सौर्य एतासामार्तीनां यां कां च न्येति
सकृत्त्वेव प्रायश्चित्तिरथ योऽस्य सदश्वानाँ सत्तमस्तमुत्सृजत्यथातो रशनाभ्यामेव प्रतिपद्यते
समानं कर्मा परिदानात् ८

उत्सृज्याश्वं वैश्वदेवान्पशूनालभन्ते
तेषां पशुपुरोडाशाननुवर्तन्ते वैश्वदेवहवींषि
वैश्वदेवहवींषि वैवैषां पशुपुरोडाशा भवन्ति
ताननुवर्तते मध्यमा सावित्री
प्रसिद्धाः पशवः संतिष्ठन्तेऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथैतौ वीणागाथिनावतिप्रगृह्णीतोऽथैष राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यथा इत्यमुँ संग्राममहन्नित्येवं मिश्रास्तिस्रो गाथाः
प्रातरग्निहोत्रे हुते ब्राह्मणो वीणागाथी गायति सायमग्निहोत्रे हुते राजन्यस् तावेवमेव संवत्सरं गायतोऽथ सावित्रमष्टाकपालं प्रातर्निर्वपत्यासाद्य पुरस्ताद्धागाञ्जुहोत्यसमुदिते धृतीश्च जुहोति प्रद्रावाँश्च जुहोति

सा प्रसिद्धेष्टिः संतिष्ठतेऽथ मध्यंदिने सवित्रे प्रसवित्रे
पुरोडाशमेकादशकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथापराह्णे सवित्र आसवित्रे द्वादशकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते
स एवमेव सावित्रीभिरहरहर्यजमानश्चतुरो मास एति काममिष्ट्या कामं
पशुबन्धेन कामं यवाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्येष्ट्वा
वरुणप्रघासान्पशूनालभन्ते ९

तेषां पशुपुरोडाशाननुवर्तन्ते वरुणप्रघासहवींषि
वरुणप्रघासहवींषि वैवैषां पशुपुरोडाशा भवन्ति
ताननुवर्तते मध्यमा सावित्री
प्रसिद्धाः पशवः संतिष्ठन्तेऽथापराह्णे सवित्र आसवित्रे पुरोडाशं
द्वादशकपालं निर्वपति

सा प्रसिद्धेष्टिः संतिष्ठतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ
श्वो भूते सावित्रीभिरेव प्रतिपद्यते
स एवमेव सावित्रीभिरहरहर्यजमानोऽपराँश्चतुरो मास एति काममिष्ट्या
कामं पशुबन्धेन कामँ श्यामाकाग्रयणेनाथ चतुर्षु मासेषु पर्यवेतेषु
पौर्णमास्या उपवसथ आनीकवतं पशुमालभते
तस्य पशुपुरोडाशमनुवर्तत आनीकवतँ हविरानीकवतो वैवास्य
पशुपुरोडाशो भवति
तमनुवर्तते प्रथमा सावित्री
प्रसिद्धः पशुः संतिष्ठतेऽथ मध्यंदिने संतपनं पशुमालभते
तस्य पशुपुरोडाशमनुवर्तते संतपनँ हविः
संतपनो वैवास्य पशुपुरोडाशो भवति
तमनुवर्तते मध्यमा सावित्री
प्रसिद्धः पशुः संतिष्ठतेऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं
निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येण
चरत्यथ प्रातः क्रैडिनं हविः

क्रैडिनो वैवास्य पशुपुरोडाशो भवति
तमनुवर्तते प्रथमा सावित्री
प्रसिद्धः पशुः संतिष्ठतेऽथ मध्यंदिने साकमेधान्पशूनालभन्ते  १०

तेषां पशुपुरोडाशाननुवर्तन्ते महाहवींषि
महाहवींषि वैवैषां पशुपुरोडाशा भवन्ति
ताननुवर्तते मध्यमा सावित्री
प्रसिद्धाः पशवः संतिष्ठन्तेऽथापराह्णे पितृयज्ञेन चरति
पितृयज्ञेन चरित्वा त्रैयम्बकैश्चरति
त्रैयम्बकैश्चरित्वादित्यं पशुमालभते
तस्य पशुपुरोडाशमनुवर्तत आदित्यँ हविरादित्यो वैवास्य पशुपुरोडाशो भवति
तमनुवर्तत उत्तमा सावित्री
प्रसिद्धः पशुः संतिष्ठतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा प्रसिद्धं निवर्तयतेऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते
स एवमेव सावित्रीभिरहरहर्यजमानोऽर्धचतुर्थान्मास एति काममिष्ट्या कामं पशुबन्धेन कामं व्रीह्याग्रयणेनाथामावास्याया
उपवसथीयेऽहन्सावित्र्येष्ट्येष्ट्वाग्निकानि सावित्राणि हुत्वोखाः संभृत्य पशुशीर्षाणि च वायव्यं पशुमालभते
तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति
तावनुवर्तते मध्यमा सावित्री
प्रसिद्धौ पशू संतिष्ठेते
अथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ श्वो भूते सावित्रीभिरेव प्रतिपद्यते
स एवमेव सावित्रीभिरहरहर्यजमान एतमर्धमासमेति काममिष्ट्या कामं पशुबन्धेनाथ चतुर्षु मासेषु पर्यवेतेषु सावित्र्येष्ट्येष्ट्वा  ११

शुनासीरीयान्पशूनालभन्ते
तेषां पशुपुरोडाशाननुवर्तन्ते शुनासीरीयहवींषि

शुनासीरीयहवींषि वैवैषां पशुपुरोडाशा भवन्ति

ताननुवर्तते मध्यमा सावित्री
प्रसिद्धाः पशवः संतिष्ठन्तेऽथापराह्णे सवित्र आसवित्रे पुरोडाशं द्वादशकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात् संतिष्ठन्ते चातुर्मास्याः पशवः संतिष्ठन्ते सावित्र्यः १२

अथाश्वशालायामश्वं निग्रथ्नन्त्यथैनं तीर्थादानीय पवयित्वा त्रिहविषमग्निदीक्षणीयामिष्टिं निर्वपति
तस्यै तावन्त्युत्सीदन्ति यावन्ति दीक्षणीयाया अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य्ध्रुवामाप्याय्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति स्वाहाधिमाधीताय स्वाहेत्यथ सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेत्येकविँशिनीं दीक्षां जुहोति पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति
पञ्चाध्वरदीक्षाहुतीर्जुहोति षडग्निदीक्षा एकामृतुदीक्षां भुवो देवानां कर्मणेति सप्ताहान्येतयेष्ट्या यजत इति
स त्रीणित्रीण्येव पूर्वाणि वैश्वदेवानि जुहोत्युत्तरामुत्तरामृतुदीक्षां द्वे अन्तत ऋतुदीक्षे जुहोति महीमू षु सुत्रामाणमित्येतदेवाहर्दीक्षते

संवत्सरमुख्यं बिभर्ति
द्वादशोपसदोऽत्रैनमेता यथाम्नातं विशः पर्यवस्यन्ति
नेदीय एनमेते कर्मकृत उपसंगच्छन्ते तक्षाणश्च रथकृतश्च मयस्कृतश्च कुलालाश्च द्वयाः कर्मारा नखकृतः सप्तमेऽथैताँस्तक्ष्णः सँशास्ति १३

एकशतं बैल्वानि दार्वाचितानि छिन्दत तानि प्रवकलानि कृत्वाचाय चिनुतैकविँशतिं यूपाञ्छिन्दतैकविँशत्यरत्नीन्राज्जुदालमग्निष्ठं पौतुद्रवावुपस्थावानौ षड्बैल्वान्षट्खादिरान्षट्पालाशान्पालाशमुपशयं

पालाशं पात्नीवतं पालाशं विशालयूपमेकतयानि दारुमयाणि पात्राणि कुरुत षट्त्रिँ शतँ स्रुवान्दीर्घदण्डान्षट्त्रिँ शतमनुवेषान्दीर्घदण्डाँश्चत्वारि वाष्टौ वेन्द्राणसानि चतुश्चक्राणि बृहच्चक्राणि यथा समानि यूपाग्रैः स्युरपरिमितान्यारोहणमहानसानि कुरुतैकं वैतसं कटं कुरुताश्वस्योपस्तरणायेत्यथेतान्रथकृतः सँशास्ति स्वरथं कुरुतापरिमितान्रथान्कुरुतेत्य्
अथैतान्मयस्कृतः सँशास्त्यपरिमितं चर्मण्यं कुरुतेत्यथैनान्कुलालान्सँशास्ति यथैकविँशतिविधायाग्नय एवमिष्टकाः कुरुत तिस्रो महतीः कुम्भीः कुरुत यथाश्वं तूपरं गोमृगमित्येतान्साङ्गाञ्छ्रपयेयुरपरिमिता स्थालीः कुरुतेति १४

अथैतान्कालायसकृतः सँशास्ति सायकं कुरुत सित्तिमंकल्पोदकं कृष्णं कृष्णत्सरुँ सुवर्णँ सुवर्णत्सरुं चतुरः कालायसान्लोहायसत्सरूँश्चतुरो लोहायसान्कालायसत्सरून्षट्त्रिँ शतँ सुवर्णान्रजतत्सरून्षट्त्रिँ शतँ रजतान्सुवर्णत्सरूँस्त्रीणि च शतानि त्रयस्त्रिँ श्तं च सौवर्णानाँ सूचीनां त्रीणि च शतानि त्रयस्त्रिँ शतं च राजतानां त्रीणि च शतानि त्रयस्त्रिँ शतं च सीसानामेकं कालायसस्य कमण्डलुं कुरुताश्वतेजन्यै अपणायेत्यथैतान्सुवर्णकृतः सँशास्ति परःशतँ शतपलान्निष्कान्कुरुत सुवर्णरजते महिम्नोः पात्रे कुरुतैकतयानि सौवर्णानि पात्राणि कुरुत यावत्यः पत्नयस्तावतः सौवर्णानुपशयान्कुरुत रजतग्रन्थीन्राजतान्वा सुवर्णग्रन्थीन्यावत्यः पत्नयस्तावन्ति सौवर्णानि कुम्बकुरीराणि कुरुत रजतशङ्कूनि राजतानि वा सुवर्णशङ्कूनि यावत्यः पत्नयस्तावतः सौवर्णान्कमण्डलून्कुरुत रजतरास्नान्राजतान्वा सुवर्णरास्नानेकँ सौवर्णं विधवनं कुरुत त्रीणि सौवर्णानि धवित्राणि कुरुत रजतदाण्डानि राजतानि वा सुवर्णदण्डानि सहस्रँ सौवर्णान्काचान्कुरुत सहस्रँ राजतान्सहस्रँ सामुद्रान्हिरण्मयं कशिपु हिरण्मयं षड्बीशँ हिरण्मयँ संदानमिति १५

अथैतान्नखकृतः सँशास्त्यपरिमितान्यष्टमानि कुरुतेत्यथास्यैतान्यन्यान्युपक्लृप्तानि भवन्ति शतं घृतचर्माणि शतं मधुचर्माणि शतं तण्डुलचर्माणि शतं पृथुकचर्माणि शतं लाजाचर्माणि शतं करम्भचर्माणि शतं धानाचर्माणि शतँ सक्तुचर्माणि शतं मसूस्यचर्माणि शतं

प्रियङ्गुतण्डुलचर्माणीत्यथास्यैत एकविँशतिः प्रतिप्रस्थातारः सँशिल्ष्टा भवन्त्यात्मना द्वाविँशस्
तेजनपदेभ्यः पशून्समचन्ति तथारूपान्यथारूपाँस्ते विदुर्
ग्रामेषु ग्राम्यान्रक्षन्त्यरण्य आरण्यान्गिरिषु गैरेयान्नदीषु नादेयान्पञ्जरेषु वयाँसि कुम्भीषु सरीसृपानिति १६

प्रसिद्धः संनिवापोऽथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वार्षभे चर्मन्सहस्रेण राजानं क्रीत्वोह्यातिथ्यं निर्वपत्य्
आतिथ्येन प्रचर्याथान्वहं प्रवर्ग्योपसद्भ्यां प्रचरति
द्वादशाह एवैष एकविँशतिविधोऽग्निर्निष्ठीयते
तस्यैकविँशतिच्छदिः सदो भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदो-हविर्धाने संमिनोति
सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय यूपस्यावृता यूपमुच्छ्रयति
स्वर्वन्तँ राज्ञुदालमग्निष्ठमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति
तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथ पशुपुरोडाशं निर्वपति
तमनुवर्तन्तेऽष्टौ देवसुवाँ हवीँष्यग्नये गृहपतय इत्येतान्यग्नये गायत्रायेत्येषा च दशहविरिष्टिस्
तस्या एता याज्यापुरोऽनुवाक्या भवन्ति समिद्दिशामाशया नः
सुवर्विदितीडान्ताः पशुपुरोडाशाः संतिष्ठन्ते
पत्नीसंयाजान्तः पशुर्हृदयशूलान्त इत्येकेऽथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते
समानं कर्मा परिधीनां परिधानात्
परिधिष्वनुवर्तयति कस्त्वा युनक्ति स त्वा युनक्त्विति षण्मध्यमे षड्दक्षिणार्ध्ये पञ्चोत्तरार्ध्येऽथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्यग्निष्टोमं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मा पवमानात्

पवमानँ स्त्रप्स्यन्याचति बर्हिश्च शतपलं चाथाहोद्गातर्बर्हिश्च ते शतपलं चाश्वो म उद्गायत्विति

तेऽश्वस्य वालधिँ समन्वारभन्तेऽग्निस्ते वाजिन्युङ्ङनु त्वारभे स्वस्ति मा संपारय वायुस्ते वाजिन्युङनु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्ङनु त्वारभे स्वस्ति मा संपारयेत्यथोदञ्चोऽभि पवमानँ सर्पन्त्युत्तरत एष वडबाव्रज उच्छ्राय्या परिश्रितो भवति
तं विव्रृएवन्त्यभ्यश्वं वडबाः क्रन्दन्त्यभ्यश्वो वडबाः क्रन्दति
सोऽश्वस्योद्गीथस्
तत्पुएया वाचः संप्रवदन्ति १७

उदगासीद्वा ग्रयमश्वो मेध्य
ग्रायुरुदगासीत्सुभूतमुदगासीद्ब्रह्मवर्चसमुदगासीदिदमुदगासीदिदमुदगासी दिति पुएया वाचः संप्रवदन्त्युत्सृजन्ति वडबा ग्रश्वशालायामश्वं निग्रथ्नन्त्यत्रास्मा ग्रामुकुष्मिकमन्नमुपकिरन्त्यथाहोद्गातर्धेनुशतं च ते शतपलं च त्वं म उद्गायेति
तस्य चतसृषु बहिष्पवमानोऽष्टास्वष्टास्वाज्यानि
द्वादशो माध्यंदिनः पवमानः
षोडशानि पृष्ठानि
सविँश ग्रार्भवः पवमानश्
चतुर्विँशमग्निष्टोमसाम
तं चतुष्टोम इत्याचद्गते
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना ग्रादाय यूपमभ्यैति
स्वर्वन्तँ राज्जुदालमग्निष्ठमुत्सृज्यैकादशिनान्पशूनुपाकरोति

तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः

प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ्यज्ञः संक्रामत्विति
तृतीयं दक्षिणानां ददाति
वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति
नात्राग्नयभिषेकोऽहीनसंततिं करोत्यृजुधा माध्यंदिनँ सवनँ संतिष्ठते
प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति
तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः
समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो नाना दिश इत्येके
समानं कर्मा पत्नीसंयाजेभ्य उपकाश एवैषोऽग्निष्टोमश्चतुष्टोमः संतिष्ठते पत्नीसंयाजान्तः १८

अथास्यैतानि शतमौक्षाणि चर्माण्युपस्तीर्णानि भवन्त्युत्तराँ श्रोणिमुत्तरेण पक्षसँहितान्यथैतेषां घृतचर्मणां विँशतिं वा चतुर्विँशतिं वापोद्धत्याथेतरैरन्नानि संप्रयुवन्त्यथैतेषांदार्वाचितानां विँशतिं वा चतुर्विँशतिं वा मध्येऽग्नेरचायं चित्वाथेतराणि संछिद्यसंछिद्यैव संप्रकिरन्ति

तदेतां चतुरश्रां देवपुरमध्यात्मनायातयत्यपि वा पक्षपुच्छानभिनिरूहति यथा समावती यूपाग्रैः स्यादथैनाँ समुच्छ्रित्य परिश्रयन्ति
तस्योदीचीं द्वारं कुर्वन्ति
तदेतानीन्द्राणसान्युपवर्तयन्ति चत्वार्यनुदिशमवान्तरदिशास्वितराणि यद्यष्टौ भवन्ति
तेषां चत्वारश्चत्वार एकैकमधिरोहन्ति दशान्ये रात्रिकर्मिणोऽथैभ्य स्थालीभिराज्यान्यभिहरन्त्यष्टमैरन्नान्यथाध्वर्युरादत्ते स्रुवं च दीर्घदण्डं दर्विं च दीर्घदण्डाम्
आददत एकविँशतिं प्रतिप्रस्थातारो दशान्ये रात्रिकर्मिणोऽथाध्वर्युः

स्रुवेणाज्यस्योपहत्य त्रीणि पूर्वाणि वैश्वदेवानि जुहोति
स्वाहाधिमाधीताय स्वाहेति स्रुवैरेवाज्यानां जुह्वति दत्वते स्वाहेति
दर्वैरन्नानामदन्तकाय स्वाहेति
त एवमेवैतमनुवाकं यदैतस्यानुवाकस्य पारं यन्त्यथैतेनानुवाकेन
व्यवदधाति १९

पूर्वा स्तोकीया अथैतमनुवाकं दिश्या अथैतमनुवाकमुत्तरा स्तोकीया
अथैतमनुवाकमेकविंशिनीं दीक्षामथैतमनुवाकमृतुदीक्षा
अथैतमनुवाकमश्वस्य सावित्राण्यथैतमनुवाकं
त एवमेवैताननुवाकानेतेनैवानुवाकेन
यदैतेषामनुवाकानां पारं यन्त्यथैताननुवाकानुपसंक्रामन्ति वैश्वदेवानि
चाश्वाङ्गानि च द्वावश्वरूपाणामोषधीनां च वनस्पतीनां च द्वावपाँ संधानानां
चाभिधानानां च संप्लवस्यैक उक्तः खारीहोमस्
त एवमेवैताननुवाकानेतेनैवानुवाकेन
यदैतेषामनुवाकानां पारं यन्त्यथैतानौवाकानभिनिवर्तन्ते २०

एकस्मै स्वाहा द्वाभ्याँ स्वाहेति
त एवमेवैताननुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वत्यथ
वसतीवरीणां परिहरणकालेऽधिद्रवन्ति
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मण्यायां पुनरेवाधिद्रवन्ति
त एवमेवैताननुवाकानेतेनैवानुवाकेन पुनःपुनरभ्युपाकारं जुह्वतः समाप्नुवन्ति
तानि वा एतान्यश्वस्य सर्वायुषाणीत्याचक्षते २१

समाप्नय इति हैक आहुरेतर्हि सर्वाँ रात्रिम्जुह्वत्यथ
प्रातरनुवाकमुपाकरिष्यन्तावधद्रवतोऽध्वर्युश्च प्रतिप्रस्थाता च
द्वावन्यावधिद्रवतो रात्रिकर्मिणावथ राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्युक्थ्यं क्रतुमुपैति
समानम्कर्मोपाँ शोरुपाँ शुँ होष्यन्निन्द्राणसमधिद्रुत्य चतस्रः
स्रुवाहुतीर्जुहोत्युषसे स्वाहा व्युष्टयै स्वाहोदेष्यते स्वाहोद्यते स्वाहेति
प्रसिद्धोऽभिषवः

समानं कर्मान्तर्यामाद्
अन्तर्यामँ होष्यन्निन्द्राग्नसमधिद्रुत्य चतस्रः स्रुवाहुतीर्जुहोत्युदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहेत्यत्रैतदुदित आदित्य उपरमन्ति रात्रिकर्मिणो व्यविच्छिन्दन्ति परिश्रयणानि
निवर्तयन्तीन्द्राग्नसानि
प्रसिद्धँ सुवर्णमयैर्ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा सुवर्णरजताभ्यां द्वौ महिमानौ ग्रहौ गृह्णाति यः प्राणतो य आत्मदा इत्यथोक्थ्यं गृह्णाति
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीवा चतुर्विँशतिँ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे परिकर्मिणः
स्वर्वन्तँ राज्ञुदालमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वं पौतुद्रवमुपस्थावानमुच्छ्रयति २२

अथोत्तरं त्रीन्दक्षिणतो बैल्वाँस्त्रीनुत्तरतस्त्रीन्दक्षिणतः खादिराँस्त्रीनुत्तरतस्त्रीन्दक्षिणतः पालाशाँस्त्रीनुत्तरतोऽत्रैतं पालाशमुपशयं दक्षिणतो न्यस्यति तूष्णीं स्वर्वन्तान्यूपानुत्सृज्याथाध्वर्युरग्निष्ठ उपाकरोत्यश्वं तूपरं गोमृगमित्येताँस्त्रीन्प्राजापत्यान्
अथ पर्यङ्ग्यानुपाकरोत्याग्नेन्द्रं कृष्णललाममैन्द्रापौष्णं पौष्णमाग्नेयौ कृष्णग्रीवौ त्वाष्ट्रौ लोमशसक्त्यौ शितिपृष्ठौ बार्हस्पत्यौ धात्रे पृषोदरँ सौर्यं बलक्षं पेत्वमित्यथाध्वर्युरग्निष्ठ एवोपाकरोत्यग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्येकादशाथाध्वर्युरग्निष्ठ एवोपाकरोति सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वन्द्विनोऽथाध्वर्युरग्निष्ठ एवोपाकरोतीन्द्राय राज्ञे सूकर इत्येकादशारण्यान्
सैषाग्निष्ठे पशुषष्टिर्भवत्यथ रोहितो धूम्ररोहित इति दशाष्टादशिनोऽनुवाकास्
तेषां पूर्वा एव नवतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तरा नवत उत्तरेष्वाग्नेन्द्रा दक्षिणेषां मुख्या भवन्त्यैन्द्रासूरा उत्तरेषाम्
अथ मयुः प्राजापत्य इति दश दशिनोऽनुवाकास्
तेषां पूर्वा एव पञ्चतो दक्षिणेषु यूपेषूपस्थापयन्त्युत्तराः पञ्चत उत्तरेषु सोमापौष्णा दक्षिणेषां मुख्या भवन्त्यैन्द्रापौष्णा उत्तरेषाम्
अथैतस्मिन्नुपशये मनसैव यं द्वेष्टि तमुपाकरोति

यद्यु वै न द्वेष्ट्याखुस्ते पशुरित्यनुदिशत्येतम्सिन्काल स्राहवनीये स्रुवाहुतिं जुहोत्युपाकृताय स्वाहेति २३

स्रथैतमश्वमग्रेण यापान्स्वरथे युनक्ति युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुष इत्यथास्य पृष्ठं मर्मृज्यते रोचन्ते रोचना दिवीत्येवमेवोत्तरं योग्यं युनक्ति तस्यैवमेवोत्तरतः प्रष्टिमुपनियुनक्ति
तयोः पृष्ठं मर्मृज्यते युञ्जन्त्यस्य काम्या हरी विपत्तसा रथे । शोणा धृष्णू नृवाहसेत्य्
स्रथ केतुं कृरवन्नकेतव इति ध्वजं प्रतिमुञ्चत्यथ यजमानं वर्मसंनहनीयाभिः संनह्यति जीमूतस्येव भवति प्रतीकमिति चतुर्दशभिर्यथारूपम्
स्रथ रथमुपतिष्ठते वनस्पते वीड्वङ्गो हि भूया इति तिसृभिरनुच्छन्दसम्
स्रथ दुन्दुभिमुपश्वासयत्युपश्वासय पृथिवीमुत द्यामिति तिसृभिरनुच्छन्दसम्
स्रथ दत्तिणँ ह्रदमभिप्रयाति द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरा क्रोडेभ्योऽश्वानभिधावयन्त्यथैतँ रथं प्रदत्तिणमावर्त्य शालामानयति यद्वातो स्रपो स्रगमदिन्द्रस्य तनुवं प्रियाम्। एतँ स्तोतरेतेन पथा पुनरश्वमावर्तयासि नसिति
तानध्वर्युरुत्तराभि स्तोकीयाभिरन्वैत्यग्नये स्वाहा सोमाय स्वाहेत्येतेनानुवाकेन पुनःपुनरभ्युपाकारं यावदेषाँ स्तोका उपरमन्त्यथैतमश्वमग्रेण यूपान्स्वरथात्प्रमुच्य सौवर्णेन संदानेन संदित्याध्वर्योरावसथं द्वियोगं वर्तयन्त्यथ महिषी वावाता परिवृक्तीत्येता स्रस्मै गन्धान्गणान्मणींश्चादायाभ्यायन्त्यश्वं तस्य यत्प्राक्क्रोडात्तन्महिष्यभ्यनक्ति वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति पौतुद्रवेण प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तद्वावाताभ्यनक्ति रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसेति २४

गौल्गुलवेनाराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरा पुच्छात्तत्परिवृक्त्यभ्यनक्त्यादित्यास्त्वाञ्जन्तु जागतेन छन्दसेति मौस्तेन सूतग्रामणीनां च त्तत्तसंग्रहीतृणां च जायाभिः सह

तस्य ये प्राचीनं वहसः केशास्तेषु महिषी सहस्रँ सौवर्णान्काचानावयति

भूरिति प्रतिहितानां जायाभिः सहाथ ये प्रतीचीनं वहसः केशास्तेषु वावाता सहस्त्रँ राजतान्काचानावयति भुव इत्यराज्ञां जायाभिः सहाथैषा परिवृक्ती वालेषु सहस्त्रँ सामुद्रान्काचानावयति सुवरिति सूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह
यथेतं पत्नयो यन्त्यथ महिषी वावाता परिवृक्ती माहानसी दासीत्येता अस्मै मधुमिश्रान्लाजानुपकिरन्ति २५

लाजी३ञ्छाची३न्यशो ममा३ यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत इति
यस्यै हान्नमत्ति तस्यै हार्धुका प्रजा भवतीति विज्ञायतेऽथैतमश्वँ संदानात्प्रमुच्य निर्मन्थ्यस्यावृता निर्मन्थ्येन प्रचरति
प्रहृत्याभिहुत्याथाध्वर्युरग्निष्ठे नियुनक्त्यश्वं तूपरं गोमृगमित्यथास्य पर्यङ्ग्यान्नियुनक्त्याग्नेन्द्रं कृष्णललाममैन्द्रापौष्णं पौष्णमित्येताँस्त्रीन्ललाट
आग्नेयौ कृष्णग्रीवौ ग्रीवासु
त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः
शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे
धात्रे पृषोदरमुदरे
सौर्यं बलक्षं पेत्वं पुच्छ इत्यथाध्वर्युरग्निष्ठ एव नियुनक्त्यग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्यथाध्वर्युरग्निष्ठ एव नियुनक्ति सोमाय स्वराज्ञेऽनोवाहावनड्वाहवित्यथाध्वर्युरग्निष्ठ एव नियुनक्तीन्द्राय राज्ञे सूकर इति
सर्वानिवारण्यान्नियोजनेनैवानुवर्तयते याँश्च ग्राम्याणां पशूनामुत्स्रक्ष्यन्भवत्यारण्याँश्चाथ दक्षिणान्प्रतिप्रस्थातारो नियुञ्जन्त्यथोत्तरान्
अथैतमश्वं नित्येन प्रोक्षेण प्रोक्ष्यातिप्रोक्षेण प्रोक्षति जज्ञि बीजमिति नित्येनैवेतरान्पशून्
अथ दक्षिणान्प्रतिप्रस्थातारः पोक्षन्त्यथोत्तरान्
अथैतमश्वमग्रेण यूपान्प्रोक्षणीरवघ्रापयति २६

अग्निः पशुरासीत्तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यस्यथावजिघ्र । वायुः पशुरासीदादित्यः पशुरासीदिति

यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोक-
मजयद्यस्मिन्नग्निः स ते लोकस्तस्मात्त्वान्तरेष्यामि यदि नावजिघ्रसि । वायुः
पशुरासीदादित्यः पशुरासीदिति
यदि नावजिघ्रति पुनरेवावघ्रापयत्यग्निः पशुरासीत्तेनायजन्त स एतं लोक-
मजयद्यस्मिन्नग्निः स ते लोकस्तं जेष्यसि यद्यवजिघ्रसि । वायुः
पशुरासीदादित्यः पशुरसीदित्
एतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोत्यालब्धाय स्वाहेति २७

अथेध्मात्समिधमाददान आहाग्नये
समिध्यमानायानुब्रूहीत्यभ्यादधातीध्मम्परि समिधँ शिनष्टि
वेदेनोपवाजयत्यनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति
संमृष्ट् स्रुग्भ्यामुत्तरम्
अथासँस्पर्शयन्स्रुचावुदङङत्याक्रम्य जुह्वाश्वं तूपरं गोमृगमित्येतान्समनक्त्यथ
पर्यङ्ग्यान्
अथेतरान्
अथ दक्षिणान्
अथोत्तरान्
अथ यथायतनँ स्रुचौ सादयित्वा प्रवरं प्रवृणीते
प्रसिद्धमृत्विजो वृणीते
सीदति होता
प्रसवमाकाङ्क्षति
प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिद्धः प्रेष्येति
समिद्धो अञ्जन्कृदरं मतीनामित्येता अश्वस्याप्रियो भवन्ति
वषट्कृते जुहोति प्रेष्य प्रेष्येति चतुर्थाष्टमयोः समानयमानोऽष्टमे सवँ
समानयते
परि स्वाहाकृतीभ्यः सँस्रावँ शिनष्टि
दश प्रयाजानिष्ट्वोदङङत्याक्रम्य सुवर्णं च सायकं च याचति
तौ जुह्वामक्त्वा ताभ्यामश्वं तूपरं गोमृगमित्येतान्समनक्ति
कालायसैः पर्यङ्ग्यान्लोहायसैरितरान्सुवर्णैर्दक्षिणान्रजतैरुत्तरान्
अथ यथायतनँ स्रुचौ सादयित्वाह पर्यग्नये क्रियमाणायानुब्रूहीति

नित्ये पर्यग्निकरणेऽनुवर्तयति मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलिरिति
पर्यग्निकृतानामेतेषां पशूनामुत्सृजन्त्यवी द्वे धेनू भौमी दिग्भ्यो वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे धेनू भौमी इन्द्राय राज्ञे सूकर इति सर्वानिवात्रारण्यान्

अथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते
तेषामैन्द्रासूरा उत्तराध्या भवन्त्यश्व
उपचारतोऽश्वमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते
पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तोऽथ याचति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु तार्प्यं चेत्युत्तरत एतद्बहुलँ सँस्तीर्णं भवति
तदश्वाय निहन्यमानायोपास्यति बर्हिश्च शतपलं च कृत्तिं चाधीवासं च कशिपु चेत्येतत्पञ्चतयं तार्प्येण संज्ञप्यमानं यामेन साम्ना प्रस्तोतानूपतिष्ठते पृथगितरेभ्यस्
तत इतरान्प्राचो वोदीचो वा निघ्नन्त्यकृण्वतो मायून्संज्ञपयतेत्युक्त्वैतेनैव यथेतमेत्य पृषदाज्यावकाश आसतेऽथैतौ ब्रह्मोद्यं वदतो होता च ब्रह्मा चान्तरेण यूपं चाहवनीयं च
दक्षिणतो ब्रह्मा भवत्युत्तरतो होता
होता ब्राह्मणं पृच्छति २८

किँ स्विदासीत्पूर्वचित्तिः किँ स्विदासीद्बृहद्वयः । किँ स्विदासीत्पिशंगिला किँ स्विदासीत्पिलिप्पिलेति
तमितरः प्रत्याह द्यौरासीत्पूर्वचित्तिरश्व आसीत्बृहद्वयः ।
रात्रिरासीत्पिशंगिला अविरासीत्पिलिप्पिलेति
तमितरः पृच्छति कः स्विदेकाकी चरति क उ स्विज्जायते पुनः । किँ स्विद्धिमस्य भेषजं किँ स्विदावपनं महदिति
तमितरः प्रत्याह सूर्य एकाकी चरति चन्द्रमा जायते पुनः । अग्निर्हिमस्य भेषजम्भूमिरावपनं महदिति

तमितरः पृच्छति पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य

नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योमेति
तमितरः प्रत्याह वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम्।
सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योमेति
संज्ञप्तान्प्राहुर्जुहोति संज्ञप्ताहुतिं यत्पशवो मायूनकृषतेत्यथ सप्त
प्राणाहुतीर्जुहोति प्राणाय स्वाहा व्यानाय स्वाहेति
षट्त्रिँ शतमश्वस्तोमीयाञ्जुहोति यदक्रन्दः प्रथमं जायमानो मा नो मित्रो वरुणो
अर्यमा ये वाजिनं परिपश्यन्ति पक्वमुत स्मास्य द्रवतस्तुरण्यत
इत्यथाभ्यायन्ति शमितार उपेतनेति
पाशेभ्यः पशून्प्रमुच्यमानाननुमन्त्रयतेऽदितिः पाशान्प्रमुमोक्त्वेतानिति
पृथगविशाखाभिरुपसज्येमां दिशं निरस्यन्त्यरातीयन्तमधरं कृणोमि यं
द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानित्यथैताः पत्नयः
सौवर्णैरुदकमण्डलुभिरुदायन्ति
ता अश्वस्यानुपृष्ठं प्राणानाप्याययन्त्यो यन्त्यनुपूर्वमितरेषां पशूनाम्
अथैषा महिषी प्रास्य केशान्वासः परिधाय सौवर्णेन विधवनेन विधुवाना
त्रिरपसलैरश्वं पर्येत्यवन्ती स्थावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां
वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिँ हवामहे वसो ममेति

त्रिः परीत्योत्तरतस्तिष्ठति प्रतिहितानां जाल्याभिः सहैवं वावाताराज्ञां
जायाभिः सहैवं परिवृक्तीसूतग्रामणीनां च क्षत्तसंग्रहीतॄणां च जायाभिः सह
यथेतं पत्नयो यन्त्यथैतमश्वँ सर्वैरलङ्कारैरलङ्कृत्य परिश्रयन्ति
तस्योदीचीं द्वारं कुर्वन्त्यथैतां महिषीँ सर्वैरलङ्कारैरलङ्कृत्य तां निह्नुवानां
गर्हमाणामध्वर्युरुदानयत्यम्बे अम्बाल्यम्बिके न मा नयति कश्चन ।
ससस्त्यश्वक इति
साश्वमुत्तरत उपसंविश्य शिरस्तो वास उपधत्ते
तावध्वर्युस्तार्प्येण संप्रोर्णोति सुभगे काम्पीलवासिनि सुवर्गे लोके
संप्रोर्ण्वाथामित्यथैषा महिष्युपस्थे शेफमाधत्त आहमजानि गर्भधमा
त्वमजासि गर्भधम्। तौ सह चतुरः पदः संप्रसारयावहा इति
तामध्वर्युरनुमन्त्रयते वृषा वाँ रेतोधा रेतो दधात्विति प्रतिपद्य य आसां कृष्णे
लक्ष्मणि सर्दिगृदिं परावधीदित्यातोऽथैषा पत्नी गर्हते २९

अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वक इति
तां यजमानोऽभिमेथत्यूर्ध्वामेनामुच्छ्रयतादिति
सा तथैव गर्हते
तां वावाताभिमेथति यद्धरिणी यवमत्तीति
सा तथैव गर्हते
तां परिवृक्त्यभिमेथतीयं यका शकुन्तिकेति
सा तथैव गर्हते
ताँ सर्वे गणा अभिमेथन्ते माता च ते पिता च त इति

नात्र गर्हते
मुहूर्तमश्वमुपसंविश्योपोत्थाय वासः परिधायाद्भिर्मार्जयत आपो हि ष्ठा मयोभुव इति तिसृभिरनुच्छन्दसं दधिक्राव्णो अकारिषमिति चतुर्थीं सर्व एव सुरभिमतीमृचं जपन्ति ये यज्ञेऽपूतं वदन्ति
नयन्ति पत्नीम्व्यवच्छिन्दन्ति परिश्रयणम्
अश्वस्यालङ्करणमध्वर्योरावसथँ हरन्त्यथैतस्मिञ्छल्मलिशर्च आशुपिष्टानि संयुत्य तैरनुलोममश्वं प्रलिम्पन्त्यथ महिषी वावाता परिवृक्तीत्येता अस्मै गणान्सूचीश्चादायाभ्यायन्त्यश्वं तस्य यत्प्राक्क्रोडात्तस्मिन्महिषी सौवर्णाभिः सूचीभिरसिपथान्कल्पयन्त्येति गायत्री त्रिष्टुब्द्विपदा या चतुष्पदेति द्वाभ्यां प्रतिहितानां जायाभिः सहाथ यत्प्रतीचीनं क्रोडादा नाभेस्तस्मिन्वावाता राजताभिरुत्तराभ्यां द्वाभ्यामराज्ञां जायाभिः सहाथ यत्प्रतीचीनं नाभेरापुच्छात्तस्मिन्परिवृक्ती सीसाभिरुत्तराभ्यां द्वाभ्याँ सूतग्रामणीनां च क्षत्तसंग्रहीतृणां च जायाभिः सह
यथेतं पत्नयो यन्त्यध्वर्योरावसथँ सूचीर्हरन्त्यथ सुवर्णं च सायकं च याचति ताभ्यामश्वस्य क्रोडमापिनष्टीत्थमश्वं विशासतेति
कस्त्वा छ्यति कस्त्वा विशास्तीत्येतत्षडृचं यजमानं वाचयति
यदैतस्य सूक्तस्य पारमेत्यथाध्वर्युरश्वस्य क्रोडात्पिशितमुत्पिनष्टीत्थमश्वं विशासतेत्था३मिति

नाश्वस्य वपा भवति
चन्द्रमिव मेदः परिवृक्तँ साश्वस्य वपा

वपा तूपरस्यैवं गोमृगस्य
कालायसैः पर्यङ्ग्याणां लोहितायसैरितरेषाँ सुवर्णैर्दक्षिणेषाँ रजतैरुत्तरेषाम्
३०

अश्वस्यैवाध्वर्युर्वपया प्रथमया प्रतिपद्यतेऽनूचीरितरा आहरन्त्यश्वस्यैव वपायै
प्रतितप्यमानायै बर्हिषोऽग्रमुपास्यत्युपेतरा यच्छन्त्युत्तरतोऽश्वस्य तूपरस्य
गोमृगस्येति वपाः श्रपयन्ति दक्षिणत इतरेषां पशूनाम्
अश्वस्यैव वपाँ स्रुवाहुत्याभिजुहोत्युपेतरा यच्छन्त्यथ स्वाहाकृतिप्रैषेण
चरित्वा सँस्रावेण पृषदाज्यमभिघार्याश्वस्यैव वपामभिघारयत्युपेतरा
यच्छन्त्यथ पुरस्तात्स्वाहाकृतिँ स्रुवाहुतिँ हुत्वा सुवर्णेन महिमानं जुहोति
तस्य ते द्यौर्महिमेत्यथोपस्तीर्य द्विः स्रुवेणाश्वस्यैव वपाँ समवलुम्पन्नाह
प्रजापतय इत्युपाँ शु हयस्य छागस्योस्रस्य वपानां
मेदसोऽवदीयमानस्यानुब्रूहीत्युच्चैर्यावतीः स्रुक्संभवत्यथेतराः पात्र्या
वेडसूनेन वोपोद्यच्छन्ते
द्विरभिघारयत्य्
अत्याक्रम्याश्राव्याह प्रजापतय इत्युपाँ शु हयस्य छागस्योस्रस्य वपामेदः
प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते वपा जुहोत्यथोपरिष्टाद्रजतेन महिमानं जुहोति
तस्य ते पृथिवी महिमेत्यथ पर्यङ्ग्याणां वपाभिश्चरत्यथेतरेषाम्
अथ दक्षिणेषां प्रतिप्रस्थातारो वपाभिश्चरन्त्यथोत्तरेषां याँश्च ग्राम्याणां
पशूनामुदस्त्राक्षीदारण्याँश्च स्रुवाहुत्यस्तेषां वपाभ्यः प्रतिजुहोत्युपाँ श्वेतेषां
पशुजातानां वपाभिश्चरन्ति प्राजापत्यानाँ सावित्राणाँ सारस्वतानां पौष्णानां
यामानां पितृदेवतानां द्यावापृथिव्यानां वायव्यानाँ सौर्याणां
वैश्वकर्मणानामित्यथोपरिष्टात्स्वाहाकृतिँ स्रुवाहुतिँ हुत्वा वपाश्रपणीरनुप्रहृत्य
समुत्क्रम्य चात्वाले मार्जयन्तेऽथ पशून्विशास्ति शमितरित्याह माश्वस्य
लोमापिकृतीर्माश्वस्यास्थि सँशारीर्यथाङ्गमेनं विकृत्य शामित्रे कुम्भ्याँ
समवशमयतादेवं तूपरमेवं गोमृगमथ दक्षिणमश्वशफं गोमृगकण्ठमिति
शामित्रे निष्पचतादयस्मयेन कमण्डलुनाश्वतेजनीँ श्रपयतादित्यथ सावित्रँ
हुत्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते ३१

अथ सावित्रँ हुत्वा प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहाः गृह्यन्ते
समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ्यज्ञः संक्रामत्विति
कामं दक्षिणानां ददाति
वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदिति
प्रसिद्धोऽग्न्यभिषेकोऽहीनसंततिं करोत्यृजुधा माध्यंदिनँ सवनँ संतिष्ठतेऽथ सावित्रँ हुत्वा प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वाथैतान्पशून्याचत्यश्वं तूपरं गोमृगमित्यथ पर्यङ्ग्यानथेतरानथ दक्षिणानथोत्तरान्
उत्तरतोऽश्वस्य तूपरस्य गोमृगस्येति हविरुपसादयन्ति दक्षिणत इतरेषां पशूनाम्
अथ वैतसे कटेऽश्वस्य हृदयं निधाय सुवर्णेन च सायकेन च तस्याग्रेऽवद्यन्नाह ३२

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्येकादशावदानान्यवद्यत्येवं तूपरस्यैवं गोमृगस्य
कालायसैः पर्यङ्ग्याणां लोहायसैरितरेषाँ सुवर्णैर्दक्षिणेषाँ रजतैरु त्तरेषां नाश्वस्य तूपरस्य गोमृगस्येति स्विष्टकृतेऽवद्यत्यवद्यन्तीतरेषां पशूनां नाश्वस्य तूपरस्य गोमृगस्येतीडामवद्यत्यवद्यन्तीतरेषां पशूनाम्
अथैतमश्वं वैतसे कटे यथाङ्गं चिनोति
पुरस्तात्प्रत्यञ्चं तूपरमायातयति
पश्चात्प्राचीनं गोमृगम्
अथ जुहूपभृतावाददान आह प्रजापतय इत्युपाँ शु हयस्य छागस्योस्रस्य हविषोऽनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह प्रजापतय इत्युपाँ शु हयस्य छागस्योस्रस्य हविः प्रस्थितं प्रेष्येत्युच्चैर्वषट्कृते तान्सहैव कटेनाग्नावनुप्रहरति ३३

द्यौस्ते पृष्ठं क्रमैरत्यक्रमीद्वाज्याक्रान्वाजीति त्रिभिरनुवाकैरथ पर्यङ्ग्याणाँ हविर्भिश्चरत्यथेतरेषाम्
अथ दक्षिणेषां प्रतिप्रस्थातारो हविर्भिश्चरन्त्यथोत्तरेषां याँश्च ग्राम्याणां पशूनामुदस्राक्षीदारण्याँश्च स्रुवाहुत्यस्तेषाँ हविर्भ्यः प्रतिजुहोत्युपाँ श्वेतेषां पशुजातानाँ हविर्भिश्चरन्तीत्युक्तमेतदथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजत्यथ वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतो गोमृगकण्ठेन प्रथमामश्वतेजनीमुपजुहोत्यथ स्विष्टकृता चरत्येतस्मिन्काल आहवनीये स्रुवाहुतिं जुहोति हुताय स्वाहेति ३४

अथैतं प्रसेकमग्नावायातयति दक्षिणतो वोदञ्चं पश्चाद्वा प्राञ्चं तस्य स्रुगिव पूर्वार्धो भवत्येवमेव मध्यं चमस इव बुध्नस्

तस्मिँश्चतुर उपस्तृणान आहाप्रमत्तः संततमानय स्तेगान्निगदिष्यामीति स यत्र धाराग्निं प्राप्नोति तत्प्रतिपद्यते स्तेगान्दँ ष्ट्राभ्यां मण्डूकाञ्जुम्भ्येभिरिति चतुर्दशानुवाकान्प्रयासाय स्वाहेति पञ्चदशम्
अथ द्वे आहुती जुहोतीलुवर्दाय स्वाहा बलिवर्दाय स्वाहेति षट्त्रिँ शतमश्वस्तोमीयाँ स्तिस्रो द्विपदा इमा नु कं भुवना सीषधेमापो हि ष्ठा मयोभुव इति चात्रैतं प्रसेकमग्नावनुप्रहरत्यथैतँ सँस्रावेणाभिजुहोति समानं कर्मानूयाजेभ्योऽथ
पुरस्तादुत्तमस्यानूयाजस्याश्वशफेनाश्वतेजनीमुपजुहोति
समानं कर्मा पत्नीसंयाजेभ्योऽथ पुरस्तादुत्तमस्य पत्नीसंयाजस्यायस्मयेन कमण्डलुनाश्वतेजनीमुपजुहोत्यृजुधैकविँश उक्थ्यः संतिष्ठते पत्नीसंयाजान्तोऽथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्ति ३५

अथातो महारात्र एव बुध्यन्ते
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्यतिरात्रं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते

समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति
स्वर्वन्तँ राज्ञुदालमग्निष्ठमुत्सृज्यैकादश प्रातर्गव्यान्प्रजापत्यान्पशूनुपाकरोति

तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्मा दाक्षिणेभ्यो दाक्षिणानि हुत्वाष्टौ संवर्गाहुतीर्जुहोत्यर्वाङ्यज्ञः संक्रामत्वित्यवशिष्टं दक्षिणानां ददाति
वैश्वकर्मणानि हुत्वा नव पर्याप्तीर्जुहोति भूतं भव्यं भविष्यदित्युत्सन्नोऽग्न्यभिषेको नात्राहीनसंततिं करोत्यृजुधा माध्यंदिनँ सवनँ संतिष्ठते
प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथोक्थ्यं गृह्णाति
समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति
तेषाँ समानी मनोता समानी देवता समानः प्रत्यभिमर्शनः समानो वसाहोमः समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशः
समानं कर्मा पत्नीसंयाजेभ्यः
पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्याभूतीश्चानुभूतीश्च जुहोत्या मे गृहा भवन्त्वग्निना तपोऽन्वभवदित्येताभ्यामनुवाकाभ्याम्
अथ भूताभव्यौ होमौ जुहोति भूताय स्वाहा भविष्यते स्वाहेत्यथाध्वरिकाणि समिष्टयजूँषि हुत्वा दशाग्निकान्युपजुहोति
समानं कर्मावभृथादथैतस्मिन्नवभृथे द्वितीयामवभृथाहुतिँ हुत्वा दश वारुणान्युपजुहोति नमो राज्ञे नमो वरुणायेत्यथ मृत्यवे स्वाहा मृत्यवे स्वाहेति नवतिमाहुतीर्जुहोति प्रयासाय स्वाहायासाय स्वाहेत्येकादश शतायुर्वै पुरुषः शतवीर्य आत्मैकशतो यावानेव पुरुषस्तस्मान्मृत्युमवयजत

इति ब्राह्मणम् ३६

अथैष आत्रेयो विहृतः शुक्लो विक्लिधस्तिलकवान्पिङ्गाक्षः खलतिर्विकटः
कुनखी कुब्जः शिपिविष्टो नग्न उपमज्जति
तस्य मूर्ध्नि जुहोति जुम्बकाय स्वाहेत्यत्रास्मा एतच्छतं विपथं
ददात्यथैनमिषुजितात्प्रधमन्ति मा मे राष्ट्रे वात्सीरिति
प्रसिद्धोऽवभृत उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै सौरीर्नव श्वेता वशा इत्युपालम्भ्या भवन्ति
तासां प्रसिद्धं वपाभिश्चरित्वाग्रेण गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिञ्छगलं
कल्माषं किकिदीविं विदीगय मिति त्वाष्ट्रान्पशूनुपाकरोति
तान्पर्यग्निकृतानुत्सृज्याज्येन सँस्थां करोत्यथ पशुपुरोडाशान्निर्वपति
पशुपुरोडाशौ वाथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश यव्यान्युपजुहोति
नमो राज्ञे नमो वरुणायेत्य्
अथ पुरस्तात्पशुस्विष्टकृतो दश गव्यान्युपजुहोति मयोभूर्वातो अभिवातूस्रा
इति
प्रसिद्धं पशवः संतिष्ठन्तेऽथोदवसानीययेष्ट्येष्ट्वाग्रेणाहवनीयं
विशालयूपमुच्छ्रित्य तस्मिन्नेतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति
तेषां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति
ताननुवर्तन्तेऽष्टौ देवसुवाँ हवीँष्यग्नयेऽँहोमुचेऽष्टाकपाल इत्येषा च
दशहविरिष्टिस्
तस्या एता याज्यापुरोऽनुवाक्या भवन्ति ३७

अग्नेर्मन्वे प्रथमस्य प्रचेतस इत्यथ पुरस्तात्पशुपुरोडाशस्विष्टकृतो दश
ब्रह्मवर्चसान्युपजुहोत्या ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्यथ
पुरस्तात्पशुस्विष्टकृतो दश संनतिहोमानुपजुहोत्यग्नये समनमत्पृथिव्यै
समनमदिति
प्रसिद्धं पशवः संतिष्ठन्तेऽत्रैतैरन्वहं द्वादशभिर्ब्रह्मौदनैश्चरति
तेषामुक्तं चरणं यथामुत्रैकस्यान्यत्र रशनाभ्याम्
अत्रैभ्य एतान्परःशतं शतपलान्निष्कान्ददाति
सुवर्णरजते महिम्नोः पात्रे ददात्येकतयानि सौवर्णानि पात्राणि ददाति

हिरगमयं कशिपु हिरगमयं पड्बीशँ हिरगमयँ संदानमित्य्
ग्रथ वीगागाथिभ्याँ शतं विपथौ ददात्यथर्तुपशुभिर्यजत ऋृतुपर्यायं वा
समानेषु वाग्नग्रायतनेषु पिशङ्गास्त्रयो वासन्ताः सारङ्गास्त्रयो ग्रैष्माः
पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रयः शारदाः पृश्निसक्थास्त्रयो हैमन्तिका
ग्रवलिप्तास्त्रयः शैशिराः संवत्सराय निवत्तस इत्यथ
देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ सौत्रामगया यजते
संतिष्ठतेऽश्वमेधस्त्रिभिः संवत्सरैः
संतिष्ठतेऽश्वमेधः संतिष्ठतेऽश्वमेधः ३८

षोडशः प्रश्नः

द्वादशाहेन यत्त्यमागो भवत्येको वा बहवो वोतो ह्येको दत्तिगावता यजते
स यद्येको यदि बहवोऽमावास्याया एव षडहेनोपरिष्टाद्दीत्तन्ते
ते गृहपतेररगयोः संजानते पृथग्वा
ते यदि गृहपतेररगयोः संजानते मथित्वा गार्हपत्यमाहवनीयमुद्धरन्ति
ग्रामाद्व्रतश्रपगमाहरन्ति
यद्यु वै पृथक्संजानते गृहपतिरेव प्रथमो मन्थते
तदेवेतरे पर्युपविश्य मथित्वामथित्वैव गार्हपत्यँ संनिवपन्ति
तस्मादेकवद्भूतादाहवनीयमुद्धरन्ति
ग्रामाद्व्रतश्रपगानाहृत्य संनिवपन्त्यथ यदि पश्चादपर ग्रागच्छति मथित्वैव
गार्हपत्येऽर्धं निवपत्याहवनीयेऽर्धं ग्रामाद्व्रतश्रपगमाहृत्याप्यर्जत्युपो एनं
पूर्वेषु कर्मसु ह्वयन्तेऽथातः पवनस्यैव मीमाँसा
गृहपतिमेवाध्वर्युः प्रथमं पवयत्यथ होतारमथ ब्रह्मागमथोद्गातारं
प्रतिप्रस्थाताध्वर्युं पवयति प्रस्तोतारं प्रशास्तारं ब्राह्मगाच्छँसिनमाग्नीध्रः
प्रतिप्रस्थातारं पवयत्यच्छावाकं नेष्टारं पोतारँ सदस्यमुन्नेताग्नीध्रं पवयति
ग्रावस्तुतँ सुब्रह्मगयं प्रतिहर्तारमात्मानमन्ततस्

ते चेद्ब्रूयुरध्वर्युर्वाव सर्वस्य पवयिता स नः सर्वान्पवयत्विति स
एवैनान्सर्वान्पवयत्यपि वान्योऽन्यं पवयन्ति यद्यधीयन्तो भवन्ति १

तेषां प्रसिद्धा दीत्तगीयेष्टिस्तायते

सकृदाश्राविते स यत्राह भरतवदिति तद्गृहपतेरेवार्षेयं प्रथमं वृणीतेऽथ होतुरथात्मनोऽथ ब्रह्मणोऽथोद्गातुरथ प्रतिप्रस्थातुरथ प्रस्तोतुरथ प्रशास्तुरथ ब्राह्मणाच्छँसिनोऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततो ब्रह्मण्वदिति समानं ते सर्व एव दीक्षाहुतिषु समन्वारभन्ते
गृहपतिमेवाध्वर्युरुच्चैः कृष्णाजिने वाचयति
तदेवेतरेऽनुनिक्रामन्त्यपि वान्योऽन्यं वाचयन्ति यद्यधीयन्तो भवन्ति
ते यथोत्साहं व्रतदुघमुपयन्त्येकैकां वा बह्वीर्वा
तेषां यथैव प्रवरानुपूर्व्यमेवं घर्मोच्छिष्टेऽतिग्राह्यभक्षेषु षोडशिनि

षष्ठ्यामुपसद्युत्तरवेदिँ संनिवपन्ति यद्यनग्निचित्यो भवत्यथ यदि साग्निचित्यः प्रथमायामेवोपसद्युत्तरवेदिँ संनिवपन्ति २

तेषां द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुता न द्वादशाहेऽग्निं चिन्वीतेत्येक आहुश्चिन्वत उ हैके
प्रसिद्धेन कर्मणोपवसथाद्यन्ति
तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयोऽतिरात्रस्तायते
स यत्र माध्यंदिने सवने तृतीयसवनाय वसतीवरीभ्योऽवनयति
तद्वसतीवरीकलशे यावन्मात्रीरतिशिष्याग्नीध्रं द्रुत्वा छायायै चातपतश्च सन्धौ गृह्णाति हविष्मतीरिमा आपो हविष्मान्देवो अध्वरो हविष्माँ विवासति हविष्माँस्तु सूर्य इत्येषाहीनसंततिरेतामेव पुनःपुनश्चोदयिष्याम इति वदन्तः सोऽत्र वैव यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञियस्य वा स्तोत्रे शंयुवाके वा
तेषां ज्योतिष्टोमो वैश्वानरः प्रायणीयोऽतिरात्रः संतिष्ठते
तस्मिन्सँस्थिते विवर्तयन्ति परिधीन्

अनुप्रहरन्ति प्रस्तरम्पत्नीसंयाजान्तोऽतिप्रैषेण ब्रह्मा वाचं यच्छति
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मण्यायां ब्रह्मा वाचं विसृजते
प्रतिपद्यते दिवा प्रातरनुवाकेनाह्ना संक्रामन्होता छन्दाँस्यन्वाह
निमील्याध्वर्युरुपाँशुं जुहोति रात्र्यै रूपमिति वदन्तस्
तायते त्रिवृदग्निष्टोमो रथंतरसामा

माहेन्द्रस्य स्तोत्रे रथो युक्तोऽत्याधावति
रथशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं
क्रियतेऽहीनसंततिं करोत्यथ श्वो भूते तायते पञ्चदश उक्थ्यो बृहत्सामा
दुन्दुभिनैतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं
क्रियतेऽहीनसंततिं करोत्यथ श्वो भूते तायते सप्तदश उक्थ्यो
वैरूपसामाधावेनैतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोत्येतावदेवैतदहः शिल्पं
क्रियतेऽहीनसंततिं करोत्यथ श्वो भूते तायत एकविँश उक्थ्यो
वैराजसामाग्नेयश्च षोडशी चातिग्राह्यवनतिग्राह्यः षोडशीत्येक
आहुरेकविँशमेतदहर्न्यूङ्ख्यं भवति
विराजां वा प्रतिपत्सु न्यूङ्खयन्ति शस्त्रे वेत्येतदेकम्

अथापरं प्रातरनुवाके न्यूङ्खयन्ति हविष्कृत्युभयेषु प्रस्थितेषु माहेन्द्रस्याश्रावणे
न तत ऊर्ध्वं न्यूङ्खयन्तीत्यरणीहस्त एतदहरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोति
तदुगातुर्दक्षिण उरौ मन्थति
तं जातँ सर्व एवाभिहिङ्कुर्वन्ति ३

तस्य मीमाँसा
गार्हपत्येऽनुप्रहरेत्प्रतिष्ठाकामानाम्
आग्नीध्रे प्रजाकामानां शामित्रे पशुकामानाम्
आहवनीये स्वर्गकामानामित्यनादृत्य तदाहवनीय एवानुप्रहरति भवतं नः
समनसविति
प्रहृत्याभिजुहोत्यग्नावग्निश्चरति प्रविष्ट इत्येतावदेवैतदहः शिल्पं
क्रियतेऽहीनसंततिं करोत्यथ श्वो भूते तायते त्रिणव उक्थ्यः
शाक्वरसामैन्द्रोऽतिग्राह्योऽद्भिरेतदहरवकामिश्राभिरध्वर्युर्माहेन्द्रस्य
स्तोत्रमुपाकरोति
तासां मीमाँसा

चात्वालेऽवनयेदास्तावे निनयेत्प्रोक्षणीः कुर्वीत पुरोडाशीयानि पिष्टानि
संयौयादित्यनादृत्य तदुद्गातृष्वधीना एवैनाः कुर्याद्
उद्गातारो हैताभिररण्येगेयानाँ साम्नाँ शुचँ शमयन्तो मन्यन्ते

ता उ चेदध्वर्यवे प्रब्रूयुरपोऽभ्यवहरतेत्येव ब्रूयादित्येतावदेवैतदहः शिल्पं क्रियतेऽहीनसंततिं करोत्यथ श्वो भूते तायते त्रयस्त्रिँ श उक्थ्यो रैवतसामा सौर्योऽतिग्राहोऽद्भिरेवैतदहर्दूर्वामिश्राभिरध्वर्युर्माहेन्द्रस्य स्तोत्रमुपाकरोति ४

तासामुक्ता मीमाँ सा
स्वयमृतुयाजमेवैतदहर्भवति
नैतदहरन्योऽन्यस्यर्तुयाजं यजन्ति
स यत्राहाध्वर्यू यजतमिति तदध्वर्यू जघनेन हविर्धाने उपविश्य स्वयमृतुयाजं यजतो ये३ यजामहे अश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतामर्वाञ्चमद्य यय्यं नृवाहणं रथं युञ्जाथामिह वां विमोचनम्। पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू ऋतुना सोमं पिबताम्वौ३षदिति
स यत्राह गृहपते यजेति तद्गृहपतिर्जघनेन गार्हपत्यमुपविश्य स्वयमृतुयाजं यजति ये३ यजामहे अग्निं गृहपतिं गार्हपत्यात्सुगृहपतयस्त्वयाग्न इमे सुन्वन्तो यजमानाः स्युः सुगृहपतिस्त्वमेभिः सुन्वद्भिर्यजमानैः स्या अग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु जोष्यग्ने समिधं जोष्याहुतिं जोषि ब्रह्म जन्यं जोषि सुष्टुतिम्। विश्वेभिर्विश्वाँ तुना वसो मह उशन्देवाँ उशतः पायया हविर्ऋतुना सोमं पिबतू वौ३षदिति

सांवाशिनमेतदहर्भवत्युत्तरतो वत्सान्धारयन्ति दक्षिणतो मातृर्माहेन्द्रस्य स्तोत्रेऽन्तरेण सदोहविर्धाने संवाश्य वत्सान्मातृभिः सँसृजन्ति
बध्नन्ति वत्सान्
उत्सृजन्ति मातृर्माहेन्द्रस्य स्तोत्रमुपाकरोति
अथापराह्ण उक्थ्यपर्यायेषु शिल्पानि क्रियन्ते
पारुच्छेपीर्होता शँ सति
वालखिल्या मैत्रावरुणो विहरति
वृषाकपिं ब्राह्मणाच्छँ सी शँ सत्येवयामरुतमच्छावाकः
संतिष्ठते पृष्ठ्यः षडहोऽहीनसंततिं करोति
अथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्ति ५

अथ श्वो भूते चतुर्विँशं छन्दोममुपयन्ति बृहत्सामानम्
अथ श्वो भूते चतुश्चत्वारिँ शं छन्दोममुपयन्ति रथंतरसामानम्
अथ श्वो भूतेऽष्टाचत्वारिँ शं छन्दोममुपयन्ति बृहत्सामानम्
अथ श्वो भूते चतुर्विँशमग्निष्टोममुपयन्ति रथंतरसामानम्
अविवाक्यमेतदहर्भवति
नैतदहरन्योऽन्यस्मा उपहताय व्याहुर्गाथया वा नाराशँस्या वा विब्रूयादिति
तदु वा आहुर्न वै यज्ञः संतिष्ठते यन्न विब्रूयादिति
विब्रूयादिति वै नो ब्राह्मणं भवति
नैतदाद्रियेत
नाद्रियेतेति स्थितिरननुष्टुभमेतदहर्भवति
नानुष्टुभोऽधीयते
ते चेदनुष्टुभ उद्धरेरन्नध्वर्युरनुष्टुभ उद्धरेदमूर्या उप सूर्ये याभिर्वा सूर्यः सह ।
ता नो हिन्वत्वध्वरमित्येतया सौर्या गायत्र्या वसतीवरीर्गृह्णीयाद्
हृदे त्वा मनसे त्वेत्यपोद्धृत्यैतामन्यया सौम्या गायत्र्या
राजानमुपावहरेद्विष्णो त्वं नो अन्तम इत्यपोद्धृत्यैतामन्यया वैष्णव्या गायत्र्या
राजानमुपतिष्ठेत
स उ चेदविद्वाननुष्टुभमभिव्याहरत्यत्यक्रमिषमिति होत्रे प्राह
होतानाप्तस्यापयिता
होतास्य तदङ्गैरपिवयति
स उ चेन्मन्येतामितकामो वा अहमस्मि यदृङ्मयं वेदे यजुर्मयमेव
तद्यावेवाङ्गयौ वेदौ तौ संपादयेतामिति नैतदाद्रियेत
नाद्रियेतेति स्थितिः
संतिष्ठत एष चतुर्विँशोऽग्निष्टोमो रथंतरसामा ६

तस्मिन्सँस्थिते समिद्धारा यन्त्याहृत्य समिध आग्नीध्रीये संन्यस्यन्ति

तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति प्रजापतये स्वाहेति मनसाथ
सदः प्रसर्पन्ति तूष्णीँ स्तोमाय
संप्रसृप्तान्विदित्वाध्वर्युर्मनसैव प्राङ्द्रुत्वा मनसेमां पात्रं कृत्वा मनसान्यं
ग्रहं प्रजापतये गृह्णात्युपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति

यदिदं किं च तदिति मनसा परिमृज्य सादयत्येष ते योनिः प्रजापतये
त्वेत्यथाप उपस्पृश्य बर्हिषी ऋादाय वाचंयमः प्रत्यङ्ङुत्वा मनसैव
स्तोत्रमुपाकरोति
मनसा प्रसौति
मनसा प्रस्तौति
मनसोद्गायति
मनसा प्रतिहरति
मनसा होत्र एषोत्तमेति प्राहुर्मनसा होताह्वयते
मनसाध्वर्युः प्रत्याह्वयते
मनसा शँसति
मनसा प्रतिगृणाति
यदैतस्य मानसस्य शस्त्रस्य पारमेत्यथ होतोच्चैश्चतुर्होतॄन्व्याचष्टे
तस्मा ऋध्वर्युः प्रतिगृणाति ७

ऋोँ होतस्तथा होतः सत्यँ होतररात्स्म होतरिति

यद्यु वै होता नाध्येत्यन्य उ होत्राशँसी शँसति
तस्मा उ प्रतिप्रस्थाता प्रतिगृणाति
यदैतेषां पारं यन्त्यथाध्वर्युर्मनसैव प्राङ्ङुत्वा मनसैव तं ग्रहमुपोद्यच्छते
मनसाश्रावयति
मनसा प्रत्याश्रावयति
मनसा वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम्मनसा समुपहूय भक्षयन्ति
मनसा निर्णिज्य पात्रं प्रयच्छति
संतिष्ठत एष तूष्णीँ स्तोमोऽथर्त्विजो विपृच्छत्यधिवृक्षसूर्ये वाचं
विस्रक्ष्यध्वा३ नक्षत्रेषू३ इत्यधिवृक्षसूर्य इति वै नो ब्राह्मणं भवति
तेऽधिवृक्षसूर्य एव वाचं विसृजन्ते
तानत्रैवासीनान्परिश्रयन्ति
पत्नीशाले पत्नीः परिश्रयन्त्यथानतिसर्पन्तावध्वर्यू धिष्णियान्बर्हिर्भ्यामौदुम्बरीँ
समन्वारभेते इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिति
ते यथासमुदितं वाचं विसृजन्ते ८

अथातः सर्पणस्यैव मीमाँसा
दक्षिणस्य हविर्धानस्याधोऽधोऽक्षँ सर्पेयुर्
एतेन ह वै सर्पाः ससृपुस्
ततो वै ते जीर्णास्तनूरपाघ्नतेति
तदु वा आहुर्यो वा अपथेन प्रतिपद्यते स्थाणुं वा हन्ति गर्तं वा पतति भ्रेषँ स न्येति
वषट्कारपथेनैव सर्पेयुरेष वाव स्वर्ग्यः पन्था यद्वषट्कारपथ इति
तदु वा आहुः पराङिव वा एषोऽशान्तः पन्था यद्वषट्कारपथोऽध्वर्युपथेनैव सर्पेयुरेष वा अर्वाचः पराचः स्वर्ग्यः पन्था यदध्वर्युपथ इति
तेऽध्वर्युपथेनैव सर्पन्ति
तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोत्युपसृजन्मात्रे वत्सं धारयन्धरुणो धयन्। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति
समुत्क्रम्य चात्वालदेशे जपन्ति वागैतु वागुपैतु वाङ्गोपैतु वाग्यदकर्म यन्नाकर्म यदत्यगाम यन्नात्यगाम यदत्यरीरिचाम यन्नात्यरीरिचाम प्रजापतौ प्रजापतिं तत्पितरमप्येत्विति
तद्वाच्यन्ततः प्रतितिष्ठन्ति
तेषां य एव प्रायणीयोऽतिरात्रः स उदयनीयः
सत्रादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन चतुष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेनैकैको यजेत ९

अथातो ग्रहक्लृप्तेरेव मीमाँसाइन्द्रवायवाग्रं प्रथममहः
शुक्राग्रं द्वितीयम्
आग्रयणाग्रं तृतीयं च चतुर्थं चाइन्द्रवायवाग्रं पञ्चममहः
शुक्राग्रँ षष्ठं च सप्तमं चाग्रयणाग्रमष्टममहर्
ऐन्द्रवायवाग्रे नवमदशमे
इति न्वा अध्वर्युतोऽथ छन्दोगबह्वृचतो गायत्रीप्रातःसवनः
प्रथमस्त्रिरात्रस्त्रिष्टुङ्माध्यंदिनो जगत्तृतीयसवने
जगत्प्रातःसवनो द्वितीयस्त्रिरात्रो गायत्रीमाध्यंदिनस्त्रिष्टुप्तृतीयसवनस्
त्रिष्टुप्प्रातःसवनस्तृतीयस्त्रिरात्रो जगन्माध्यंदिनो गायत्रीतृतीयसवन इति

तस्मात्सच्छन्दस उपयन्ति १०

अथातः पशुक्लृप्तेरेव मीमाँसाइन्द्राग्नाः पशवः स्युरित्येक आहुर्
अग्नेरयं लोको वायोरन्तरिक्षमसाविन्द्रस्य
यदैन्द्राग्नः पशुर्भवति वायव्यो वसाहोम इमानेव तल्लोकान्प्रीणन्त एषु
लोकेषु प्रतितिष्ठन्तो यन्त्यथ येऽनैन्द्राग्नान्प्रतिपद्यन्ते यथा श्रेयसेऽनाहृत्य
पापीयस आहरन्ति तादृक्तत्
तस्मादैन्द्राग्नाः पशवः स्युरित्येतदेकम्
अतिरात्रपशवोऽभितो मध्य ऐन्द्राग्ना एकादशिना अभितो मध्य ऐन्द्राग्नाः
सर्वाग्नेया एव स्युरित्येतदेकं सर्वैन्द्रा एव स्युरित्येतदेकं सर्वप्राजापत्या एव
स्युरित्येतदेकं सर्वैकादशिना एव स्युरित्येतदपरं तेषाँ सर्वैकादशिनैर्यतां
प्रसिद्धमेव प्रथमेऽहनि प्रथमामेकादशिनीमालभन्त आग्नेयस्य
वारुणमुपालम्भ्यं कुर्वन्ति

तथा स्यैतानि दश मध्यमान्यहान्यनतिरिच्यमानाः पशवोऽनुभवन्ति
प्रसिद्धमेवोत्तमेऽहन्युत्तमामेकादशिनीमालभन्त आग्नेयस्य वा वारुणस्य वा
वैश्वदेवमुपालम्भ्यं कुर्वन्ति ११

तदु वा आहुर्यद्द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः
कथमस्यैतान्यहानीष्टान्याप्रीतानि पशुमन्ति भवन्तीति
तिस्र एकादशिन्योऽग्नीषोमीयो वैश्वदेवोऽनूबन्ध्या
षट्त्रिँ शतमेते पशवः षट्त्रिँ शतमेतान्यहान्येवमस्यैतान्यहानीष्टान्याप्रीतानि
पशुमन्ति भवन्तीति
तदु वा आहुर्यद्द्वादश दीक्षा द्वादशोपसदो द्वादशाहं प्रसुताः कथं
द्वादशाहेन संवत्सर आप्यत इति
द्वादश पौर्णमास्यो द्वादशाष्टका द्वादशामावास्या एतानि ह वै संवत्सरस्य
वर्षिष्ठान्यहान्येतान्यनु संवत्सर आप्यते

समाप्तो द्वादशाहः
समाप्तः संवत्सरकाम एवं द्वादशाहेन संवत्सर आप्यते १२

संवत्सराय दीक्षिष्यमाणाः समवस्यन्ति
तद्ध स्मैतत्पूर्वे संवत्सरँ समवसायासतेऽन्योऽन्यस्यानूक्तं च मानुषं च
विजिज्ञासमाना उतो ह्येकः शमरथस्य कर्ता भवति
ते चतुरहे पुरस्तान्माघ्यै पौर्णमास्यै दीक्षन्ते
तेषामेकाष्टकायां क्रयः संपद्यत इति नु यदि समामविज्ञाय दीक्षन्ते
यद्यु वा एतस्यामेवैकाष्टकायाँ समां विजिज्ञासन्ते चतुरह एव
पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्यै दीक्षन्ते
तेषामपरपक्षस्याष्टम्यां क्रयः संपद्यते
तेनैकाष्टकां न छम्बकुर्वन्ति
तेषां पूर्वपक्षे सुत्या संपद्यते
पूर्वपक्षं मासा अभि संपद्यन्ते
पूर्वपक्षे प्रसवः पूर्वपक्षे वैषुवतं पूर्वपक्ष उत्थानं समानं द्वादशाहिकं कर्म
तथैव षष्ठ्यामुपसद्युत्तरवेदिँ संनिवपन्ति यद्यनग्निचित्यं भवत्यथ यदि
साग्निचित्यं प्रथमायामेवोपसद्युत्तरवेदिँ संनिवपन्ति १३

तेषां द्वादश दीक्षा द्वादशोपसदः संवत्सरं प्रसुता न संवत्सरेऽग्निं
चिन्वीतेत्येक आहुश्चिन्वत उ हैके
प्रसिद्धेन कर्मणोपवसथाद्यन्ति
तेषां प्रसिद्धं ज्योतिष्टोमो वैश्वानरः प्रायणीयोऽतिरात्रः संतिष्ठते
तस्मिन्सँस्थिते चतुर्विँशमुक्थ्यमारम्भणीयमुभयसामानमुपयन्त्यथाभिप्लवँ
षडहमुपयन्ति
ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो
ज्योतिरग्निष्टोमस्
तं चतुरुपयन्ति
रथंतरंबृहद्रथंतरंबृहदिति विपर्यासं पृष्ठे भवतः
पृष्ठ्यः षडहः
स मासस्
तेनैवँ संपन्नेन पञ्च मासान्यन्त्यथैतँ षष्ठं मासँसंभार्यँ संभरन्ति
त्रयोऽभिप्लवाः षडहास्तान्यष्टादशाहानि

प्रायणीयारम्भणीयौ
तानि विँशतिरहानि
पृष्ठ्यः षडहोऽभिजित्त्रयः परःसामानः
स मासोऽथ वैषुवतम्
अथैतं वैषुवतेऽहन्येकविँशमग्निष्टोममुपयन्ति बृहत्सामानं तस्य
सौर्योऽतिग्राह्यः सौर्यः पशुरुपालम्भ्यस्
तद्धैतदेके दिवैवैतेनाह्ना प्रतिपद्यन्त उदित आदित्ये दिवाकीर्त्यमहरिति
वदन्तो यथैवान्येषामह्नामेवमुपाकुर्यादिति मौद्गल्यस्
तस्य महादिवाकीर्त्यँ होतुः पृष्ठं विकर्णं ब्रह्मसामं भासोऽग्निष्टोमोऽथोर्ध्वं
वैषुवतात्त्रीनावृत्तान्स्वरानुपयन्त्यथ विश्वजितमुपयन्त्यथावृत्तं पृष्ठ्यँ
षडहमुपयन्ति

त्रयस्त्रिँशप्रभृत्याग्रयणाग्रमेतदहर्भवत्यथावृत्तमेवाभिप्लवँ षडहमुपयन्ति १४

ज्योतिरग्निष्टोम आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्यो
ज्योतिरेवाग्निष्टोमस्
तं तथैव चतुरुपयन्ति
बृहद्रथंतरंबृहद्रथंतरमिति विपर्यासं पृष्ठे भवतः
पृष्ठ्यः षडहः पुरस्तात्
स मासस्
तेनैवँ संपन्नेन पञ्च मासान्यन्त्यथैत्मँ षष्ठं मासँसंभार्यँ संभरन्ति
द्वावभिप्लवौ षडहौ तानि द्वादशाहानि
गोआयुषी तानि चतुर्दश
चत्वार्यूर्ध्वं वैषुवतात्तान्यष्टादश
दशरात्रो महाव्रतं चातिरात्रश्च
स मासस्
तदेतन्मासिपृष्ठं गवामयनम् १५

अनुत्सर्गं बृहद्रथंतराभ्यामित्वोत्तमे मासि सकृत्पृष्ठान्युपेयुस्
तद्द्वितीयं गवामयनं दशमास्यं तृतीयम्

अभिप्लवाश्चाह्नीयन्ति च तदङ्गिरसामयनम्पृष्ठ्याश्चाह्नीयन्ति च
तदादित्यानामयनम्
अग्निष्टोमाश्चाह्नीयन्ति च तत्प्रजापतेरयनम्प्रायणीयोदयनीयावभितो
मध्येऽग्निष्टोमास्तद्द्वितीयं प्रजापतेरयनं सर्वाग्निष्टोमा एव स्युरिति तत्तृतीयं
प्रजापतेरयनम्
अथातो ग्रहक्लृप्तेरेव मीमाँसा

तद्धैतदेके सारस्वतवैष्णवौ ग्रहौ गृह्णन्ति
प्रायणीयादेवाग्रेऽतिरात्रादोदयनीयाद्वाग्वै सरस्वती यज्ञो विष्णुस्ते वाचं चैव
यज्ञं च मध्यतः परिगृह्यानार्ता उदृचं गमिष्याम इति वदन्तस्
तदु वा आहुर्यद्वाचा यज्ञस्तायते तेन सरस्वत्याप्ता यदु यज्ञस्तेन विष्णुर्न वै
नो ब्राह्मणं भवति
सारस्वतवैष्णवौ ग्रहौ गृह्णीयादिति नैतदाद्रियेत
नाद्रियेतेति स्थितिः १६

अथातोऽँश्वदाभ्ययोरेव ग्रहणम्प्रायणीयेऽदाभ्यं गृह्णीयादँ शुं वैषुवतेऽदाभ्यं
महाव्रत उभौ प्रायणीय उभौ वैषुवत उभौ महाव्रते
यत्र क्व चैवैनौ गृह्णीयादित्येतदपरम्
अथातः परःसाम्नामेव ग्रहणं ते वा एते परःसामानः
पुरस्ताद्वैषुवतात्त्र्यहमन्वहमितः पराञ्चो गृह्यन्त
उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं
गृह्णाम्युपयामगृहीतोऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतोऽसि
प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्य्
अथ वैषुवतेऽह्नि शुक्राग्रा ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा त्रीन्परःसाम्नो
गृह्णात्युपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं
गृह्णाम्युपयामगृहीतोऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतोऽसि
प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ सौर्यर्चा सौर्यमतिग्राह्यं गृह्णाति
१७

तरणिर्विश्वदर्शत इत्यनुद्रुत्योपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिः सूर्याय त्वा भ्राजस्वत
इत्यथावृत्तान्गृह्णात्युपयामगृहीतोऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णाम्युपयामगृहितोऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णाम्युपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीति
सप्तैतदहरतिग्राह्या गृह्यन्त इति ब्राह्मणम्
अथोर्ध्वं वैषुवतात्त्र्यहमन्वहमावृत्तानेव गृह्णाति वैश्वकर्मणादित्याभ्यां विपर्यासम्
उपयामगृहीतोऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्यथ वैश्वकर्मणम्विश्वकर्मन्हविषा वावृधान
इत्यनुद्रुत्योपयामगृहीतोऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णामीत्यथादित्यम्
अदितिर्न उरुष्यत्वित्यनुद्रुत्योपयामगृहितोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीत्यथ वैश्वकर्मणम्
अथादित्यम्
अथोर्ध्वं त्र्यहाद्वैश्वकर्मणादित्याभ्यामेव विपर्यासमेत्या महाव्रतात्

तावुभौ सह महाव्रते गृह्येते
अथैतं महाव्रतीयेऽह्नि प्राजापत्यमतिग्राह्यं गृह्णाति
त्वे क्रतुमपिवृञ्जन्ति विश्व इत्यनुद्रुत्योपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिः प्रजापतये त्वेति १८

अथातः पशुक्लृप्तेरेव मीमाँसोक्तैन्द्राग्नानां प्रशाँसातिरात्रपशवोऽभितो मध्य ऐन्द्राग्ना ऐकादशिना अभितो मध्य ऐन्द्राग्नाः
सर्वाग्नेया एव स्युरित्येतदेकं सर्वैन्द्राग्ना एव स्युरित्येतदेकं सर्वप्राजापत्या एव स्युरित्येतदेकं सर्वैकादशिना एव स्युरित्येतदपरं तेषाँसर्वैकादशिनैर्यतां प्रसिद्धमेवोत्तमस्य दशरात्रस्य तृतीयेऽहन्सपतदश उक्थ्य एकादशिन्याप्यते तस्य नवाहान्यपशून्यतिरिच्यन्ते
तेष्वेतान्नव ब्राह्मणवतः पशूनालभन्ते वैष्णवं वामनमित्येतांस्तेषामेवं यतां

बार्हस्पत्यो वैषुवते सवनीयः संपद्यते
तस्य सौर्यमुपालम्भ्यं कुर्वन्ति
यद्यु वा एतान्नव ब्राह्मणवतः पशून्न विन्दन्ति नवैतानि मध्यमानि
संवत्सरिकारयहान्यैन्द्राग्नपशूनि कुर्वन्ति

तेषामेवं यतामैन्द्राग्नो वैषुवते सवनीयः संपद्यते
तस्य सौर्यमुपालम्भ्यं कुर्वन्ति
सावित्रो महाव्रते
तस्य प्राजापत्यस्तूपर ऐन्द्रश्चर्षभ उपालम्भ्यौ भवतः १९

श्वो महाव्रतमित्युपकल्पयतेऽपरिमितान्रथानपरिमितान्दुन्दुभीँस्तावत उ
वेवाजिसृतश्चर्म चेडसंवर्तं च भूमिदुन्दुभिमार्षभं चर्म सलाङ्गलं ब्राह्मणं च
शूद्रं चार्द्रं च चर्मकर्तम्प्लेङ्खँ होता कूर्चावध्वर्युर्बृसीर्होत्रका
श्रौदुम्बरीमुद्गातासन्दीमुपकल्पयते
वाणं च शततन्तुमाघाटीः पिञ्छोलाः कर्करीका इति तदु पत्नयः
कटपरिवारं च मिथुनौ चापरिमिताश्च दास्यस्तावत उ वेवोदकुम्भान्
श्रथैतं महाव्रतीयेऽह्नि पञ्चविँशमग्निष्टोममुपयन्ति रथंतरसामानं समानं कर्मा
माहेन्द्राद्ग्राहाद्माहेन्द्रं ग्रहं गृहीत्वाथैतान्संभारानायातयति
जघनेनाग्नीध्रं गर्तं खानयित्वार्षभेण क्रूरचर्मणोत्तरलोम्नाभिविघ्नन्ति

तस्य लाङ्गलमुत्खिद्य हन्तानूपतिष्ठतेऽत्रैतान्दुन्दुभीननुदिशमासञ्जयति
तानाहननैरनाघ्नन्त एते हन्तारोऽनूपतिष्ठन्तेऽथैते रथाः समन्तं देवयजनं
परीत्योत्तरतस्तिष्ठन्ति
तेषां तिसृधन्वी राजपुत्रो मुख्यो भवति २०

तस्मा श्रग्रेणाग्नीध्रमिडसंवर्ते चर्मकर्तं व्यवास्यति
तं काल एव शस्त्र्यातृणत्त्यथैतौ ब्राह्मणश्च शूद्रश्चान्तरेण सदोहविर्धाने तिष्ठत
श्रार्द्रं चर्मकर्तमादाय
प्लेङ्खँ होतासजते
कूर्चावध्वर्युरुपस्तृणीते बृसीर्होत्रका श्रौदुम्बरीमुद्गातासन्दीमारोहत्यादत्ते वाणँ

शततन्तुम्
आघाटीभिः पिञ्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्नयः पर्युपविशन्त्यथ दक्षिणे वेद्यन्त कटपरिवारे मिथुनौ संप्रवादयतोऽथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं पर्युपविशन्त्यथाध्वर्युः कूर्चयोरासीनो माहेन्द्रस्य स्तोत्रमुपाकरोति
स्तुवते माहेन्द्राय
प्रस्तुते साम्नि संप्रैषमाहाजिसृत आजिं धावत दुन्दुभीन्समाघ्नताभिषोतारोऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वादय प्रतिप्रस्थातः सौम्यस्य विद्धीति

यथासंप्रैषं ते कुर्वन्ति
धावन्त्याजिसृत आघ्नन्ति दुन्दुभीन्
संप्रवदन्ति वाच आघाटीभिः पिञ्छोलाभिः कर्करीकाभिरित्युद्गातारं पत्नय उपगायन्ति २१

भद्रमु नाम सामास्ति
तदु वाचोपगीयतेऽथैष तिसृधन्वी राजपुत्रश्चर्मावभिनत्ति
तं ब्राह्मणोऽनूपतिष्ठते मापरात्सीर्मातिव्यात्सीरिति
तत्तथैव त्रिभिरन्तर्हितमवभिनत्त्यथैतौ ब्राह्मणश्च शूद्रश्चार्द्रे चर्मकर्ते व्यायच्छेते इमेऽरात्सुरिमे सुभूतमक्रन्निति ब्राह्मण इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति वृषलो ब्राह्मणः संजयति
नश्यति वृषलः
संवर्तेते मिथुनवथैता दास्य उदकुम्भानधिनिधाय मार्जालीयं परिनृत्यन्त्युपस्थानुपहत्य दक्षिणान्पदो निघ्नन्तीरिदंमधुं गायन्तस् तासाँ सकृत्परीतानां प्रथमां वाचयति २२

गाव एव सुरभयो गावो गुग्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीर्हैमहाँ इदं मध्वित्युपस्थानुपहत्य दक्षिणानेव पदो निघ्नन्ति द्वितीयं परीतानां प्रथमामेव वाचयति ननु गावो मङ्कीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वत्यै नद्यै ताः प्राचीरुज्जगाहिरे हैमहाँ इदं

मध्वित्युपस्थानुपहत्य दक्षिणानेव पदो निघ्नन्ति

तृतीयं परीतानां प्रथमामेव वाचयति यदा राखन्द्यौ वदतो ग्राम्यं
मङ्कीरदाशकौ । क्षेमाध्यवस्यतो ग्रामे नानड्वाँस्तप्यते वहन्हैमहाँ इदं
मध्वित्यथैना उत्तरेण मार्जालीयं तिष्ठन्त्यो वाचयतीदमेव मधु सारघमयँ
सोमः सुतो बृहत्। तमिन्द्र परितातृपीहैमहाँ इदं मध्विति
ता अत ऊर्ध्वमिदं मध्विदं मध्विदं मध्वित्येव परियन्ति
तेषां य एव प्रायणीयोऽतिरात्रः स उदयनीयः
सत्रादुदवसाय ज्योतिष्टोमेनाग्निष्टोमेन चतुष्टोमेन पृष्ठशमनीयेन
सहस्रदक्षिणेनैकैको यजेत २३

स्वर्गकामो द्विरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते द्विरात्रस्य मे सतोऽमावास्याया
उपवसथीयेऽहन्पूर्वमहः संपत्स्यत उत्तरस्मिन्नुत्तरमिति
तस्य तथा संपद्यतेऽभिप्लवः पूर्वमहर्भवति गतिरुत्तरं ज्योतिष्टोमोऽग्निष्टोमः
पूर्वमहर्भवति
तेजस्तेनावरुन्द्धे
सर्वस्तोमोऽतिरात्र उत्तरं सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
गायत्रं पूर्वेऽहन्साम भवति
त्रैष्टुभमुत्तरे

रथंतरं पूर्वेऽहन्साम भवति
बृहदुत्तरे
वैखानसं पूर्वेऽहन्साम भवति
षोडश्युत्तरे
हविष्मन्निधनं पूर्वमहर्भवति
हविष्कृन्निधनमुत्तरं नानैवार्धमासयोर्भवतो नानावीर्ये भवत इति ब्राह्मणं
संतिष्ठते द्विरात्रस्
त्रिरात्रेण यक्ष्यमाणो भवति

स उपकल्पयते सहस्रं तस्मिन्नुन्नतो वेहद्वामन इति भवन्त्यथास्यैषा
सहस्रतम्यन्यतएनी कण्डूकृतोपक्लृप्ता भवति
दीक्षते
रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति
द्वादशोपसदः २४

तायते प्रथमेऽहन्नग्निष्टोमस्
तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनँ सवनँ सप्तदशं तृतीयसवनं स
दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वँ सहस्रमानय । उन्नत
उद्वलस्याभिनस्त्वचम्। सा मा सहस्र आभज प्रजया पशुभिः सह
पुनर्माविशताद्रयिरित्युन्नत एतेषां त्रयाणां त्रिँशच्छतानां प्रथमो
नीयतेऽहीनसंततिं करोति
तायते द्वितीयेऽहन्युक्थ्यस्
तस्य पञ्चदशं प्रातःसवनँ सप्तदशं माध्यंदिनँ सवनमेकविँशं तृतीयसवनं स
दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ
पाहि मा मा मा हिँसः सा मा सहस्र आभज प्रजया पशुभिः सह
पुनर्माविशताद्रयिरिति
वेहदेतेषां त्रयाणां त्रिँशच्छतानां प्रथमा नीयतेऽहीनसंततिं करोति
तायते तृतीयेऽहन्नतिरात्रस्

तस्य सप्तदशं प्रातःसवनमेकविँशं माध्यंदिनँ सवनं त्रिणव आर्भवः
पवमानस्त्रयस्त्रिँशमग्निष्टोमसामैकविँशान्युक्थानि सषोडशिकानि
षोडशं प्रथमँ रात्रिसाम पञ्चदशानीतराणि त्रिवृद्राथंतरः सन्धिः
स दाक्षिणानि हुत्वाग्नीध्रे स्रुवाहुतिं जुहोति त्वँ सहस्रस्य प्रतिष्ठासि वैष्णवो
वामनस्त्वम्। सा मा सहस्र आभज प्रजया पशुभिः सह
पुनर्माविशतारयिरिति
वामन एतेषां त्रयाणां चत्वारिँशच्छतानां प्रथमो नीयते
नात्राहीनसंततिं करोति २५

अथैताँ सहस्रतमीमुत्तरेणाग्नीध्रं पर्याणीयाहवनीयस्यान्ते

द्रोणकलशमवघ्रापयेदाजिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति
प्रजयैवैनं पशुभी रय्या समर्धयति प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणम्
अथ वै भवति
तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादिति
स तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहोत्युभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति

त्रेधाविभक्तं वै त्रिरात्रे सहस्रं साहस्रीमेवैनां करोति
सहस्रस्यैवैनां मात्रां करोतीति ब्राह्मणम्
अथास्यै रूपाणि जुहोत्यञ्ज्येतायै स्वाहा कृष्णायै स्वाहा श्वेतायै स्वाहेत्यथास्या उपोत्थाय नामभिर्दक्षिणं कर्णमाजपतीडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति देवेभ्य एवैनमावेदयत्यन्वेनं देवा बुध्यन्त इति ब्राह्मणम् २६

अथैताँ सहस्रतमीमन्तरेण चात्वालोत्करावुदीचिं नीयमानामनुमन्त्रयते सा मा सुवर्गं लोकं गमय सा मा ज्योतिष्मन्तं लोकं गमय सा मा सर्वान्पुण्यान्लोकान्गमय सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माविशताद्रयिरिति
प्रजयैवैनं पशुभी रय्यां प्रतिष्ठापयति
प्रजावान्पशुमान्रयिमान्भवति य एवं वेदेति ब्राह्मणम्
अथ वै भवति
तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वा दद्यात्
सहस्रमस्य सा दत्ता भवति सहस्रमस्य प्रतिगृहीतं भवतीति ब्राह्मणम्
अथ वै भवति
यस्तामविद्वान्प्रतिगृह्णाति तां प्रतिगृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रतिगृह्णामि न सहस्रमेका मा भूताविश मा सहस्रमित्येकामेवैनां भूतां

प्रतिगृह्णाति न सहस्रं य एवं वेदेति ब्राह्मणम्
अथ वै भवति
स्योनासि सुषदा सुशेवा स्योना माविश सुषदा माविश सुशेवा
माविशेत्याह
स्योनैवैनँ सुषदा सुशेवा भूताविशति नैनँ हिनस्तीति ब्राह्मणम्
अथ वै भवति
ब्रह्मवादिनो वदन्ति सहस्रँ सहस्रतम्यन्वेती३ सहस्रतमीँ सहस्रा३मिति

यत्प्राचीमुत्सृजेत्सहस्रँ सहस्रतम्यन्वियात्
तत्सहस्रमप्रज्ञात्रं सुवर्गं लोकं न प्रजानीयात्
प्रतीचीमुत्सृजति
ताँ सहस्रमनु पर्यावर्तते
सा प्रजानती सुवर्गं लोकमेति
यजमानमभ्युत्सृजतीति
तां पुरस्तात्प्रतीचीं यजमानमभ्युत्सृजति
क्षिप्रे सहस्रं प्रजायत उत्तमा नीयते प्रथमा देवान्गच्छतीति ब्राह्मणं तेन हैतेन
रौहिणेयः क्रोथुनिः कौलाश्वो यास्क ऋतुमुखेषु विहृतेनेजेऽथो हाजमाम
मशको गार्ग्य आरुणेरन्तेवासी
स ह सँस्थामदृष्ट्वोवाच ननु मत एकाहा३इँ ति
नेति हैनं प्रत्युवाच
तँ होपेयाय
तस्मा उ हैनँ स उवाच
तेन ह स्म समस्तेनैव यजते
तमेतं गर्गत्रिरात्र इत्याचक्षते २७

चतुरो वीरानवरुरुत्समानश्चतूरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहान्यग्निष्टोमा एवैते चतुर्विँशाः पवमाना उद्यत्स्तोमाः स्युरित्येतदेकम्

एकोऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु सामविकल्पं

पृच्छेयुरित्येतदपरम्
अत्रिँ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन्तेज इन्द्रियं
ब्रह्मवर्चसमन्नाद्यमित्येतान्कामानवरुरुत्समानश्चतूरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहान्यग्निष्टोमा एवैते चतुष्टोमाः स्युरित्येतदेकम्
एकोऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु सामविकल्पं
पृच्छेयुरित्येतदपरम्पुष्टिकामश्चतूरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदोऽथ वै भवति
पुरोडाशिन्य उपसदो भवन्तीति
प्रथमे चतूरात्र आग्नेय आज्य आग्नेयमष्टाकपालँ सायंप्रातरन्ववधाय जुहोति
द्वितीये चतूरात्रे सौम्य आज्ये सौम्यं चतुष्कपालँ सायंप्रातरन्ववधाय जुहोति
तृतीये चतूरात्रे वैष्णव आज्ये वैष्णवं त्रिकपालँ सायंप्रातरन्ववधाय जुहोति
तस्य त्रिवृत्सप्तदशौ विपर्यासँस्तोमौ भवतः
प्राणो वै त्रिवृदन्नं सप्तदशः प्रजापतिः
प्राणाच्च खलु वा इदमन्नाद्याच्च परिगृह्य प्रजापतिः प्रजायत

प्राणाच्चैवैतदन्नाद्याच्च परिगृह्य यजमानः प्रजायते
तस्याहान्यग्निष्टोमा एवैते चतुस्त्रिँशपवमानाः स्युरित्येतदेकम्
एकोऽग्निष्टोमो द्वावुक्थ्यावथातिरात्रश्छन्दोगानु सामविकल्पं
पृच्छेयुरित्येतदपरम् २८

प्रजातिकामो वा व्यावृत्कामो वा पशुकामो वा वाचो वान्तं परिजिगाँ
सन्पञ्चरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः
पञ्चविँशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः
सारस्वतेनायनेनैष्यन्तो द्वयीर्गा उपकल्पयन्त ऋषभैकादशा अन्या
ऋषभैकशता अन्यास्
तेषामाश्वत्थी हविर्धानं चाग्नीध्रं च भवतस्
तद्धि सुवर्ग्यं चक्रीवती भवत उलूखलबुध्न एषां यूपो भवति

ते सरस्वत्यै जघन्योदके दीक्षन्ते
तेषामयमेव त्रिवृदग्निष्टोमः संतिष्ठते
तस्मिन्सँस्थितेऽभि यूपं वहन्त्यभि धिष्णियान्हरन्त्यग्निष्ठेऽनसि समवशमयन्ते
यदेषाँ समवशमयितव्यं भवति

तेऽनेनैव पृष्ठ्येन षडहेन प्रतिपद्यन्तेऽहरहः शम्यान्यासेशम्यान्यासे यजमाना
आक्रोशन्तोऽज्यानिमिच्छमाना यदा दश शतं कुर्वन्त्यथैकमुत्थानं यदा शतँ
सहस्रं कुर्वन्त्यथैकमुत्थानं यदैषां प्रमीयेत यदा वा जियेरन्नथैकमुत्थानं
प्लाक्षे वा प्रस्रवणे २९

अथातो मुन्ययनमित्याचक्षते
श्रमणः खारीविवधी सरस्वत्यै जघन्योदकेऽग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथैताँ सवनेष्टिं
निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालमिति
तया समस्तया वा विहृतया वा प्रतिपद्यतेऽहरहः शम्यान्यासेशम्यान्यासे
यजमान आक्रोशन्नज्यानिमिच्छमानो यदैनं प्रतिराध्नुवन्ति यदा वास्यैतं
खारीविवधमाच्छिन्दन्त्यथैकमुत्थानं प्लाक्षे वा प्रस्रवणे ३०

पशुकामः सप्तरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविँश
उक्थ्यस्त्रिणव उक्थ्यः पञ्चविँशोऽग्निष्टोमो
महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रो बृहद्रथंतरे पूर्वेष्वहःसूपेत्य प्रत्यक्षं
विश्वजिति पृष्ठान्युपयन्ति
ब्रह्मवर्चसकामोऽष्टरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविँश
उक्थ्यस्त्रिणव उक्थ्यस्त्रयस्त्रिँ श उक्थ्यः पञ्चविँशोऽग्निष्टोमो
महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः

प्रजासु वा क्षुद्युक्तासु ज्योगामयावी वा नवरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि ज्योतिर्गौरायुरित्येतमेव त्र्यहं त्रिरुपयन्ति
तेषामायुरतिरात्र उत्तममहर्भवति
प्रजातिकामो वा व्यावृत्कामो वाभिचरन्वाभिचर्यमाणो वा दशरात्राय
दीक्षिष्यमाणो दशहोतारँ हुत्वा दशरात्राय दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति
पञ्चदश उक्थ्य ऐन्द्रीषु
त्रिवृदग्निष्टोमो वैश्वदेवीषु
सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोम एकविँश उक्थ्यः सौरीषु
सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्यस्
त्रिणवावग्निष्टोमावभित ऐन्द्रीषु
त्रयस्त्रिँश उक्थ्यो वैश्वदेवीषु
विश्वजित्सर्वपृष्ठोऽतिरात्रः ३१

प्रजाकामा एकादशरात्राय दीक्षन्ते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहानि ज्योतिरतिरात्रः
पृष्ठ्यः षडहस्
त्रयश्छन्दोमा अथातिरात्रोऽथाहीनविधिः पृष्ठ्यः षडहस्
त्रयश्छन्दोमा दशममहर्
अथातिरात्रोऽथायं पौण्डरीक एकादशरात्रोऽयुतदक्षिणोऽश्वसहस्रदक्षिणस्
तस्यापरिमिता दीक्षा द्वादशोपसदस्
तस्याहान्यभ्यासङ्ग्यः षडहस्
त्रयश्छन्दोमा दशममहर्
अथातिरात्रोऽन्वहँ सहस्रँ सहस्रं ददात्युत्तमेऽहन्यश्वसहस्रं ददात्यथातो
ज्योतिरयनमित्याचक्षते
स भरतद्वादशाह इत्येक आहुर्दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्

तस्याहानि ज्योतिरतिरात्रो ज्योतिरग्निष्टोमोऽष्टौ ज्योतींष्युक्थ्या
ज्योतिरेवाग्निष्टोमो ज्योतिरेवातिरात्र उक्तो द्वादशाहो दशमं चाहरतिरात्रं च
महाव्रतं व्यवदधाति
स उ वेव त्रयोदशरात्रः  ३२

अथ पूर्वश्चतुर्दशरात्रोऽतिरात्रः
पृष्ठ्यः षडहः
प्रत्यङ्षडहोऽथातिरात्रोऽथोत्तरश्चतुर्दशरात्रोऽतिरात्रो ज्योतिर्गौरायुरिति त्र्यहः
पृष्ठ्यः षडहः
प्रत्यङ्त्र्यहोऽथातिरात्रोऽथ पूर्वः पञ्चदशरात्रोऽतिरात्रो ज्योतिर्गौरायुरिति त्र्यहो
दशरात्रोऽथातिरात्रो दशमं चाहरतिरात्रं च महाव्रतं व्यवदधाति

स उ वेवाब्राह्मणः षोडशरात्रोऽथोत्तरः पञ्चदशरात्रोऽतिरात्रस्
त्रिवृदग्निष्टोमो ज्योतिर्गौरायुरिति त्र्यहः
पृष्ठ्यः षडहः
प्रत्यङ्त्र्यहोऽथातिरात्रोऽथ सप्तदशरात्रोऽतिरात्र एकः पञ्चाहो
दशरात्रोऽथातिरात्रो दशमं चाहरतिरात्रं च महाव्रतं व्यवदधाति
स उ वेवाब्राह्मणोऽष्टादशरात्रोऽथ विँशतिरात्रोऽतिरात्रो ज्योतिर्गौरायुरिति
त्रयस्त्र्यहाः
पृष्ठ्यः षडहः
प्रत्यङ्त्र्यहोऽथातिरात्रोऽथैकविँशतिरात्रोऽतिरात्रः
पृष्ठ्यः षडहः
सप्तैतानि मध्यमानि सांवत्सरिकाण्यहानि भवन्ति
प्रत्यङ्षडहोऽथातिरात्रः  ३३

अथ पूर्वश्चतुर्विँशतिरात्रोऽतिरात्रो ज्योतिर्गौरायुरिति चत्वारस्त्र्यहा
दशरात्रोऽथातिरात्रो दशमं चाहरतिरात्रं च महाव्रतं व्यवदधाति
स उ वेवाब्राह्मणः पञ्चविँशतिरात्रोऽथोत्तरश्चतुर्विँशतिरात्रो ज्योतिरतिरात्रः
पृष्ठ्यः षडहस्
त्रयस्त्रिँशात्त्रयस्त्रिँशमुपयन्त्यथानिरुक्तं पृष्ठ्यँ षडहमुपयन्ति

त्रिवृत ग्रायतने त्रयस्त्रिँ शमुक्थ्यमुपयन्ति रथंतरसामानं तस्य चतुर्विँशाः
पवमाना भवन्ति
पञ्चदशस्यायतने त्रिणवमुक्थ्यमुपयन्ति बृहत्सामानं
तस्याष्टाविँशाः पवमाना भवन्ति
सप्तदशस्यायतन एकविँशमुक्थ्यमुपयन्ति वैरूपसामानं तस्य द्वात्रिँ शाः
पवमाना भवन्ति
स्व एवायतन एकविँशमुक्थ्यमुपयन्ति वैराजसामानं तस्य षट्त्रिँ शाः
पवमाना भवन्ति
स्व एवायतने त्रिणवमुक्थ्यमुपयन्ति शाक्वरसामानं तस्य चत्वारिँ शाः
पवमाना भवन्ति
स्व एवायतने त्रयस्त्रिँ शमुक्थ्यमुपयन्ति रैवतसामानं तस्य चतुश्चत्वारिँ शाः
पवमाना भवन्ति
त्रयस्त्रिँ शात्त्रयस्त्रिँ शमुपयन्ति
तस्याष्टाचत्वारिँ शाः पवमाना भवन्त्यथावृत्तं पृष्ठ्यँ षडहमुपयन्ति ३४

त्रिवृतोऽधि त्रिवृतमुपयन्ति
स्तोमानाँ संपत्त्यै प्रभवाय
ज्योतिरग्निष्टोममुपयन्त्यथातिरातोऽथ त्रिँ शद्रात्रो ज्योतिरतिरात्रः
पृष्ठ्यः षडहस्
त्रयस्त्रिँ शात्त्रयस्त्रिँ शमुपयन्ति
त्रिणवमुपयन्त्येकविँशमुपयन्ति
त्रिवृतमग्निष्टुतमुपयन्ति
पञ्चदशमिन्द्रस्तोममुपयन्ति
सप्तदशमुपयन्त्येकविँशमुपयन्ति
चतुर्विँशमुपयन्ति
चतुर्विँशात्पृष्ठान्युपयन्ति
त्रयस्त्रिँ शात्त्रयस्त्रिँ शमुपयन्ति
त्रिणवमुपयन्ति
द्वावेकविँशावुपयन्ति
चतुरश्चतुष्टोमान्स्तोमानुपयन्त्यथातिरात्रोऽथ द्वात्रिँ शद्रात्रोऽतिरात्रो

ज्योतिर्गौरायुरिति नव त्र्यहाः
प्रत्यङ्त्र्यहोऽथातिरात्रोऽथ त्रयस्त्रिँ शद्रात्रोऽतिरात्रस्
त्रयः पञ्चाहा
विश्वजित्सर्वपृष्ठोऽतिरात्र एकः पञ्चाहो दशरात्रोऽथातिरात्रो दशमं
चाहरतिरात्रं च महाव्रतं व्यवदधाति
स उ वेवाब्राह्मणश्चतुस्त्रिँ शद्रात्रः ३५

अथ षट्त्रिँ शद्रात्रो ज्योतिरतिरात्रश्चतुवारोऽभिप्लवाः षडहा
दशरात्रोऽथातिरात्रो दशमं चाहरतिरात्रं च महाव्रतं व्यवदधाति
स उ वेवाब्राह्मणः सप्तत्रिँ शद्रात्रोऽथैकस्मान्नपञ्चाशद्रात्रोऽतिरात्रस्
त्रयस्त्रिवृतोऽग्निष्टोमा अथात्रिरात्रो दश पञ्चदशा उक्थ्या अथातिरात्रस्
तेषाँ षोडशिमद्दशममहर्भवति
द्वादश सप्तदशा उक्थ्या अथातिरात्रः
पृष्ठ्यः षडहोऽथातिरात्रो द्वादशैकविँशा उक्थ्या अथातिरात्रोऽथ
संवत्सरक्लृप्त एकस्मान्नपञ्चाशद्रात्रोऽतिरात्र आरम्भणीयमहस्
त्रयोऽभिप्लवाः षडहास्
तान्यष्टादशाहानि
प्रायणीयारम्भणीयौ
तानि विँशतिर्
अभिजित्
त्रयः परःसामानोऽथ वैषुवतं त्रयोऽर्वाक्सामानोऽथ विश्वजिदावृत्तोऽभिप्लवः
षडहो गोआयुषी
दशरात्रो महाव्रतं चातिरात्रश्चाथैकषष्टिरात्र एतस्यैव सतोऽभितो नवरात्रं
पृष्ठ्यौ षडहावुपोहति
तयोरावृत्त उत्तरोऽथ शतरात्रोऽतिरात्रो ज्योतिर्गौरायुरिति
त्र्यहश्चतुर्दशाभिप्लवाः षडहा दशरात्रो महाव्रतं चातिरात्रश्चाथ
सहस्रिरात्रोऽतिरात्रो नवनवतिस्त्रिवृतोऽग्निष्टोमाः शतं पञ्चदशा उक्थ्याः शतँ
सप्तदशा उक्थ्याः शतमेकविँशा उक्थ्याः शतं त्रिणवा उक्थ्याः शतं त्रयस्त्रिँ
शा उक्थ्याः शतं चतुर्विँशा उक्थ्याः शतं चतुश्चत्वारिँ शा उक्थ्याः
शतमष्टाचत्वारिँ शा उक्थ्या नवनवतिरेव त्रिवृतोऽग्निष्टोमा अथातिरात्रः

३६

सप्तदशः प्रश्नः

अतिरात्रं करिष्यन्नुपकल्पयते चतुरोऽतिरात्रपशूनरुणपिशङ्गमश्वमौदुम्बरँ
षोडशिपात्रं चतुस्रक्ति ज्यायसोऽभ्भृणाञ्ज्यायस एकधनान्
दीक्षते
रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति
द्वादशोपसदः
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँसि
विशिष्योपवसन्त्यथातो महारात्र एव बुध्यन्ते
प्रातराज्यानि गृहीत्वा राजानमुपावहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्यतिरात्रं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा षोडशिनं गृह्णात्यातिष्ठ
वृत्रहन्रथमित्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति
समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वा चतस्रो रशना आदाय
यूपमभ्यैति
स्वर्वन्तं यूपमुत्सृज्य चतुरोऽतिरात्रपशूनुपाक्रोत्याग्नेयमैन्द्राग्नमैन्द्रँ सारस्वतीं
मेषीमिति

तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते
प्रसर्पन्ति माध्यंदिनाय सवनाय
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माग्रयणाद्ग्रहादाग्रयणं गृहीत्वा षोडशिनमभिगृह्णातीन्द्रमिद्धरी
वहत इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णात्यृजुधा

माध्यंदिनँ सवनँ संतिष्ठते
प्रसर्पन्ति तृतीयसवनाय
प्रसिद्धमादित्यग्रहेण चरित्वाग्रयणं गृह्णात्यथ षोडशिनमभिगृह्णात्यसावि सोम इन्द्र त इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा षोडशिन इत्यथोक्थ्यं गृह्णाति १

समानं कर्मा पवमानात्
पवमानेन चरित्वा स्वे धामन्पशुभिश्चरति
तेषां नाना मनोता नाना देवता नाना प्रत्यभिमर्शना नाना वसाहोमाः
समानो वनस्पतिः समानः स्विष्टकृत्प्रैषवान्समानीडा समान्यो दिशो नाना दिश इत्येके
समानं कर्मा ध्रुववद्भ्यश्चमसेभ्यो ध्रुववद्भिश्चमसैश्चरित्वा
त्रिभिरुक्थ्यपर्यायैश्चरतीन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामित्य्
अथ षोडशिना चरिष्यन्प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
होतृचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्ति
तदेतँ षोडशिनँ सह सँसादयन्त्यथैनमुपतिष्ठते २

यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा । प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतींषि सचते स षोडशी ॥ एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गणे ॥ प्र ते महे विदथे शँसिषँ हरी । य ऋत्वियः प्र ते वन्वे । वनुषो हर्यतं मदम्॥ इन्द्रो नाम घृतं न यः । हरिभिश्चारु सेचते । श्रुतो गण आ त्वा विशन्तु । हरिवर्पसं गिर इत्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्द्रुत्वा समयाविषिते सूर्ये हिरण्येन षोडशिन स्तोत्रमुपाकरोति
पुरस्तात्प्रत्यञ्चमरुणपिशङ्गमश्वं धारयन्ति श्यामं वा
हिरण्यँ संप्रदाय स्तुवते ३

होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणात्यथ यत्र होतुरभिजानात्या त्वा वहन्तु हरय इति तदुभ्यतोमोदं प्रतिगृणात्योथा मोद इव मदे मदा मोद इवोमथेत्य्
अथ यत्र होतुरभिजानाति प्रप्र वस्त्रिष्टुभमिति तत्प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतँ षोडशिनं ग्रहम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृते षोडशिनं जुहोतीन्द्राधिपतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण षोडशिना पीतस्येति
तस्य व्युदितो भक्षो यजमानवशो हि यजमानस्य होतृवशो होतुस्
तावु चेदध्वर्यवे प्रब्रूयातां वषट्कर्तुर्भक्ष इत्येव ब्रूयात्
तथात्मानं भक्षान्नान्तरेति
तस्य भक्षः ४

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम्। तयोरनु भक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यतु तस्य त इन्द्रेण षोडशिना पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
निर्णिज्य पात्रं प्रयच्छत्यत्रैतमरुणपिशङ्गमश्वं ददाति श्यामं वा

होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ संप्रैषमाह प्रतिप्रस्थातराग्रयणतृतीयं गुदतृतीयानि जाघनीः पृषदाज्यं गोपायाग्नीदाश्विनं ते द्विकपालँश्रृतमप्यपररात्रेऽस्त्विति

यथासंप्रैषं तौ कुरुतोऽथ विनिःसृप्य रात्रये प्रसर्पन्ति
संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह ५

होतुश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः
प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतँ होतृचमसम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण
पीतस्येति
होतृचसममेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते

नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ प्राङायन्नाह ६

मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
मैत्रावरुणचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः
प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति

स्तुवते
मैत्रावरुणायैषोत्तमेति प्राहुर्मैत्रावरुणस्य
कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते मैत्रावरुणः
प्रत्याह्वयतेऽध्वर्युः
शँ सति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं मैत्रावरुणचमसम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति
मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथाह प्रतिप्रस्थातश्चमसगणौ ते प्रचरेति
तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्नाह ७

ब्राह्मणाच्छँसिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेति
ब्राह्मणाच्छँसिचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः
प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवते
ब्राह्मणाच्छँसिन एषोत्तमेति प्राहुर्ब्राह्मणाच्छँसिनः कालात्पराङावर्तते
प्रतिप्रस्थाताभ्येनमाह्वयते ब्राह्मणाच्छँसी
प्रत्याह्वयते प्रतिप्रस्थाता
शँ सति
प्रतिगृणाति

प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ब्राह्मणाच्छँसिचमसम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येति
ब्राह्मणाच्छँसिचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ प्राङायन्नाह ८
आवाकस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावयेत्यच्छावाकचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
समुन्नीयोत्तरवेद्याँ सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्द्रुत्वा स्तोत्रमुपाकरोति
स्तुवतेऽच्छावाकायैषोत्तमेति प्राहुरच्छावाकस्य कालात्पराङावर्तते
प्रतिप्रस्थाताभ्येनमाह्वयतेऽच्छावाकः
प्रत्याह्वयते प्रतिप्रस्थाता
शँसति
प्रतिगृणाति
प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमच्छावाकचमसम्
अनूद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडुक्थशा यज सोमानामिति
वषट्कृतानुवषट्कृते द्विर्जुहोति
तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च आद्रवन्त्यनुसवनभक्ष इन्द्रेण पीतस्येत्यच्छावाकचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते

नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्ते
होत्रे प्रथमँस्तुवतेऽथ मैत्रावरुणायाथ ब्राह्मणाच्छँसिनेऽथाच्छावाकायाध्वर्युः पूर्वाभ्यां चमसगणाभ्यां प्रचरति प्रतिप्रस्थातोत्तराभ्यां सर्व ऐन्द्रा ग्रहाश्चमसगणा भवन्तीति न्वा अयं प्रथमश्चतुःपर्यायः संतिष्ठत एवमेव द्वितीयः संतिष्ठत एवं तृतीयो मध्यमेन पर्यायेण शिल्पवन्त इव चरन्त्यथ विनिःसृप्य राथंतराय संधये प्रसर्पन्ति ६

संप्रसृप्तान्विदित्वाध्वर्युः प्राङायन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिच इति
होतृचमसमेव प्रथममुन्नयन्ति
यथोपपादमितरान्
सर्वश एव राजानँ समुन्नीयोत्तरवेद्याँ सँसादयन्ति
तदेतमाश्विनमुपस्तीर्णाभिघारितँ सह सँसादयन्त्यथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङुत्वा स्तोत्रमुपाकरोति
स्तुवते
होत्र एषोत्तमेति प्राहुर्होतुः कालात्पराङावर्ततेऽध्वर्युरभ्येनमाह्वयते होता प्रत्याह्वयतेऽध्वर्युः
शँसति
प्रतिगृणात्या महाहनाच्छस्यते

परःसहस्त्रमाश्विनं भवतीति ब्राह्मणम्प्रसिद्धमुक्थं प्रतिगीर्य प्राङायन्नाहाश्विभ्यां तिरोअह्नियानाँ सोमानामनुब्रूहीति
प्राङेत्योद्यच्छत एतँ होतृचमसम्
अनूद्यच्छन्त आश्विनम्
उपोद्यच्छन्ते चमसान्
अथाश्रावयत्यो श्रावयास्तु श्रौषडश्विभ्यां तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति
वषट्कृते जुहोति
तदेतमाश्विनमुपस्तीर्णाभिघारितँ सह जुह्वति
वषट्कृतानुवषट्कृते द्विर्जुहोति

तथैव द्विर्द्विः सर्वाँश्चमसाञ्जुह्वत्यथ भक्षैः प्रत्यञ्च
आद्रवन्त्यनुसवनभक्षोऽश्विभ्यां पीतस्येति
तस्य भक्षः सर्वगणस्य ते सर्वगणाश्विभ्यां पीतस्य तिरोअह्नियस्य सोमस्य
सुषुतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति
यथाचमसं चमसान्
हिन्व म इत्यात्मानं प्रत्यभिमृशन्ते
नाप्याययन्ति चमसान्
सर्वभक्षा मार्जयन्तेऽथ संप्रैषमाहाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद
ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीदग्नीन्सकृत्सकृत्संमृड्ढ
ीत्याहरन्त्येतानाग्नीध्रादौपयजानङ्गारांस्तानग्रेण होतारं निवपत्युपसीदत्युपयष्टा
गुदतृतीयैरत्रैतानि गुदतृतीयान्येकादशधा कृत्वोपयष्टापयजति
समानमत ऊर्ध्वं संतिष्ठतेऽतिरात्रः १०

एकादशिनीं करिष्यन्यूपाहुतिँ हुत्वाथ तां दिशमेति यत्र त्रयोदश
युपान्वेत्स्यन्मन्यते
तानुपशयद्वादशान्पात्नीवतत्रयोदशाञ्छित्त्वावाहयत्या वा हारयत्योह्य
निस्तिष्ठत्यवतक्षणानामेव स्वरून्कुरुतेऽथास्यैषा पूर्वेद्युरेव रथाक्षेणैकादशधा
वेदिर्विमिता भवति
स यत्राग्निष्ठस्य यूपावटं परिलिखति तदेतँ रथाक्षं याचति
तेन दक्षिणतो मिमीत उपरसंमितं यूपावटं परिलिखत्यथोदङ्ङ्मिमीत
उपरसंमितमेव यूपावटं परिलिखति
स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपावटान्परिलिखति
तद्धैतदेक उपवसथीय एवाहन्येतान्यूपानुच्छ्रयन्ति यजमानो वा
अग्निष्ठोऽङ्गानामितरे रूपमिति वदन्तः
स यदेनं तत्रानुच्छ्रयन्तं ब्रूयाद्व्यङ्गो न्वा अयं यजमानो भविष्यतीति तथा हैव
स्यात्

तदु वा आहुर्यदिमे यूपा अपशवः शूलीभूतास्तिष्ठेयुर्यज्ञवास्तुरूपमिव
स्याद्यज्ञवेशसमिव

श्वो भूत एवाहन्येतान्यूपानुच्छ्रयेदिति
ताञ्छ्वो भूत एवोच्छ्रयन्त्यग्निष्ठ एकादशिनीरशनाः परिवीय वासयन्ति ११

समानं कर्माश्विनाद्ग्रहादाश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपमभ्यैति
तदेते यूपाः प्रक्षालिताः प्रपन्नाः संपन्नचषालाः प्रागवटेभ्य उपशेरते
स्वर्वन्तमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वमुपस्थावानमुच्छ्रयत्यथोत्तरं स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपानुच्छ्रयत्यथ वै भवत्युपरसंमितां मिनुयात्पितृलोककामस्येति समा उपरेषु भवन्ति
रशनसंमितां मनुष्यलोककामस्येति समा रशनासु भवन्ति
चषालसंमितामिन्द्रियकामस्येति समाश्चषालेषु भवन्ति
सर्वान्समान्प्रतिष्ठाकामस्येति सर्वान्समान्प्रतिष्ठाकामस्य करोति
ये त्रयो मध्यमास्तान्समान्पशुकामस्येति तान्समान्पशुकामस्य करोति

व्यतिषजेदितरानिति व्यतिषजति
स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजति १२

अथ वै भवति
यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाँ समित्युत्तरार्ध्यमत्र वर्षिष्ठं मिनोति दक्षिणार्ध्यँ ह्रसीयाँ सम्
एषा वै गर्तमिद्यस्यैवं मिनोति ताजक्प्रमीयत इति ब्राह्मणं दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्रसीयाँ समिति
दक्षिणार्ध्यमत्र वर्षिष्ठं मिनोत्युत्तरार्ध्यँ ह्रसीयाँ सम्
आक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्या इति ब्राह्मणम्
अथ वै भवति
यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते
यन्नैकाँ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दत इति ब्राह्मणम्
अथ वै भवति

यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेदित्युपान्ते तस्य व्यतिषजति
स्त्र्येवास्य जायत इति ब्राह्मणम्
अथ वै भवति
यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयेदित्यान्तं तस्य प्रवेष्टयति
पुमानेवास्य जायत इति ब्राह्मणम्
अत्रैतमुपशयं दक्षिणतो व्यस्यति तूष्णीं स्वर्वन्तान्यूपानुत्सृज्याग्नेयमेवाग्निष्ठ उपाकरोति १३

सारस्वतीमुत्तरे सौम्यं दक्षिणे पौष्णमुत्तरे बार्हस्पत्यं दक्षिणे वैश्वदेवमुत्तर ऐन्द्रं दक्षिणे मारुतमुत्तर ऐन्द्राग्नं दक्षिणे सावित्रमुत्तरे वारुणं दक्षिणेऽथ वै भवति
यदि कामयेत योऽवगतः सोऽपरुध्यतां योऽपरुद्धः सोऽवगच्छत्वित्यैन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रं

य एवावगतः सोऽपरुध्यते योऽपरुद्धः सोऽवगच्छतीति ब्राह्मणम्
अथ वै भवति
यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेदिति
पशूनेवात्र व्यतिषजति
प्रजा एव मोहयतीति ब्राह्मणम्
अथ वै भवति
यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमालभतेऽपवाहतोऽपां प्रजानामवरुणग्रहायेति ब्राह्मणम्
अथैतस्मिन्नुपशये मनसैव यं द्वेष्टि तमुपाकरोति
यद्यु वै न द्वेष्ट्याखुस्ते पशुरित्यनुदिशति
समानं कर्मा पर्यग्निकरणात्
पर्यग्निकृतानामेतेषां पशूनां पञ्च दक्षिणाध्यान्पशूनुपक्रम्यैव स्थापयित्वा द्वावुपातिनीयाथेतरैर्व्यतिषजत्यथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते
तेषां वारुण उत्तराध्यो भवत्याग्नेय उपचारत
आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तस्

तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय
तदृजुधा संतिष्ठते १४

अथ वै भवतीष्टं वपया भवत्यनिष्टं वशयाथ पात्नीवतेन प्रचरतीति
स यत्रैकादशिन्या अनुबन्ध्यस्येष्टं वपया भवत्यनिष्टं वशया तज्जघनेन
गार्हपत्यमौपसदायां वेद्याँ स्तम्बयजुर्हरत्य्
इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण गार्हपत्यं पात्नीवतस्य यूपावटं परिलिखति
समानं कर्मा स्रुचाँ सादनात्
सादयित्वा स्रुचोऽग्रेण गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिँस्त्वाष्ट्रँ साण्डमजं
पशुमुपाकरोति
तं पर्यग्निकृतमुत्सृज्याज्येन सँस्थां करोत्यथ चतुर आज्यस्य गृह्णान आह
त्वष्ट्र इत्युपाँ श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह त्वष्टारमित्युपाँ शु
यजेत्युच्चैर्वषट्कृते जुहोतीति नु वपायाः प्रतिचरति
चतुर एवाज्यस्य गृह्णान आह त्वष्ट्र इत्युपाँ श्वनुब्रूहीत्युच्चैः १५

अत्याक्रम्याश्राव्याह त्वष्टारमित्युपाँ शु यजेत्युच्चैर्वषट्कृते जुहोतीति नु
पशुपुरोडाशस्य प्रतिचरति
चतुर एवाज्यस्य गृह्णान आहाग्नय इत्युपाँ
श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याहाग्निमित्युपाँ शु यजेत्युच्चैर्वषट्कृत
उत्तरार्धपूर्वार्धेऽतिहाय पूवा आहुतीर्जुहोतीति नु पशुपुरोडाशस्य स्विष्टकृतः
प्रतिचरति
चतुर एवाज्यस्य गृह्णान आह त्वष्ट्र इत्युपाँ श्वनुब्रूहीत्युच्चैरत्याक्रम्याश्राव्याह
त्वष्टारमित्युपाँ शु यजेत्युच्चैर्वषट्कृते जुहोतीति नु हविषः प्रतिचरत्याज्येन
दिशो जुहोति
पृषदाज्येन वनस्पतिम्
आज्यस्य स्विष्टकृतम्
आज्यस्येडामवद्यति
पृषदाज्येनानूयाजान्यजति

सोऽत्रैव पत्नीः संयाज्यात्रैव समिष्टयजूँषि जुहोति
संतिष्ठते पात्नीवतः १६

अथ वै भवति
योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते योऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिनुत इत्यग्निं चित्वा ज्यानानो द्वादशेष्टका उपकल्पयतेऽष्टौ याजुषीश्चतस्रो लोकंपृणाः
स यत्र होत्तरवेदिर्व्याघारितोपन्युप्तसंभारा भवति तद्द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याष्टौ याजुषीरुपदधाति येनर्षयस्तपसा सत्रमासतेति
चतस्रो लोकंपृणा लोकं पृण छिद्रं पृणेत्यथ चितिक्लृप्त्याभिमृशति
चित्तिमचित्तिं चिनवद्वि विद्वानित्याग्नेय्या गायत्रियैतां चितिमभिमृश्य
द्वाभ्यामवद्रवति वाङ्म आसन्प्राणदा इति
तायते पशुबन्धो वाग्निष्टोमो वा
स प्रज्ञातः संतिष्ठते १७

जर्वरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मा दत्तस्तापसो होता पृथुश्रवा दूरेश्रवा उद्गाता ग्लावश्चाजगावश्च प्रस्तोतृप्रतिहर्तारौ शितिपृष्ठो मैत्रावरुणस्तक्षको वैशालेयो ब्राह्मणाच्छँस्युपरीतिस्तर्क्ष्यः सदस्यः शिखातिशिखौ नेष्टापोतारावरुणोऽह्योऽच्छावाकश्चक्रपिशङ्गावाग्नीध्रावजिरो माहेयः सुब्रह्मण्योऽर्बुदो ग्रावस्तुत्साण्ड उन्नेता पशुक्रो ध्रुवगोपः कौतुस्तावध्वर्यू अरिमेजयश्च जनमेजयश्चैते वै सर्पाणाँ राजानश्च राजपुत्राश्च खाण्डवे प्रस्थे सत्रमासत पुरुषरूपेण विषकामास्
तेषां दशस्तोमान्यन्यान्यहान्यासन्द्वादशस्तोमान्यन्यान्यात्क्षीयन्ति च
स यद्दशदशेति तस्मात्सर्पा दँशुका दँशवीर्यास्
तदेतल्लौक्यं पौत्रीयं पशव्यँ सत्रं
य एतदुपयन्ति नैतान्सर्पा हिँसन्ति १८

तपो गृहपतिरिरा पत्नी ब्रह्मैव ब्रह्मा सत्यँ होतामृतमुद्गाता भूतं भविष्यच्च प्रस्तोतृप्रतिहर्तारावृतं मैत्रावरुण ऋतवः सदस्या आर्तवा उपगातारस्तेजो ब्राह्मणाच्छँसी यशोऽच्छावाकस्त्विषिश्चापचितिश्च नेष्टापोतारावग्निरेवाग्नीध्रो वाक्सुब्रह्मण्यो भगो ग्रावस्तुदूर्गुन्नेता बलं ध्रुवगोपो मनोऽध्वर्युश्चक्षुः प्रतिप्रस्थाता सेदिश्चाशनया चेध्मवाहौ दिष्टिर्विशास्ता मृत्युः शमितैते वै विश्वसृजः प्रथमाः सत्त्रमासां चिक्रिरे
तेषाँ शतँ समा दीक्षा आसञ्छतमुपसदः सहस्त्रं प्रसुतास्
तदेषाभिवदति विश्वसृजः प्रथमाः सत्त्रमासत सहस्त्रसमं प्रसुतेन यन्तः ।
ततो मिषदमिषत्संबभूव ततो ह जज्ञे भुवनस्य गोपा इत्यग्निष्टोमैर्वाव ते तदीयुस्
तदेतदृद्धमयनं प्रजननं यदग्निष्टोमाः १९

कुण्डपायिनामयनेनैष्यन्तो दीक्षन्ते
पञ्च सर्वतो धुरास्
तेषामियमेव प्रज्ञाता संवत्सरदीक्षा
समानं कर्मारम्भणीयादारम्भणीयेनेष्ट्वैन्द्रं पयो दोहयति संनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्याविशिष्य पयाँस्युपवसन्त्यथ श्वो भूत आमावास्येन हविषा यजन्ते
तेन यन्त्यष्टाविँशतिरहानि

प्रायणीयारम्भणीयौ
स मासः
पौर्णमासहविर्भिर्यन्ति मासम्वैश्वदेवहविर्भिर्यन्ति मासम्वरुणप्रघासहविर्भिर्यन्ति मासं साकमेधहविर्भिर्यन्ति मासं शुनासीरीयहविर्भिर्यन्ति षड्विँशतिरहान्यभिजित्त्रयः परसामानः
स मासो वैषुवतं त्रयोऽर्वाक्सामानोऽथ विश्वजित्
त्रयस्त्रिँशेन यन्ति मासं त्रिणवेन यन्ति मासम्
एकविँशेन यन्ति मासं सप्तदशेन यन्ति मासम्पञ्चदशेन यन्ति मासं त्रिवृता यन्ति द्वादशाहानि
गोआयुषी

तानि चतुर्दश
चत्वार्यूर्ध्वं वैषुवतात्
तान्यष्टादश
दशरात्रो महाव्रतं चातिरात्रश्च
स मासः २०

अथैषां कुराडानि
ते यत्सर्व एव त्रिवेदसो भवन्ति तदेषां कुराडम्
अथ यदन्योऽन्यमनुपरिसर्पं याजयन्ति तदेषां कुराडम्
अथ यदत्सरुकैश्चमसैर्भक्षयन्ति तदेषां कुराडं तेषां य एव ब्रह्मा स एव ब्राह्मणाच्छँसी स पोताथ यो होता स एव मैत्रावरुणः सोऽच्छावाकोऽथ य उद्गाता स एव प्रस्तोता स प्रतिहर्ताथ योऽध्वर्युः स एव प्रतिप्रस्थाता स नेष्टाथ य आग्नीध्रः स एव ग्रावस्तुत्स सुब्रह्मरायः स उन्नेताथोपनिषदोऽग्निश्चतुर्होता वायुः पञ्चहोता चन्द्रमाः षड्ढोता प्रजापतिः सप्तहोतासावादित्यो नवहोतैता वै देवता एतेनायनेनायंस्ततो वै ता आर्ध्नुवन् सुवर्गं लोकमायन्
य एवं विद्वाँस एतेनायनेन यन्त्यृध्नुवन्त्येव सुवर्गं लोकं यन्ति २१

उत्सर्गिणामयनेनैष्यन्तो दीक्षन्ते
तेषामियमेव प्रज्ञाता संवत्सरदीक्षा
समानं कर्मा पृष्ठ्यात्षडहात्
पृष्ठ्येन षडहेनेष्ट्वैन्द्रं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्याविशिष्य पयाँस्युपवसन्त्यथ प्रातरहरुत्सृज्य ज्योतिष आयतने प्राजापत्यं पशुमालभन्ते
तस्य पशुपुरोडाशमनुवर्ततेऽग्नये वसुमते पुरोडाशोऽष्टाकपालो माध्यंदिन इन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्त्यैन्द्रँ सांनाय्यं सा द्विहविरिष्टिः संतिष्ठतेऽत्रैतदैन्द्रँ सांनाय्यँ समुपहूय भक्षयन्त्यथापराह्णे वैश्वदेवं द्वादशकपालं निर्वपन्ति वैश्वदेवं चरुं ताभ्यां चरन्ति
देवताप्रभृतीभ्यामिडान्ताभ्याम्

अथ पशुना चरति मनोताप्रभृतिनेडान्तेनाथानूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथ श्वो भूते गवा प्रतिपद्यन्ते
त एवमेवैतेन यन्तो मासिमास्युत्सृजन्तः पञ्च ज्योतींष्युत्सृजन्त्यथामुत आवृत्ताँश्चतुरश्च त्रयस्त्रिँशस्तोमानुत्सृजन्त्येकं च ज्योतिरथ श्वो भूत आयुषैव प्रतिपद्यन्ते २२

तपश्चितामयनेनैष्यन्तो दीक्षन्ते
तेषामियमेव प्रज्ञाताग्निदीक्षा
समानं कर्मा संनिवापात्
प्रसिद्धः संनिवापोऽथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपत्यातिथ्येन प्रचर्याथैतां पञ्चहविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालमिति
तया सकृदेवेष्ट्वा नाद्रियेरन्नित्येक आहुरेतयैवाहरहः संवत्सरं यजेरन्नित्येके
प्रथमेऽहन्सर्वैरन्वहमेकैकया षष्ठेऽहन्सर्वैरन्वहमेकैकया
प्रथमे द्वादशाहेऽग्निं चिन्वीतेत्येक आहुस्
तदु वा आहू रुद्रो वा एष यदग्निः

स एतर्हि जातो यर्हि सर्वश्चितः
स यथा वत्सो जात स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति
संवत्सर एवेवास्यातो भागधेयं नैतस्याशां चनेयादित्युत्तमे द्वादशाहेऽग्निं चिन्वीतेत्येतदपरम् २३

अथातोऽहरहश्चयनस्यैव मीमाँसा
सद्यश्चितिं निस्तिष्ठन्त्यथ लोकंपृणा इष्टका उपदधन्मासमेति
मासि तयादेवतं कुरुते
द्वितीये मासे पुरीषचितिः
सद्यश्चितिं निस्तिष्ठन्त्यथ मुष्टिनोऽनुप्रकारं मासमेति

मासि तयादेवतं कुरुते
तृतीये मासे वराडचितिश्चतुर्थे मासे पुरीडचितिः
पञ्चमे मासे मध्यमा चितिः
षष्ठे मासे पुरीषचितिः
सप्तमे मासे वराडचितिरष्टमे मासे पुरीषचितिर्नवमे मासे सप्त स्कन्ध्या उपदधात्या नक्षत्रेष्टकाभ्यो दशमे मासे पुरीषचितिरेकादशे मासे संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णेर्द्वादशस्य मासस्याष्टाविँशतिरहानि पुरीषम्

एकान्नत्रिँशे शतरुद्रीयं श्वो भूते वसोर्धारा २४

अथोपरिष्टान्मासमित्याचक्षते
मासस्य प्रथमेऽहन्सद्यश्चितिं निस्तिष्ठन्ति सतयादेवतँ ससूददोहसम्मासं प्रवर्ग्योपसद्भ्यां यन्ति
द्वितीयस्य मासस्य प्रथमेऽहन्पुरीषचितिः
सद्यश्चितिं निस्तिष्ठन्ति सतयादेवतँ ससूददोहसं द्वितीयं मासं प्रवर्ग्योपसद्भ्यां यन्ति
तृतीयस्य मासस्य प्रथमेऽहन्वराडचितिश्चतुर्थस्य मासस्य प्रथमेऽहन्पुरीषचितिः
पञ्चमस्य मासस्य प्रथमेऽहन्मध्यमा चितिः
षष्ठस्य मासस्य प्रथमेऽहन्पुरीषचितिः
सप्तमस्य मासस्य प्रथमेऽहन्वराडचितिरष्टमस्य मासस्य प्रथमेऽहन्पुरीषचितिर्नवमस्य मासस्य प्रथमेऽहन्सप्त स्कन्ध्या उपदधात्या नक्षत्रेष्टकाभ्यो दशमस्य मासस्य प्रथमेऽहन्पुरीषचितिरेकादशस्य मासस्य प्रथमेऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णेर्द्वादशस्य मासस्य प्रथमेऽहन्पुरीषचितिरेकान्नत्रिँशे शतरुद्रीयं श्वो भूते वसोर्धारा २५

अथ पुरस्तान्मासमित्याचक्षते
मासं प्रवर्ग्योपसद्भ्यां यन्ति

मासस्योत्तमेऽहन्सद्यश्चितिं निस्तिष्ठन्ति सतयादेवतँ ससूददोहसं द्वितीयं मासं

प्रवर्ग्योपसद्भ्यां यन्ति
द्वितीयस्य मासस्योत्तमेऽहन्पुरीषचितिः
सद्यश्चितिं निस्तिष्ठन्ति सतयादेवतँ ससूदञ्ञोहसं तृतीयस्य
मासस्योत्तमेऽहन्वरडचितिश्चतुर्थस्य मासस्योत्तमेऽहन्पुरीषचितिः
पञ्चमस्य मासस्योत्तमेऽहन्मध्यमा चितिः
षष्ठस्य मासस्योत्तमेऽहन्पुरीषचितिः
सप्तमस्य मासस्योत्तमेऽहन्वरडचितिरष्टमस्य
मासस्योत्तमेऽहन्पुरीषचितिर्नवमस्य मासस्योत्तमेऽहन्सप्त स्कन्ध्या
उपदधात्या नक्षत्रेष्टकाभो दशमस्य मासस्योत्तमेऽहन्पुरीषचितिरेकादशस्य
मासस्योत्तमेऽहन्संयच्च प्रचेताश्चेत्येता उपदधात्या विकर्णोर्द्वादशस्य
मासस्याष्टाविँशेऽहन्पुरीषम्
एकान्नत्रिँ शे शतरुद्रीयं श्वो भूते वसोर्धारा २६

अथात उत्थानानामेव मीमाँ साहिजितेष्ट्वोत्तिष्ठेयुरित्येतद्ब्राह्मणसंपन्नम्
अपि वाभिजितेष्ट्वाथैताँ सवनेष्टिं
निर्वपन्त्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालमिति

तया समस्तया वा विहृतया वा प्रतिपद्यन्ते
वसतीवरीषु मृत्पिरडमन्ववधायाहरहर्वसतीवरीः परिहरमाणा यन्त्यथ
संवत्सरसंपन्नं ब्रह्मणोऽयनमित्याचक्षते
चतुरो मासो दीक्षाभिर्यन्ति चतुर उपसद्भिश्चतुरो मासः प्रसुतास्
तदाहुः क एतावत्तपस्तप्त्वान्यसाधारणं कुर्वीतान्तेवासिषु वोपहवमिच्छेत
दक्षिणावता वैनं याजयेयुरिति
सोऽन्तेवासिषु वैवोपहवमिच्छते दक्षिणावता वैनं याजयन्ति २७

अथ वै भवति
छन्दश्चितं चिन्वीत पशुकाम इति
स छन्दश्चिद्यत्र क्व चाहुतिरागच्छति जुहोत्येव तत्राथ यदन्यदाहुतिभ्यः
शरीरवद्यजुरेव तत्र जपति यजुरेव रशनयोर्यजुरश्वगर्दभयोर्यजुरुखायै प्रवृञ्जने
यजते वायव्येन पशुना

दीक्षते
विमायाग्निं परिखायापस्यायतने यजुरेव तत्र जपति यजुः
सर्वासामिष्टकानामुपधाने
जुहोति शतरुद्रीयं कुरुते वसोर्धारां श्येनचितं चिन्वीत सुवर्गकाम
इत्ययमेवैष श्येनचित्

कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिन्लोके स्यामित्येतस्यैव
सतोऽरत्निमात्रेण प्राक्शिर इव निरूहति
स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादलजचितं चिन्वीत
चतुःसीतं प्रतिष्ठाकाम इत्येतस्यैव सतोऽरत्निमात्रेण पक्षाग्रावणीयाँसौ
भवतस्
तावन्मात्रेणापिपक्षौ वरीयाँसौ
तौ मनागपनतौ परोऽणीयाँसौ भवत एकैकामृचा सीतां कृषति
प्रौगचितं चिन्वीत भ्रातृव्यवानित्येतस्यैव सतः समुदृह्याँसौ प्रागायातयति
स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यादुभयतःप्रौगं चिन्वीत यः
कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानित्येतस्यैव सतः समुदृह्यैव
श्रोणी प्रत्यगायातयति
स तथा विमितो भवति यथा न बहिर्वेदि यूपः स्यात् २८

रथचक्रचितं चिन्वीत भ्रातृव्यवानिति विज्ञायत आकृतिविकारः
शब्दसंयोगाद्यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां
कृत्वानुशर्करमन्तःशर्करमिष्टकाः परिचिनोत्यथान्ततोऽथान्तरत एवमेवा
स्वयमातृण्णाययथाभितः स्वयमातृण्णां
मध्ये नाभिमिव करोति
तस्या अनुदिशमवान्तरदिशमरानिव नेमिमिवेष्टका आयातयति
स एष रथचक्रचिद्भ्रातृव्यवतः परिकृष्यो द्रोणचितं चिन्वीतान्नकाम
इत्येतस्यैव सतोऽरत्निमात्रेण प्रागोष्ठमिव निरूहत्यथ मध्ये निम्नमिव करोति
स एष द्रोणचिदन्नकामस्य परिकृष्यः
समूह्यं चिन्वीत पशुकाम इति विज्ञायते
पुष्करपर्णँ रुक्मँ हिरण्मयं पुरुषँ स्रुचावित्येतल्लक्षण्यमित्याचक्षते

कुरुत एव तदथो पुरीषस्यैवेष्टका स्रायातयति
स एष समूह्यः पशुकामस्य परिकृष्यः
परिचाय्यं चिन्वीत ग्रामकाम इत्यनुशर्करमन्तःशर्करमिष्टकाः
परिचिनोत्यथान्ततोऽथान्तरत एवमेवा स्वयमातृरगायय्थाभितः
स्वयमातृरगामिष्टकाः परिचिनोति
स एष परिचाय्यो ग्रामकामस्य परिकृष्यः २९

श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति
षट्प्राञ्चः पुरुषास्त्रयः पुरस्तात्तिर्यञ्चौ द्वौ पश्चात्तिर्यञ्चौ स स्रात्मा
तस्य मात्रा यदि ग्रीवदघ्नं पुरस्तान्नाभिदघ्नं पश्चाद्यदि नाभिदघ्नम्पुरस्ताज्जानुदघ्नं पश्चाद्यदि जानुदघ्नं पुरस्ताद्गुल्फदघ्नं पश्चाद्यदि गुल्फदघ्नं पुरस्तात्समं भूमेः पश्चात्
स एष श्मशानचित्पितृलोककामस्याथ हैष कूर्मचिदब्राह्मणो मध्य उत्पृष्ठः परिकृष्य एतस्यैव सतोऽरत्निमात्रेण प्राक्शिर इव निरूहति
तस्यावान्तरदिशं पादानिवेष्टका स्रायातयति
स एष कूर्मचिदब्राह्मणो मध्य उत्पृष्ठः परिकृष्यः ३०

सौत्रामरया यक्ष्यमाणो भवति
स उपकल्पयते रोहितं चर्मानडुहँ सीसं च क्लीबं च शष्पाणि च तोक्माणि च व्रीहीन्नग्नहुं चूर्णकृतं त्रीणि नानावृक्ष्याणि पात्राणि त्रयान्सक्तूँस्त्रयाणि लोमानि यूपं च श्येनपत्रं च गर्भिणीं वडबामासन्दीमिरड्वं कुम्भं कारोतरं विशाख्यौ दीर्घवँ शँ शिक्यँ शतातृरगाँ शतमानँ हिरगयँ सतं च वालं च ब्राह्मणमाहुत्या उच्छेषणस्य पातारं यदि ब्राह्मणं न विन्दति वल्मीकवपाम्

स्रथामावास्येन वा हविषेष्ट्वा नक्षत्रे वाग्रेण शालाँ रोहिते चर्मणि सुरासोमः सँसन्नः शेते
तं दक्षिणतः क्लीब उपास्ते
सीसेन क्लीबाच्छष्पाणि क्रीणातीदं तवेदं ममेति
क्रीतः सुरासोम इत्यथैनमादाय पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमुपसादयत्यथैतेषां व्रीहीणामर्धानवघ्नन्त्यथेतरान्गार्हपत्य

एककपालमधिश्रित्य भर्जन्ति
तेषां ये फलन्ति लाजास्ते भवन्त्यथ य उ न फलन्ति तास्तर्यो गार्हपत्ये नवां
कुम्भीमधिश्रित्य प्रोदकमिवौदनँ श्रपयन्त्यथैनं विस्राव्य कठिने वा पाजके
वा विषजन्त्यथैनान्भृग्णानवघ्नन्ति
तेषां यानि च क्षुद्राणि याश्च तर्यस्ता उत्सेके संप्रकिरन्ति
तं मासर इत्याचक्षतेऽथ मानमादाय विमिमीत एकँ शष्पाणां द्वे तोक्माणां
त्रीणि लाजानां चत्वारि नग्नहोर्
अथैतमोदनं चूर्णैरनुप्रकिरन्मासरेणावोक्षन्संपादयति ३१

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि
सँसोमेनेत्यथैतामासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो
निदधात्यासन्द्यामिराड्वमिराड्वे कुम्भं कुम्भे
कारोतरमवदधात्यथैतमोदनमभितः कारोतरं
परिचिनोत्यथैनमपिधायाभिमृशति सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै
पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति
तिस्रः सँसृष्टा वसति
तिस्रो रात्रीः क्रीतः सोमो वसतीति ब्राह्मणम्
अथ तिसृषु व्युष्टासु तायते त्रिपशुर्वा चतुष्पशुर्वा पशुबन्धोऽथास्यैषा
पूर्वेद्युरेव सौत्रामणिकी वेदिर्विमिता भवति
तां परिस्तीर्य स्तम्बयजुर्हरति ३२

इदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थम्पूर्वं परिग्राहं परिगृह्णाति
करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथ चात्वालस्यावृता चात्वालं
परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं निवपत्युत्तरनाभिमुत्साद्य यूपावटं
खात्वाग्नेरावृता द्वावग्नी प्रणयत
आहवनीयादेवाध्वर्युरन्वाहार्यपचनात्प्रतिप्रस्थाताग्निवत्युत्तरं परिग्राहं
परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा संप्रैषमाह
प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवँ स्वधितिँ स्रुचश्च संमृड्ढि तूष्णीं
पृषदाज्यग्रहणीम्पत्नीँ संनह्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य

विद्धीत्य्
अध्वर्युरेव प्रसिद्धं पाशुबन्धिकं कर्म चेष्टत्यथ प्रतिप्रस्थाता सुराँ संपवय्य सशस्त्रामादाय पूर्वया द्वारोपनिर्हृत्यान्तर्वेद्यासादयति ३३

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता सत उदीचीनदशेन वालेन सुरां पुनाति पुनातु ते परिस्रुतं सोमँ सूर्यस्य दुहिता । वारेण शश्वता तनेति वायुः पूतः पवित्रेणेति यदि सोमातिपवितो भवत्यथादत्ते पर्णमयं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति
बर्हिषी अन्तर्धाय क्वलसक्तुभिश्च सिँहलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य सादयत्येष ते योनिरश्विभ्यां त्वेत्यथादत्ते नैयग्रोधं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति
बर्हिषी अन्तर्धाय बदरसक्तुभिश्च व्याघ्रलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य सादयत्येष ते योनिः सरस्वत्यै त्वेत्यथादत्त आश्वत्थं पात्रं तेन गृह्णाति कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति

बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिश्च वृकलोमभिश्च श्रीणात्यपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा सुत्राम्ण इति ३४

ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयत्यथैताँ सुराँ सप्रेकामादाय दक्षिणमग्निमुपसँसर्पति
तमभितो गर्तौ खानयति
तदुपसादयति विशाख्यौ दीर्घवँ शँ शिक्यँ शतातृण्णाँ शतमानँ हिरण्यँ सतं च वालं चाथ दक्षिणमग्निमग्रेण पुराणभस्मनः खरं करोति
तदुपसादयति ब्राह्मणमाहुत्या उच्छेषणस्य पातारं यदि ब्राह्मणं न विन्दति वल्मीकवपाम्
अथाप उपस्पृश्य यूपस्यावृता यूपमुच्छ्रयति
स्वर्वन्तं यूपमुत्सृज्याथैतान्पशूनुपाक्रोत्याश्विनं धूम्रँ सारस्वतं

मेषमैन्द्रमृषभम्बार्हस्पत्यं पशुं चतुर्थं यदि सोमातिपवितो भवति
तेषां प्रसिद्धं वपाभिश्चरित्वाश्विनसारस्वतावध्वर्युरादत्तेऽइन्द्रं प्रतिप्रस्थाता
ग्रहावादायोपोत्तिष्ठन्नाहाश्विभ्याँ सरस्वत्या इन्द्राय सुत्राम्णे सुराम्णाँ
सोमानामनुब्रूहीति
युवँ सुराममश्विनेत्येतामन्वाहात्याक्रम्याश्राव्याहाश्विभ्याँ सरस्वत्या इन्द्राय
सुत्राम्णे सुराम्णः सोमान्प्रस्थितान्प्रेष्येति

मैत्रावरुणो होता यक्षदश्विना सरस्वतीमिन्द्रँ सुत्रामाणमिति
पुत्रमिव पितरावश्विनोभेति यजत्यहाव्यग्ने हविरास्ये त इति वषट्कृते
जुहोति  ३५

यस्मिन्नश्वास ऋषभास उक्षण इत्यनुवषट्कृते हुत्वाश्विनस्य सँस्त्रावँ
सारस्वतेऽवनयति
सारस्वतस्य सँस्त्रावमैन्द्रे
तं ब्राह्मणो भक्षयति नाना हि वां देवहितं यदत्रेति द्वाभ्यां यदि ब्राह्मणं न
विन्दति वल्मीकवपायामवनयत्येतेनैव मन्त्रेणाथैतानि पात्राणि बल्कशस्य
पूरयित्वा पर्णमये श्येनपत्त्रमवगूहति
तद्विशाख्यावुच्छ्रित्य दक्षिणाग्रं वँशं प्रोहति वँशे शिक्यँ सजति शिक्ये
शतातृण्णाँ शतातृण्णायां वालं वाले शतमानँ हिरण्यम्
अथैताँ सुराँ सप्रेकामादाय शतातृण्णायाँ समवनयति सोमप्रतीकाः
पितरस्तृप्णुतेति
क्षरति शतातृण्णेत्युपतिष्ठन्ते पवमानः सुवर्जन इत्येतेनाष्टर्चेनाथ यदि
सोमातिपवितो भवति पितृणां याज्यानुवाक्याभिरुपतिष्ठन्त उदीरतामवर
उत्परास आहं पितॄन्त्सुविदत्राँ वित्सीदं पितृभ्यो नमो अस्त्वद्येत्यध्वर्युर्होता
ब्रह्मा त उपतिष्ठन्ते

यत्रैव शतातृण्णां धारयति तन्निदधाति प्रतिष्ठित्या इति ब्राह्मणं तदेवैनां
निधाय दक्षिणतो निदधात्यथैतानि पात्राणि पुराणभस्मनः खरे सादयति  ३६

पितृभ्यः स्वधाविभ्यः स्वधा नमः पितामहेभ्यः स्वधाविभ्यः स्वधा नमः

प्रपितामहेभ्यः स्वधाविभ्यः स्वधा नम इत्यत्र गर्भिणीं वडबां ददात्यथाप
उपस्पृश्य बार्हस्पत्यस्य पशुपुरोडाशं याचति
तेन प्रचरति देवताप्रभृतिनेडान्तेनाथ पशुभिश्चरति
मनोताप्रभृतिभिरिडान्तैरथैतान्पुरोडाशान्याचत्यैन्द्रमेकादशकपालँ सावित्रं
द्वादशकपालं वारुणं दशकपालमिति
तैश्चरति देवताप्रभृतिभिरिडान्तैरनूयाजैश्चरित्वा प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य
पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य त्रीणि पाशुबन्धिकानि समिष्टयजूँ षि
जुहोति यज्ञ यज्ञं गच्छैष ते यज्ञो यज्ञपते देवा गातुविद इत्यत्रैतमवभृथँ
सँसादयन्ति यत्किँचित्सुरालिप्तं भवति तत्सह हृदयशूलानि
भवन्त्येतत्समादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्ति ३७

द्वे स्रुती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वं भुवनँ
समेत्यन्तरा पूर्वमपरं च केतुमिति

प्रसिद्धँ हृदयशूलैश्चरित्वाथैतानि पात्राण्युदकान्ते पराञ्चि सादयति यस्ते देव
वरुण गायत्रच्छन्दाः पाशो ब्रह्मन्प्रतिष्ठितः । तं त एतेनावयज इति पर्णमयं
यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः क्षत्रे प्रतिष्ठितः । तं त एतेनावयज इति
नैयग्रोधं यस्ते देव वरुण जगतीछन्दाः पाशो विक्षु प्रतिष्ठितः । तं त
एतेनावयज इत्याश्वत्थं यस्ते देव वरुणानुष्टुप्छन्दाः पाशः पशुषु प्रतिष्ठितः ।
तं त एतेनावयज इति शतातृण्णां तूष्णीँ सतं वालं च
प्रसिद्धोऽवभृथः
साम चैव नाह देवीराप एष वो गर्भ इति चाथाप्रतीक्षमायन्ति
वरुणस्यान्तर्हित्यै
प्रपथे समिधः कुर्वत एधोऽस्येधिषीमहीत्येत्याहवनीयेऽभ्यादधाति समिदसि
तेजोऽसि तेजो मयि धेहीत्यथाहवनीयमुपतिष्ठन्तेऽपो अन्वचारिषँ रसेन
समसृक्ष्महि । पयस्वाँ अग्न आगमं तं मा सँसृज वर्चसेत्यथ कुसीदेन
सक्तुहोमेन चरत्यथ देवता उपस्थाय यूपमुपतिष्ठते । संतिष्ठते सौत्रामणी
३८

वेदमधीत्य स्नास्यन्नुपकल्पयत एरकां चोपबर्हणं च नापितं च क्षुरं च

दारूणि चोपस्तरणं च वृकलाँश्च दन्तधावनमुष्णाश्चापः शीताश्च
सर्वसुरभिपिष्टं चाञ्जनं च स्रजं चादर्शं चाहतं च वासः प्रावरणं च
वसनान्तरं बादरं मणिँ सुवर्णोपधानँ सूत्रं च प्रवर्तौ च दण्डं चोपानहौ च
छत्त्रमानडुहं चर्म सर्वरोहितमित्य्
एतेऽस्य संभारा उपक्लृप्ता भवन्ति
स्नानस्य मीमाँसा
रोहिण्याँ स्नायादित्येकम्प्राजापत्यं वा एतन्नक्षत्रं तदस्य प्राजापत्य एव नक्षत्रे
स्नातं भवत्यथो सर्वान्रोहान्रोहाणीति
तिष्ये स्नायादित्येकम्बार्हस्पत्यं वा एतन्नक्षत्रं तदस्य बार्हस्पत्य एव नक्षत्रे
स्नातं भवत्यथो बृहस्पतिप्रसूतोऽसानीत्युत्तरयोः फल्गुन्योः
स्नायादित्येकम्भाग्यं वा एतन्नक्षत्रं तदस्य भाग्य एव नक्षत्रे स्नातं भवत्य्
अथो भाग्योऽसानीति
हस्ते स्नायादित्येकं सावित्रं वा एतन्नक्षत्रं तदस्य सावित्र एव नक्षत्रे स्नातं
भवत्यथो सवितृप्रसूतोऽसानीति
चित्रायाँ स्नायादित्येकम्
ऐन्द्रं वा एतन्नक्षत्रं तदस्यैन्द्र एव नक्षत्रे स्नातं भवत्यथो चित्रोऽसानीति
विशाखयोः स्नायादित्येकम्
ऐन्द्राग्नं वा एतन्नक्षत्रं तदस्यैन्द्राग्न एव नक्षत्रे स्नातं भवत्यथो विशाखोऽसानि
प्रजया पशुभिरित्येतेषामेकस्मिन्नापूर्यमाणपक्षे पुरादित्यस्योदयाद्व्रजमभि
प्रपद्यते
नैनमेतदहरादित्योऽभितपेत्तदह स्नातानामु ह वा एष एतत्तेजसा यशसा
तपत्यन्तर्लोम्ना चर्मणा व्रजमभिविघ्नन्ति
पूर्वार्धमध्ये व्रजस्याग्निमुपसमाधाय संपरिस्तीर्याहरन्त्येतान्संभारान्सकृदेव
सर्वान्
यत्सह सर्वाणि मानुषाणीत्येतस्माद्ब्राह्मणाद्दक्षिणतो ब्राह्मण उपविशत्युत्तरत
उदपात्रं पालाशीं च समिधं निदधात्यपरेणाग्निमुदीचीनप्रतिषेवणामेरकाँ
साधीवासामास्तीर्य तस्यां प्राङ्मुख उपविशत्य्
उत्तरतो नापित उत्तरत उपबर्हणम्
आमध्यंदिनं भिक्षां दद्यादपीह गां पचेद्वशा चेदस्य स्यादत्रैतां पालाशीं
समिधमाज्येनाक्त्वा मध्यंदिनेऽभ्यादधाति ३९

इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया । भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव
स्वाहेत्यथैरकायामुदीचीनशिरा निपद्यते त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषमृषीणां त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषमित्युद्यमानमनुमन्त्रयते शिवा मे भवथ सँस्पृश इति
क्षुरमभिमन्त्रयते क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिँसीरित्युप्यमानमनुमन्त्रयते यत्क्षुरेण वर्चयसि वप्त्रा वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीरिति
श्मश्रूण्येवाग्रे वपतेऽथोपपक्षावथ केशान्यथोपपादमितराण्यङ्गान्येतस्माद्ध्येषा जरसा पूर्व आयुषि प्रयान्ति पूर्व आयुष्यन्नादा भवन्ति य एवं विद्वाँसो लोमानि वापयन्ते

स यदि लोमानि वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सँहृत्य नखानि निकृन्तयीताथैतानि समुच्चित्य ब्रह्मचारिणे प्रयच्छन्नाहेमानि हृत्वा दर्भस्तम्बे वोदुम्बरमूले वा निधत्तादिति
तानि स तत्र निदधात्यपरेणाग्निं प्राङ्मुख उपविश्य मेखलां विस्रँसयत इमां विष्यामि वरुणपाशमिति
योऽस्य तत्र रातेः पुत्रो वान्तेवासी वा भवति तस्मै प्रयच्छन्नाहेमाँ हृत्वा न्यग्रोधे वोदुम्बरमूले वा निधत्तादिति
तामु स तत्र निदधातीदमहममुष्यामुष्यायणस्य शुचा पाप्मानमवगूहाम्युत्तरस्य द्विषद्भ्य इति
वृकलैः प्रधाव्य दन्तान्विधावयतेऽन्नाद्याय व्यपोहध्वम्भगो राजायमागमत्। स मे मुखं प्रसर्पतु वर्चसे च भगाय चेत्युभयीरपः संनिषिञ्चत्युष्णासु शीता आनयति दैवमानुषस्य व्यावृत्त्या इति
तासामञ्जलिनोपहत्याभिषिञ्चत्यापो हि ष्ठा मयोभुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति तिसृभिः
षोढाविहितो वै पुरुष इत्येतस्माद्ब्राह्मणादथैतस्य सर्वसुरभिपिष्टँ समुदायुत्य त्रिः प्रसिञ्चति ४०

नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या
अभिग्राहिणीरित्यनुलिम्पतेऽप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः ।
दिव्यो यो मानुषो गन्धः स मामाविशत्विहेत्यथाहतं परिधत्ते स्वा मा
तनूराविश शिवा मा तनूराविशेत्येवमेवोत्तरासङ्ग्यम्
एवमेवात ऊर्ध्वम्
अथैतं बादरं मणिँ सुवर्णोपधानँ सूत्रे प्रोत्य दर्व्यामाधाय दर्विदण्डे सूत्रेण
पर्यस्य जुहोतीयमोषधे त्रायमाणा सहमाना सहसवती । सा मा करोतु
सोमवर्चसँसूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं करोतु
स्वाहेत्यथैनमुदपात्रेऽनुपरिप्लावयति विश्वा उत त्वया वयं धारा उदन्या इव
। अतिगाहेमहि द्विष इत्यपाशोऽसीत्युक्त्वाद्दणया परिहरति वध्यँ हि प्रत्यञ्चं
प्रतिमुञ्चन्ति व्यावृत्त्या इत्येतस्माद्ब्राह्मणादथैतौ प्रवर्तौ सूत्रे प्रोत्य
दर्व्यामाधाय दर्विदण्डे सूत्रेण पर्यस्य जुहोत्यायुष्यं वर्चस्यँ सुवीर्यँ
रायस्पोषमौद्भिद्यम् । इदँ हिरण्यं वर्चसे जैत्र्यायाविशतादिमँ रयिँ स्वाहेति

द्वितीयां जुहोति शुनिमिवाहँ हिरण्यस्य पितुरिव नामाग्रभैषम्। तन्मा करोतु
सोमवर्चसँसूर्यवर्चसं ब्रह्मवर्चस्विनमन्नादं करोतु स्वाहेति
तृतीयां जुहोत्युच्चैर्वाजि पृतनासहँ सभासहं धनंजयम्। सर्वाः समृद्धीर्ऋधयो
हिरण्ये याः समाहिताः स्वाहेति
चतुर्थीं जुहोति विराजं च स्वराजं चाभिष्टिर्या च नो गृहे । लक्ष्मी राष्ट्रस्य
या मुखे तया मा सँसृजामसि स्वाहेति
पञ्चमीं जुहोति यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु । यशो विश्येषु
शूद्रेष्वहमस्मि यशस्तव स्वाहेत्यथैनावुदपात्रेऽनुपरिप्लावयति विश्वा उत
त्वया वयमित्येतया
तयोरन्यतरमादाय दक्षिणे कर्ण आबध्नीत आयुष्यं वर्चस्यमित्येताभिः पञ्चभिर्
अथैनमनुपरिवर्तयत ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा तैस्त्वा
सहानुकरोमीत्येवमेवोत्तरं प्रवर्तमाबध्नीतेऽथ स्रजं प्रतिमुञ्चते ४१

शुभिके शिर आरोह शोभयन्ती मुखं मम । मुखँ हि मम शोभय भूयाँ सं च
भगं कुरु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै । तां त्वेमां
प्रतिमुञ्चेऽहं वर्चसे च भगाय चेति

त्रैककुदेनाञ्जनेनाङ्क्ते यदाञ्जनं त्रैककुदं जातँ हिमवत उपरि । तेन वामाञ्जे मयि पर्वतवर्चसमस्त्वित्यादर्शे परिपश्यते यन्मे मनः परागतमाअर्शे परिपश्यतः । इदं तन्मयि पश्याम्यायुष्यं वर्चस्यं मे अस्त्वित्यथोपानहावुपमुञ्चते द्यौरसीति दक्षिणे पादे पृथिव्यसीत्युत्तरेऽथ दण्डमादत्ते सखा मा गोपायेति
छत्रमादत्ते दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहीति
सोऽत्रैवास्त आ नक्षत्राणामुदयादथोदितेषु नक्षत्रेषूपनिष्क्रम्य दिश उपतिष्ठते देवीः षडुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वमिति
मा हास्महि प्रजया मा तनूभिरिति नक्षत्राणि
मा रधाम द्विषते सोम राजन्निति चन्द्रमसं
समुपस्थाय यत्रयत्र कामयते तदेतीत्येतत्समावर्तनम् ४२

अथेतरत्
तूष्णीमेव तीर्थे स्नात्वोदेत्यथ यदि रथं लभते रथंतरमसीति दक्षिणं चक्रमभिमृशति बृहदसीत्युत्तरं वामदेव्यमसीति मध्यम्
अथ रथं प्रवर्तमानमनुमन्त्रयतेऽयं वामश्विना रथो मा दुःखे मा सुखे रिषदित्यथ यदि शमरथं करिष्यन्भवत्यप उपस्पृश्येमामभिमृशतीह धृतिरिह विधृतिरिह रन्तिरिह रमतिरिह रमतामित्यथास्मा आचार्यः कूर्चमाहारयति तं प्रदक्षिणं पर्यस्योदगावृत्त उपविशति पुरस्ताद्वैनं प्रत्यञ्चमुपोहते राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषमित्यथास्मा उदकमाहारयति तेनास्य पादौ प्रक्षालयत्यवनेक्तुः पाणी संमृशति मयि महो मयि भगो मयि भर्गो मयि यश इत्यप उपस्पृश्य मयीन्द्रियं वीर्यमित्युरः प्रत्यात्मानं प्रत्यभिमृशतेऽथास्मा अन्यदाहारयति
तत्प्रतिगृह्णात्या म अगाद्वर्चसा यशसा सँसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः
प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्
तदुपस्पृश्य प्राक्सेक्तवा इत्याह

मधुपर्कं प्रोक्तमभिमन्त्रयते स मावतु स मा पातु स मा जुषतामित्युभाभ्याँ हस्ताभ्यां प्रतिगृह्णाति ४३

आ म अगाद्वर्चसा यशसा सँसृज पयसा तेजसा च तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनामिति ब्राह्मणः
प्रियं पशूनां कुर्वधिपतिं प्रजानामिति राजन्यस्
तस्मिँश्चेत्किंचिदापतितँ स्यात्तदङ्गुष्ठेन च महानाम्न्या चोपसंगृह्येमां दिशं निरस्यति नेष्टाविद्धं कृन्तामि या ते घोरा तनूस्तया तमाविश योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यथाप उपस्पृश्य समुदायुत्य त्रिः प्राश्नाति प्राण इदं ते बलिँ हरामि श्रेष्ठं माधिपतिं कुर्विति
सोमोऽसि सोमपं मा कुर्विति द्वितीयम्
अन्नमस्यन्नादं मा कुर्विति तृतीयं त्रिः पीत्वोच्छिष्टं ददाति
यमात्मनः श्रेयाँ समिच्छेत्तस्मै शेषं दद्यादुपनीतां गामनुमन्त्रयते जहि मे पाप्मानमुपनेतुश्चेति
तां कुर्वन्ति वोत्सृजन्ति वा
स यदि करिष्यन्भवति कुरुतेत्याहाथ यद्युत्स्रक्ष्यन्भवति तामनुमन्त्रयते गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाँ स्वसादित्यानाममृतस्य नाभिः । प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ पिबतूदकं तृणान्यत्त्वोमुत्सृजतेत्य्
अथास्मा ओदनमाहारयति
तमश्नाति ब्रह्म त्वाश्नातु ब्रह्म त्वाश्नात्विति
तच्चतुष्टयोऽर्घ्यो दधि मधु घृतमाप इति
पञ्चतय इत्येके दधि पयो मधु घृतमाप इति  ४४

ब्राह्मणो ह सोमार्थः शुक्लेन पिङ्गाक्षेण मूर्धभिन्नेन विस्रवता पथि समाजगाम
तँ होवाच कथा विद्यां भगवन्तमिति
सोमो राजास्मीति हैनं प्रत्युवाच
तं मा कदध्वर्युरनैष्टच्चयनविदभ्यसौषीद्यत्रो मा कदध्वर्युरनैष्टच्चयनविदभिषुणोतीत्थमहं तत्र विस्रावाणयसावसौ ब्राह्मणो नैष्टच्चयनानि वेद
तं गमिष्यामि

स म इमान्वर्णान्सँरोपयिष्यतीति
ते यत्रावभृथमवयन्ति तदौदुम्बर्या शाखया पलाशशाखया वा स्रुवेण वानाज्यलिप्तेन दध्ना पयसा वा मधुमिश्रेण नैष्टयनैर्ऋजीषमभिजुह्वति
यत्ते ग्राव्णा चिच्छिदुः सोम राजन्नित्येतेनानुवाकेनाभिर्गीर्भिर्यदतो न ऊनमित्येतया च चतुर्दशभिर्ऋजीषमभिजुह्वति

ते यत्रावभृथँ सँसिध्येयुस्तान्ब्रूयाद्ये नु राज्ञस्त्वचं भित्त्वा क्रूरं कृत्वेह ग्रावभिः ४५

अशमयित्वा नैष्टयनैर्यन्त्येवैवं कृतागसः ॥
ये सोममसँस्थाप्यापः सँसाद्यसोमिनः । सँस्थितो न
इत्यायन्त्यमुत्रैनान्हिनस्ति सः ॥
असिशूलैरुत्तुदन्ति यमस्य प्रतिषादने । योऽशमयित्वा नैष्टयनैरथ नाकमधिरोहति ॥
वायुर्भूत्वा पवते त्रिदिवं नाकमुत्तमम्। यः शमयित्वा नैष्टयनैरथ नाकमधिरोहति ॥
अध्वर्योर्यजमानस्य प्रतिप्रस्थातुरग्नीधः । ब्रह्मणो होतुरुद्गातू राजैषां लोकमादत्ते न चाहौषुश्चतुर्दश ॥
ये चतुर्दश जुह्वति दध्न एताः स्रुवाहुतीः । नैषां राजा लोकमादत्ते न प्रजां नोत वाजिनम्॥
आप्याययन्तो राजानं ग्रावभिः क्रूरमृत्विजः । पयसा शमयन्तोऽस्य जुहुतैव चतुर्दशेति ४६

अथ वै भवति
ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति
वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति

तेन पूर्णमासः सेन्द्रोऽइन्द्रं दध्यमावास्यायां
तेनामावास्या सेन्द्रेति
केनो स्विदनीजानस्य सेन्द्रौ भवत इत्यैन्द्राग्नेन पुरोडाशेनेत्येव ब्रूयादित्यथ

वै भवति
देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत
ते देवा एतामिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालँ सरस्वत्यै चरुँ सरस्वते चरुं
तां पौर्णमासँसँस्थाप्यानुनिरवपन्
ततो देवा अभवन्परासुरा यो भ्रातृव्यवान्त्स्यात्स
पौर्णमासँसँस्थाप्यैतामिष्टिमनुनिर्वपेत्
पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते इति ब्राह्मणं स एष भ्रातृव्यवतो यथाकामप्रयोगो
मिथुनान्पशून्त्सारस्वताभ्यां
यावदेवास्यास्ति तत्सर्वं वृङ्क्ते इति ब्राह्मणम्
अथ वै भवति ४७

पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति
स पौर्णमासीम्पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां हत्वा भ्रातृव्यं नाप्याययतीति ब्राह्मणं तदेतत्स्तरणावगधं वापरोध्यावगधं वेत्यथ वै भवति
साकंप्रस्थायीयेन यजेत पशुकाम इत्येतयेष्ट्या यक्ष्यमाण उपकल्पयत
औदुम्बरं महत्पात्रं प्रभूतमाज्यमित्यथ देवस्य त्वा सवितुः प्रसव इति
प्रतिपदं कृत्वाग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालमैन्द्रँ सांनाय्यं
प्रसिद्धमाग्नेयेन चरित्वाथेतरयोर्हविषोरौदुम्बरे महति पात्रे
समवद्यन्नाहेन्द्रायानुब्रूहीति महेन्द्रायेति वा यदि महेन्द्रयाजी भवति
महता पूर्णँ होतव्यमित्यत्याक्रम्याश्राव्याहेन्द्रं यजेति महेन्द्रमिति वा यदि महेन्द्रयाजी भवति
वषट्कृते सहैव पात्रेण जुहोति
तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति ब्राह्मणम्
अथ वै भवति
दारुपात्रेण जुहोति
न हि मृन्मयमाहुतिमानशेऽउदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणं तदेतल्लभ्यावगधं वा निर्वेदावगधं वेत्यथ वै भवति ४८

नागतश्रीर्महेन्द्रं यजेत
त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति
स योऽन्य एतेभ्यो महेन्द्रमियक्षेत स संवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ यामावास्यागच्छति तस्यां महेन्द्रं यजते
सोऽत ऊर्ध्वं महेन्द्रयाज्येव भवत्यथ वै भवति
संवत्सरमिन्द्रं यजेत
संवत्सरँ हि व्रतं नाति
स्वैवैनं देवतेज्यमाना भूत्या इन्द्धे वसीयान्भवतीति ब्राह्मणम्
अथ वै भवति
संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्

संवत्सरमेवैनं वृत्रं जघ्निवाँ समग्निर्व्रतपतिर्व्रतमा लम्भयति
ततोऽधि कामं यजेतेति ब्राह्मणम्
अथ वै भवति ४६

नासोमायाजी संनयेदनागतं वा एतस्य पयो योऽसोमयाजी
यदसोमयाजी संनयेत्परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते
सोमयाज्येव संनयेत्
पयो वै सोमः पयः सांनाय्यं
पयसैव पय आत्मन्धत्त इति ब्राह्मणम्
अथ वै भवति
वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं
पुरस्ताच्चन्द्रमा अभ्युदेति
त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं
कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुं
येऽनिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमिति
तस्या एता भवन्त्यग्ने दा दाशुषे रयिं दा नो अग्ने प्रदातारँ हवामहे प्रदाता
वज्री प्र तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं भूदितीन्वीजानस्य व्यापन्नयैव

पूर्वया यजतेऽव्यापन्नयोत्तरया
न द्वे यजेत
यत्पूर्वया संप्रति यजेतोत्तरया छम्बट्कुर्याद्यदुत्तरया संप्रति यजेत पूर्वया छम्बट्कुर्याद्नेष्टिर्भवति न यज्ञस्
तदनु ह्रीत मुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायतेऽनादृत्य तद्द्वे एव यजेत
यज्ञमुखमेव पूर्वयालभते
यजत उत्तरया
देवता एव पूर्वयावरुन्द्ध इन्द्रियमुत्तरया
देवलोकमेव पूर्वयाभिजयति मनुष्यलोकमुत्तरया
भूयसो यज्ञक्रतूनुपैतीति ब्राह्मणम्
अथ वै भवत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा
अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवतीति ब्राह्मणम्
अथ वै भवति ५०

दाक्षायणयज्ञेन सुवर्गकामो यजेत
पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयतेऽहतं वासोऽथ पौर्णमास्या उपवसथेऽग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रँ सांनाय्यं सा द्विहविरिष्टिः संतिष्ठतेऽत्रैतदैन्द्रँ सांनाय्यँ समुपहूय भक्षयन्त्यथाहतं वासः परिधायापरपक्षं व्रतं चरति
तस्यैतद्व्रतं नानृतं वदति न माँ समश्नाति न स्त्रियमुपैति नास्य पल्पूलनेन वासः पल्पूलयन्त्यथ यामावास्यागच्छति तस्या उपवसथेऽग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथास्यैतदहर्मित्रावरुणाभ्यां वत्सा अपाकृता भवन्ति मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ प्रातराग्नेयमष्टाकपालं निर्वपति मैत्रावरुणीमामिक्षां
सा द्विहविरिष्टिः संतिष्ठते

वाजिनस्य काले वाजिनेन चरति
निधत्ते वासो विसृजते व्रतम्विसृष्टव्रत एतं पूर्वपत्तं भवत्यथ
पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्यदेवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते
तदेतत्संवत्सरावगधँ सोमसँस्थम् ५१

अथेडादध इत्याचत्तते
समानं वाससश्च व्रतपतेश्च
तथैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ
प्रातराग्नेयमष्टाकपालं निर्वपत्यग्नीषोमीयमेकादशकपालमैन्द्रँ सांनाय्यं सा
त्रिहविरिष्टिः संतिष्ठतेऽत्रैतदैन्द्रँ सांनाय्यँ समुपहूय भत्तयन्ति
तथाहतं वासः परिधायापरपत्तं व्रतं चरत्यागच्छत्यमावास्या
तस्या उपवसथे यजते
तथा मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ
प्रातराग्नेयमष्टाकपालं निर्वपत्यैन्द्रमेकादशकपालं मैत्रावरुणीमामित्तां सा
त्रिहविरिष्टिः संतिष्ठते
वाजिनस्य काले वाजिनेन चरति
निधत्ते वासो विसृजते व्रतम्विसृष्टव्रत एतं पूर्वपत्तं भवत्यथ
पौर्णमास्यागच्छत्युत्सीदति व्रतपतिर्
यदेवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते
तदेतत्संवत्सरावगधँ सोमसँस्थम् ५२

अथ चतुश्चक्रो भ्रातृव्यवतो यज्ञः
समानं वाससश्चैव व्रतपतेश्च
तथैवैन्द्रं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ
प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत उपाँ
शुयाजमग्नीषोमीयमेकादशकपालमैन्द्रँ सांनाय्यं सा चतुर्हविरिष्टिः
संतिष्ठतेऽत्रैतदैन्द्रँ सांनाय्यँ समुपहूय भत्तयन्ति
तथैवाहतं वासः परिधायापरपत्तं व्रतं चरत्यागच्छत्यमावास्या
नैवोपवसथे यजते
तथैव मैत्रावरुणं पयो दोहयित्वोपवसति सांनाय्यस्य वावृता तूष्णीं वाथ

प्रातराग्नेयमष्टाकपालं निर्वपति सरस्वत्या उपाँशुयाजमैन्द्रमेकादशकपालं
मैत्रावरुणीमामिक्षां सा चतुर्हविरिष्टिः संतिष्ठते
वाजिनस्य काले वाजिनेन चरति
निधत्ते वासो विसृजते व्रतम्विसृष्टव्रत एतं पूर्वपक्षं भवत्यथ
पौर्णमास्यागच्छत्युस्तीदति व्रतपतिर्यदेवोर्ध्वं व्रतपतेस्तेन प्रतिपद्यते
तदेतत्संवत्सरावगधँ सोमसँस्थम् ५३

स एष चतुश्चक्रो भ्रातृव्यवतो यज्ञः
स यथा ह वा इदमनश्चतुश्चक्रं व्यवघ्नानमेत्येवँ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा
पाप्मानं भ्रातृव्यं व्यवघ्नान एति

स एष वसिष्ठयज्ञः केशियज्ञः सार्वसेनियज्ञो वसिष्ठो ह यत्र
सौदासानभिचचारैवँ हैनानभिचचार
केशी ह यत्र खाण्डिकमभिचचारैवँ हैनमभिचचार
सार्वसेनिर्ह यत्र भ्रातृव्यानभिचचारैवँ हैनानभिचचार  ५४

चातुर्मास्यैः सोमैर्यक्ष्यमाणो भवति
स द्वयान्संभारानुपकल्पयत आग्निष्टोमिकाँश्च वैश्वदेवसंभाराँश्च
स पुरस्तात्फाल्गुन्यै वा चैत्र्यै वा पौर्णमास्या आमावास्येन हविषेष्ट्वा दीक्षते
तस्यापरिमिता दीक्षास्तिस्र उपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या
संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्विश्वेभ्यो देवेभ्यो वत्सा अपाकृता
भवन्ति
वैश्वदेवं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य
पयाँसि विशिष्योपवसन्त्यथ प्रातस्त्रिवृद्बर्हिस्
तदेकवदेव स्तृणात्यथाग्नेयं पशुमुपाकरोति
तस्य वैश्वदेव उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवींषि

प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्

ऋजुधा त्रिवृदग्निष्टोमः संतिष्ठते
पुरस्ताद्धानासोमानां वाजिनेन चरति
समानं कर्मावभृथात्
प्रसिद्धोऽवभृथ उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै द्यावापृथिव्योपालम्भ्या भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति
संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतद्
अथातश्चतुर्षु मासेषु ५५

वरुणप्रघासाभ्याँ सोमाभ्यां यक्ष्यमानो भवति
दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्द्वितीयमहः संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्मरुद्भ्यो वत्सा अपाकृता भवन्ति
मारुतं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति
तस्य मारुत उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तन्ते सप्त वरुणप्रघासहवींषि
स यत्र प्रातःसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति
समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्
ऋजुधा पञ्चदश उक्थ्यः संतिष्ठतेऽहीनसंततिं करोत्य्
अथास्यैतदहर्वरुणाय वत्सा अपाकृता भवन्ति
वारुणं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति

तस्य वारुण उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तेते वारुणी च कायश्च
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरयोर्हविषोर्ऋजुधा सप्तदश उक्थ्यः संतिष्ठते
पुरस्ताद्धानासोमानां वाजिनाभ्यां चरति
समानं कर्मावभृतादथैतस्मिन्नवभृथ उपाददते वारुण्यै निष्कासं तुषानिति
वारुणस्य वारुण्यामिक्षाध्यवदानीया भवत्यृजीषेण सह तुषान्संप्रकिरन्ति
प्रसिद्धोऽवभृथ उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै कायोपालम्भ्या भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति
संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतद्
अथातश्चतुर्षु मासेषु ५६

साकमेधैः सोमैर्यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्तृतीयमहः संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँसि
विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति

तस्यानीकवत उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तत आनीकवतः
प्रैषवन्तः सवनीया अनुब्रूहि यजेत्यानीकवतस्य
माध्यंदिनीयाननुवर्तते सांतपनः
प्रैषवन्तः सवनीया अनुब्रूहि यजेति सांतपनस्यर्जुधैकविँश उक्थ्यः
संतिष्ठतेऽहीनसंसतिं करोत्यथ वसतीवरीः परिहृत्य पयाँसि
विशिष्योपवसन्त्यथ सायं गृहमेधीयेन चरत्यथापररात्रे पूर्णदर्व्येना चरत्यथ प्रातराग्नेयं पशुमुपाकरोति

तस्य क्रैडिन उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तते क्रैडिनः
प्रैषवन्तः सवनीया अनुब्रूहि यजेति क्रैडिनस्यर्जुधा त्रिणव उक्थ्यः
संतिष्ठतेऽहीनसंततिं करोत्यथ वसतीवरीः परिहृत्य पयाँ सि
विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति
तस्य प्राजापत्यस्तूपर उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तन्ते महाहवींषि
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषां तृतीयसवनीयाननुवर्तन्ते
महापितृयज्ञहवींषि
स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति
समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये
प्रचरति
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्
ऋजुधा त्रयस्त्रिँ श उक्थ्यः संतिष्ठते
पुरस्ताद्धानासोमानां त्रैयम्भकैश्चरति
समानं कर्मावभृथात्
प्रसिद्धोऽवभृथ उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति

तस्यै वैश्वकर्मण्युपालम्भ्या भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वपति
तावनुवर्तत आदित्यः
प्रैषवन्तौ पशुपुरोडाशवनुब्रूहि यजेत्यादित्यस्य
संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतद्
अथातश्चतुर्षु मासेषु ५७

शुनासीरीयेण सोमेन यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षास्तिस्र उपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्ये मे यज्ञियेऽहन्सुत्या
संपत्स्यत इति

तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँ सि
विशिष्योपवसन्त्यथास्यैताँ रात्रिं वायवे वत्सा अपाकृता भवन्ति
प्रातर्वायव्यं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथाग्नेयं
पशुमुपाकरोति
तस्यैन्द्र ऋषभ उपालम्भ्यो भवति
तस्य प्रातःसवनीयाननुवर्तन्ते शुनासीरीयहवींषि
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषां हविषाम्
ऋजुधा ज्योतिरग्निष्टोमः संतिष्ठते
समानं कर्मावभृथात्
प्रसिद्धोऽवभृथ उदयनीययेष्टयेष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै सौर्युपालम्भ्या भवति
तयोः प्रसिद्धं वपाभ्यां चरित्वा पशुपुरोडाशौ निर्वप्ति

संतिष्ठते यथा द्विपशुः पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वेत्युक्तमेतत्
५८

अथातो ज्योतिरयनमित्याचक्षते
वैश्वदेवेन सोमेन यक्ष्यमाणो भवतीति समानी प्रतिपदेतावदेव नाना
त्रिवृदमुत्राग्निष्टोमो ज्योतिरिहाथातश्चतुर्षु मासेषु वरुणप्रघासेन सोमेन
यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षाः षडुपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या
संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहर्द्वया वत्सा अपाकृता भवन्ति मरुद्भ्यो
वरुणायेति
द्वयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य
पयाँ सि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति

तस्य मारुतो वारुण इत्युपालम्भ्यौ भवतस्
तस्य प्रातःसवनीयाननुवर्तन्ते सप्त वरुणप्रघासहवींषि
स यत्र प्रातःसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति
समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्माध्यंदिनीयाननुवर्तेते वारुणी च कायश्च
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरयोर्हविषोर्ऋजुधा ज्योतिरुक्थ्यः संतिष्ठते
समानमुत्तरं कर्म यथा द्विरात्रे तथाथातश्चतुर्षु मासेषु ५६

साकमेधेन सोमेन यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षाः षडुपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति
तस्यानीकवतः क्रैडिनः प्राजापत्यस्तूपर इत्युपालम्भ्या भवन्ति
तस्य प्रातःसवनीयाननुवर्तत आनीकवतः
प्रैषवन्तः सवनीया अनुब्रूहि यजेत्यानीकवतस्य
माध्यंदिनीयाननुवर्तते सांतपनः
प्रैषवन्तः सवनीया अनुब्रूहि यजेति सांतपनस्य
तृतीयसवनीयाननुवर्तन्ते गृहमेधीयप्रभृतीनि महाहवींषि
स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति
महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जलीये प्रचरति
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्
ऋजुधा ज्योतिरुक्थ्यः संतिष्ठते

समानमुत्तरं कर्म यथा त्रिरात्रे तथा
स उवेव शुनासीरीयः ६०

अथातो महायज्ञ इत्याचक्षते
ज्योतिरतिरात्र इत्येक आहुर्दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति

तस्य तथा संपद्यते
प्रसिद्धेन क्रमणोपवसथादेत्यथास्यैतदहस्त्रया वत्सा अपाकृता भवन्ति
विश्वेभ्यो देवेभ्यो मरुद्भ्यो वरुणायेति
त्रयं पयो दोहयति सांनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाँसि विशिष्योपवसन्त्यथ प्रातस्त्रिवृद्बर्हिस्
तदेकवदेव स्तृणात्यथाग्नेयं पशुमुपाकरोति
तस्य वैश्वदेवो मारुतो वारुण आनीकवतः क्रैडिनः प्राजापत्यस्तूपर ऐन्द्र ऋषभ इत्युपालम्भ्या भवन्ति
तस्य प्रातःसवनीयाननुवर्तन्ते वैश्वदेवहवींषि
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्माध्यंदिनीयाननुवर्तन्ते सर्वाणि वरुणप्रघासहवींषि ६१

स यत्र माध्यंदिनीये सवने धिष्णियान्विहरति तदजस्त्रं मार्जालीयं करोति
समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्निकृत्वा तैर्मार्जालीये प्रचरति
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषां तृतीयसवनीयाननुवर्तन्त आनीकवतप्रभृतीनि महाहवींषि
स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्त्रं मार्जालीयं करोति

महाहविर्भिश्चरित्वा गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरति

प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्
ऋजुधा ज्योतिरतिरात्रः संतिष्ठते
पुरस्ताद्धानासोमानां वाजिनैश्चरित्वा त्रैयम्बकैश्चरति
समानं कर्मावभृथादथैतस्मिन्नवभृथ उपाददते वारुण्यै निष्कासं तुषानिति
वारुणस्य वारुण्यामिक्षाध्यवदानीया भवत्यृजीषेण सह तुषान्संप्रकिरन्ति
प्रसिद्धोऽवभृथ उदयनीययेष्ट्येष्ट्वा मैत्रावरुणीं वशामुपाकरोति
तस्यै द्यावापृथिव्या काया वैश्वकर्मणी सौरीत्युपालम्भ्या भवन्ति
तासां प्रसिद्धं वपाभिश्चरित्वा पशुपुरोडाशान्निर्वपति
ताननुवर्तन्त आदित्यप्रभृतीनि शुनासीरीयहवींषि
प्रैषवन्तः पशुपुरोडाशा अनुब्रूहि यजेतीतरेषाँ हविषां संतिष्ठते यथा पञ्चपशुः
पशुबन्धस्तथाथ पौर्णमासवैमृधाभ्यामिष्ट्वा यजमानायतन उपविश्य त्रेण्या
शलल्या लोहितायसस्य च क्षुरेण शीर्षन्नि च वर्तयते परि च वपते
पुरस्तादेवाग्रेऽथ दक्षिणतोऽथ पश्चादथोत्तरतोऽथोपरिष्टात्
संतिष्ठन्ते चातुर्मास्याः सोमाः संतिष्ठन्ते चातुर्मास्याः सोमाः ६२

## अष्टादशः प्रश्नः

बृहस्पतिसवेन यक्ष्यमाणो भवति
स उपकल्पयतेऽश्वचतुस्त्रिँ शा दक्षिणाः कृष्णाजिनँ सुवर्णरजतौ च रुक्मौ
पर्णमयं पात्रमाज्यमभिषेचनायाथ वै ब्राह्मणं भवति
परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्र इत्येष ह वै परिस्रजी यः
खलतिः परिकेश्योऽथ हैष मिर्मिरो यः शुक्लो
विक्लिधस्तिलकवान्पिङ्गाक्षोऽथ हैष त्रिशुक्रो यस्त्रिवेदो दीक्षते
तस्यैकरात्रीणस्य सोमं क्रीणन्ति
तिस्र उपसदस्
तायते त्रिवृदग्निष्टोमो रथंतरसामा प्रवर्ग्यवान्गायत्रीष्वेक स्तोमः
प्रज्ञातं देवसुवाँ हविषां करणं तस्य बार्हस्पत्योऽतिग्राह्यो बार्हस्पत्यः
पशुरुपालम्भ्यः
समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं
प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य पर्णमये पात्र

ग्राज्यमानीयाभिषिञ्चति बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन्। सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमँ सि ॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण बृहस्पतिसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् १

तस्य प्रातःसवने सन्नेषु नाराशँ सेष्वेकादश दक्षिणा नीयन्त एकादश माध्यंदिने सवने सन्नेषु नाराशँ सेष्वश्वद्वादशास्तृतीयसवने सन्नेषु नाराशँ सेषु
माध्यंदिन एव सवनेऽश्वं दद्यादिति ह स्माह मौद्गल्यः
स वा एष नैमार्जनो यज्ञः
स यथा ह वा इयं गैरेयी नदी निमृजत्येवँ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा पाप्मानं भ्रातृव्यं निमृजन्नेति
स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भ्रेषाच्छान्त्यै
राजा राजसूयेनेजान इच्छति ब्राहस्पतिसवेनाभिषिच्येयेति
तदु वा ग्राहुर्न वै राजसूयाभिषिक्तोऽन्येन यज्ञक्रतुनाभिषिच्येताप्रत्यवरोही ह भवतीत्युभाभ्यां ब्रह्मक्षत्राभ्यामभिषिच्या इत्यभिषिच्येतैवेति
दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसदः
समानमाभिषेकस्य कालादभिषेकस्य काले माध्यंदिनीया एवैनं चमसा निमृजन्तो यन्ति
चतुर्विँश एष भवति

राजा राजसूयेन यक्ष्यमाण ग्राध्यायति त्रिषु वर्णेष्वभिषिक्तेष्वध्यभिषिच्येय पुरोहिते स्थपतौ सूत इति
पुरोहितो दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसदः
समानमाभिषेकस्य कालादभिषेकस्य काले शुक्रामन्थिनोः सँस्त्रावेणाभिषिञ्चति
चतुष्टोम एष भवति २

स्थपति स्थपतिसवेन यक्ष्यमाणो भवति स उपकल्पयत आर्षभं चर्म सुवर्णरजतौ च रुक्मावौदुम्बरं पात्रं दध्यभिषेचनाय
दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसद आग्नेयस्य मारुती पृश्निः पष्ठौह्युपालम्भ्या भवति
सप्त हवींषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्यग्निमुखाद्ध्यृद्धिरित्येतानि
समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतन आर्षभं चर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्यौदुम्बरे पात्रे दध्यानीयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण स्थपतिसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्
स एष स्थपतिसवः सप्तदशोऽग्निष्टोम एष हैनेनातः पूर्वमीजिरे ३

सूतः सूतसवेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनँ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रँ हिरण्यं घृतमभिषेचनाय
दीक्षते
तस्य तिस्रो दीक्षास्तिस्र उपसदोऽष्टौ हवींषि प्रातःसवनीयाननुवर्तन्ते यदाग्नेयो भवत्याग्नेयो वै ब्राह्मण इत्येतानि
समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे घृतमानीय हिरण्येनोत्पूयाभिषिञ्चति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सूतसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्
स एष सूतसवः सप्तदशोऽग्निष्टोम एष एव सूतसव एष ग्रामणीसव एष ऋतुसव ऋतवो हैनेनातः पूर्वमीजिरे ४

सोमसवेन यक्ष्यमाणो भवति स उपकल्पयते सौमीँ सूतवशां कृष्णाजिनँ सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं पयोऽभिषेचनायाथ वै ब्राह्मणं भवति यत्किंच राजसूयमृते सोमं तत्सर्वं भवतीति
स ग्रामावास्येन हविषेष्ट्वाष्टावहान्यानुमतप्रभृतिभिरेति संवत्सरं चातुर्मास्यैः सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाँ हविर्भिर्यजतेऽथ देवसुवाँ हविर्भिर्यजतेऽथैताँ सौमीँ सूतवशामालभते
तस्या ग्रसमुदिते यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे पय ग्रानीयाभिषिञ्चत्यषाढं युत्सु पृतनासु पप्रिं सुवर्षामप्स्वां वृजनस्य गोपाम्। भरेषुजाँ सुक्षितिँ सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण सोमसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादथ सँसृपाँ हविर्भिर्यजतेऽथ पञ्चहविषा दिशामवेष्ट्या यजतेऽथ द्विपशुना पशुबन्धेन यजतेऽथ सात्यदूतानाँ हविर्भिर्यजतेऽथ पूर्वैः प्रयुजाँ हविर्भिर्यजतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाँ हविर्भिर्यजतेऽथ देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ सौत्रामण्या यजते संतिष्ठते सोमसवोऽर्धचतुर्दशैर्मासैः ५

पृथिसवेन यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहँ सुवर्णरजतौ च रुक्मावौदुम्बरं द्रोणं चतुःस्रक्ति चतुष्टयीरपो दिग्भ्यः संभृता ग्रथ वै ब्राह्मणं भवति

यत्किंच राजसूयमनुत्तरवेदीकं तत्सर्वं भवतीति
स ग्रामावास्येन हविषेष्ट्वाष्टावहान्यानुमतप्रभृतिभिरेति
सप्तेन्द्रतुरीयप्रभृतिभिरथ रत्निनाँ हविर्भिर्यजतेऽथ देवसुवाँ हविर्भिर्यजतेऽथैतां चतुर्हविषमिष्टिं निर्वपत्याग्नेयमष्टाकपालमैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुमिति
तस्या ग्रसमुदिते यजमानायतने रोहितं चर्मानडुहं

प्राचीनग्रीवमुत्तरलोमोपस्तृणाति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे चतुष्टयीरपः समवनीयाभिषिञ्चति ये मे पञ्चाशतं ददुरश्वानाँ सधस्तुतिः । द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम्॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण पृथिसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादथ सँसृपाँ हविर्भिर्यजतेऽथ पञ्चहविषा दिशामवेष्ट्या यजतेऽथोपातीत्य द्विपशुं पशुबन्धँ सात्यदूतानाँ हविर्भिर्यजतेऽथ पूर्वैः प्रयुजाँ हविर्भिर्यजतेऽथ पौर्णमासवैमृधाभ्यामिष्ट्वोत्तरैः प्रयुजाँ हविर्भिर्यजतेऽथ देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ सौत्रामण्या यजते संतिष्ठते पृथिसवोऽध्यर्धेन मासेन ६

गोसवेन यक्ष्यमाणो भवति स उपकल्पयतेऽयुतं दक्षिणाः सुवर्णरजतौ च रुक्मौ पर्णमयं पात्रं प्रतिधुगभिषेचनाय
दीक्षते
तस्य षड्दीक्षाः षडुपसदः
समानमाभिषेकस्य कालादभिषेकस्य काले यजमानायतने कृष्णाजिनमात्रं वेदेरनुद्धतं भवति
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्य पर्णमये पात्रे प्रतिधुगानीय बृहत स्तोत्रं प्रत्यभिषिञ्चति रेवज्जातः सहसा वृद्धः क्षत्राणां क्षत्रभृत्तमो वयोधाः । महान्महित्वे तस्तभानः क्षत्रे राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि ॥
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याँ सरस्वत्यै वाचो यन्तुर्यन्त्रेण गोसवेनाभिषिञ्चामीति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात्
स एष गोसवः षट्त्रिँशः सर्व उक्थ्य उभयसामायुतदक्षिणः
पवमाने कण्वरथंतरं कुर्वन्ति ७

ओदनसवेन यक्ष्यमाणो भवति स उपकल्पयते रोहितं चर्मानडुहँ

सुवर्णरजतौ च रुक्मौ शतमानं च प्रवर्तं चतुरो वर्णान्ब्राह्मणँ राजन्यं वैश्यँ शूद्रं चतुरो रसान्मधु सुरां पय अपश्चत्वारि पात्राणि सौवर्णँ राजतं काँस्यं मृन्मयं चतस्रो दक्षिणाः शतमानँ हिरण्यं तिसृधन्वमष्ट्रां माषैः पूर्णं कमण्डलुं चतुष्टयीः शलाकाः पर्णमय्यौ नैयग्रोध्यावाश्वत्थ्यौ फाल्गुनपाच्यौ चत्वारि नानावृक्ष्याणि पात्राणि सक्तूँस्त्रीणि दर्भपुञ्जीलान्यौदुम्बरं द्रोणं चतुःस्रक्ति चतुषटयीरपो दिग्भ्यः संभृताः शतं च रथं चैतेनोपक्लृप्तेन रोहिणीमायतीमुपरमत्यथ रोहिण्येति पूर्वाग्निमन्ववस्यत्युत्तपनीयँ शालीनोऽन्वाहार्यपचनमाहिताग्निरथाध्वर्युरपरात्र आद्रुत्य सँशास्त्येकौदनँ श्रपयतेति

तं तथा श्रपयन्ति यथा पुरादित्यस्योदयाच्छृतो भवत्युद्यता सूर्येण कार्य इति ब्राह्मणम्

अथैतमोदनँ श्रपयित्वाभिघार्योदञ्चमुद्वासयत्यथैतां पात्रीं निर्णिज्योपस्तीर्य तस्यामेनमसंघ्नन्निवोद्धरति

सर्पिरासेचनं कृत्वा प्रभूतमाज्यमानीयाथैताँश्चतुरो वर्णान्दक्षिणत उदङ्मुखानुपवेशयत्यथान्वारब्धे यजमाने जुहोति सिँहे व्याघ्र उत या पृदाकविति चतस्रः स्रुवाहुतीर्

हुत्वाहुत्वैव सँस्रावैः प्रवर्तमभिघारयति राडसि विराडसि सम्राडसि स्वराडसीत्यथैतं प्रवर्तमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधाति ८

अथैतत्सौवर्णं पात्रं याचति

तस्मिँ स्तिरः पवित्रं मध्वानीय सक्तूनोप्य पर्णमयीभ्याँ शलाकाभ्यामुपमन्थतीन्द्राय त्वा तेजस्वते तेजस्वन्तँ श्रीणामीति

तेजोऽसीति ब्राह्मणाय प्रयच्छति

तत्ते प्रयच्छामीति ब्राह्मणः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे तेजस्वदस्तु मे मुखं तेजस्वच्छिरो अस्तु मे । तेजस्वान्विश्वतः प्रत्यङ्तेजसा संपिपृग्धि मेति

त्रिराचम्य प्रशँसति

तस्मा एतच्चैव पात्रं ददाति शतमानं च हिरण्यम्

अथैतद्राजतं पात्रं याचति

तस्मिँ स्तिरः पवित्रँ सुरामानीय सक्तूनोप्य नैयग्रोधीभ्याँ

शलाकाभ्यामुपमन्थतीन्द्राय त्वौजस्वत ओजस्वन्तँ श्रीणामीत्योजोऽसीति राजन्याय प्रयच्छति
तत्ते प्रयच्छामीति राजन्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट ओजस्वदस्तु मे मुखमोजस्वच्छिरो अस्तु मे । ओजस्वान्विश्वतः प्रत्यङ्ङोजसा संपिपृग्धि मेति
त्रिराचम्य प्रशँसति
तमा एतच्चैव पात्रं ददाति तिसृधन्वं चाथैतत्काँस्यं पात्रं याचति
तस्मिँ स्तिरः पवित्रं पय आनीय सक्तूनोप्याश्वत्थीभ्याँ
शलाकाभ्यामुपमन्थतीन्द्राय त्वा पयस्वते पयस्वन्तँ श्रीणामीति
पयोऽसीति वैश्याय प्रयच्छति

तत्ते प्रयच्छामीति वैश्यः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्टे पयस्वदस्तु मे मुखम्पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ्पयसा संपिपृग्धि मेति
त्रिराचम्य प्रशँसति
तस्मा एतच्चैव पात्रं ददात्यष्ट्रां चाथैतन्मृन्मयं पात्रं याचति
तस्मिँ स्तिरः पवित्रमप आनीय सक्तूनोप्य फाल्गुनपाचीभ्याँ
शलाकाभ्यामुपमन्थतीन्द्राय त्वायुष्मत आयुष्मन्तँ श्रीणामीत्यायुरसीति शूद्राय प्रयच्छति
तत्ते प्रयच्छामीति शूद्रः प्रतिगृह्णात्यथ यजमानो मुखं विमृष्ट आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तु मे । आयुष्मान्विश्वतः प्रत्यङ्ङायुषा संपिपृग्धि मेति
त्रिराचम्य प्रशँसति
तस्मा एतच्चैव पात्रं ददाति माषैश्च पूर्णं कमण्डलुम्
अथैतमोदनमभ्युत्सृप्य प्राश्नाति
तस्य यन्न सहते तदप्सु प्रवेशयत्यथ हिरण्याद्धृतं निष्पिबति
निष्पिबन्तमनुमन्त्रयत इममग्न आयुषे वर्चसे कृधि प्रियँ रेतो वरुण सोम राजन्। मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासदित्यथैतं प्रवर्तमद्भिः प्रक्षाल्य दक्षिणे कर्ण आबध्नीत आयुष्टे विश्वतो दधदित्यथैनमनुपरिवर्तयत आयुरसि विश्वायुरसि सर्वायुरसि सर्वमायुरसीत्यथैनं त्रिभिर्दर्भपुञ्जीलैः पवयति यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासाँ रुचाभिषिञ्चामि वर्चसेत्

अथास्य दक्षिणमक्षिकटं न्यचति समुद्र इवासि गह्मना सोम इवास्यदाभ्यः । अग्निरिव विश्वतः प्रत्यङ्सूर्य इव ज्योतिषा विभूरिति ९

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थातौदुम्बरे द्रोणे चतुष्टयीरपः समवनीय चतुरो ग्रहान्गृह्णात्यपां यो द्रवणे रसस्तमहमस्मा आमुष्यायणाय तेजसे ब्रह्मवर्चसाय गृह्णामीति पर्णमयेनापां य ऊर्मौ रसस्तमहमस्मा आमुष्यायणायौजसे वीर्याय गृह्णामीति नैयग्रोधेनापां यो मध्यतो रसस्तमहमस्मा आमुष्यायणाय पुष्ट्यै प्रजननाय गृह्णामीत्याश्वत्थेनापां यो यज्ञियो रसस्तमहमस्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामीत्यौदुम्बरेणाथैतद्रोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्याभिषिञ्चत्यपां यो द्रवणे रसस्तेनाहमिममामुष्यायणं तेजसे ब्रह्मवर्चसायाभिषिञ्चामीति पर्णमयेनापां य ऊर्मौ रसस्तेनाहमिममामुष्यायणमोजसे वीर्यायाभिषिञ्चामीति नैयग्रोधेनापां यो मध्यतो रसस्तेनाहमिममामुष्यायणं पुष्ट्यै प्रजननायाभिषिञ्चामीत्याश्वत्थेनापां यो यज्ञियो रसस्तेनाहमिममामुष्यायणमायुषे दीर्घायुत्वायाभिषिञ्चामीत्यौदुम्बरेण

समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनादुत्तरत एतद्धूपायितँ शतं तिष्ठति रथश्च

तदभिप्रैत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यविति रथमातिष्ठत्यातिष्ठ वृत्रहन्निति प्रतिपद्यायं पृणक्तु रजसी उपस्थमित्यातोऽथैतच्छतं त्रिः प्रदक्षिणं परियाय पुरस्कृत्यायाति तदध्वर्यवे ददाति

स एष ओदनसवो राज्ञो वा ब्राह्मणस्य वा वैश्यस्य वा पुष्टिकामस्य यज्ञः १०

पञ्चशारदीयेन यक्ष्यमाणो भवति

स उपकल्पयते सप्तदश निरष्टान्वत्सतरानेकहायनान्

स पुरस्तान्मार्गशीर्ष्यै पौर्णमास्या आमावास्येन हविषेष्ट्वा सपतदश मारुतीः

पृश्नीर्वत्सतरीरालभतेऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिः सँस्थां कुर्वन्ति
संवत्सरे पर्यवेते मरुद्भ्यः सांतपनेभ्यः सप्तदश
पृषतीर्वत्सतरीरालभतेऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सँस्थां कुर्वन्ति
द्वितीये संवत्सरे पर्यवेते मरुद्भ्यो गृहमेधिभ्यः सप्तदश
कल्माषीर्वत्सतरीरालभतेऽभिप्रोक्षणतो
वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सँस्थां कुर्वन्ति
तृतीये संवत्सरे पर्यवेते मरुद्भ्यः क्रीडिभ्यः सप्तदशावलिप्ता
वत्सतरीरालभतेऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सँस्थां कुर्वन्ति
चतुर्थे संवत्सरे पर्यवेते मरुद्भ्यः स्वतवद्भ्यः सप्तदश राजीवा
वत्सतरीरालभतेऽभिप्रोक्षणतो वत्सतरान्स्थापयित्वोत्सृजन्त्यथेतराभिरेव सँस्थां कुर्वन्त्येतदेवाहर्दीक्षते
संवत्सरमुख्यं बिभर्ति
द्वादशोपसदस्
तस्याहानि त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशोऽतिरात्रस्
तस्य मारुत स्तोमो भवत्यथैतेषां पशूनां त्रयः प्रथमेऽहन्नैन्द्रामारुता उक्षाणः सवनीया आलभ्यन्त एवं द्वितीय एवं तृतीय एवं चतुर्थे
पञ्चोत्तमेऽहन्नालभ्यन्ते
वर्षिष्ठमिव ह्येतदहर्मन्यन्ते वर्षिष्ठः समानानां भवतीति ब्राह्मणम्
अथैतेषां पशूनां यदि नश्यति म्रियते वा याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं तद्दैवत्यं तद्रूपं तज्जातीयं पशुमालभन्ते
स एष पञ्चशारदीयो राज्ञो वा ब्राह्मणस्य वा
यः कामयेत बहोर्भूयान्स्यामिति स पञ्चशारदीयेन यज्ञक्रतुना यजेत

बहोरेव भूयान्भवति ११

अग्निष्टुता यक्ष्यमाणो भवति

तस्य सर्वमेव समानम्पुरोरुच एवान्या अस्याजरासोऽग्न आयूँषि पवस इत्यैन्द्रवायवस्य
यजा नो मित्रावरुणेति मैत्रावरुणस्याश्विना पिबतँ सुतमित्याश्विनस्य
द्वे विरूपे चरतः पूर्वापरं चरतो माययैतविति शुक्रामन्थिनोस्
त्रीणि शता त्री षहस्राण्यग्निमित्याग्रयणस्य
नियुनक्त्युक्थ्यस्य
नित्या ध्रुवस्याग्निनाग्निः समिध्यत इत्यैन्द्राग्नस्याग्निर्देवानां जठरमिति वैश्वदेवस्याग्निश्रियो यदुत्तम ईडे अग्निँ स्ववसमिति तिस्रो मरुत्वतीयानां श्रुधि श्रुत्कर्ण वह्निभिरिति माहेन्द्रस्य
विश्वेषामदितिर्यज्ञियानां त्वे अग्ने त्वामग्न इति तिस्र आदित्यस्य ग्रहस्य
नि त्वा यज्ञस्य साधनमिति सावित्रस्य
नित्या पात्नीवतस्य
नियुनक्ति हारियोजनस्य
स एष त्रिवृदग्निष्टुत्पवित्रं यथा ह वा इदं दावादभिदूना अभिवृष्टाः पुनर्णवा ओषधयो समुत्तिष्ठन्त्येवँ ह वा एष एतेन यज्ञक्रतुनेष्ट्वा शुचिः पूतो मेध्यो भवति
स यदि मुखेन पापकृन्मन्येत त्रिवृतं कुर्वीतैष ह वै मुखेन पापं करोति योऽनूचानस्य वा मुनेर्वा दुरवगतमवगच्छति

यदि बाहुभ्यां पञ्चदशं कुर्वीतैष ह वै बाहुभ्यां पापं करोति यो ब्राह्मणायोद्यच्छते
यद्युदरेण सप्तदशं कुर्वीतैष ह वा उदरेण पापं करोति योऽनाश्यान्नस्यान्नमश्नाति
यदि पद्मामेकविँशं कुर्वीतैष ह वै पद्मां पापं करोति १२

य आरट्टान्वा गान्धारान्वा सौवीरान्वा करस्करान्वा कलिङ्गान्वा गच्छति
स यदि सर्वश एव पापकृन्मन्येत चतुष्टोमेनाग्निष्टोमेन यजेत
तेन हैतेनर्तुपर्णो भाङ्गाश्विन ईजे शफालानाँ राजा
तेन हेष्ट्वा गृगयामभिप्रययौ
तँ हेन्द्रोऽनुख्यायैवेद्मां चक्रेऽहमु त्वा तद्यातये यन्मा यज्ञक्रतोरन्तराय इति

स ह स्विन्न उदकमभ्यवेयाय
तँ ह तत्रैव स्त्रियं चकार
सा सुदेवला नामास सा हैतदेव राष्ट्रमभ्यारुरोह
सा स्त्री सती पुत्रान्जनयां चकार
तेभ्यो हेन्द्रः समदं दधौ
ते हता विदृढाः शिश्यिरे
तानुभयानन्तरेण रुदन्त्यासां चक्रेऽथो हेन्द्र आजगाम
तामु हाभ्युपेयाय
ताँ होवाच सुदेवला३ इति
भगव इति
प्रियं तवैतदिति
किं मे भगवः प्रियं भवैष्यतीत्येवं वै मम तदप्रियमासीद्यन्मा
यज्ञक्रतोरन्तरायो वृणीष्व नु यतरे ते पुत्रा जीवेयुरिति
यानेव भगव स्त्री सत्यध्यगममिति होवाच
तस्मादाहुः स्त्रियाः पुत्राः प्रेयाँसो भवन्तीति
स एतस्मिन्नेव पूर्वपक्षे चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भ्रेषाच्छान्त्यै १३

इन्द्रस्तुता यक्ष्यमाणो भवति
तस्य सर्वमेव समानं पुरोरुच एवान्यास्
तिष्ठा हरी कस्य वृषा सुते सचेत्यैन्द्रवायवस्येन्द्रं वयं महाधन इति
मैत्रावरुणस्य
द्विता यो वृत्रहन्तम इत्याश्विनस्य
स सूर आजनयज्ज्योतिरिन्द्रमुत त्यदाश्वश्वियमिति
शुक्रामन्थिनोर्भरेष्विन्द्रमित्याग्रयणस्य
नित्योक्थ्यस्य
नियुनक्ति ध्रुवस्य
महि क्षेत्रं पुरुश्चन्द्रमित्यैन्द्राग्नस्योरुं नो लोकमनुनेषि विद्वानिति वैश्वदेवस्य
नित्या मरुत्वतीयानां नित्या माहेन्द्रस्या नो विश्वाभिरूतिभिः कदाचन
स्तरीरसीन्द्राय गाव आशिरमिति तिस्र आदित्यस्य ग्रहस्येमां ते धियमिति
सावित्रस्य

नियुनक्ति पात्नीवतस्य
नित्या हारियोजनस्य
स एष पञ्चदश इन्द्रस्तुदिन्द्रियकामस्य
यो वा ज्येष्ठबन्धुरपभूतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव ज्येष्ठताम्
१४

अप्तोर्यामेण यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदस्
त्रिवृद्बहिष्पवमानः पञ्चदशँ होतुराज्यँ सप्तदशं मैत्रावरुणस्यैकविँशं ब्राह्मणाच्छँसिनस्त्रिणवमच्छावाकस्य
त्रयस्त्रिँशो माध्यंदिनः पवमानश्चतुर्विँशँ होतुः पृष्ठँ रथंतरं च वैराजं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति
चतुश्चत्वारिँशं मैत्रावरुणस्य वामदेव्यं च शक्वरं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्यष्टाचत्वारिँशं ब्राह्मणाच्छँसिनो नौधसं च वैरूपं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्त्येकविँशमच्छावाकस्य कालेयं च रैवतं च सामनी अन्यतरेणान्यतरत्परिष्टुवन्ति
तमेतमष्टापृष्ठ इति छन्दोगा आचक्षते
त्रिणव आर्भवः पवमानस्त्रयस्त्रिँशमग्निष्टोमसामैकविँशान्युक्थ्यानि सषोडशिकानि पञ्चदशानीतराणि त्रिवृद्राथंतरः सन्धिस्

तत्क्षुद्राः पशवोऽतिशेदुः
सोमो वा एतदतिरिच्यमान इयाय
ते देवा अब्रुवन्नप्तोर्वा अयमत्यरेचि तस्य को याम इति
तदप्तोर्यामस्याप्तोर्यामत्वं तस्मा एतान्यतिरिक्तस्तोत्राण्यवकल्पयां चक्रुस्त्रिवृद्धोतुर्जराबोधीयं पञ्चदशं मैत्रावरुणस्य सौहविषँ सप्तदशं ब्राह्मणाच्छँसिन उद्वँशीयमेकविँशमच्छावाकस्य वारवन्तीयं तदु वा आहुर्यदच्छावाकचमसमनु यज्ञः संतिष्ठेतान्तं यज्ञं गमयेदथो हान्तं यजमानो गामुकः स्याधोत्र एव स्तुवीरन्होतानुशँस्यात्तथा मध्यतो यज्ञः समाधीयत इति

तदु वा ग्राहुः सर्वाण्येवाश्विनानि स्तुतशस्त्राणि स्युर्यद्ध किंच
रात्रिमुपातिरिच्यते सर्वं तदाश्विनमिति न्वेकम्
ग्रथापरं त्रिवृत्पञ्चदशँ सप्तदशमेकविँशम्

ग्रथैतेषां देवता ग्रग्निरिन्द्रो विश्वे देवा विष्णुरिति १५

मृत्युसवेन यद्मयमाणो भवति
स उपकल्पयते शार्दूलचर्म सुवर्णरजतौ च रुक्मौ वैयाघ्र्यावुपानहौ
चार्मपद्मयावुपानहौ वृष्णिवाससं च न्नौमं च तिसृधन्वमासन्दीँ साधीवासं
दुन्दुभिं विमितमौदुम्बरं द्रोणं चतुःस्त्रक्ति चतुष्टयीरपो दिग्भ्यः संभृताः शतं
च रथं चैतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यथ चित्रयेति
पूर्वाग्निमन्ववस्यत्युत्तपनीयँ शालीनोऽन्वाहार्यपचनमाहिताग्निरथान्वारब्धे
यजमाने जुहोति व्याघ्रोऽयमग्नौ चरति प्रविष्ट इति षट्स्रुवाहुतीरथ
यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्ते शिल्पं
कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्त्सूर्या ग्रर्पिताः सप्त
साकं तस्मिन्राजानमधिविश्रयेममित्यथ वैयाघ्र्यावुपानहावुपमुञ्चते
द्यौरसीति दन्निणे पादे पृथिव्यसीत्युत्तरेऽथ दन्निणं जान्वाच्याभिसर्पति
व्याघ्रो वैयाघ्रेऽधि विश्रयस्व दिशो महीः । विशस्त्वा सर्वा वाञ्छन्तु मा
त्वद्राष्ट्रमधि भ्राशदित्यथास्मै धनुः प्रयच्छति यथा राजसूये तथा
तद्यजमानं प्राञ्चमुपवेश्य सुवर्णरजताभ्याँ रुक्माभ्यां पर्युपास्यौदुम्बरे द्रोणे
चतुष्टयीरपः समवनीयाभिषिञ्चति १६

या दिव्या ग्रापः पयसा संबभूवुर्या ग्रन्तरिन्न उत पार्थिवीर्याः । तासां त्वा
सर्वासाँ रुचाभिषिञ्चामि वर्चसा ॥
ग्रभि त्वा वर्चसासिचं दिव्येन पयसा सह । यथासा राष्ट्रवर्धनस्तथा त्वा
सविता करत्॥
इन्द्रं विश्वा ग्रवीवृधन्समुद्रव्यचसं गिरः । रथीतमँ रथीनाम्वाजानां सत्पतिं
पतिम्॥
वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसेति पुरस्तादेता एव
तिस्रोऽनुद्रुत्य रुद्रास्त्वा दन्निणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसेति दन्निणत एता

एव तिस्रोऽनुद्रुत्यादित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसेति पश्चादेता
एव तिस्रोऽनुद्रुत्य विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसेत्युत्तरत
एता एव तिस्रोऽनुद्रुत्य बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन
छन्दसेत्युपरिष्टादथास्योर ऊर्ध्वमुन्मृज्यतेऽरुणं त्वा वृकमुग्रं
स्वजंकरमित्यथास्य बाहू अनुमार्ष्टि प्र बाहवा सिसृतं जीवसे न
इत्यथैनावुपावहरतीन्द्रस्य ते वीर्यकृतो बाहू उपावहरामीत्यत्रास्मै धनुः
प्रयच्छति यदि पुरस्तादप्रत्तं भवति
समुन्मृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनाद्
उत्तरत एतद्रूपायितँ शतं तिष्ठति रथश्च
तदभिप्रैत्यभिप्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ वृत्रहन्तमस्तुभ्यं देवा
अधिब्रवन्नित्यथ रथस्य पक्षसी संमृशत्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं
वाताग्रमनु संचरन्तौ । दूरेहेतिरिन्द्रियावान्पतत्री ते नोऽग्नयः पप्रयः
पारयन्त्वित्यथ रथमुपतिष्ठते नमस्त ऋषे गदेत्यथ रश्मीनादत्त एवा
ब्रह्मन्तवेदस्तु तिष्ठा रथे अधि यद्वज्रहस्तः । आ रश्मीन्देव युवसे स्वश्व इति
रथमातिष्ठत्यातिष्ठ वृत्रहन्नथमातिष्ठन्तं पर्यनु त्वेन्द्रो मदत्विन्द्रं विश्वा
अवीवृधन्नित्यातोऽत्र धनुरधिज्यं कुरुते परि मा सेन्या
घोषास्तन्मेऽनुमतिरनुमन्यतामिति द्वाभ्याम्
अथैतच्छतं त्रिः प्रदक्षिणं परियाय पुरस्कृत्यायात्यत्रास्मै प्रत्यवरोहणत
आसन्दीं निदधाति

तां तथा प्रत्यवरोहति यथा राजसूये तथा १७

यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता वारुणेन शृतेनोपरमति
वारुणस्य वारुणयौ भवतः स्विष्टकृतः स्विष्टवत्यवत्रास्मा एतच्छतं
ददात्यथैनं विमितेनाभिविघ्नन्ति
तस्योत्तरार्धे दुन्दुभिमासञ्जयति
तमस्तंयात्यादित्य आघ्नन्त्यथैनँ सँशास्ति यजमान वाचं यच्छ राष्ट्रे च
जागृहीति
सोऽत ऊर्ध्वं वाचंयमो भवति
स यत्किंच व्याहरति ददामीत्येव व्याहरत्युपसंगच्छन्त एनमेते राजगृहाः

सूतग्रामरयः क्षत्रसंग्रहीतारः कारुविशा इति
तेभ्यः पष्ठौहीं वेहतं ददाति
तां ते पचमाना रमयन्तो जागरयन्त श्रासतेऽथाध्वर्युरपररात्र श्राद्रुत्य
चतुष्टयीनामपां प्ररेके मन्थमुपमथ्यावघ्राय वानवघ्राय वा प्रयच्छति
तँ स भक्षयति तूष्णीम्
श्रथैनं नवनीतेनाभ्यनक्त्येना व्याघ्रं परिषस्वजाना
इत्यथादित्यमुद्यन्तमुपतिष्ठत उदसावेतु सूर्य उदिदं मामकं वचः । उदिहि देव सूर्य सह वग्नुना मम । श्रहं वाचो विवाचनम्मयि वागस्तु धर्णसिरिति

राजगृहान्विप्रव्रजतोऽनुमन्त्रयते यन्तु नदयो वर्षन्तु पर्जन्याः सुपिप्पला श्रोषधयो भवन्तु । श्रन्नवतामोदनवतामामिक्षवतामेषाँ राजा भूयासमिति
१८

श्रत्रैतद्द्वादशाहं व्रतं चरति
स यदि प्राङ्वोदङ्वोच्चरति चार्मपक्षीभ्यां क्षौमं वसानोऽथ यदि दक्षिणतः पश्चाद्वा वैयाघ्रीभ्यां वृष्णिवाससं वसानोऽथ द्वादशसु व्युष्टासु द्वे स्रुवाहुती जुहोति ये केशिनो नर्त इति द्वाभ्याम्
श्रथ प्रोष्ठमारोहत्यारोह प्रोष्ठं विषहस्व शत्रूनित्यथास्य शिरः प्रमन्दयति यत्सीमन्तं कङ्कतस्ते लिलेखेत्यथास्य केशान्वपति येनावपत्सविता क्षुरेणेति प्रवपतोऽनुमन्त्रयते मा ते केशाननुगाद्वर्च एतदित्यथैनान्समुच्चित्य दर्भस्तब्मे निदधाति तेभ्यो निधानं बहुधा व्यैच्छन्नित्यथैनमुष्णोदकेनाप्लावयति बलं ते बाहुवोः सविता दधात्विति
तेन हैतेन मृत्युरीजे प्रजानामैश्वर्यमाधिपत्यँ राज्यं परीयामिति
ततो वै स प्रजानामैश्वर्यमाधिपत्यँ राज्यं पर्यैद्यः कामयेत
समानानामैश्वर्यमाधिपत्यँ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत
समानानामैश्वर्यमाधिपत्यँ राज्यं पर्येत्यथ हैतेन सुरथः शैव्य ईज श्रातिष्ठ्यं परमतामियामिति

ततो वै स श्रातिष्ठ्यं परमतामैद्यः कामयेतातिष्ठ्यं परमतामियामिति स एतेन यज्ञक्रतुना यजेतातिष्ठ्यँ हैव परमतामेति १९

सद्यस्क्रिया यक्ष्यमाणो भवति
स यूप्यं च वृक्षं छेदयति लाङ्गल्यं चेषां यूप्यस्य कारयति लाङ्गलं
लाङ्गल्यस्य
तौ सँहत्य भुञ्जते वा नि वा दधत्यथास्यैतत्पुरस्तादेव जुष्टे देवयजने वेदि-
संमितं विमितं कारितं भवति
तदेतेन लाङ्गलेन परिहर्यं क्रषयति
तस्मिञ्जघन्यवाप्यान्यवान्वापयित्वा परिघातयत्यथास्यैते रथा उपक्लृप्ता
भवन्ति चतुर्युक्प्रष्टिवाही द्वियोग स्थूरिरिति
तेषु काल एव दधिविनालानासञ्जयन्ति
स ग्रीष्मस्य जघन्याहःसु प्रजहितेषु यवेष्वृत्विजः पदेनाह्वापयतीष्ट्या वा मा
याजयिष्यथ भक्तं वा वः कारयिष्यामीति
तेषूपसमेतेषु काल एव प्रातरग्निहोत्रं जुहोत्युपसंगच्छन्त एनमेत
ऋत्विजोऽथैनानाह सद्यस्क्रिया मा याजयतेति
तं तथेतीतरे प्रत्याहुस्
तस्मै तदानीमेव सद्यस्कायाँ शालां कुर्वन्ति

तं तदानीमेव तीर्थादानीय पवयित्वा दीक्षणीयामिष्टिं निर्वपति
तस्याँ सँस्थितायां मुष्टी चैव न करोति वाचं च न यच्छति
निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनम्
अथ प्रायणीयामिष्टिं निर्वपति
हविष्कृता वाचं विसृजतेऽत्रास्मा एतद्धविरुच्छिष्टं प्रयच्छन्ति व्रतभाजनमेतत्
प्रसूता एवैते रथा आजिं धावन्ति
योजनं प्राक्चतुर्युक्त्रैपदं दक्षिणा प्रष्टिवाही
गव्यूतिं पश्चाद्द्वियोगः
क्रोशमुदक्स्थूरिरिति
ते येनयेन संगच्छन्ते तस्मा आवेदयन्ते यजतेऽयमसावामुष्यायणोऽमुष्य
पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता सद्यस्क्रियेत्यायन्ति रथा आगतेषु रथेषु
यद्विनालेषु नवनीतमुत्सीदति तद्विलाप्योत्पूयाज्यकुम्भे प्रत्यस्यति सद्यस्ताया
इति २०

अथ प्रायणीयेन चरति
प्रायणीयेन चरित्वा पदेन चरति
पदेन चरित्वा त्रिवत्सेन साण्डेन वत्सतरेण राजानं क्रीत्वोह्यातिथ्यं
निर्वपत्यातिथ्येन प्रचर्यैकगणा उपसदो भवन्ति
मध्यमयोपसदा प्रचर्योत्तरवेद्यै काले खलेवालीं मापयत्यथानडुहः संयुज्य
यवान्प्रकृत्य मृणन्ति
यवपुरीषैवोत्तरवेदिर्भवत्यथ मध्येऽनडुहः संयुज्य प्राचो यवान्प्रगृह्णन्तो यन्ति
यवबर्हिरेवैषा महावेदिर्भवत्यथाहवनीयं प्रणयत्याहवनीयं प्रणीय सदो-
हविर्धाने संमिनोति
सदोहविर्धाने संमित्याग्नीषोमौ प्रणयत्यग्नीषोमौ प्रणीय वसतीवरीर्गृह्णाति
तास्तदानीमेव परिहृत्य प्रातरनुवाकमुपाकरोति
परिहिते प्रातरनुवाकेऽपोऽच्छैत्यद्भिरुदैत्यग्निष्टोमं क्रतुमुपैति
प्रसिद्धोऽभिषवः
प्रसिद्धं ग्रहा गृह्यन्ते
समानं कर्माश्विनाद्ग्राहादाश्विनं ग्रहं गृहीत्वा तिस्रो रशना आदाय
लाङ्गल्यामभ्यैति
तस्यै कटे परमिव चषालभाजनं भवति
शकलान्तां
लाङ्गल्यामुत्सृज्याथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेयमनूबन्ध्यमिति

तेषामनूचीनं वपाभिराद्रवन्ति २१

अग्नीषोमीयस्याध्वर्युर्वपया प्रथमया प्रपद्यतेऽनूची इतरे आहरन्ति
परिहितासु स्तोकीयासु शृतासु वपास्वग्नीषोमीयस्य वपया प्रचरति
परीतरे शाययन्ति
प्रातःसवनीयानामग्नीषोमीयस्य पशुपुरोडाशो मुख्यो भवति
स्तुते माध्यंदिने पवमानेऽग्नीषोमीयेण चरत्यनन्तर्हित आग्नेयस्य वपया चरति
स्वे धामन्नाग्नेयेन चरत्यनन्तर्हित एवानूबन्ध्यस्य वपया चरति
तृतीयसवनीयानामनूबन्ध्यस्य पशुपुरोडाशो मुख्यो भवत्यसमुदितेऽनूबन्ध्येन

चरति
संतिष्ठते सद्यस्क्री
तस्य यदसद्यस्क्रियते व्यृद्धमेवास्य तत्पुनर्यज्ञ एवास्य तदथादित्याश्च ह वा
अङ्गिरसश्च सुवर्गे लोके पस्पृधिरे
तेऽङ्गिरस आदित्यानभिप्रजग्मुरग्निना दूतेन श्वःसुत्या न इत्य्
अथास्माकमद्यसुत्येति २२

आदित्याः प्रोचुस्
तेषां नस्त्वँ होतेति
तेऽमुमादित्यमश्वँ श्वेतं भूतं दक्षिणां निन्यिरे हिरण्याभिभूतरशनं
तस्मात्सद्यस्क्रियै श्वेताश्वो दक्षिणा हिरण्याभिभूतरशनो यच्छ्वेताश्व
आदित्यस्य तद्रूपम्
अथ यद्धिरण्याभिभूतरशनो रश्मीनां तत्
तस्य त्रिवृतः सतश्चतुर्विँशौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिँ शँ होतुः पृष्ठं
चतुर्विँशमग्निष्टोमसाम
त्रिवृदन्यत्सर्वं श्वेतमश्वं ददात्यनुक्रिया यक्ष्यमाणो व्रीहिषु दीक्षते
स द्व्यहेन संतिष्ठत औपवसथ्यादेकमहः सुत्यमेकमहस्
तस्य त्रिवृत एव सतश्चत्वारिँ शौ माध्यंदिनार्भवौ भवतश्चतुश्चत्वारिँ शँ होतुः
पृष्ठं चतुश्चत्वारिँ शमग्निष्टोमसाम
त्रिवृदेवान्यत्सर्वं श्वेतां वडबां ददाति
परिक्रिया यक्ष्यमाणो माषेषु दीक्षते
स त्र्यहेण संतिष्ठत आ क्रयादेकमहरौपवसथ्यादेकमहः सुत्यमेकमहस्
तस्य त्रिवृत एव सतोऽष्टाचत्वारिँ शौ माध्यंदिनार्भवौ भवतोऽष्टाचत्वारिँ शँ
होतुः पृष्ठम्
अष्टाचत्वारिँ शमग्निष्टोमसाम

त्रिवृदेवान्यत्सर्वं यथाश्रद्धं ददात्यतिक्रिया यक्ष्यमाणस्तिलेषु दीक्षते
स चतुरहेण संतिष्ठत आ क्रयादेकमहरोत्तरवेदेरेकमहरौपवसथ्यादेकमहः
सुत्यमेकमहश्चतुष्टोम एष भवति २३

व्रात्यस्तोमेन यक्ष्यमाणो भवति
ते राजनि वा ब्राह्मणे वा प्रतिग्रहमिच्छन्ते मासाय वर्तवे वा
ते यमभिसंजानते तँ स्थपतिं कुर्वन्ति
स एषां व्रतानि चरति
सोऽधःसंवेश्यमाँ साश्यस्त्र्युपायी भवति
तद्धि दीक्षितव्रतम्
अथ यत्कृष्णं वासः कृष्णतूषं परिधत्ते दीक्षितवसनस्य तद्रूपम्
अथ यत्कृष्णबलक्ष्यावजिने धारयति कृष्णाजिनयोस्तद्रूपम्
अथ यत्सुवर्णरजतौ रुक्मौ बिभर्ति परिघर्म्ययोस्तद्रूपम्
अथ यत्कृष्णमुष्णीषं धारयति दीक्षितोष्णीषस्य तद्रूपम्
अथ यच्चर्ममयैर्बाणवद्भिस्तिसृधन्वं धारयति दीक्षितदण्डस्य तद्रूपम्
अथ यद्व्रात्यवादं वदति दीक्षितवादस्य तद्रूपम्
अथ यत्खुर्यावुपानहौ धारयति नेद्दीक्षितः सन्नमेध्यमधितिष्ठानीति तत्
तस्य ह वा एतद्रूपस्य यज्ञस्य प्रतोददण्ड एव यूपः
प्रतोदपरिषेवणं चषालं रथमुखमाहवनीय ईषे वेदिर्युगमुत्तरवेदिरुत्तरयुग-
मुत्तरनाभिर्धनुर्धी हविधाने
पक्षसी आग्नीध्रीयमार्जालीयौ
कूबरँ सदः
किंकरावताना धिष्णिया
बन्धुरं पत्नीशालं रथोपस्थो गार्हपत्योऽधिष्ठानं पुराणगार्हपत्यस्
ते यमजं प्रमाथं पचन्ते स एषां पशुर्यमपूपं स्थालीपाकँस चरुपशुपुरोडाशौ
यां परिष्कन्दँ ह्वयति सा पुरोऽनुवाक्या
यदाहरति सा याज्या
यदश्नन्ति स वषट्कारो यां कुम्बां विमते सा पुरोऽनुवाक्या
यामधीवाक्याँ सा याज्या
यां विगणँ ह्वयति स शस्त्रस्य प्रतिगरो यदभिक्रोशन्ति स उद्गीथस्
ते य एवमेतं यज्ञक्रतुं परोक्षमुपेत्य प्रत्यक्षं नोपेयुः २४

यथा दीक्षितावकीर्णा विच्छिन्नसोमपीथा अनाश्यान्ना एवँ स्युस्
तस्माद्व्रात्यावस्थितस्य व्रात्यस्तोमेनानीजानस्य नाश्यं विच्छिन्नसोमपीथ इव

ह्येषोऽनाश्यान्नस्

तेषां येऽनाहिताग्नयस्ते यथागृहं विपरेत्याग्नीनाधाय त्रयस्त्रिँ शतात्रयस्त्रिँ शता दक्षिणाभि स्थपतिमुपसमायन्ति
तेषां ब्रह्मबन्धुरामागधो मागधवाक्यो ब्रह्मबन्धुरपुँश्चलू पुँश्चलूवाक्या जरत्कद्रथो जरत्प्रयोग्याभ्यां युक्तो व्यृद्धा ब्रह्मवन्धुरपुँश्चलू पुँश्चलूवाक्या व्यृद्धो जरत्कद्रथो जरत्प्रयोग्याभ्यां युक्तो व्यृद्धेनैव व्यृद्धं निरवदयते
तदेतद्व्रात्यधनँ समवशान्तं दण्डोपानहँ शामूलाजिनं रथे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति
दक्षिणानां काल एतदेवास्य भवत्यृत्विजो दक्षिणा विभजन्ते
तस्य प्रातःसवनीयाननुवर्तन्ते संज्ञान्यै हवीँष्यसंज्ञातमिव वा एते चरन्ति ये व्रात्यं चरन्ति
समेवैनान्ज्ञापयन्ति
माध्यंदिनीयाननुवर्तत ऐन्द्रामारुत एकादशकपालोऽइन्द्रो वै व्रात्यो मारुतो ग्रामो ग्रामेणैवैनान्समीचो दधाति
तृतीयसवनीयाननुवर्तत आदित्येभ्यो भवद्भ्यश्चरुरभूता इव वा एते चरन्ति ये व्रात्यं चरन्ति
भूतिमेवैनान्गमयन्त्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तत आदित्यश्चरुर् अप्रतिष्ठिता इव वा एते चरन्ति ये व्रात्यं चरन्तीयं वा अदितिरस्यामेव प्रतितिष्ठन्ति २५

स एष ज्येष्ठानामग्निष्टोमस्
तस्य चत्वारि षोडशानि द्वौ पवमानावुभे एवाच्छावाकस्य स्तोत्रे
एष एव सन्कनीयसामुक्थ्यस्
तस्य षट्षोडशानि सर्वे पवमानाः सर्वाण्यच्छावाकस्य स्तोत्राणि
तेन हैतेन मरुत ईजिरे
तेषां विष्णु स्थपतिरासाथो हैतेन दैव्या व्रात्या ईजिरे
तेषां बुधः सौम्य स्थपतिरासाथो हैतेन कुरुब्रह्मणां पुत्रा ईजिरे
तेषामौपोदितिर्गौपालायनो वैयाघ्रपद्य स्थपतिरास
तेन हेष्ट्वा पञ्चालान्व्रात्या अभिप्रययुस्

तान्ह पितर ऊचुर्मा पुत्रकाः पञ्चालान्यासिष्टोपवादिनो वै पञ्चाला उप वो वदिष्यन्तीति
तान्हानादृत्यैव प्रययुस्
ते ह केशिनो दाल्भ्यस्योपवसथमाजग्मुस्
तान्ह श्वो भूते बहिष्पवमानँ सर्पतोऽन्वालेभिरे पवित्रं वै बहिष्पवमान आत्मानं पवयिष्यामह इति वदन्तोऽथ ह पञ्चालेषु गन्धर्वायणो वालेय आग्निवेश्योऽनूचान आस
तान्ह सह सर्पतः पप्रच्छ के सर्पन्तीति
वयं मरुत इति
तेषां वः क स्थपतिरित्यहं विष्णुरित्यौपोदितिर्गौपालायनो वैयाघ्रपद्यः प्रत्युवाच
यत्किं चकर्थ कस्तच्चचारेतीति ह परोक्षाव्रतमनुनिर्दिदेशेति

तान्होवाचाविदुषो व उपावादिष्माप वो ह्वमह इति
पिता वै तत्पुत्रानुपावादीदिति हैनमूचुः पापीयसी ते प्रजा भविष्यतीति तथा हैवास
ततो ह वा एतत्पञ्चालेषु गन्धर्वायणा वालेया आग्निवेश्याः पापायिता इव महाकुलँ ह तत्पुरा बभूव
स यो व्रात्यमुपवदेदेवमेवैनमुपवदेदथ यो व्रात्योऽलं प्रतिवचनाय स्यादेवमेवैनं प्रतिब्रूयात् २६

अथातो भाल्लविस्तोमा इत्याचक्षते
त्रिवृदभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः
पञ्चदशमभ्यावर्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः
सप्तदशमभ्यावर्त्येकविँशमग्निष्टोमसाम सर्वे षोडशाः पवमाना
एकविँशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्
त्रिणवमभ्यावर्ति त्रयस्त्रिँशमग्निष्टोमसाम सर्वे षोडशाः पवमानास्
त्रयस्त्रिँशमभ्यावर्ति त्रिणवमग्निष्टोमसाम सर्वे षोडशाः पवमानास्
त्रिणवमभ्यावर्त्येकविँशमग्निष्टोमसाम सर्वे षोडशाः पवमाना
एकविँशमभ्यावर्ति सप्तदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः

सप्तदशमभ्यावर्ति पञ्चदशमग्निष्टोमसाम सर्वे षोडशाः पवमानाः
पञ्चदशमभ्यावर्ति त्रिवृदग्निष्टोमसाम सर्वे षोडषाः पवमानाः २७

अथ वै भवति
देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वतेति
स हेक्षां चक्रे प्रजापतिः कथं न्वहमसुरैर्देवान्व्यावर्तयेयमिति
स एतं यज्ञक्रतुमनिरुक्तमुपहव्यमपश्यत्
तस्मिन्नेनानुपाह्वयतेति
स यत्राह प्रातर्यावभ्यो देवेभ्य इति मरुद्भ्यः प्रातर्यावभ्यो देवेभ्य इति
तत्राहाथ यत्राह सोमः पवत इतीन्दुः पवत इति तत्राहाथ यत्राहेन्द्राय
पुरोडाशानामिति शक्राय पुरोडाशानामिति तत्राहाथ यत्राह वायव
इन्द्रावायुभ्यामिति नियुत्वते शक्रनियुद्भ्यामिति तत्राहाथ यत्राह
मित्रावरुणाभ्यामित्यृतायुभ्यामिति तत्राहाथ यत्राहाश्विभ्यामिति
नासत्याभ्यामिति तत्राहाथ यत्राहेन्द्राय सोमानिति शक्रायेन्दूनिति तत्राहाथ
यत्राहेन्द्राग्निभ्यामिति शक्रजातवेदोभ्यामिति तत्राहाथ यत्राह विश्वेभ्यो
देवेभ्य इति मरुद्भ्यो विश्वेभ्यो देवेभ्य इति तत्राहाथ यत्राहेन्द्राय मरुत्वत इति
शक्राय गणवत इति तत्राहाथ यत्राह महेन्द्रायेति महते शक्रायेति तत्राहाथ
यत्राहादित्येभ्य इति महद्भ्य आदित्येभ्य इति तत्राहाथ यत्राह वनस्पतय इति
वनर्नृपायेति तत्राहाथ यत्राह देवाय सवित्र इति महते देवाय सवित्र इति
तत्राहाथ यत्राह विश्वेभ्यो देवेभ्य इति महद्भ्यो विश्वेभ्यो देवेभ्य इति तत्राहाथ
यत्राह देवानां पत्नीभ्य इति महतीभ्यो देवानां पत्नीभ्य इति तत्राहाथ
यत्राहेन्द्राय हरिवत इति शक्राय मघवत इति तत्राह
धाना इन्दुभ्य इत्यु हैके संप्रदिशन्ति २८

तदेतदर्वागेव यज्ञायज्ञियस्य स्तोत्राद्यज्ञायज्ञियस्य वाव स्तोत्रे स तां
निरुवाच
तँ हासुरा उपेक्षामेव चक्रिरे किं वा वै करोति किं वा नेति
स यदा विदां चकार न वा इम एतर्हि पापभद्रयोयोरीशत इति तदेनां
निरुवाच देवो वो द्रविणोदा इति
प्रजापतिर्वै देवो द्रविणोदाः

पूर्णां विवष्ट्यासिचमिति
पूर्णां व्युदचत्यासिचमिति तदुद्वा सिञ्चध्वमुप वा पृणध्वमित्यास्य कामंकामं पूरयाध्वा इति तदादिद्वो देव श्रोहत इति
साध्येभ्यो देवेभ्यः प्रजापतिः कामंकाममूहते
सप्तदश स्तोमो भवति
सप्तदशः प्रजापतिः
प्रजापतेराप्तयश्वोऽसितज्ञुर्दक्षिणा
प्राजापत्यो वा अश्वः

प्रजापतेरनुरूपत्वाय
यः पाप्मना भ्रातृव्येण व्याविवृत्सेत स एतेन यज्ञक्रतुना यजेत
व्येव पाप्मना भ्रातृव्येणावर्तत इन्द्रो वृत्रँ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्
तं देवा यज्ञेनान्वैषुस्
ते शतमाशिरं दुहां चक्रिरे भूयो भागधेयं भूयसीं प्रीतिमभ्युपावर्त्स्यतीति वदन्तः
स ह प्रातःसवने नाजगाम
ते सर्व एव प्रातःसवनस्य भक्षयां चक्रुः
को ह्यपेन्द्रस्य सोमस्य भक्षयिष्यतीति
तँ संतिष्ठमाने प्रातःसवनेऽच्छावाकस्य शस्त्रं प्रति जक्षुस्
ते सर्व एव चमसाध्वर्यव आनन्दिनोऽच्छावाकस्य शस्त्रं प्रत्यागर्तुं दध्रिरे

सेन्द्रा इव ह्यमन्यन्त
तस्मात्तीव्रसोमे सर्व एव चमसाध्वर्यव आनन्दिनोऽच्छावाकस्य शस्त्रं प्रत्यागृणन्ति
सेन्द्रा इव हि मन्यन्ते
तर्हि वाव तदासीत्
तदु वा आहुः सर्व एवैतर्हि यज्ञः सेन्द्र इति
तँ हाभिषुषुवुः २९

इहा इहा इहेतीहेहीहेहीहेहीति ह वा एनं तदूचुर्बृहद्बृहद्बृहदितीदं ते बृहदन्नाद्यं तदभ्युपावर्तस्वेति ह वा एनं तदूचुस्
तदेतन्माध्यंदिनस्य सवनस्यान्यत्रापि निदानं स शृतकलशमेकधनानां प्रातःसवनेऽवनयेद्दधि माध्यंदिने सवने
विमथितं तृतीयसवने
सास्य तीव्रता
सप्तदश स्तोमो भवति
सप्तदशः प्रजापतिः
प्रजापतेराप्त्यै
गर्भिणी वडबा ललामी दक्षिणेन्द्रियं वै गर्भ इन्द्रियं ललामः
सेन्द्रियत्वाय
यो ज्यान्या वोपतपता वाणिमानं नीतः स्यात्स एतेन यज्ञक्रतुना यजेताश्नुते हैव तीव्रताम्
इन्द्रोऽकामयत वि पाप्मानँ हनीय श्रैष्ठ्यं देवानां गच्छेयमिति

स एतं यज्ञक्रतुमपश्यत्
तमाहरत्
तेनायजत
ततो वै स वि पाप्मानमहत श्रैष्ठ्यं देवानामगच्छद्यः कामयेत वि पाप्मानँ हनीय श्रैष्ठ्यँ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेत
व्येव पाप्मानँ हते श्रैष्ठ्यँ समानानां गच्छति
तस्यातिग्राह्यो वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । अधस्पदं तमीं कृधि यो अस्माँ भिदासत्युपयामगृहीतोऽसीन्द्राय त्वा वैमृधाय जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा वैमृधायेति
तस्य त्रिवृत्पञ्चदशौ विपर्यासँस्तोमौ भवतस्
ताः षड्गायत्र्यो गायत्री वै छन्दसां वि पाप्मानमहत
गायत्र्यैव तद्यजमानो वि पाप्मानँ हते ३०

इन्द्रोऽकामयतौद्भिद्यँ श्रैष्ठ्यं देवानां गच्छेयमिति

स एतं यज्ञक्रतुमपश्यत्
तमाहरेत्
तेनायजत
ततो वै स औद्भिद्यँ श्रैष्ठ्यं देवानामगच्छद्यः कामयेतौद्भिद्यँ श्रैष्ठ्यँ समानानां गच्छेयमिति स एतेन यज्ञक्रतुना यजेताउद्भिद्यँ हैव श्रैष्ठ्यँ समानानां गच्छति
तस्यातिग्राह्योऽयं कृत्नुरगृभीतो विश्वजिदुद्भिदित्सोमः । ऋषिर्विप्रः काव्येनोपयामगृहीतोऽसीन्द्राय त्वोद्भिदे जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वोद्भिद इति

तस्य पञ्चदशैकविँशौ विपर्यासँस्तोमौ भवतस्
ताः षड्बृहत्यो बृहती वै छन्दसामुदभिनद्बृहत्यैव तद्यजमान
उद्भिनत्तीन्द्रोऽकामयत वलं भित्त्वा पशून्सृजेयेति
स एतं यज्ञक्रतुमपश्यत्
तमाहरत्
तेनायजत
ततो वै स वलं भित्त्वा पशूनसृजत
यः कामयेत वलं भित्त्वा पशून्सृजेयेति स एतेन यज्ञक्रतुना यजेत
वलमेव भित्त्वा पशून्सृजते
तस्यातिग्राह्य इन्द्र ओषधीरसनोदहानि वनस्पतीँ रसनोदन्तरिक्षम्। बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनामुपयामगृहीतोऽसीन्द्राय त्वा वलभिदे जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा वलभिद इति
तस्य सप्तदशैकविँशौ विपर्यासँस्तोमौ भवतस्
ताः षड्गायत्र्यो गायत्री वै छन्दसां वलमभिनद्गायत्र्यैव तद्यजमानो वलं भित्त्वा पशून्सृजते ३१

ऋतपेयेन यक्ष्यमाणो भवति
स यदशनानां कामयते तस्याशितो भूत्वा दीक्षते यद्वा लभते तस्य
स एकाहं नाश्नात्यथाश्नाति
द्व्यहं नाश्नात्यथाश्नाति

त्र्यहं नाश्नात्यथाश्नाति
सोऽत्रैव विराजमाप्नोति
राजानं क्रीत्वोह्यातिथ्यं निर्वपति

यद्यु वा एतदुपात्येति चतुरहं नाश्नात्यथाश्नाति
पञ्चाहं नाश्नात्यथाश्नाति
षडहं नाश्नात्यथाश्नाति
तिस्र उपसदस्
त्रिँ शत्संपद्यन्ते
त्रिँ शदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवरुन्द्धेऽथ य एकादश स्तन एवास्यै स
दुह एवैनां तेनाथ य एकत्रिँ श स्तन एवास्यै स
दुह एवैनां तेन
स उपसत्स्वाज्यव्रतो भवति
शीतस्य सर्विषस्तिसृभिरङ्गुलीभिरुपहन्त्यथ द्वाभ्यामथैकया
शीतस्य वैव सर्पिषस्त्रिभिः पर्वभिरुपहन्त्यथ द्वाभ्यामथैकेन
विलीने वा सर्पिषि त्रीणि परूँ ष्यवदधात्यथ द्वे अथैकं
त्रिस्तनद्विस्तनैकस्तनव्रतस्य रूपाणि कुर्वन्
स नादित्याद्दिवा पर्यावर्तते नाग्नेरधि नक्तम्
औदुम्बरः सोमचमसश्चतुःस्रक्तिर्ब्रह्मा त्रिवेदः सगोत्रः ३२

सप्तदश स्तोमो भवति
सप्तदशः प्रजापतिः
प्रजापतिमन्नाद्यं नोपानमत्
तं देवा ऋृतसत्याभ्यामन्वैषुः
स यदश्नाति यदेवाशनेनावरुद्धं तस्यावरुद्ध्या इति तदथ यन्नाश्नाति यदेवानशनेनावरुद्धं तस्यावरुद्ध्या इति तदथ यदुपसत्स्वाज्यव्रतो भवत्येतद्वै देवानां प्रियं धाम यदाज्यं देवानामेव प्रियं धामावरुन्द्ध इति तदथ यन्नादित्याद्दिवा पर्यावर्तते नाग्नेरधि नक्तमेते वै देवानामृतसत्ये

नेद्देवानामृतसत्ये पृष्ठतः करवाणीत तदथ यदौदुम्बरो भवत्यूर्ग्वा
अन्नाद्यमुदुम्बर ऊर्ज एवान्नाद्यस्यावरुद्ध्या इति तदथ यत्सोमचमसो
भवत्येतद्वै देवानां परममन्नं यत्सोमः
परमेणैवास्मा अन्नाद्येनावरमन्नाद्यमवरुन्द्ध इति तदथ यच्चतुःस्रक्तिर्भवति
यदेव दिशोऽन्नाद्यं प्राविशत्तस्यावरुद्ध्या इति तदथ यत्त्रिवेदा भवति न
ह्येतामेकवेदा दक्षिणामुद्यन्तुमर्हतीति तदथ यत्सगोत्रो भवत्यात्मा वै सगोत्र
आत्मन्नेव यज्ञस्य यशोऽन्नाद्यं प्रतिष्ठापयानीति तत् ३३

तं माध्यंदिनीयैश्चमसैः सहोन्नीय जुह्वति
तमृत्विजो हुतं दक्षिणानां काले ब्रह्मण उपातिदिशन्ति
तं ब्रह्मणः सन्तं पर्युपविश्य भक्षयन्ति यदृतं मन्यन्ते तेन
यदृतेन भक्ष्यन्ति तदृतपेयस्यर्तपेयत्वं दिशोऽकामयन्तान्नाद्यः
स्यामान्नाद्यमवरुन्धीमह्यन्नाद्यमस्मासु प्रतितिष्ठेदिति
ता एतं यज्ञक्रतुमपश्यन्
तमाहरन्
तेनायजन्त
ततो वै ता अन्नाद्योऽभवन्नन्नाद्यमवारुन्धतान्नाद्यमासु प्रत्यतिष्ठद्यः
कामयेतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स
एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धेऽन्नाद्यमस्यां
प्रतितिष्ठति
तस्य चतसृषु बहिष्पवमानोऽष्टास्वष्टास्वाज्यानि द्वादशो माध्यंदिनः
पवमानः षोडशानि पृष्ठानि सविँश आर्भवः पवमानश्चतुर्विँशमग्निष्टोमसाम

तं दिशां चतुष्टोम इत्याचक्षते
छन्दाँस्यकामयन्त यशोऽश्नुवीमहि यशोऽवरुन्धीमहि यशोऽस्मासु
प्रतितिष्ठेदिति
तान्येतं यज्ञक्रतुमपश्यन्
तमाहरन्
तेनायजन्त
ततो वै तानि यशोऽश्नुवत यशोऽवारुन्धत यश एषु प्रत्यतिष्ठद्यः कामयेत

यशोऽश्नुवीय यशोऽवरुन्धीय यशो मयि प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेत
यश एवाश्नुते यशोऽवरुन्द्धे यशोऽस्मिन्प्रतितिष्ठति
तस्य स्तोमा अस्तुवतैकस्यामथ तिसृष्वेकस्यामथ तिसृषु
तमेतं छन्दसामेकत्रिक इत्याचक्षते
स्तोमा अकामयन्तेति समानः परिवादस्
तस्य स्तोमास्त्रिवृदथ त्रयः पञ्चदशास्त्रिवृदथ त्रयः सप्तदशास्त्रिवृदथ त्रय एकविँशास्
तमेतँ स्तोमानामेकत्रिक इत्याचक्षते ३४

इन्द्राग्नी वा अकामयेताँ समानलोकौ स्याव समानं लोकमियावेति
तावेतं यज्ञक्रतुमपश्यतां तमाहरतां तेनायजेतां ततो वै तौ
समानलोकावभवताँ समानं लोकमैताँ समानलोकावप्यथ यौ कामयेताँ
राजा च पुरोहितश्च समानलोकौ स्याव समानं लोकमियावेति तावेतेन
यज्ञक्रतुना यजेयाताँ समानलोकावेव भवतः समानं लोकमितोऽश्वरथो
यज्ञायुधः प्रासङ्ग्यश्चमसः सा ब्राह्मणस्य दक्षिणाश्वतरीरथः
सर्वायुधोऽप्रासङ्ग्यः काँस्यस्तूणीबन्धः सा राजन्यस्य दक्षिणा
तस्य त्रिवृत्पञ्चदशौ विपर्यासँस्तोमौ भवतस्
त्रिवृदेव ब्राह्मणस्य पञ्चदशो राजन्यस्य
तमेतमिन्द्राग्नियोः कुलाय इत्याचक्षत एष एव सन्पितापुत्रीय एष सख्योर्यज्ञ एष भ्रात्रोः ३५

अभिचरणीयैः सोमैर्यक्ष्यमाणो भवति
स द्र्यानि यज्ञायुधान्युपकल्पयते बाधकानि च तैल्वकानि च
शवानसोऽधिषवणे फलके पुरुषास्थस्य वृषणौ
स यत्राध्वर्युरुपाँशुं ग्रहीष्यन्राजानमभिषुणोति तस्य योऽँशुः परापतति
तमेतस्मिन्पात्र आधायोपसंगृह्याथाहामुं जह्यथ त्वा होष्यामीत्या
तमितोरास्तेऽथैतं भङ्गमाहवनीयेऽनुप्रहरतीदमहममुमामुष्यायणं परिप्लुना
भङ्गेन विध्यामीत्यत्र यं यजमानो द्वेष्टि तं मनसा ध्यायत्य्
अथैतत्पात्रं खरे यथायतनँ सादयत्यमुष्य त्वा प्राणे सादयामीति

स यं कं च ग्रहं गृह्णात्येवमेवैनं गृह्णाति
यदु किं च पात्रँ सादयत्येवमेवैनत्सादयति
स एष त्रिवृदग्निष्टोम एकस्तोम एकहविर्धानस्
तँ श्येन इत्याचक्षतेऽथेषुः
समानमभिचरणीयँ शिल्पं तिसृषुतिसृषु स्तुवते
रथो हविर्धानम्
अथ संदँशः
समानमभिचरणीयँ शिल्पं द्वौ त्रयस्त्रिँशौ मध्यत स्तोमौ भवतो द्वे हविर्धाने
अथेन्द्रवज्रः
समानमभिचरणीयँ शिल्पम्पञ्चदश एष भवति ३६

दुरशेन यक्ष्यमाणो भवति
स उपकल्पयते षष्टिँ शतमानानि हिरण्यानि त्रिँशतँ सुवर्णानि त्रिँशतँ रजतानि बह्वन्यद्धिरण्यं स आमावास्येन हविषेष्ट्वा सौर्यं चरुं निर्वपति
तस्मिन्सुवर्णँ शतमानं ददात्यथ सायँ हुतेऽग्निहोत्रे चान्द्रमसं चरुं निर्वपति
तस्मिन्रजतँ शतमानं ददाति
स एवमेवैताभ्यामिष्टिभ्यामहरहर्यजमानो मासमेत्यथ दीक्षते
दीक्षणीयायां द्वादशमानँ हिरण्यं ददाति

प्रायणीयायां चतुर्विँशतिमानं ददात्यातिथ्यायां द्वे चतुर्विँशतिमाने ददाति
प्रथमायामुपसदि चत्वारि ददाति
द्वितीयस्यामुपसद्यष्टौ ददाति
तृतीयस्यामुपसदि षोडश ददाति
चतुर्थ्यामुपसदि द्वात्रिँशतं ददाति
पञ्चम्यामुपसदि चतुःषष्टिं ददाति
षष्ठ्यामुपसद्यष्टाविँशँ शतं चतुर्विँशतिमानानां ददात्यथातः
शतसंख्यैवाग्नीषोमीयस्य हुतायां वपायां द्वे शते ददात्याग्नेयस्य हुतायां वपायां चत्वारि ददाति
प्रातःसवनीयेष्वष्टौ ददाति
माध्यंदिनीयेषु षोडश ददाति

दक्षिणानां काले द्वात्रिँ शतं ददाति
तृतीयसवनीयेषु चतुःषष्टिं ददात्यनूबन्ध्यस्य हुतायां वपायामष्टाविँशँ शतानां ददाति
स यदेताभ्यामिष्टिभ्यामहरहर्यजते सूर्याचन्द्रमसोरेव तत्सायुज्यँ सलोकतामाप्नोति ३७

अथ यद्धिरगयदक्षिणो भवति हिरगमयमेव तद्यजमान आत्मानँ सँस्कुरुते

तस्य यदूर्ध्वं नाभेस्तत्सुवर्णमवाङ्रजतं यदा ह वै हिरगमयो भवत्यथामृतो भवति
हिरगमया ह वै देवास्
तस्मात्तेऽमृताः
सप्तदशस्तोमो भवति
सप्तदशः प्रजापतिः
प्रजापतेराप्त्यउभे सामनी भवतश्छन्दोमयावेतत्पक्षौ यजमान आत्मानँ सँस्कुरुत एतस्य लोकस्य जित्यै
स यदेतेन यज्ञक्रतुना यजते सूर्याचन्द्रमसोरेव तत्सायुज्यँ सलोकतां जयति
तेन दुरशो दुरश इव ह्येतयोर्देवतयोर्लोकोऽथ दुर्णाशेन यक्ष्यमाणो भवति
स उपकल्पयतेऽनडुच्छतं च त्रयस्त्रिँ शतं च निष्कांस्तेन हैतेनानडुहो लोकं जयति
तेन हैतेन ज्योतिष्मन्तं लोकं जयति
तेन हैतेन ज्योतिषोऽधि स्वर्गं लोकं जयति
सप्तदशस्तोमो भवति
सप्तदशः प्रजापतिः
प्रजापतेराप्त्यउभे सामनी भवतश्छन्दोमयावेवैतत्पक्षौ यजमान आत्मानँ सँस्कुरुत एतस्य लोकस्य जित्यै
स यदेतेन यज्ञक्रतुनेष्ट्वा न नश्यति तेन दुर्णाशस्

तद्दुर्णाशस्य दुर्णाशत्वं केशी ह दाल्भ्योऽपचितिकामोऽपचितिनेजे तन्नो नामनी परिहरन्ता इति

ततो ह वा एतत्पञ्चालराजानां नामानि परिहरन्ते ३८

शीर्षण्या इति केशानाचक्षते
कुशा इति दर्भान्
नद्याविति गैरेयकविमत्यौ
ततो वै सोऽपचितिमानभवद्यः कामयेतापचितिमान्त्स्यामिति स एतेन यज्ञक्रतुना यजेतापाचितिमानेव भवति
तस्य चतुर्विँशो बहिष्पवमानस्त्रिवृत्पञ्चदशान्याज्यानि
तास्तिस्रो गायत्र्यश्चतुर्विँशो माध्यंदिनः पवमानः पञ्चदशसप्तदशानि पृष्ठानि ते द्वे त्रिष्टुभौ
त्रिणव आर्भवः पवमान एकविँशमग्निष्टोमसाम
सैका जगत्येतानि वै छन्दसामपचिततमान्यपचितिमानेव भवति य एवं वेदासावादित्योऽकामयत त्विषिमान्त्स्यामिति
स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत

ततो वै स त्विषिमानभवद्यः कामयेत त्विषिमान्त्स्यामिति स एतेन यज्ञक्रतुना यजेत
त्विषिमानेव भवति
तस्य सौर्योऽतिग्राह्यः
सौर्यः पशुरुपालम्भ्य एकविँश एष भवति ३९

इन्द्रोऽकामयतर्षभ इव पशूनामैश्वर्यमाधिपत्यँ राज्यं देवानां परीयामिति
स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत
ततो वै स ऋषभ इव पशूनामैश्वर्यमाधिपत्यँ राज्यं देवानां पर्यैद्यः कामयेतर्षभ इव पशूनामैश्वर्यमाधिपत्यँ राज्यँ समानानां परीयामिति स एतेन यज्ञक्रतुना यजेतर्षभ इव पशूनामैश्वर्यमाधिपत्यँ राज्यँ समानानां पर्येति
तस्यातिग्राह्यो वृषा सो अँशुः पवते हविष्मान्त्सोम इन्द्रस्य भाग ऋतयुः शतायुः । स मा वृषाणं वृषभं कृणोतु प्रियं विशाँ सर्ववीरँ सुवीरमुपयामगृहीतोऽसीन्द्राय त्वर्षभाय जुष्टं गृह्णां इति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वर्षभायेति

तस्य पञ्चदशस्य सत एकविँशँ होतुः प्रष्ठं ककुदो रूपम्
इन्द्रेण ह स्म वै पूर्वे समाजिगमिषन्तो वनिष्ठुसवेन यजन्ते तृप्तो न इन्द्र
आविर्भविष्यति तस्मै कामान्वक्ष्याम इति वदन्तो
वनिष्ठुसवेन यक्ष्यमाणो भवति
स उपकल्पयते शतमुक्षवेहतः शतं दार्वाचितानि शतँ सर्पिष्पात्राञ्छतं
पयःपात्राञ्छतं दधिपात्राञ्छतं वसापात्रानौदुम्बरीं नावमुभयतोऽभिपतनां
परिगृहीतामथ प्रणेतॄन्
एतेनोपक्लृप्तेन चित्रामायतीमुपरमत्यथ चित्रयेति पूर्वाग्निमन्ववस्यत्युत्तपनीयँ
शालीनोऽन्वाहार्यपचनमाहिताग्निरथैतानि दार्वाचितानि प्रदोष
एवाग्नावादधाति
तेषु प्रज्योतिषूक्षवेहतो निघ्नन्त्यथैषामभ्यर्धान्वनिष्ठून्मेदाँ सीति
श्रपयन्त्यथोदित आदित्य आयातयत्यौदुम्बरीं नावमुभयतोऽभिपतनां
परिगृहीतां प्रणेतृभिस्
तस्यामुपस्तृणीते पञ्चाशता सर्पिष्पात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता
दधिपात्रैः पञ्चाशता वसापात्रैस्
तस्यां वनिष्ठून्मेदाँ सीति संप्रकीर्याथाभिघारयति पञ्चाशता वसापात्रैः
पञ्चाशता दधिपात्रैः पञ्चाशता पयःपात्रैः पञ्चाशता सर्पिष्पात्रैरथ
पुरोऽनुवाक्यामन्वाह ४०

इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिनो वज्रबाहुः । सेदु राजा क्षेति
चर्षणीनामरान्न नेमिः परि ता बभूवेति
यजतीन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति । ततो ददातु
दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वाक्स्वाहेति
तृप्त एवास्मा इन्द्र आविर्भवति
तस्मै कामान्ब्रुवते
कानान्धँ ह वाध्र्यश्वं बृहस्पतिराङ्गिरसो याजयां चकार
तस्य होपवसथीयेऽहञ्छ्रद्धा वीयाय
स होवाचाध्वर्यो वि वै मे श्रद्धागात्सं मे यज्ञँ स्थापयेति
तँ होवाचान्यद्वै तदुपवसथः श्वस्ते यज्ञः सँस्थातेति
स होवाच समेव मे स्थापयेति

तस्य ह तावद्विदित्वाग्रेण हविर्धाने चर्मरायुलूखलमुसले निधायाँ शून्समवद्मुदां चकार यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिरित्य्
अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य समुदायुत्य जुहवां चकार यथा जना सँस्तथे व्रतानि कोव्रतिनां व्रतमालोभयाति । कानान्धस्य प्रस्थितं वाध्र्यश्वस्य तीव्रसुतँ श्रवदिन्द्र जुषस्व स्वाहेति
स एष उन्मत्तस्य वा वीतश्रद्धस्य वा नीतस्य वा यज्ञः
सा यदागता स्यादथ चतुष्टोमेनाग्निष्टोमेन यजेत पुरा भ्रेषाच्छान्त्यै ४१

मनुर्वैवस्वतोऽकामयत प्रजाँ सृजेय प्रजामवरुन्धीय प्रजां विन्देया मा प्रजया चन्नीरन्निति
स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत

ततो वै स प्रजामसृजत प्रजामवारुन्द्ध प्रजामविन्दतैनं प्रजयाचन्नत
यः कामयेत प्रजाँ सृजेय प्रजामवरुन्धीय प्रजां विन्देया मा प्रजया चन्नीरन्निति स एतेन यज्ञक्रतुना यजेत
प्रजामेव सृजते प्रजामवरुन्द्धे प्रजां विन्दत ऐनं प्रजया चन्नते
तस्य प्राचीनस्तोमास्त्रयस्त्रिवृतस्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविँशाः
सोऽकामयतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति
स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत
ततो वै तस्यान्नादी प्रजाभवदन्नाद्यमवारुन्द्धान्नाद्यमस्यां प्रत्यतिष्ठद्यः कामयेतान्नादी मे प्रजा स्यादन्नाद्यमवरुन्धीतान्नाद्यमस्यां प्रतितिष्ठेदिति स एतेन यज्ञक्रतुना यजेतान्नाद्येवास्य प्रजा भवत्यन्नाद्यमवरुन्द्धेऽन्नाद्यमस्यां प्रतितिष्ठति
तस्य दश स्तोमा दशसुदशसु स्तुवते विराजो
रूपम्वागाम्भृरायकामयतापरिमितं यशोऽश्नुवीयेति
सैतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत
ततो वै सापरिमितं यश आश्नुत
यः कामयेतापरिमितं यशोऽश्नुवीयेति स एतेन यज्ञक्रतुना यजेतापरिमित-मेव यशोऽश्नुते

तस्य दशसु बहिष्पवमानः शते सहस्रेऽयुते प्रयुतेऽर्बुदे न्यर्बुदे समुद्रे मध्येऽन्ते परार्धे ४२

यमो वैवस्वतोऽकामयत पितृणामैश्वर्यमाधिपत्यँ राज्यं परीयामिति
स एतं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत
ततो वै स पितृणामैश्वर्यमाधिपत्यँ राज्यं पर्यैद्यः कामयेत
समानानामैश्वर्यमाधिपत्यँ राज्यं परीयामिति स एतेन यज्ञक्रतुना यजेत
समानानामैश्वर्यमाधिपत्यँ राज्यं पर्यैति
तस्य शते बहिष्पवमानः सहस्रेऽयुते नियुते प्रयुतेऽर्बुदे न्यर्बुदे समुद्रे मध्येऽन्ते परार्धे पद्गे पल्वे
नित्यमुक्त्वा मनसैव स्तुवानो मन्यत एतावति मे स्तुनमित्यथ सकृत्प्रवर्ग्य आतिथ्येन प्रचर्य गार्हपत्ये प्रवर्ग्यं प्रवृणक्ति
तेनाहवनीये प्रचरति
तं काल उद्वासयति
शिरो वा एतद्यज्ञस्य यदातिथ्यं यशः प्रवर्ग्यः
शीर्षन्नेव यज्ञस्य यशो दधातीति नु सकृत्प्रवर्ग्योऽथ सुते प्रवर्ग्यः
पवमानेन चरित्वाग्नीध्रे प्रवर्ग्यं प्रवृणक्ति
तेनाहवनीय एव प्रचरति
तं तदानीमेवोद्वासयति
यशः प्रवर्ग्यः
शीर्षन्नेव यज्ञस्य यशो दधातीति नु सुत्याप्रवर्ग्योऽथ सकृत्प्रवर्ग्योऽथ सुते प्रवर्ग्योऽथ सुत्याप्रवर्ग्यः ४३

पुरूरवा ह पुरा ऐडो राजा कल्याण आस
तँ होर्वश्यप्सराभिदध्यौ
तँ संवत्सरं कामयमानानुचचारैवँ ह स्म वै पूर्वेऽभिश्राम्यन्ति
तद्धातिचिरं मेने
तस्य ह धावतः पुरो रथं कर्त दर्शयामास
तँ ह दृष्ट्वा राजावतस्थौ

तँ हावस्थाय न ददर्शाथो ह पुनरातस्थौ
तँ हास्थायैव ददर्श
स ह सारथिं पप्रच्छ सारथे किं पश्यसीति
त्वां भगव इति होवाच रथमश्वान्पन्थानमिति
स हेक्षां चक्रे दृप्यामि वै किलेति
तँ ह वागभ्युवाच न वै दृप्यस्यहं वै त्वामेतं कर्तमदीदृशमित्यथ
कस्त्वमित्यहमुर्वश्यप्सरेति होवाच
सा त्वा संवत्सरं कामयमानान्वचारिषं तां मा जायां विन्दस्वेति
दुरुपचारा ह वै भवति देवा इति होवाच
का त उपचर्येति
शतं ममोपसदः स्युः
शतँ शतं मा सर्पिष्कुम्भा अहरहरागच्छेयुस्तदाशना स्यां
न त्वा नग्नं पश्येयमिति
सर्वमेवैतद्भगवति सुकरमिति होवाच
कथा त्वपि जाया पतिं नग्नं न पश्यतीत्यन्तर्वासं वसीथा इति होवाचानग्नो भवेति
तया सहोवासान्तवासं वसानः
सा ह स्म जाताञ्जातानेव पुत्रानपविध्यति
ताँ ह राजोवाच पुत्रकामा ह वै भगवति वयं मनुष्याः स्मो जाताञ्जातानु त्वमपविध्यसीति
सा होवाच पर्यवेतरात्रयो भवन्ति क्षीणायुषोऽन्ये
भूयः प्रियं करवावहा इति
सायुं चामावसुं च जनयां चकार
सा होवाचेमौ बिभृतेमौ सर्वमायुरेष्यत इति
प्राङायुः प्रवव्राज
तस्यैते कुरुपञ्चालाः काशिविदेहा इत्येतदायवं प्रव्राजम्प्रत्यङमावसुस्
तस्यैते गन्धारय स्पर्शवोऽराट्टा इत्येतदामावसवम् ४४

अथो हास्या एषा पूर्वचित्तिरप्सरा स्वसा बभूव
सा हेक्षां चक्रे ज्योग्वै मे स्वसा मनुष्येष्ववात्सीद्धन्तैनामच्छायानीति

तया सहागत्यैव संगमं न लेभेऽथो हास्या अवियूथमुपस्थापदासैवँ ह स्म वै पूर्वासां महिषीणाँ रूपं भवति
तद्वृकरूपं कृत्वा प्रमाथं चिकायाथो हास्या उरणः क्षीरप आसन्दीपादे बद्ध आस
तँ सा प्रममाथ
तस्मिन्ह्रियमाणे रुरुवेऽयमवीरज इति
तच्छ्रुत्वा राजोत्पपात
तामभ्यानश तामभ्युपेयाय
तँ सा नकुली भूत्वा प्रत्युपेयाय
तस्य हान्तर्वासमवलुलोपाथ ह सा विद्युतं जनयां चकार
तँ सा विद्युति नग्नमनुचख्यवथो ह राजाजगामास्वारुहं वा अहमजीत उरणमत्यसारुहंहि नूनमिति प्रत्यहं प्रजहिष्यामीति
किं व्यभूदिति
नग्नं त्वादर्शमिति होवाच
तस्यां प्रव्रजितायामप्रियविद्धः शोचँश्चचार

तँ होवाच बृहस्पतिराङ्गिरसो हन्त त्वा शदेन याजयिष्याम्यापयि त्वा पुनर्जिन्विष्यामीति
तँ शदेन बृहस्पतिराङ्गिरसो याजयां चकार
ताँ हावभृथादेवोदेत्य प्रतिददर्श
ताँ ह पुत्रौ प्रतीत्योचतुरिह नौ नय यत्र ते गतिर्बलिनौ वां पितरमशुशुच इति
सा होवाच सं वां पुत्रकौ जनेय साहमिह तिस्र एव रात्रीर्वत्स्यामि नो ब्राह्मणस्य वचो मोघमसदिति
तया सह तिस्र एव रात्रीरुवासान्तर्वासं वसानस्
तस्याँ रेतः सिषिचे
सा होवाच कथमिदँ स्यादिति
कथँ हि नूना३मिति राजा प्रत्युवाच
सा होवाच नवां कुम्भीमाहरेति
तस्यामेनन्निःषिषेचाथ ह कुरुक्षेत्रे बिसवत्यो नाम पुष्करिण्यस्

तासामुत्तराध्यां सुवर्णसवनी

तस्यामेनन्निचखान
तदश्वत्थो जज्ञे शम्या परिवृतो रेतसोऽश्वत्थ आशयाच्छम्येषैव शमीगर्भस्य सृष्टिरेतन्निदानम्
अथ वै भवति
सर्वेण वै देवाः सुवर्गं लोकमायन्निति
स यत्र हैतद्यज्ञो देवेभ्योऽधि मनुष्यान्प्रत्यवरुरोहाश्वत्थँ हैव तत्प्रत्यवरुरोह तस्यारणी चक्रिरेऽयं वाव स यज्ञ इत्यथो खलु य एव कश्चाश्वत्थः स शमीगर्भः
स यदाहोर्वश्यस्यायुरसि पुरूरवा इत्येतेषामेवैतत्पितापुत्राणां नामानि गृह्णात्यथो सामान्यमेवैतदूहेत
तस्यां प्रव्रजितायां पुन रेवाप्रियविद्धः शोचँश्चचार
तँ होवाच बृहस्पतिराङ्गिरसो हन्त त्वौपशदेन याजयिष्यामि वि वै तेऽप्रियमेवैष्यतीति
तमौपशदेन बृहस्पतिराङ्गिरसो याजयां चकार
ततो वै तस्याप्रियं विनिनाय
तौ ह वा एतौ पौरूरवसौ नाम शदौपशदौ
स यो वित्तँ सिषाधयिषेत्तँ शदेन याजयेत्
तस्य दशसु बहिष्पवमान एकैकोपशीयत ऐकविँशत्यै सुनोतीहैवाथ योऽर्पियं विनिनीषेत्तमौपशदेन याजयेत्
तस्यैकविँशत्यां बहिष्पवमान एकैकावशीयत आ दशभ्योऽथ प्राजापत्यौ नाम शदौपशदौ
तस्य तिसृषु बहिष्पवमानस्
तिस्रस्तिस्र उपशीयन्त आ षट्त्रिँशतः
षट्त्रिँशत्सु बहिष्पवमानस्
तिस्रस्तिस्रोऽवशीयन्त आ तिसृभ्योऽथ नैध्रुवस्य कश्यपस्य शदौपशदौ तस्य चतसृषु बहिष्पवमानश्चतस्रश्चतस्र उपशीयन्त आष्टाचत्वारिँ शतोऽष्टाचत्वारिँशत्सु बहिष्पवमानश्चतस्रश्चतस्रोऽवशीयन्त आ चतसृभ्यः
४५

देवासुरा ह यत्र महासंग्रामँ संयेतिरे तद्धेमानि भूतानि द्वेधैव
व्यपचक्रेमुर्देवानेवान्वन्यान्यसुरानेवान्वन्यानि

बृहस्पतिर्देवानां पुरोहित आसीदुशना काव्योऽसुराणाम्ब्रह्मण्वन्तो देवा
आसन्ब्रह्मण्वन्तोऽसुरास्
ते बहून्संग्रामानविजयमाना आसां चक्रिरे
तेषां न कतरे चन भविष्यदाजज्ञुर्गन्धर्वो हैव सूर्यवर्चा भविष्यदाजज्ञे
तस्यो हेन्द्रो जायाया उपहास्य आस
ताँ होवाचामुदिताङ्गि त्वमिदं गन्धर्वं पृच्छ किमर्थमिदं देवासुरा न
विजयन्तीति
तं तथेति होवाच त्वमपि श्व आगच्छतादिति
स हान्तः समुद्रे हिरण्मय्या नावया सहजानि कुमारयां चक्रेऽथो हेन्द्र
आजगाम
स ह सौवर्णः पटरो भूत्वा नौमण्ड उपशिश्लेष
तँ हागतमेव विदित्वा पप्रच्छामुदिताङ्ग त्वमिदं ब्रूहि किमर्थमिदं देवासुरा
न विजयन्तीति
मोच्चैरिति होवाच कर्णिनी वै नौराप इति
ब्रह्मण्वन्तो देवा इति होवाच ब्रह्मण्वन्तोऽसुरा इति
तच्छ्रुत्वेन्द्रो हरिशुकरूपं कृत्वोत्पपात

तँ ह दृष्ट्वैवाह मघवन्भो इति यतरेषाँ हरिस्ते जेष्यन्तीति
स ह गत्वैवोशनसं काव्यमुपमन्त्रयां चक्रे जयन्त्या च दुहित्रा चतसृभिश्च
कामदुघाभिः
स हाज्ञप्तोऽसुरेभ्योऽधि देवानुपसमियाय
ततो ह वा एतद्देवा असुरान्महासंग्रामं जिग्युः ४६

स ह गुरुरिव मेने गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य
स होवाच गुरुरिवास्मि गरमिव गीर्त्वा बहु वित्तमसुराणां प्रतिगृह्य हन्त मा
याजयेति

तं द्वादशस्तोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार
तेन हेष्ट्वोर्ध्वँ हिरण्यमुज्जगार
तद्ध दृष्ट्वेक्षां चक्रे हन्ताहमिदमसुरेभ्यो निर्हराणीति
तद्धेन्द्र आज्ञायैव शिलां चकार
ते ह वा एत औशनसा नाम कुरुक्षेत्रे पर्वतगाः

स ह लघुरिवाचरदप्रतिष्ठितः
स होवाच लघुरिव वा अस्म्यप्रतिष्ठितो हन्त मा याजयेति
तमेकविँशतिस्तोमेनाग्निष्टोमेन बृहस्पतिराङ्गिरसो याजयां चकार
ततो वै स प्रतितस्थवथो हेन्द्रः कामदुघा अवरुरुधे
तँ ह सायमेतमुवाच प्रातरेतादिति
प्रातरेतमुवाच सायमेतादिति
स एवमेव संवत्सरं नेनीयामास
स होवाच प्रातरेतादिति
मा सायमात्थ सायमेतादिति
मा प्रातरात्थ कोऽयमेतः कतमोऽयमेतो यमेनमेतं मघवन्ब्रवीषीति होक्त्वा प्रवव्राजाथो हेन्द्र उक्थानि कामदुघाश्चकार
ताँ ह स वरुणाय प्रददाविदं तव मम चेदममुष्य च नौ सहेति
बृहस्पतय आङ्गिरसायेदं नावाख्यास्ता विधारया नावहस्येदमज्यसीति
विष्णवे शिपिविष्टाय चेत्येषैवोक्थानाँ सृष्टिरेतन्निदानम्

अथो हास्यैव मनुर्वैवस्वतः शून्यमानः सन्सखास
तस्मै चतुर्थीं प्रददौ
ताँ सोऽस्यां न्यदधात्
सेयं कृष्टिरेवैष कृष्टेः सृष्टिरेतन्निदानं तौ ह वा एतावौशनसौ नाम पुनस्तोमौ भवतः
स यो गुरुरिव मन्येत गरमिव गीर्त्वायाज्यं वा याजयित्वाप्रतिग्राह्यस्य वा प्रतिगृह्य तं द्वादशस्तोमेनाग्निष्टोमेन याजयेदश्नुते हैव लघुताम्
अथ यो लघुरिव चरेदप्रतिष्ठितस्तमेकविँशतिस्तोमेनाग्निष्टोमेन याजयेत् प्रत्येव तिष्ठति ४७

अथ प्रणोदः
समानमभिचरणीयम्प्रातःसवनीयाननुवर्ततेऽग्नये प्रवते पुरोडाशोऽष्टाकपालस्
त्रिवृदेष भवत्यथ विबाधः
समानमभिचरणीयँ शिल्पम्माध्यंदिनीयाननुवर्ततेऽग्नये विबाधवते
पुरोडाशोऽष्टाकपालस्
त्रिवृदेवैष भवत्यथ प्रतिनोदः
समानमभिचरणीयँ शिल्पं तृतीयसवनीयाननुवर्ततेऽग्नये प्रतीकवते
पुरोडाशोऽष्टाकपालस्
त्रिवृदेवैष भवत्यथाग्नेरतिव्याधः
समानमभिचरणीयँ शिल्पम्
अनूबन्ध्यस्य पशुपुरोडाशमनुवर्ततेऽग्नये वसुमते पुरोडाशोऽष्टाकपालस्
त्रिवृदेवैष भवत्यथेन्द्रवज्रः
समानमभिचरणीयँ शिल्पम्पञ्चदश एष भवति
शुनस्कर्णो ह वै शैव्यो राजा पुण्यकृद्बहुयाज्यास

स ह पापीयाञ्जनतां प्रतिहितां प्रतिख्यायर्त्विजः पप्रच्छास्ति स्वित्स
यज्ञक्रतुर्येनाहमिष्ट्वैव प्रयायामित्यस्ति हीति हैनमृत्विजः प्रत्यूचुस्
तस्मा अध्वर्युरयोनीनपुरोरुक्कान्ग्रहान्जग्राह
स्वराण्युद्गाता सामान्यनैडान्यनिधनानि
पराङेवर्ग्मियँ होतानुवाच
स हावभृथादेवोदेत्य ममार
यं द्विष्यात्तस्यैवं यज्ञं कुर्यादुपसृतं वा याजयेत्
क्षिप्रँ हैवास्माल्लोकात्प्रैत्यथ राशिमरायावित्याचक्षते चतुष्टोमे राशिकृतं
धान्यं ददाति
स राशिश्चतुष्टोम एव मरायकृतं स मरायोऽथाञ्जनाभ्यञ्जनावित्याचक्षत
आक्ताक्षा अलंकृता ऋत्विजः प्रचरन्ति
स आञ्जनोऽभ्यक्ताः शामूलवाससः
सोऽभ्यञ्जनोऽथ विषूचीनशालो भ्रातृव्यवतो यज्ञः
स तथा देवयजनं जोषयते यथा प्राचीनमाहवनीयात्प्रवणँ स्यात्प्रतीचीनं

गार्हप्त्रयादिति
तदेते विषूचीनशाले मापयन्ति
प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्ति
मध्ये गार्हपत्यो भवति
मध्यत ग्रासीनाय भन्नानाहरन्त्यनुदिशँ स्तोमौ स्यातामित्येतदेकम्
एकविँशौ स्यातामित्येतदेकम्
ग्रनादृत्य तच्चतुष्टोमावेव कुर्वन्ति ४८

देवासुरा ह यत्र महासंग्रामँ संयेतिरे तद्ध शिबिरौशीनरो देवानां वर्गादसुरान्जिगाय
तस्यो हेन्द्रो जितवरं ददौ
स होवाच शिबिर्नैष्ठ्यं भयं न गच्छेदिति
तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयां चकार ततो ह वा एतच्छिबिं नैष्ठ्यं भयं न गच्छति
यं कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयेदनपजय्यमेव जयति

तदेताश्चतस्रः शाला ग्रनुदिशं मापयन्ति
प्रचरन्ति प्राञ्चः प्रचरन्ति दच्चिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति
मध्ये गार्हपत्यो भवति
मध्यत ग्रासीनायाश्वतरीरथैर्भन्नान्संवहन्त्यनुदिशँ स्तोमाः स्युरित्येतदेकम्
एकविँशाः स्युरित्येतदेकम्
ग्रनादृत्य तच्चतुष्टोमानेव कुर्वन्ति
पार्थः
पार्थो ह स्थपतिर्देवानैप्सत्
स ह सुतसोमान्सहस्रदच्चिणान्सहस्रमसुनोत्
स ह देवानाप
स एतान्सोमानाहरिष्यन्नुपकल्पयते शालाः सहस्रँ सहस्राणि सहस्रमश्वतरीरथांस्तदेताः शाला ग्रनुदिशं मापयन्ति द्वे च शते पञ्चाशतं च पुरस्तादेवं दच्चिणत एवं पश्चादेवमुत्तरतः

प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति
मध्ये गार्हपत्यो भवति
मध्यत आसीनायाश्वतरीरथैर्भक्षान्संवहन्त्यनुदिशँ स्तोमाः स्युरित्येतदेकम्
एकविँशाः स्युरित्येतदेकम्
अनादृत्य तच्चतुष्टोमानेव कुर्वन्ति ४९

यमाभ्याँ स्तोमाभ्यां यक्ष्यमाणो भवति
स तथा देवयजनं जोषयते यथान्तरेण चात्वालोत्करावुदक्संचरी स्यादिति
तदेते प्रबाहुक्शाले मापयन्ति
स दक्षिणाध्याँ शालामध्यवसाय मथित्वाग्नीन्विहृत्य दीक्षणीयामिष्टिं
निर्वपत्
अथोत्तराध्याँ शालामध्यवसाय मथित्वाग्नीन्विहृत्य दीक्षणीयामिष्टिं
निर्वपति
तयेह प्रचर्याथामुत्र प्रचरतीह दीक्षाहुतीर्जुहोत्यथामुत्रेह प्रायणीयामिष्टिं
निर्वपत्यथामुत्र
तयेह प्रचर्याथामुत्र प्रचरतीह पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं
निर्वपत्यथामुत्र
तेनेह प्रचर्याथामुत्र प्रचरतीह प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह
मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेह महावेद्यै पूर्वं परिग्राहं
परिगृह्णात्यथामुत्रेहोत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरत्यथामुत्रेहाहवनीयं
प्रणयत्यथामुत्रेह सदोहविर्धाने संमिनोत्यथामुत्रेहाग्नीषोमौ प्रणयत्यथामुत्रेह
यूपस्यावृता यूपमुच्छ्रयति स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं
पशुमुपाकरोत्यथामुत्र
तस्येह प्रसिद्धं वपया चरित्वा वसतीवरीर्गृह्णात्यथामुत्रेह पशुपुरोडाशं
निर्वपत्यथामुत्र
तेनेह प्रचर्याथमुत्र प्रचरतीहाग्नीषोमीयेण प्रचरत्यथामुत्रेह वसतीवरीः
परिहृत्य पयाँ सि विशिष्योपवसन्त्यथामुत्रेह त्वेव संविशन्तीह
राजानमुपावहृत्य प्रातरनुवाकमुपाकरोत्यथामुत्रेहानुपूर्वँ सवनानि संतिष्ठन्त
आ समुदितादेवमेवोत्तरस्याँ शालायाँ सवनानि संतिष्ठन्त आ
समुदितादिहावभृथेन प्रचरत्यथामुत्रेहोदयनीयामिष्टिं निर्वपत्यथामुत्र

तयेह प्रचर्याथामुत्र प्रचरतीहैव मैत्रावरुणीं वशामुपाकरोत्यथामुत्र
तयेह प्रचर्याथामुत्र प्रचरति
समान्युदवसनीयेष्टिरथ यत्प्राक्सवनेभ्योऽधि व्यतिषक्तानि कर्माणि क्रियन्ते
तस्माद्यमावन्तरुदरे व्यतिषक्तौ सह शयाते
अथ यदनुपूर्वँ सवनानि संतिष्ठन्ते तस्मादनुपूर्वौ जायेते
अथ यदूर्ध्वँ सवनेभ्योऽधि व्यतिषक्तानि कर्माणि क्रियन्ते तस्मात्सहाशयन्ति
सह पाययन्ति सह चरतोऽथ यत्समान्यरणिस्तस्मात्समानी योनिर्
अग्निश्च ह वा आदित्यश्च समानलोकं जिगीषमाणावेतं यज्ञक्रतुमपश्यतां
तमाहरतां तेनायजेतां ततो वै तौ समानलोकावभवताँ समानं लकमैतां यः
कामयेताग्नेश्चादित्यस्य च समानं लोकमियामिति स एतेन यज्ञक्रतुना
यजेताग्निश्चैवादित्यस्य च समानं लोकमेति ५०

वाजयाजी ह वा अन्यो भवत्यन्य उ वाजपेययाज्येष ह वै वाजयाजी यः
पेयैरनिष्ट्वाथ वाजेन यजत एष उ वाजपेययाजी यः पेयैरिष्ट्वाथ वाजेन यजते
तस्मादु पेयैरेवेष्ट्वाथ वाजेन यजेत

पेयैर्यक्ष्यमाणो भवति
सोऽनिष्ट्वैव पौर्णमासीं दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञियेऽहन्सुत्या
संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँसि
विशिष्योपवसन्त्यथैताँ सवनेष्टिं
निर्वपत्याग्नेयमष्टाकपालमिन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं तया
द्वादशाहानि यजतेऽथ त्रयोदशेऽह्नि पौर्णमासेन हविषा यजते येनास्यानिष्टं
भवत्यथ चतुर्दशेऽहन्यामावास्येन ह्वैषा यजते येनास्यानिष्टं भवत्यथैतेषां
यज्ञक्रतूनामेकेन यजतेऽथ पुनर्दीक्षते
स एवमेव संवत्सरं यजते

तस्याहानि त्रिवृत्पञ्चदशोऽथ त्रिवृत्सप्तदशोऽथ त्रिवृदेकविँशोऽथ त्रिवृत्त्रिणवोऽथ त्रिवृत्त्रयस्त्रिँ शोऽथ त्रिवृच्चतुष्टोमो मासानामेव रूपं पेयाः संवत्सरस्य रूपं वाज एवमस्यैष संवत्सरः परीष्ट एवमाप्तो भवत्यथाहीनविधिस्

तस्याहानि त्रिवृत्पञ्चदशः सप्तदशश्चतुष्टोमस्त्रिवृदेवाथैकविँशोऽथ त्रिणवोऽथ चतुष्टोमस्त्रिवृदेवाथ त्रयस्त्रिँ शोऽथ चतुष्टोमस्त्रिवृदेवाथ चतुश्चत्वारिँ शोऽथ चतुष्टोमोऽथातिरात्रो

द्वादश मासाः सप्तदश क्रतवो नवसु मासेषु नव क्रतूनुपैत्यथातिशिष्यन्ते त्रयश्च मासा अष्टौ च क्रतवः

स द्वौ त्रिरात्रौ कुरुत एकं च द्विरात्रं यद्यु वा एतदुपात्येति चतुष्टोमेनाग्निष्टोमेन यजेत

मासानामेव रूपँ स्तुतशस्त्राणि संवत्सरस्य रूपमग्निष्टोमो वाज एवमस्यैष संवत्सरः परीष्ट एवमाप्तो भवत्यथातोऽयुजश्चैव युग्माश्चैकस्याँस्तुवतेऽथ तिसृष्विति न्वयुजोऽथ युग्माश्चतुसृषु स्तुवतेऽथाष्टास्विति युग्मा अयुजां चैव युग्मानां चैव सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः ५१

अथातो दिशामेव
त्रिवृत्प्राच्यै
पञ्चदशो दक्षिणायै
सप्तदशः प्रतीच्ययेकविँश उदीच्यै
त्रिणव इत ऊर्ध्वायै

त्रयस्त्रिँ शोऽमुतोऽवाच्यै
सर्वासामेव चतुष्टोमो दिशामेव सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवंविदुरथात ऋतूनामेव
त्रिवृद्वसन्तस्य
पञ्चदशो ग्रीष्मस्य
सप्तदशो वर्षाणाम्
एकविँशः शरदस्

त्रिणवो हेमन्तस्य
त्रयस्त्रिँ शः शिशिरस्य
सर्वेषामेव चतुष्टोम ऋतूनामेव सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुरथात ऋषीणामेव
त्रिवृद्वसिष्ठस्य
पञ्चदशो भरद्वाजस्य
सप्तदशो विश्वामित्रस्यैकविँशो जमदग्नेस्
त्रिणवः कश्यपस्य
त्रयस्त्रिँ शो गौतमस्यागस्त्यस्य चतुष्टोमः
सर्वेषामेव चतुष्टोम ऋषीणामेव सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुरथातो देवतानामेव
त्रिवृदग्नेः
पञ्चदश इन्द्रस्य
सप्तदशः प्रजापतेरेकविँशोऽमुष्य तपतस्
त्रिणवश्चन्द्रमसस्
त्रयस्त्रिँ शो विश्वेषां देवानां सर्वासामेव चतुष्टोमो देवतानामेव सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुः ५२

अथातो दर्शपूर्णमासयोरयनमित्याचक्षते
सूयाचन्द्रमसोरयनमित्येक आहुः
पौर्णमासेन सोमेन यक्ष्यमाणो भवति
दीक्षते
तस्यापरिमिता दीक्षाः षडुपसदः
स तथा राजानं क्रीणाति यथा मन्यते पौर्णमास्यै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति

तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति
तस्याग्नीषोमीय उपालम्भ्यो भवति

तस्य प्रातःसवनीयाननुवर्तन्ते पौर्णमासहवींषि
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषाम्
ऋजुधा ज्योतिरुक्थ्यः संतिष्ठत आमावास्येन सोमेन यक्ष्यमाणो भवति दीक्षते
तस्यापरिमिता दीक्षा द्वादशोपसदः
स तथा राजानं क्रीणाति यथा मन्यतेऽमावास्यायै मे यज्ञियेऽहन्सुत्या संपत्स्यत इति
तस्य तथा संपद्यते
प्रसिद्धेन कर्मणोपवसथादेत्यथास्यैतदहरिन्द्राय वत्सा अपाकृता भवन्त्यैन्द्रं पयो दोहयति संनाय्यस्य वावृता तूष्णीं वाथ वसतीवरीः परिहृत्य पयाँ सि विशिष्योपवसन्त्यथ प्रातराग्नेयं पशुमुपाकरोति
तस्यैन्द्र ऋषभ उपालम्भ्यो भवति
तस्य प्रातःस्वनीयाननुवर्तन्त आमावास्यानि हवींषि
प्रैषवन्तः सवनीया अनुब्रूहि यजेतीतरेषाँ हविषम्
ऋजुधा ज्योतिरतिरात्रः संतिष्ठते
सूर्याचन्द्रमसयोरेव तत्सायुज्यँ सलोकतामाप्नुवन्ति य एतेनायनेन यन्ति य उ चैनदेवं विदुर्य उ चैनदेवं विदुः ५३

एकोनविंशः प्रश्नः

सावित्रँ स्वर्गकामश्चिन्वीत
पशुबन्धे चेच्चीयते षड्ढोतारँ हुत्वा यूपाहुतिँ हुत्वा यूपँ सयजुषं कृत्वा वेदिं विमिमीते
वेदितृतीये यजेतेति विज्ञायते
तस्याः सौमिकं मानमेतावदेव नाना
सौमिकात्प्रक्रमात्तृतीयोऽँशः प्रक्रमः स्यात्तेन वेदिं विमिमीतेऽपि वा पदाद्दक्षिणया पार्श्वमानी पदं तिरः पशुमानेन तयोर्यः कर्णसंमितः प्रक्रमः स इष्यते
पदाद्वा नवमस्तदद्दक्षिणया तयोस्तु यः कर्णसंमितः स प्रक्रमार्थस्तेन मेया सौमिकी वेदिरग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्य स्तम्बयजुर्हरतीदमेव प्रसिद्धं पौरोडाशिकं त्रिर्यजुषा तूष्णीं चतुर्थं पूर्वं

परिग्राहं परिगृह्णाति करणं जपत्युद्धन्त्युद्धतादाग्नीध्रस्त्रिर्हरति
यदाग्नीध्रस्त्रिर्हरत्यथैतमग्निं प्रत्यञ्चं यूपावटीयाच्छङ्कोर्विमिमीते
पद्मः संमितश्चेतव्य इति रथचक्रमात्र एवैष उक्तो भवत्यथाप्युदाहरन्ति
द्व्यरत्निः प्रथमं चक्रं द्वौ सार्धौ मध्यमं त्रिभागोनास्त्रय उत्तममिति
तेषामन्यतममात्रीँ रज्जुमुभयतःपाशां कृत्वोत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य
तस्मिन्पाशौ प्रतिमुच्य तस्मिन्नन्तेऽन्यँ शङ्कुं प्रास्य तेनैनं प्रदक्षिणं परिमण्डलं
परिलिखत्य्
अपोद्धृत्य स्पन्द्यां कर्षूः खानयन्त्युच्छ्रयन्त्यपस्या दक्षिणतश्च पश्चाच्च
वर्षीयसीः कुर्वन्त्यथ याचत्याज्यस्थालीँ सस्रुवाँ स्फ्यं
दर्भस्तम्बमुदपात्रमौत्तरवेदिकाँश्च संभारान्दधि मधुमिश्रँ हिरण्यं च शर्कराः
सिकताश्च दर्भानित्येतत्समादायोत्तरार्धे सँसादयन्त्यथ द्वाभ्यामात्मन्यग्निं
गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्यान्तःशर्करमिमामुपदधाति प्रजापतिस्त्वा सादयतु तया
देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ शङ्कुमुद्वृह्योदपात्रमुपनिनीय
दर्भस्तम्बमुपदधाति वाक्त्वा समुद्र उपदधात्विति वा तूष्णीं वाथैनँ
स्रुवाहुतिभिरभिजुहोति सजूरब्दोऽयावभिरिति पञ्चभिस्
तयादेवतं कृत्वा सूददोहसं करोति १

अथ चात्वालस्यावृता चात्वालं परिलिखत्युत्तरवेदेरावृतोत्तरवेदिं
निवपत्युत्तरनाभिमुत्साद्य यूपावटं खात्वा प्रोक्ष्य व्याघार्यालङ्कृत्य सिकता
निवपत्यग्ने तव श्रवो वय इति षड्भिरनुच्छन्दसम्

अथोर्ध्वचित उपदधाति चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया
देवतयाङ्गिरस्वद्ध्रुवाः सीदतेत्यथानुव्यूहत्याप्यायस्वेति गायत्र्या ब्राह्मणस्य
सं ते पयाँ सीति त्रिष्टुभा राजन्यस्य
यथासुष्ठु यथाशर्करमनुव्यूहति
तस्यां नव परिमण्डला लेखा लिखत्यथ दध्ना मधुमिश्रेण शर्कराः समज्य
सायमग्निहोत्रँ हुत्वाग्नीन्परिस्तीर्योपवसत्यथ प्रातर्हुतेऽग्निहोत्रे याचत्युदपात्रं
भस्म पुरीषमूषान्सिकता यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितं

तावन्मात्रीः पञ्चाशीतिशतँ हिरण्येष्टकाः शर्करा वा घृताक्तास्तावत्यो
लोकंपृणा अपरिमिता वा चतस्रः स्वयमातृण्णाः सहस्रँ हिरण्यशक्लानूर्ध्वं
त्रिभ्योऽपरिमितानित्येक आहुस्
ते यदि सहस्रं भवन्ति द्वेद्वे शते पत्रनाडीष्वोते भवतोऽथोदित आदित्ये
द्वाभ्यामात्मन्यग्निं गृह्णीते मयि गृह्णाम्यग्रे अग्निं यो नो अग्निरिति
स्वयंचितिं जपति यास्ते अग्ने समिधो यानि धामेति
श्वेतमश्वमभिमृश्याधिद्रवणं जपत्यपामिदं न्ययनं नमस्त इति द्वाभ्याम्
अथापरार्ध उदपात्रमुपदधाति वाक्त्वा समुद्र उपदधे सुप्रजावनिँ
रायस्पोषवनिं मह्यं यजमानायेति

तयादेवतं कृत्वा सूददोहसं करोत्यथ संभारान्निवपत्यग्नेर्भस्मासीति भस्माग्नेः
पुरीषमसीति पुरीषं संज्ञानमसि कामधरणमित्यूषान्मयि ते कामध्रणं
भूयादिति सिकता अथैनान्संप्रयौति सं या वः प्रियास्तनुवः सं प्रिया
हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तनुवो
ममेत्यथैनान्कल्पयति कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः ।
कल्पन्तामग्नयः पृथग्मम ज्यैष्ठ्याय सव्रता इति
ताँस्तथा कल्पयति यथा न लेखाः संलोपयन्ते
सद्यो वा सर्वं क्रियते सद्यस्काले २

अथान्तमायां लेखायां पूर्वपक्षस्य दिनेष्टका उपदधाति संज्ञानं तया
देवतयाङ्गिरस्वद्ध्रुवा सीद विज्ञानं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
पञ्चदश
तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति चित्रस्तया
देवतयाङ्गिरस्वद्ध्रुवा सीद केतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षस्य क्षपेष्टका
उपदधाति दर्शा तया देवतयाङ्गिरस्वद्ध्रुवा सीद दृष्टा तया
देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
तासामन्तरालेष्वेतासामेव क्षपाणां मुहूर्तेष्टका उपदधाति दाता तया
देवतयाङ्गिरस्वद्ध्रुवा सीद प्रदाता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
पञ्चदश

सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य दिनेष्टका उपदधाति प्रस्तुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीद विष्टुतं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
तासामन्तरालेष्वेतेषामेव दिनानां मुहूर्तेष्टका उपदधाति सविता तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रसविता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षस्य क्षपेष्टका उपदधाति सुता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सुन्वती तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
तासामन्तरालेष्वेतासामेव क्षपाणां मुहूर्तेष्टका उपदधात्यभिशास्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदानुमन्ता तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां पूर्वपक्षेष्टका उपदधाति पवित्रं तया देवतयाङ्गिरस्वद्ध्रुवा सीद पवयिष्यंस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामपरपक्षेष्टका उपदधाति सहस्वांस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद सहीयांस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति द्वादश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां मासेष्टका उपदधात्यरुणास्तया देवतयाङ्गिरस्वद्ध्रुवा सीदारुणरजास्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदश
सर्वासां पारे सूददोहसः करोत्यथात्रैके लेखान्तरालेषु सिकता निवपन्त्येजत्का जोवत्का इत्य्
अथाभ्यन्तरायां लेखायां मुहूर्तानां मुहूर्तेष्टका उपदधातीदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीद तदानीं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति पञ्चदश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायां ऋत्विष्टकाश्चर्त्विष्टकाश्चोपदधात्यग्निष्टोमस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदोक्थ्यस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडग्निर्ऋतुस्तया

देवतयाङ्गिरस्वद्ध्रुवा सीद सूर्य ऋतुस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति तिस्रः
सर्वासां पारे सूददोहसः करोत्यथ मध्ये नाभ्याँ संवत्सरेष्टका उपदधाति प्रजापतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद संवत्सरस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रः
सर्वासां पारे सूददोहसः करोति ३

तदेताश्चतस्रः स्वयमातृण्णा याचति
ता दिक्षूपदधाति भूरग्निं च पृथिवीं चेति पुरस्ताद्भुवो वायुं चान्तरिक्षं चेति दक्षिणतः स्वरादित्यं च दिवं चेति पश्चाद्भूर्भुवः स्वश्चन्द्रमसं च दिशश्चेत्युत्तरतः
सर्वासां पारे सूददोहसः करोत्यथ लोकंपृणा उपदधाति लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम्। इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्निति तयादेवतं करोति तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ सूददोहसं करोति ता अस्य सूददोहसः सोमँ श्रिणन्ति पृश्नयः । जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इति

प्राच्यात्र लोकंपृणया प्रसौत्यग्निं प्राचीभिः संप्रच्छादयन्ति संप्रच्छन्नं पलाशशाखया परिक्रषति लोकं पृण छिद्रं पृणेत्यथानभिमृष्टं चितिक्लृप्तया भवत्यथाग्निमभिमृशति यत्तेऽचितं यदु चितं ते अग्न इति द्वाभ्याम्
अत्र चितिक्लृप्तयाभिमृशति चित्तिमचित्तिं चिनवद्वि विद्वानित्यग्ने देवाँ इहावहेत्याग्नेय्या गायत्र्यैतां चितिमभिमृश्य द्वे अवद्रवणे जपति वाङ्म आसन्प्राणदा इत्यथ कृष्णमश्वमभिमृश्य तनुपुरीषमुपदधाति पृष्टो दिवीति तयादेवतं कृत्वा सूददोहसं करोत्यथ पात्र्यामप आनीय हिरण्यशलकान्संप्रकीर्य द्वाभ्यांद्वाभ्याँ शताभ्यां प्रोक्षति सहस्रस्य प्रमा असीति पुरस्तात्सहस्रस्य प्रतिमा असीति दक्षिणतः सहस्रस्य विमा असीति पश्चात्सहस्रस्योन्मा असीत्युत्तरतोऽथ मध्यं द्वाभ्याँ शताभ्यां प्रोक्षति साहस्रोऽसि सहस्राय त्वेत्यथोत्तरार्धे तिष्ठन्निष्टका धेनूः कुरुत इमा मे अग्न इष्टका धेनवः सन्त्वित्यान्तादनुवाकस्यात्रैकेऽर्कपर्णेनाजक्षीरेण

चरमायामिष्टकायां जुह्वति
स यद्यु हैनम्करिष्यन्भवत्यथैतस्यार्कपर्णस्य पुटमन्तरवस्राविणं कृत्वोदङ्तिष्ठन्मुखदघ्ने धारयन्नाहाहरानयेति

स यत्र धारेष्टकां प्राप्नोति तत्प्रतिपद्यते त्वमग्ने रुद्र इत्यान्तादनुवाकस्यात्रैतदर्कपर्णं यं द्वेष्टि तस्य संचरे पशूनां न्यस्यति
यद्यु वै न द्वेष्ट्याखुववटे न्यस्यत्यथैनमुपतिष्ठते त्वमेव त्वां वेत्थ योऽसि सोऽसीत्येतेनानुवाकेनाथ सँहारविहाराभ्यामुपतिष्ठते संवत्सरोऽसि परिवत्सरोऽसीत्येतेनानुवाकेनाथाह होतरग्नेरुक्थेनाग्निमनुशँ सेति
यदि होता न कामयते यजमान एव जघनेनाग्निं तृणानि संस्तीर्य तेषूपविश्याग्नेरुक्थेनाग्निमनुशँ सति
भूर्भुवः स्वरित्येताभ्यामृग्भ्यां त्रिस्त्रिरेकैकामन्वाह
प्रणवेनाभिसंधानमेवमन्यत्राप्यृगुपसंधाने प्रणवेनैवाभिसंधानम्
अत्र ये ब्राह्मणा बहुविदस्तेभ्यो यद्दक्षिणा न नयेदुरिष्टँ स्यादग्निमस्य वृञ्जीरन्
तेभ्यो यथाश्रद्धं दद्यात्
स्विष्टमेवैतत्क्रियते
नास्याग्निं वृञ्जत इति ब्राह्मणम् ४

अथाभ्याधानप्रभृति पाशुबन्धिकं कर्म तायते
सिद्धमाग्निप्रणयनात्कृत्वाग्निं प्रणीयोपसमाधायाध्वराहुतिभिरभिहूय नानाचतुर्गृहीतैरेता आहुतीर्जुहोति
त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्

अग्नाविष्णू इति वसोर्धारायन्नपत इत्यन्नहोमः
सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीरित्यथ
स्रुवेणोपघातमेकविँशतिमाहुतीर्जुहोत्यसवे स्वाहा वसवे स्वाहेति
हुत्वाहुत्वैव सँस्रावान्यजमानस्याञ्जलावावपति
तैर्यजमानो मुखं विमृष्टे राज्ञी विराज्ञीत्येतेनानुवाकेनोत्तरपरिग्राहप्रभृति पाशुबन्धिकं कर्म तायते
सिद्धमा मनोतायाः कृत्वा मनोतामनुद्रुत्य पशोरवदानानि संमृश्यौदुम्बरे

पात्रे यूष्णो मृत्युग्रहं गृह्णाति विपश्चिते पवमानाय
गायतेत्यनुद्रुत्योपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामीति
दर्भैः परिमृज्योत्तरवेद्याँ सँसादयत्येष ते योनिर्मृत्यवे त्वेत्यथ पशुना चरत्यथ
वनस्पतिना चरत्यथ पुरस्तात्स्विष्टकृतोऽथैतं ग्रहँ होष्यन्नप उपस्पृशति
विद्युदसि विद्य मे पाप्मानमित्यथ जुहोत्यप मृत्युमप क्षुधमपेतः शपथं जहि
। अधा नो अग्न आवह रायस्पोषँ सहस्रिणम्॥
ये ते सहस्रमयुतं पाशार्मृत्यो मर्त्याय हतवे । तान्यज्ञस्य मायया
सर्वानवयजामहे स्वाहेत्यथ हुत्वोपस्पृशेद्वृष्टिरसि वृश्च मे पाप्मानमित्यथ
स्विष्टकृता चरत्युपहूयमानायामिडायामुपगृहन्ति ग्रहम्

उपहूतं ग्रहं यजमानो भक्षयति भक्षोऽस्यमृतभक्षस्तस्य ते
मृत्युपीतस्यामृतवतः स्वगाकृतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
भक्षयित्वात्मानं प्रत्यभिमृशते मन्द्राभिभूतिः
केतुर्यज्ञानामित्यान्तादनुवाकस्यानूयाजप्रभृति पाशुबन्धिकं कर्म तायते
सिद्धमा दक्षिणानां कालाद्दक्षिणानां काले धेनुमृषभमनड्वाहं
दत्त्वैकविँशतिर्दक्षिणा ददाति
शतं ददाति
सहस्रं ददात्यन्विष्टकं दक्षिणा ददाति
यदि न विन्देत मन्थानेतावतो दद्यादोदनान्वा
पष्ठौहीं त्वन्तर्वतीं दद्याद्धिरण्यं ददाति
वासो ददाति
तेनायुः प्रतिरत इति ब्राह्मणं तं चेत्सौम्येऽध्वरे चिन्वीत प्रथमायामुपसदि
क्षेत्रकरणम्मध्यमोत्तमे उपसदावन्तरेणोपधानं कालेऽग्निप्रणयनं दक्षिणानां
काले दक्षिणाः
सवनीयस्य यूष्णो मृत्युग्रहस्
तं चेदहीने सत्रे वा चिन्वीत प्रथमेऽहनि दक्षिणाः प्रथमेऽहनि यूष्णो
मृत्युग्रहो न सत्रे दक्षिणा नीयन्ते
नाचिकेत एव मृत्युग्रहः स्यादित्येतदपरम्
अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्यामिक्षया वेति
तस्यै सायमग्निहोत्रे हुते सायंदोहः प्रातरग्निहोत्रे हुते प्रातर्दोहः

पशुपुरोडाशेन सह श्रपणम्
असमुदिते चर्या
संतिष्ठते सावित्रः ५

अथ नाचिकेतस्य
प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नाना
नात्र लेखा भवन्त्यथ याजुषीरुपदधाति लोकोऽसि
स्वर्गोऽसीत्यञ्जलिनैकविँशतिं यथा निपतन्ति तास्तत्रतत्रोपदधाति
तदेतदन्यत्रापि प्रकीर्णानामुपधानस्य निधानं यदि पाङ्क्तः पञ्च पुरस्तात्पञ्च
दक्षिणतः पञ्च पश्चात्पञ्चोत्तरत एकां मध्येऽथ यदि त्रिवृत्सप्त पुरस्तात्तिस्रो
दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां मध्येऽथ यदूर्ध्वाः पश्चात्कोटयाः
प्रभृत्यूर्ध्वाः स्वयमातृरणावकाशादथ यदि प्राचीः
स्वयमातृरणावकाशात्प्रभृति प्राचीः
स्वयमातृरणाभ्यः प्रभृति सिद्धमत ऊर्ध्वं स यदीच्छेत्तेजस्वी यशस्वी
ब्रह्मवर्चसी स्यामिति प्राङा होतुर्धिष्णयादुत्सर्पेदित्याहवनीयसकाशाद्येयं
प्रागाद्यशस्वती सा मा प्रोर्णोतु तेजसा यशसा ब्रह्मवर्चसेनेति
तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवतीत्यथ यदीच्छेद्भूयिष्ठं मे
श्रद्दधीरन्भूयिष्ठा दक्षिणा नयेयुरिति दक्षिणासु नीयमानासु प्राच्येहि
प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये
जुहुयाद्
भूयिष्ठमेवास्मै श्रद्दधते
भूयिष्ठा दक्षिणा नयन्तीति ब्राह्मणं संतिष्ठते नाचिकेतः ६

अथ ब्रह्मचितः
प्रसिद्धं क्षेत्रकरणं यथासावित्रस्यैतावदेव नाना
नात्र लेखा भवन्त्यथ पुरस्तादुदीचीर्दशहोत्रेष्टका उपदधाति चित्तिः स्रुक्तया
देवतयाङ्गिरस्वद्ध्रुवा सीद चित्तमाज्यं तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
दशाथ हृदयेष्टकामुपदधाति सुवर्णं घर्मं परिवेद वेनमित्यनुद्रुत्य देवैः स
मानसीन आत्मा जनानामित्यातोऽथ यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया
देवतयाङ्गिरस्वद्ध्रुवा सीद सविता स्तोमैस्तया देवतयाङ्गिरस्वद्ध्रुवा

सीदेत्यथ पत्नीष्टके उपदधाति सेनेन्द्रस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद धेना बृहस्पतेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
सर्वासां पारे सूददोहसः करोत्यथ दक्षिणतः प्राचीश्चतुर्होत्रेष्टका उपदधाति पृथिवी होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद द्यौरध्वर्युस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रोऽथ हृदयेष्टकामुपदधाति ब्रह्मेन्द्रमग्निमित्यनुद्रुत्य यज्ञमेतं चतुर्होतॄणामात्मानं कवयो निचिक्युरित्यातोऽथ यजुरिष्टके उपदधातीन्द्र उक्थामदैस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद मित्रावरुणावाशिषा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्
अथ पत्नीष्टके उपदधाति पथ्या पूष्णस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद वाग्वायोस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
सर्वासां पारे सूददोहः करोत्यथ पश्चादुदीचीः पञ्चहोत्रेष्टका उपदधात्यग्निर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीदाश्विनाध्वर्यू तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति चतस्रोऽपि वाश्विनाध्वर्यू इत्येतेनैव मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति
तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रँ संनमयत्यथ हृदयेष्टकामुपदधाति शतं नियुतः परिवेदेत्यनुद्रुत्य प्राणमुल्बं तेन क्लृप्तोऽमृतेनाहमस्मीत्यातोऽथ यजुरिष्टके उपदधात्यङ्गिरसो धिष्णियैरग्निभिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद मरुतः सदोहविर्धानाभ्यां तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति दीक्षा सोमस्य तया देवतयाङ्गिरस्वद्ध्रुवा सीद पृथिव्यग्नेस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति
सर्वासां पारे सूददोहसः करोत्यथोत्तरतः प्राचीः षड्ढोत्रेष्टका उपदधाति वाग्घोता तया देवतयाङ्गिरस्वद्ध्रुवा सीद दीक्षा पत्नी तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडथ हृदयेष्टकामुपदधाति सुवर्णं कोशँ रजसा परीवृतमित्यनुद्रुत्येन्द्रस्यात्मानँ शतधा चरन्तमित्यातोऽथ यजुरिष्टके उपदधात्यापः प्रोक्षणीभिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीदौषधयो बर्हिषा तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति वसूनां गायत्री तया देवतयाङ्गिरस्वद्ध्रुवा सीद रुद्राणां त्रिष्टुक्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति

सर्वासां पारे सूददोहसः करोत्यथोपरिष्टात्प्राचीः सप्तहोत्रेष्टका उपदधाति
महाहविर्होता तया देवतयाङ्गिरस्वद्ध्रुवा सीद सत्यहविरध्वर्युस्तया
देवतयाङ्गिरस्वद्ध्रुवा सीदेति षडपि वानाधृष्यश्चाप्रतिधृष्यश्च
यज्ञस्याभिगरवित्येतेन मन्त्रेण द्वे इष्टके समानतयादेवते उपदधाति
तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रँ संनमयत्यथ
हृदयेष्टकामुपदधातीन्द्रो राजा जगतो य ईश इत्यान्तादनुवाकस्याथ
यजुरिष्टकाउपदधात्यदितिर्वेद्या तया देवतयाङ्गिरस्वद्ध्रुवा सीद सोमो
दीक्षया तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति त्रयोदशाथ पत्नीष्टका
उपदधात्यादित्यानां जगती तया देवतयाङ्गिरस्वद्ध्रुवा सीद
विष्णोरनुष्टुक्तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यष्टादश
सर्वासां पारे सूददोहसः करोत्यथ यथावकाशं ग्रहेष्टका उपदधाति
वाचस्पते विधे नामन्निति दशहोतुर्वाचस्पते वाचो वीर्येणेति चतुर्होतुः सोमः
सोमस्य पुरोगा इति पञ्चहोतुर्भूर्भुवः सुवरिति षड्ढोतुर्वाचस्पते हृद्विधे
नामन्निति सप्तहोतुः
सर्वासां पारे सूददोहसः करोत्यथ यथावकाशमेव प्रतिग्रहेष्टका उपदधाति
देवस्य त्वा सवितुः प्रसव इत्यनुद्रुत्यैषा ते काम दक्षिणोत्तानस्त्वाङ्गिरसः
प्रतिगृह्णात्वित्येकान्नविँशम्

अपि वा गन्धर्वाप्सराभ्यः स्रगलङ्करणे इत्येतेन मन्त्रेण द्वे इष्टके
समानतयादेवते उपदधाति
तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति मन्त्रँ संनमयति
स्वयमातृणाभ्यः प्रभृति सिद्धमत ऊर्ध्वँ
संतिष्ठते ब्रह्मचित् ७

अथ समस्तस्य
प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नाना
सावित्रोऽग्निः प्रथमा चितिर्लोकंपृणा द्वितीया
नाचिकेतस्तृतीया
लोकंपृणा चतुर्थी

ब्रह्मचित्पञ्चमी
सर्वासु चितिषु स्वयमातृरागा
पुरीषान्ताश्चितयोऽग्ने देवाँ इहावहेत्येताभिः पञ्च चितीरभिमृशति
तं चेत्सौम्येऽध्वर उत्तम एव चक्रे चिन्वीत प्राग्दीक्षणीयायै दिवः
श्येनीभिर्यजेतोदवसानीयाया अपाघाभिः
सकृत्प्रयुज्य समस्यति
संतिष्ठते समस्तः ८

अथ वैश्वसृजस्य
प्रसिद्धं क्षेत्रकरणं यथा सावितस्यैतावदेव नाना
तिस्रो लेखा भवन्त्यथान्तमायां लेखायामुपदधाति यच्चामृतं यच्च मर्त्यमित्यष्टादश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामुपदधाति सर्वा दिशो दिक्ष्विति पञ्चदश
सर्वासां पारे सूददोहसः करोत्यथाभ्यन्तरायां लेखायामुपदधाति सर्वान्दिवँ सर्वान्देवान्दिवीति नव
सर्वासां पारे सूददोहसः करोति
स्वयमातृराणाभ्यः प्रभृति सिद्धमत ऊर्ध्वं तं चेदहीने सत्रे वा चिन्वीत शतरात्रे विश्वजिति सर्वपृष्ठे दक्षिणानां काले ब्रह्मा सदस्यासीनो वैश्वसृजान्व्याचष्ट ऋचां प्राची महती दिगुच्यत इति पच्छोऽर्धर्चशो ब्राह्मणे वाक्यशस्
तस्मा अध्वर्युः प्रतिगृणात्यों बृहदृतं बृहत्सत्यं बृहदरात्स्म बृहदिति
तस्योत्तमे पर्यायेऽरात्स्म बृहत्संपद्यते
संतिष्ठते वैश्वसृजः ९

एतेनारुणकेतुको व्याख्यातो यावन्मन्त्रमबीष्टका लोकंपृणाश्च
स्वयमातृराणाश्चाप एव
पुष्करपर्णँ रुक्मँ हिरण्मयं पुरुषं कूर्ममित्यातपति वर्ष्या इति
यथासमाम्नातम्पल्वल्या इत्यविशोष्या इत्यर्थ उत्तरवेद्यावपनकाले तां तूष्णीं जानुदघ्नीं खात्वान्यत्र मृदं निवपति

विदेरग्निरित्यादि लुप्यते
ध्रुवासीति प्रतिपद्यते
हस्तग्राहमबीष्टका उपदध्याद्भद्रं कर्णेभिरिति द्वाभ्याँ शान्तिं कृत्वा
ताभ्यामुपदधात्यापमापामिति पञ्चभिर्महानाम्नीभिरुष्णोदकं शिवा नः शंत-
मेति सौषध्योऽपोऽध्वर्यवे ददाति
स ताः प्रतिगृह्य शिवा न इत्युपदधाति
सुमृडीकेति भूमिवतीमुपदध्यादेताः पुरस्तात्
स्मृतिः प्रत्यक्षमित्यष्टौ मध्ये शुक्रं ते अन्यदिति च
साकंजानामित्येकादश पुरस्ताद्दक्षिणतोऽक्षिदुःखोत्थितस्यैवेति षडिहेह वः
स्वतपस इति चातिताम्राणीति चतस्रो मदन्तीस्तप्ताः प्रवर्ग्यवदाद्यन्तयोः
शान्तिं कृत्वात्यूर्ध्वाक्ष इति त्रीण्यृतुमण्डलान्यव द्रप्स इति चारोग इत्यष्टौ
सूर्यनामभिः पदशो यत्ते शिल्पमिति च

व्याहृतीर्जपित्वापो व इति यजमान उपतिष्ठत एवमुत्तरैरुपस्थानं
व्याहृतीर्जपित्वा
सप्त सूर्याः सप्त दिशो नानासूर्यास्यद्द्यावश्चित्रं देवानामिति चतस्रः सौरीः
पुरस्तात्क्वेदमभ्रमित्येकाम्
अर्धमासा इत्युपरिष्टात्
काला अप्सु निविशन्त इति दक्षिणतः
किँस्विदत्रेति पञ्च वैष्णवीः
पृच्छामि त्वा परं मृत्युमिति चतस्रो मृत्युमतीः
पृच्छामि त्वा पापकृत इति चतस्रो निरयवतीरा यस्मिन्नग्ने नयेति द्वे
अग्निश्च जातवेदाश्चेत्यष्टौ दिश्या दिशो व इति यजमानः
प्रभ्राजमाना इत्येकादश रुद्राः
प्रभ्राजमान्य इत्येकादश रुद्राण्यः पदशो मध्ये
रूपाणि व इति यजमानः
स्वान भ्राडित्येकादश गन्धर्वगणाः पदशः पश्चाद्गौरी मिमायेत्येका वराहवः
स्वतपस इति सप्त वाताः पदशः
समानमेतदिति वृष्टिमती
यदक्षरमिति लोको जमदग्निरित्याप्यायितस्

तच्छंयोरिति शंयुः
सहस्रवृदित्यष्टौ संयानीः
स संग्राम इति द्वे च
पवित्रवन्तः पवित्रं ते ब्रह्मा देवानामसतः सद्य इति चतस्रः पवित्रवत्य उत्तरतोऽमी य ऋक्षा इति सप्त मध्येऽन्धो मणिमिति पञ्च वैश्वदेवीरुत्तर आ तमग्ने रथमिति तिस्र आतनुष्वेति चतस्र आ मन्द्रैरित्येकां यजमान उपदध्यादणुभिश्चेति द्वे
सुब्रह्मण्योमित्येकाम्
अरुणाश्वा इति चतस्रो रेवतीर्ब्रह्मण उदरणमसीति चतस्रो ब्रह्मसदनाः
पुष्करपर्णँ रुक्मँ हिरण्मयं पुरुषं कूर्ममिति महाग्निवदेव
तान्युपधाय हँसः शुचिषदिति द्वे दूरोहणे पुरुषमभितस्
तदित्पदमिति द्वे मध्ये
वसूनां रुद्राणामित्यष्टावुत्तरतो रश्मयो वसिति यजमान
आरोगस्येत्यष्टावुपरिष्टादापो व इति यजमानः
प्रभ्राजमानानामित्येकादश प्रभ्राजमानीनामिति चैकादश मध्ये
रूपाणि वसिति यजमानोऽग्नेः पूर्वदिश्यस्येत्यष्टौ दिश्या दिशो व इति यजमानो दक्षिणपूर्वस्यामिति चतस्रो नरकवतीर्यथालिङ्गम्
आ यस्मिन्निन्द्रियाणि शतक्रतविति द्वे दक्षिणत इन्द्रघोषा वः संज्ञानमिति षड्दिश्या आदित्य सर्व इति पञ्च दिश्या एवा ह्येवेति षड्दिश्या
आपमापामिति नवोपरिष्टादपाँ रसमित्येकां कामस्तदग्र इति संकलपवतीम्
आपो ह यदित्योघवतीम्विधाय लोकानिति स्तम्भनवतीं केतव इत्येकाम्
इमा नु कमिति तिस्र आप्लवस्वेति सप्तदश क्षपण्यो विशीर्ष्णीमिति द्वे
पर्जन्यायेति तिस्रः

पुनर्मामैत्विति च तिस्रः
स्वयमातृण्णादि समानमुत्तरँ सावित्रेण
स्वयमातृण्णा लोकंपृणाश्चैता आपः पञ्च चितयो भवन्ति
प्रतिदिशं चितीः पुष्करपर्णादिभिः प्रच्छादनमन्याः प्रथमचितिवद्न
पुष्करपर्णादय उत्तरतो लोकंपृण्यापवर्गो दीर्घदारुभिर्मञ्चं कृत्वा पृष्टो दिवीति पुरीषव्यूहनम्

अन्त्येष्टके शतरुद्रीयहोमोऽनुशँ सनान्तेऽग्निप्रणयनं हूयमानायां वैश्रवणयज्ञो ब्राह्मणेन व्याख्यातोऽन्नकामस्य सर्वकामस्य वा पर्वणिपर्वणि वैश्रवणयज्ञः सोत्तरवेदिषु क्रतुषु चिन्वीतेति यथाब्राह्मणं तस्यैतद्व्रतमिति यथाब्राह्मणं संमिताश्च व्रतसमुच्चया आपो न बीभत्स्या यथाब्राह्मणमेककामः सर्वकामो वा

आपो वा इदँ सर्वमिति ब्राह्मणं विज्ञायते ब्रह्म वा आपो यदाप उपधीयन्ते ब्रह्म वै तदात्मन्धत्ते ब्रह्मणः सायुज्यँ सलोकतामाप्नोति य एतमग्निं चिनुत इति
संतिष्ठत आरुनाकेतुकः संतिष्ठत आरुणकेतुकः १०

## विंशः प्रश्नः

उपवसथ इति ॥
कथमु खलूपवसथं जानीयात्
संध्यः स्विदेवोपपाद्योऽथऽपूरि नादर्शीति
साधु खलु संध्यः साधु संधेरुपपादनं ननु खलु संध्यः सूपपादय इव सर्वेषां त्वेव संध्य इवेति
स ह स्माह बौधायन यत्रैतदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रमा लोहितीभवन्निवोदियात्तमप्युपवसथं जानीयादित्
अत्रो ह स्माह शालीकिरतिपन्नः खल्वेष भवति
स संध्यं वैवोपपादयिषेत्पूर्णं वाभियजेत
तस्य चेदुपवसतोऽस्तमित आदित्ये पुरस्ताच्चन्द्रं लोहितीभवन्निवोदियादारमताग्निहोत्रेणेत्युक्त्वा पार्वणेन प्रक्रामेत्
सँस्थिते पार्वणेऽग्निहोत्रं जुहुयादिति नु खलु पौर्णमास्याम्
अथामावास्यायामिति
स ह स्माह बौधायनोऽदृश्यमान एवोपवसेन्न दृश्यमान इत्येवं चैव खलु कुर्यादिति शालीकिरस्ति त्वपि दृश्यमान उपवसथो
यत्रैतद्रात्रीभिरुपपन्नोऽणुश्चन्द्रमाः परिनक्षत्रमुपव्युषं भवति न स श्वो भूते दृश्यते तमप्युपवसथं जानीयादिति ॥
अग्नीनामन्वाधान इति ॥

सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायनो
विहव्याभिरग्नीनन्वादध्यात्तिसृभिस्तिसृभिरेकैकं ये नव समामनेयुरथ येऽष्टौ
प्रथमां वोत्तमां वा द्विरभ्यावर्तयेयुरथ ये दश
तिसृभिस्तिसृभिरेकैकमन्वाधायोत्तरेणाहवनीयं तिष्ठन्दशमीं निगदेदित्यत्रो ह
स्माह शालीकिर्यो नु खलु गार्हपत्यः सकृदन्वाहित एष भवति
ग्रामयोनिरन्वाहार्यपचन आहवनीयमेवैकं विहव्ययान्वादध्यादथातिशिष्टा
उत्तरेणाहवनीयं तिष्ठन्निगदेदित्यत्रो ह स्माहौपमन्यवो
विहव्याभिरेवाग्नीनन्वादध्यादेकैकमेकैकयाथातिशिष्टा उत्तरेणाहवनीयं
तिष्ठन्निगदेदित्यत्रो ह स्माह मौद्गल्य आहवनीयमेवैकमन्वादध्यादग्निं गृह्णामि
सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं
श्वो यज्ञाय रमतां देवताभ्यः ॥
वसून्रुद्रानादित्यानिन्द्रेण सह देवताः । ताः पूर्वः परिगृह्णामि स्व आयतने
मनीषया ॥
इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वः । अग्निर्हव्यवाडिह
तानावहतु पौर्णमासँहविरिदमेषां मयीति पौर्णमास्याम्

आमावास्यँ हविरिदमेषां मयीत्यमावास्यायामित्यत्रो ह स्माह मैत्रेय
आहवनीयमेवैकं विहव्यान्वादध्यात्तूष्णीमितरावथातिशिष्टा उत्तरेणाहवनीयं
तिष्ठन्निगदेदिति
व्याहृतीभिरेवाग्नीनन्वादध्यादिति राथीतरः ॥
आतञ्चनेष्विति ॥
स ह स्माह बौधायनो हविरातञ्चनान्येतानि भवन्तीत्यत्रो ह स्माह
शालीकिर्दधि खल्वातञ्चनार्थे दृष्टं भवति
तस्मिन्नविद्यमान एतेषामेकेनातञ्च्यादिति ॥
व्रतोपायन इति ॥
स ह स्माह बौधायनः संगवकाले वा व्रतमुपेयाद्धेनुषु वा दोह्यमानासु
प्रणीतासु वा प्रणेष्यत्सु हविःषु वासन्नेष्वित्यत्रो ह स्माह शालीकिः
पूर्वेद्युःकालं खलु व्रतोपायनं भवतीति ब्राह्मणं बर्हिषा पूर्णमासे व्रतमुपैति
वत्सैरमावास्यायामिति स संगवकाल एव
व्रतमुपेयादित्यन्वाधानप्रभृतीत्यौपमन्यवः ॥

अभ्युदितेष्ट्यामिति ॥
स ह स्माह बौधायनः सिद्धैरेवामावास्यैर्हविर्भिरिष्ट्वा पुनरुपोष्य श्वो भूते काल्यामनभ्युदितामव्यापन्नां यजेतेत्यत्रो ह स्माह शालीकिर्यैषा ब्राह्मणजेष्टिस्तया व्यक्तयेष्ट्वा पुनरुपोष्य श्वो भूते काल्यामनभ्युदितामव्यापन्नां यजेतेति नु खलु संनयतोऽथासंनयतः
समानः कल्पो बौधायनस्यात्रो ह स्माह शालीकिरप्स्वेवैतानि हवींषि श्रपयित्वा पुनरुपोष्य श्वो भूते काल्यामनभ्युदितामव्यपन्नां यजेतापि वोपवसथ एवातिप्रवर्धेतेति ॥
आच्छायन इति ॥
स ह स्माह बौधायनो वाचंयम एव शाखामाच्छेयाद्वाचंयम एवाहरेदेवं एवाहरित्येवं चैव खलु कुर्यादिति शालीकिर्ब्राह्मणेन च यथार्थमन्तर्हसन्नेव संभाषेत नाब्राह्मणेनेति ॥
शाखाया आच्छेदन इति ॥
स ह स्माह बौधायन इषे त्वेति शाखामाच्छिन्द्यादूर्जे त्वेत्यनुमृज्याद्वान्वीक्षेत वेत्यन्वीक्षेतैवेति शालीकिः ॥

वत्सापाकरण इति ॥
स ह स्माह बौधायनो वायव स्थेति पुँस एवापाकुर्यादुपायव स्थेति स्त्रियोऽथ यद्यन्यतरे स्युर्नैव मन्त्रं परिजह्यात्
सँसृष्टैनैवेति शालीकिः १

शाखायै संचर इति ।
अग्रेणाहवनीयँ संचारयेदिति बौधायनो जघनेन गार्हपत्यमिति शालीकिरेष सर्वकल्पे शाखायै संचरः पयसां चान्यत्र प्रावर्गिकादित्युभयोरेवापरेण प्रावर्गिकं संचारयेदित्यौपमन्यवः ॥
प्रवसतो याजमान इति ॥
स ह स्माह बौधायनः सहयाजमानः खल्वयं यजमानः प्रवसति
स यत्र स्यात्तदेनं मनसा ध्यायेत्
स यदि विसँस्थित आगच्छेत्कृतमनुमन्त्र्य कर्मान्तेन प्रक्रामेदित्यत्रो ह स्माह

शालीकिर्यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः स्यात्तं तत्र प्रेष्येत्
स यदि विसँस्थित आगच्छेत्कृतान्ताद्वा प्रक्रामेन्ना वा द्रियेतोभौ त्वेव
यजमानभागं प्राश्नीयातामिति ॥

इध्माबर्हिषोरुपकल्पन इति ॥
सूत्रमाचार्ययोरपराह्णे पितृभ्यो दत्त्वेध्माबर्हिः संनह्येदित्याञ्जीगविः
श्वो भूते हविष्कृदन्त इत्यौपमन्यवः ॥
असिदस्य प्रतितपन इति ॥
स ह स्माह बौधायनः प्रतितपेदेवासिदमेवमश्वपर्शुँ रक्षोऽपहननायेत्यत्रो ह
स्माह शालीकिर्न तेजसि तेजः प्रतितपेदश्वपर्शां खल्वेते मन्त्रा दृष्टा भवन्ति
सोऽश्वपर्शुमेव प्रतितपेन्नासिदं क्रूरापहननायेति ॥
प्रक्रमेष्विति ॥
स ह स्माह बौधायन आहवनीयादेवाग्रे त्रीन्वा चतुरो वा प्राचः
प्रक्रमान्प्रक्रम्याथ तां दिशमभिप्रव्रजेद्यत्र बर्हिर्वेत्स्यन्मन्येतेत्याहवनीयादेव
यथार्थं गच्छेन्न तु दक्षिणया द्वारेति शालीकिः ॥
परिषवण इति ॥
स ह स्माह बौधायनस्त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावतयेदेवं यूपावटस्य
परिलेखन एवँ सोमक्रयण्यै पद एवमौदुम्बर्या अवट एवमुपरवेष्विति
सकृदेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति शालीकिः ॥
आच्छेदनेष्विति ॥
सूत्रं बौधायनस्य
प्रत्यगाशीः खल्वेष मन्त्रो दृष्टो भवति
मन्त्रप्रत्यभिमर्शनमेवैतत्स्यादिति शालीकिः ॥
प्रस्तरस्य संनहन इति ॥
स ह स्माह बौधायनोऽभ्यर्धाच्चैनँ संनह्येदन्यत्र चैतस्मादयुग्मायुग्मं निधनानि
कुर्यादित्यत्रो ह स्माह शालीकिः प्रस्तरस्य खलु मन्त्रप्रतिलाभात्सर्वं
बर्हिर्मन्त्रं लभते न चैनमभ्यर्धात्संनह्येदेतच्चैवायुग्मतमँ स्यादिति ॥

शुल्बस्य करण इति ॥
अधिकरणं चतुर्थँ स्या दिति बौधायनोऽधिकरणमेव तृतीयमिति शालीकिः

॥
बर्हिषः संबरण इति ॥
स ह स्माह बौधायनो यान्यन्यानि याजुषान्निधनानि तानि पूर्वाणि मन्त्रेण संभृत्याथोपरिष्टाद्याजुषं मन्त्रेणैव संभरेदित्यत्रो ह स्माह शालीकिर्यान्यन्यानि याजुषान्निधनानि तानि पूर्वाणि तूष्णीं संभृत्याथोपरिष्टाद्याजुषं मन्त्रेणैव संभरेदित्यत्रो ह स्माहौपमन्यवो य एवादिर्लवने ससंभरणे सयाजुषमेवाग्रे मन्त्रेण संभृत्य तूष्णीमितराणि संभृत्य विपरिकृष्य ग्रन्थिं कुर्यादिति २

ग्रन्थिकरण इति ॥
सूत्रं बौधायनस्य
समायच्छन्नेवैतं मन्त्रं जपेदिति शालीकिः ॥
पश्चात्प्राञ्चमुपगूहतीति ॥
सूत्रं बौधायनस्य
पुरस्तात्प्रत्यञ्चमिति शालीकिः ॥
बर्हिषो निधान इति ॥
स ह स्माह बौधायनः स्फ्यं वा शकलं वान्तर्वेदि निधाय तस्मिन्मन्त्रेण प्रतिष्ठाप्य ततो यथासुष्ठु निधध्यादिति

यत्रैव निधास्यन्स्यात्तन्मन्त्रेणैव निदध्यादिति शालीकिः ॥
परिधीनां करण इति ॥
स ह स्माह बौधायन उरःसंमितो मध्यमः स्यादथेतरौ बाहुमात्रौ स्यातामिति सर्व एव बाहुमात्राः स्युरिति शालीकिः ॥
इध्मस्य करण इति ॥
अनुसामिधेनीध्मं कुर्यादिति बौधायनोऽपरिमितमिति शालीकिः ॥
वेदस्य करण इति ॥
वत्सज्ञुं कुर्यादिति बौधायनो मूतकार्यमिति शालीकिस्
त्रिवृतमित्यौपमन्यव ऊर्ध्वाग्रमित्यौपमन्यवीपुत्रः ॥
पितृयज्ञबर्हिषीति ॥
समूलमेतद्बर्हिर्भवतीति बौधायनः पितृयज्ञसामान्यादिति
महापितृयज्ञ एवैतद्दृष्टं भवत्यमूलमेवैतद्बर्हिः स्यादिति शालीकिः ॥

इष्टिसंनिपात इति ॥
स ह स्माह बौधायनो याः काश्चेष्टयः समानेऽहनि संनिपतेयुस्तन्त्रायतन्त्राय चासां बर्हिर्लावो गच्छेल्लूनं वासादयेत्तन्त्रेतन्त्रे चासां व्रतमुपेत्य तन्त्रापवर्गे व्रतं विसृजेतेत्य्
अत्रो ह स्माह शालीकिर्याः काश्चेष्टयः समानेऽहनि संनिपतेयुः सकृदेवासाँ सर्वासां बर्हिर्लावो गच्छेल्लूनं वासादयेदादितश्चासां व्रतमुपेत्य सर्वासां पारे व्रतं विसृजेतेति ॥
पर्णत्सरूणां निवपन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तृतीअमग्नग्यगार उद्वपेत्तृतीयमन्तर्वेदि निवपेत्तृतीयेन वत्सानां धूननं कुर्यादेवमिव हि पशूनां नेदीयान्भवतीति ॥
पौर्णमास्यामुपवेषकरण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
दोहनपवित्रस्य करण इति ॥
स ह स्माह बौधायनो मूले मूलानि बद्ध्वा द्विगुणाँ रज्जुँ संप्रसार्याग्रे निग्रथ्नीयादेवमस्याग्रमग्रैरभिसंपन्नं भवतीत्यत्रो ह स्माह शालीकिर्मूले मूलानि बद्ध्वा द्विगुणाँ रज्जुँ संप्रसार्य मूले परिहृत्य त्रिगुणाँ रज्जुँ संप्रसार्याग्रे निग्रथ्नीयाद्
एवमस्याग्रमग्रैरभिसंपन्नं भवतीति ३

अग्निहोत्रोच्छेषणस्य करण इति ॥
स ह स्माह बौधायनो यद्यस्याज्येन वौषधेन वा प्रक्रान्तँ स्यात्पयसैव ताँ रात्रिं जुहुयात्पयस एवाग्निहोत्रोच्छेषणं कुर्यादित्यत्रो ह स्माह शालीकिर्नासमाप्ते काम आवर्तयेद्यद्यस्याज्येन वौषधेन वा प्रक्रान्तँ स्यात्तस्य हुत्वा तस्यैवाग्निहोत्रोच्छेषणं कुर्यादिति ॥
सांनाय्यपात्राणां प्रोक्षण इति ॥
तूष्णीँ सँस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः
कमण्डलुगताभिरिति शालीकिः ॥
अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान्निरूहतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तूष्णीमङ्गारान्निरूहेत्
सर्व एवैषोऽधिश्रयणमन्त्रः स्यादिति ॥

दोहनपवित्रस्याधान इति ॥
मन्त्रेण कृत्वा मन्त्रेण स्थाल्यामादध्यादिति बौधायनस्
तूष्णीं कृत्वा मन्त्रेण स्थाल्यामादध्यादिति शालीकिरर्धेन कृत्वार्धेन स्थाल्यामादध्यादित्यौपमन्यवः ॥

धेनूनामनुमन्त्रण इति ॥
स ह स्माह बौधायन एकैकामेवासामनुमन्त्रयेताथासामेकैकां दोहयेदित्यत्रो ह स्माह शालीकिः सकृदेवैनाः सर्वा अनुमन्त्रयेताथासामेकैकां दोहयेदित्यत्रो ह स्माहौपमन्यवः सकृदेवैनाः सर्वा अनुमन्त्रयेत सकृच्चैना दोहयेदत्र चैव स्तोकान्परिनिस्तिष्ठेदित्येकैकामेवासाँ सर्वेणसर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः ॥
स्तोकानामनुमन्त्रण इति ॥
सूत्रँ शालीकेराख्यातमौपमन्यवस्यात्रो ह स्माह बौधायन आतच्यैव स्तोकाननुमन्त्रयेतात्रैव हि स्तोकानामन्तो भवतीति ॥
उत्तरासां दोहन इति ॥
विसृष्टवागनन्वारभ्योत्तरा दोहयेदिति बौधायन आनीयमान एवानु चारभेत वाचं च यच्छेदिति कात्यः ॥
दुग्धं लभमानस्येति ॥
वत्सापाक्रणप्रभृतीन्मन्त्रान्साधयेदिति बौधायन आसेचनप्रभृतीनिति शालीकिः ॥
आतञ्चन इति ॥
चतुर्थे स्रुव आनयेद्यावता मूर्च्छयिष्यन्मन्येतेति बौधायनस्
तृतीये स्रुव आनयेद्यावता मूर्च्छयिष्यन्मन्येतेति शालीकिः ॥

अग्निहोत्रोच्छेषणमभ्यातनक्तीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्निहोत्रोच्छेषणमानीय हविरातञ्चनमानयेदेवमस्योभयमभ्यातक्तं भवतीति ॥
उदन्वतापिदधातीति ॥
उदन्वतापिधाय सर्वाँ रात्रिं परिशाययेदिति बौधायन उदन्वतापिधाय सिक्त्वैता अपोऽपिदध्यादिति शालीकिः ॥

अग्नीनां परिस्तरण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यव उपवसथ एवाग्नीन्यथोत्पन्नं
परिस्तृणीयादेवँ हि ब्राह्मणं भवत्युपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य
एवं विद्वानग्निमुपस्तृणातीति ॥
अशनानशन इति ॥
आरण्यं चापश्चाश्नीयादिति बौधायनोऽप एवेति शालीकिर्नारण्यं
नापश्चनेत्यौपमन्यवः ४

पाणिसंमर्शन इति ॥
उत्तरेणाहवनीयं तिष्ठन्पाणी संमृशेदिति बौधायन उत्तरेण गार्हपत्यमिति
शालीकिः ॥

अग्नीनां परिस्तरण इति ॥
सूत्रँ शालीकेराख्यातमौपमन्यवस्यात्रो ह स्माह बौधायनो गार्हपत्यमेवाग्रे
पुरस्तात्परिस्तृणीयादथ दक्षिणतोऽथ पश्चादथोत्तरत एवमेवान्वाहार्यपचनं
परिस्तृणीयादेवमाहवनीयमिति ॥
पात्राणाँ सादन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उत्तरेण गार्हपत्यं तृणानि सँस्तीर्य तेषु
पात्राणि सादयेदित्युत्तरतोऽग्न्यगारस्य पात्राणि सादयेत्
तेषां यथार्थमाददीतेति राथीतरः ॥
ब्रह्मण उपवेशन इति ॥
व्यवेत्य दक्षिणेनाहवनीयमुपविशेदिति बौधायनोऽव्यवेत्यैव
दक्षिणेनाहवनीयमिति शालीकिः ॥
यजमानस्योपवेशन इति ॥
व्यवेत्य दक्षिणत उपविशेदिति बौधायनोऽव्यवेत्यैव दक्षिणत उपविशेदिति
शालीकिः ॥
पृष्ठ्यायै स्तरण इति ॥
सूत्रं बौधायनस्य
सोम एव पृष्ठ्याँस्तृणीयादिति शालीकिः ॥
पवित्रयोः करण इति ॥

सूत्रं बौधायनस्य
पृष्ठ्यायास्तृणानामित्यौपमन्यवो येऽन्येऽनुपयुक्ताः कुशाः स्युस्तेषामिति शालीकिः ॥

स वाचंयमो भवति प्रणीतासु प्रणीयमानास्वा हविष्कृत इति ॥
अन्तर्हसन्नेतेषु संपातेषु संभाषेतेति बौधायनो विसृष्टवागिति शालीकिः ॥
होतृणां व्याख्यान इति ॥
सग्रहानृतेस्वाहाकारानित्येकम्
ऋतेग्रहानन्तःस्वाहाकारानित्येकं सर्वानित्येकम्पूर्वः कल्पो बौधायनस्योत्तरावुभौ शालीकेरिति ॥
दशहोतुर्व्याख्यान इति ॥
प्रणीताः प्रणीय प्रत्यङ्द्रवन्दशहोतारं व्याचक्षीतेत्याचार्ययोर्मुष्टिमेव ग्रहीष्यन्नित्यौपमन्यवः ॥
निर्वपण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः शकटादेव निर्वपेद्धुरौ व्यभिमृश्याक्षपालिं क्रामेद्विष्णुस्त्वा क्रमतामिति पुरोडाशीयान्प्रेक्ष्याभिमृशेद्यच्छन्तां पञ्चेति त्रिर्यजुषा सकृत्तूष्णीं चतुरवत्तिनां त्रिर्यजुषा द्विस्तूष्णीं पञ्चावत्तिनां सर्वानेव यजुषेति कात्यः ५

पञ्चावत्तस्य प्रक्रमण इति ॥
निर्वपणात्पञ्चावत्तं प्रक्रामेदिति बौधायनोऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवश्चातुष्प्राश्यादित्यौपमन्यवीपुत्रः ॥
अतिशिष्टानामावपन इति ॥
तान्कोष्ठे वा पल्वे वावपेदिति बौधायनोऽत्रैवैनानावपेयुरिति शालीकिः ॥
आज्यस्य निर्वपण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन औषधस्यान्तं गत्वाज्यं निर्वपेद् एवमस्य सह हविर्भिः प्रोक्षणं लभत इति ॥
परिदान इति ॥
यथानिरुप्तं परिददीतेति बौधायनोऽत्रो ह स्माह शालीकिरग्ने हव्यँ

रक्षस्वेत्येव ब्रूयाद्विष्णो हव्यँ रक्षस्वेति पयो विष्णुर्हि पयसां गोप्ता भवत्यग्निरौषधस्येति ॥
प्रोक्षणीनामुत्पवन इति ॥
सूत्रं बौधायनस्य
निगदन्नेवैतामृचं त्रिरुत्पुनुयादिति शालीकिः ॥
पुरोडाशीयानां प्रोक्षण इति ॥
अवग्राहशः प्रोक्षेदिति बौधायनो देवताः समनुद्रुत्य त्रिरेवेति शालीकिः ॥
पात्राणां प्रोक्षण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः शुन्धध्वं दैव्याय कर्मणे पात्रणि देवयज्याया इति ॥
अतिशिष्टानां परिशायन इति ॥
एता एव परिशयोरन्निति बौधायनः
सिक्त्वेता अप उपरिष्टादन्याः सँस्कुर्वीतेति शालीकिः ॥
कृष्णाजिनस्यावधवन इति ॥
उपनिष्क्रम्याग्नयगारादुत्तरेऽपरेऽवान्तरदेशे कृष्णाजिनमवधुनुयादिति बौधायनोऽन्तरेवैतां दिशमिति शालीकिः ॥
कृष्णाजिनस्यास्तरण इति ॥
स ह स्माह बौधायनोऽविसृजन्नेतत्कर्म कुर्यात्कृष्णाजिनावधवनादास्तरणादेवमुलूखलाध्यूहनादा पुरोडाशीयानामावपनादेवं मुसलस्यावधानादा योगाभ्यूहाभ्याम् एवं प्रस्तर आ स्रुचाँ सादनादेवमभ्र्यादानादा खननादेवमौदुम्बर्याभिहोमादेवं यूप आ परिव्ययणादिति यथोपपादमेवैतानि कर्माणि कुर्यादिति शालीकिः ६

पुरोडाशीयानामावपन इति ॥
सूत्रं बौधायनस्य
पञ्च मुष्टीन्पञ्चावत्तिनामावपेदिति शालीकिः ॥
दृषदुपले वृषारवेणोच्चैः समाहन्तीति ॥
सूत्रं बौधायनस्य
शम्ययैवेति शालीकिः ॥

शूर्पस्योपोहन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तूष्णीँ शूर्पमुपोहेत्
समस्तेनैवास्मिन्मन्त्रेण पुरोडाशीयानुद्वपेद्वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति ॥

अथोदङ्पर्यावृत्य परापुनातीति ॥
सूत्रं बौधायनस्य
यां कां चिद्दिशमभि पर्यावृत्य परापुनातीति शालीकिः ॥
तुषाणां निरसन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽत एव यावन्मात्रानुपहत्य कृष्णाजिनस्य ग्रीवात उपवपेद्रक्षसां भागोऽसीत्यथोदकमुपस्पृशेदिति ॥
कृष्णाजिनस्य पुनरास्तरण इति ॥
सूत्रमाचार्ययोः
प्राचीनग्रीवमुत्तरर्क्षमित्यौपमन्यवः ॥
पेषण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः प्राणाय त्वेति प्राचीं प्रोहेदपानाय त्वेति प्रतीचीम्व्यानाय त्वेति तिरश्चीं कर्षेदथ प्राचीं प्रोहेद्दीर्घामनु प्रसितिमायुषे धामिति
कृष्णाजिने पिष्टानि प्रस्कन्दयेद्देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति
७

नैकचरौ धृष्टेरादानं विद्यते न बहुष्विति शालीकिरत्रोह स्माह बौधायन आदित एव धृष्टिमाददीत धृष्टिरसि ब्रह्म यच्छेति
गार्हपत्यमभिमन्त्रयेतापाग्नेऽग्निमामादं जहीति
निष्क्रव्यादँ सेधेति दक्षिणाङ्गारं निरस्येदथान्यान्कल्पयेदा देवयजं वहेति
तेषु चरुस्थालीमधिश्रयेद्ध्रुवासि पृथिवीं दृँहायुर्दृँह प्रजां दृँह सजातानस्मै यजमानाय पर्यूहेत्य्
अथैनां प्रदक्षिणमङ्गारैः परिचिनुयाद्निर्दग्धँ रक्षो गिर्दग्धा अरातय इति
स एवमेव सर्वाश्चरुस्थालीरधिश्रयेदिति ॥
चरुमुखेष्विति ॥

स ह स्माह बौधायन आदित एव धृष्टिमाददीत
मुख्यादेव भद्वान्साधयेदित्यत्रो ह स्माह शालीकिः कपालसंयोजने खलु
धृष्टेरादानं भवति
स कपालान्येवोपधास्यन्धृष्टिमाददीत
पुरोडाशादेव भद्वान्साधयेदिति ॥
कपालानामुपधान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो यथाम्नायं खल्वस्यैवं
कपालान्युपहितानि भवन्ति
य एवैषोऽङ्गाराधिवर्ततो मन्त्रस्तं प्रथमं कपाल्पोधानानां कुर्यादथ
तूष्णीमङ्गारमधिवर्तयेदिति ।
एककपाले द्विकपाल इति ॥
स ह स्माह बौधायनो यदि चैककपालो यदि च द्विकपालः सर्वैरेनं
कपालमन्त्रैरुपदध्यादित्यत्रो ह स्माह शालीकिर्यथाधिकरणमेव
कपालान्युपदध्याद्न तु योगाभ्यूहौ गमयेत्तपनमन्त्रं चात्र
ब्रूयाद्भृगूणामङ्गिरसां तपसा तप्यस्व तप्येथां तप्यध्वमिति ॥

कपालानां योग इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यव एतैरेवास्यैतानि मन्त्रैर्युक्तानि
यैरुपहितानि भवन्त्यथेतरो विमोचनमन्त्र एव स्यादिति ॥
मदन्तीनामधिश्रयण इति ॥
तिरः पवित्रमप आनीयाधिश्रयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
संयवन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः प्रणीताभ्यः स्रुवेणोपहत्याप आनयेदेवं
मदन्तीभ्यस्
ता उभयीरानीयमानाः प्रतिमन्त्रयेत समापो अद्भिरग्मतेति ॥
व्यभिमर्श इति ॥
स ह स्माह बौधायनो व्यभिमृशेदेवैकहविरेवं नानाबीजानीत्यत्रो ह स्माह
शालीकिः सँसर्गात्खलु व्यभिमर्शो जायते
नासँसृज्यमानानि हवींषि व्यभिमृशेन्नैकहविः
को हि नानाबीजानां व्यभिमर्श इति ॥

आज्यस्य निर्वपरिणति ॥
सूत्रँ शालीकेराख्यातं बौधायनस्यात्रो ह स्माहौपमन्यवः सर्वाण्येव हवींषि परिनिष्ठाप्याज्यं निर्वपेदिति ॥
आप्यनिनयन इति ॥
जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनोऽग्रेणातिहायेति
शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ८

स्फ्यस्य सँशान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो य एष स्फ्यस्योदसनो मन्त्रस्तं प्रथमँ सँश्यनानां कुर्यादथ तूष्णीँ स्फ्यमुदस्येदिति ॥
वेद्यै परिग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः श्रोणिं प्रथमां परिगृह्णीयादथ दक्षिणमँ समथोत्तरमिति
पुरस्तादेवैनां प्रदक्षिणं परिगृह्णीयादित्यौपन्यवः ॥

योयुपन इति ॥
सूत्रं बौधायनस्य
चतुर्थेन योयुपित्वा पञ्चमेनोद्गृह्णीयादिति शालीकिः ॥
प्रोक्षणीनामासादन इति ॥
स्फ्यस्य वर्त्मन्नुपनिनीयासादयेदिति बौधायनोऽनुपनिनीयैवेति शालीकिः ॥
इध्माबर्हिषोरुपसादन इति ॥
सूत्रं बौधायनस्योत्तरमिध्ममिति शालीकिः ९

वेदपरिवासनेष्विति ॥
पञ्चधा विभज्य स्रुचः संमृजेदिति बौधायनः
समस्तैरेवाद्भिरभ्याकारमिति शालीकिः ॥
प्राशित्रहरणस्य संमार्जन इति ॥
सूत्रं बौधायनस्य
तूष्णीँ संमृजेदिति शालीकिर्न संमृजेदित्यौपमन्यवः ॥
स्रुक्संमार्जनानामनुप्रहरण इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽद्भिरभ्युद्दयासंचर उदस्येदुत्करे
वैवमिध्मसंनहनानीति ॥
पत्नीनाँ संनहन इति ॥
स ह स्माह बौधायन एकैकामासाँ संनह्येदेकैकां
गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदित्यत्रो ह स्माह शालीकिः सकृदेवैनाः
सर्वाः संनह्येदेकैकां गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदित्यत्रो ह
स्माहौपमन्यवः सकृदेवैनाः सर्वाः
संनह्येत्सकृद्गार्हपत्यमीक्षयेदेकैकामाज्यमवेक्षयेदित्य्
एकैकामेवासाँ सर्वेणसर्वेण कर्मणा परिनिस्तिष्ठेदित्यौपमन्यवीपुत्रः ॥
ग्रन्थिकरण इति ॥
अवाचीनपाशमूर्ध्वनिर्मोचनमित्याचार्ययोरूर्ध्वपाशमवाचीननिर्मोचनमिति
दीर्घवात्स्य एवमिव हि प्रजाः प्रजायन्त इति ॥
पत्न्यामविद्यमानायामिति ॥
स ह स्माह बौधायनो यजमानायतन आसीनो यजमान
एवैतान्मन्त्रान्निगदेदित्यत्रो ह स्माह शालीकिः पत्नीसंयोजकाः खल्वेते मन्त्रा
दृष्टा भवन्ति
तस्यामविद्यमानायां नैवैनानाद्रियेतेति ॥
अथैनामाज्यमवेक्षयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पत्न्या तदवेक्षितमुपयच्छीत
तेजोऽसीत्यथैनच्छकलेनोपयत्य हरेद्तेजोऽनु
प्रेहीत्यथैनदाहवनीयेऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण
प्रोक्षणीः सादयित्वावेक्षित्वोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीरिति ॥
आज्यस्यावेक्षण इति ॥
सूत्रं बौधायनस्य
सर्वैरेवावेक्षितमाज्यमुत्पुनुयादिति शालीकिः ॥

आज्यग्रहाणां ग्रहण इति ॥
स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च
याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माह
शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च

न याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माहौपमन्यवो यथापि
पौरोडाशिका मन्त्रा नाभिनिवर्तन्त एवमेवापि याजमाना मन्त्रा
नाभिनिवर्तेरन्निति ॥
इध्माबर्हिषः प्रोक्षण इति ॥
त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः
सकृत्सकृदिति शालीकिः १०

बर्हिषः प्रोक्षण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तिष्ठन्दिवे त्वेत्यग्राणि
प्रोक्षेत्प्रह्वोऽन्तरिक्षाय त्वेति मध्यान्युपविश्य पृथिव्यै त्वेति मूलानि
सह स्रुचा पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्षयातिशिष्टाः प्रोक्षणीर्निनयेद्दक्षिणायै
श्रोणेरोत्तरायै श्रोणेः स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्ध ऊर्जा पृथिवीं गच्छतेति
॥

स्रुच उदूहन इति ॥
अग्रेणात्मानमुदीचीमुदूहेदिति बौधायनो जघनेनात्मानमुदीचीमुदूहेदिति
शालीकिः ॥
प्रस्तरे पवित्रे अपिसृजति यजमाने प्राणापानौ दधामीति वा तूष्णीं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
तं यजमानाय वा ब्रह्मणे वा प्रयच्छतीति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
शुल्बस्यायातन इति ॥
सूत्रं बौधायनस्य
शुल्ब विस्रस्य दक्षिणे वेद्यन्ते स्तृणीयादिति शालीकिः ॥
वेद्यै स्तरण इति ॥
सूत्रं बौधायनस्यात एवैनां प्राचीं धातुश स्तृणीयादिति शालीकिः ॥
परिधीनां परिधान इति ॥
स ह स्माह
बौधायनोऽध्यस्येद्दक्षिणमुपोहेदुत्तरमित्यनीकसँस्पृष्टानेवैनान्परिदध्यादिति
शालीकिः ॥

अथ सूर्येण पुरस्तात्परिदधातीति ॥
सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः ॥
ऊर्ध्वे समिधावादधातीति ।
सूत्रं बौधायनस्योर्ध्वे एवैने अभ्याधायानतिपातयेदिति शालीकिः ॥

विधृत्योः करण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह दक्षिणाकारो राथीतर उभे एवैते वेदिं
व्यतिषज्येयातामिति
मध्यमाद्धातोरनन्तर्गर्भे स्यातामित्यौपमन्यवः ॥११

दोहनपवित्रस्यासादन इति ॥
विस्रस्य प्रस्तर आसादयेदिति बौधायनोऽविस्रस्यैवेति शालीकिः ॥
स्रुचाँ सादन इति ॥
स ह स्माह बौधायन ईषत्प्रत्यवहतामिवोपभृतँ सादयेद्विधृतीभ्यां
चैनामवगृह्णीयादित्यत्रो ह स्माह शालीकिरनुपूर्वा एवैनाः सादयेन्न चोपभृतं
विधृतीभ्यामवगृह्णीयादिति ॥
हविषामुद्वासन इति ॥
अग्रेणानुद्वासितानि जघनेनोद्वासितानीति बौधायनो
जघनेनानुद्वासितान्यग्रेणोद्वासितानीति शालीकिरपच्छेदमित्यौपमन्यवः ॥
प्रत्यञ्जन इति ॥
स ह स्माह बौधायन उभयानि प्रत्यञ्ज्याच्चरूणां चाशयान्कापालानि चेति

कपालान्येवेति शालीकिः ॥
कपालानामाध्वर्यवे विमोक इति ॥
उद्वास्य हवीँषीत्यत्राचार्यौ विमुञ्चतो भक्षयन्नेव भक्षाणां पारे कपालानि
विमुञ्चेदित्यौपमन्यवः ॥
आघाराविति ॥
सूत्रं बौधायनस्याभीषू इव व्यतिषक्तौ स्यातामिति शालीकिः
संप्रैष इति ॥
अग्नीदग्नीनिति बौधायनोऽग्निमग्नीदिति शालीकिरग्नीत्परिधीँश्चाग्निं

चेत्यौपमन्यवः ॥
अत्याक्रमण इति ॥
सव्येन प्रदास्यन्नत्याक्रामेद्धुत्वामुतो दक्षिणेनेति बौधायनो दक्षिणेन प्रदास्यन्नत्याक्रामेद्धुत्वामुतः सव्येनेति शालीकिः

आश्रावण इति ॥
ओ श्रावयेति बौधायन आ श्रावयेति शालीकिः
श्रावयेत्यौपमन्यवः ॥
प्रवर इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उत्कर ऊर्ध्वाग्रँ स्फ्यं निहत्य प्रवरं प्रवृणीयादत्रैव च स्फ्यमुदस्येदुपरिष्टाच्चोपस्पृशेदिति ॥
होतुर्वरण इति ॥
स ह स्माह बौधायनो यद्यस्य पिता वाचार्यो वा ज्यायान्वा होता स्यादुपाँश्वेतेषां गुरूणां नामानि गृह्णीयादित्युच्चैरेव होतुर्नाम गृह्णीयादिति शालीकिः
१२

अभिक्रामं जुहोतीति ॥
स ह स्माह बौधायनः सर्वेणाभिक्रामेत्पद्यामाहुतीभिः स्वरेणोत्तरामुत्तरामाहुतिं ज्यायसींज्यायसीं जुहुयादिति पद्यामेवाभिक्रामँ समानत्राहुतीर्जुहुयादिति शालीकिः
समानत्र तिष्ठन्नाहुतीभिरेवाभिक्रामेदित्यौपमन्यवः
समानत्रैव तिष्ठन्प्रदक्षिणमनुदिशँ हुत्वा मध्ये स्वाहाकारं जुहुयादित्याञ्जीगविः ॥

आज्यभागयोर्होम इति ॥
पूर्वार्धे प्रतिमुखं प्रबाहुग्जुहुयादिति बौधायनः
पूर्वार्ध एव प्रबाहुगिति शालीकिः ॥
हविषामवदान इति ॥
स ह स्माह बौधायनः पूर्वार्धादेवाग्रे प्रथमं मुख्यस्य हविषोऽवद्येदथापरार्धादेवमस्य प्रदक्षिणँ हविषामवत्तं भवतीत्यत्रो ह स्माह

शालीकिरपरार्धादेवाग्रे प्रथमं मुख्यस्व हविषोऽवद्येदथ पूर्वार्धादेवमस्य प्राक्सँस्थानि हवींषि भवन्तीति
मध्यात्पूर्वार्धात्पश्चार्धात्पञ्चावत्तिनामित्यौपमन्यवः ॥
आहुतीनामायतन इति ॥
स ह स्माह बौधायनस्त्रीण्येवैतान्यादिष्टस्थानानि भवन्त्याज्यभागौ स्विष्टकृदथेतरा यथावकाशं जुहुयादिति
प्रष्टीरेवाहुतीर्जुह्वत्पूर्वार्धे स्विष्टकृतं जुहुयादिति शालीकिः
स्रुच्यमाघारपथमभिजुहुयादित्यौपमन्यवो मध्ये प्रदक्षिणं मण्डलाकारमिति राथीतरः ॥
उपाँशुयाजस्य करण इति ॥
सूत्रं मौद्गल्यस्यात्रो ह स्माह बौधायन औषधस्योपाँशुयाजं कुर्यादग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामित्यत्रो ह स्माह शालीकिराज्यस्योपाँशुयाजं कुर्यात्सौम्यं पौर्णमास्यां वैष्णवममावास्यायामित्यत्रो ह स्माहौपमन्यव औषधस्यैवोपाँशुयाजं कुर्यात्सरस्वतः पौर्णमास्याँ सरस्वत्या अमावास्यायामित्युभयत्रैवाज्यस्य वैष्णव इति राथीतरोऽत्रो ह स्माह कौणपतन्त्रिश्चरुश्च स्याद्वैष्णवश्च स्यात्स्वयं चैव यजमानः प्राश्नीयादिति ॥
पञ्चमस्यावदानस्याभिवृद्ध्या इति ॥
औषधस्याभिवर्धयेदिति बौधायन आज्यस्यैवेति शालीकिः ॥
मेक्षणस्यानुप्रहरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो न मेक्षणन्यायेन वपाश्रपणी अनुप्रहरेदिति ॥
प्राशित्रस्यावदान इति ॥
सूत्रं बौधायनस्य
परिहरिष्यन्नेव प्राशित्रमवद्येदिति शालीकिः ॥
आज्यहविष्यन्वाहार्यस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
अन्वाहार्यस्यासादन इति ॥
अग्रेण यजमानं च ब्रह्माणं च पर्याहृत्य दक्षिणस्याँ श्रोण्यामासादयेदिति बौधायनोऽत एव दक्षिणस्याँ श्रोण्यामिति शालीकिः १३

अन्वाहार्यस्योद्वासन इति ॥
अग्रेण स्रुच उदञ्चमुद्वासयेदिति बौधायनो जघनेन स्रुच उदञ्चमिति शालीकिः ॥
हविरुच्छिष्टानामुद्वासन इति ॥
अग्रेण स्रुच उदञ्चयुद्वासयेदिति बौधायनो जघनेन स्रुच उदञ्चीति शालीकिः ॥
अनूयाजानाँ होम इति ॥
सूत्रँ बौधायनस्य
प्रतीचीरेवैता आहुतीः सँस्थापयेदिति शालीकिः ॥
वाजवत्योर्व्यूहन इति ॥
स ह स्माह बौधायनोऽद्दणया प्रतीचीमुपभृतं प्रत्यूहेदद्भिश्चैनाँ सँस्पृशेदित्यत्रो ह स्माह शालीकिः प्राचीनपुष्करे एवैने विकर्षेन्न चोपभृतमद्भिः सँस्पृशेदिति ॥
प्रस्तरस्य समञ्जन इति ॥
त्रिस्त्रिरेकैकस्याँ समञ्ज्यादिति बौधायनः
सकृत्सकृदिति शालीकिः ॥
प्रस्तरस्यानुप्रहरण इति ॥
स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैश्च याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैरनुप्रहरेत्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति ॥

परिधीनामभ्याधान इति ॥
सूत्रं बौधायनस्य
प्रस्थान एवैनानभ्यादध्यादिति शालीकिः ॥
अथैनान्सँस्रावेणाभिजुहोतीति ॥
सूत्रं बौधायनस्य
प्रस्तरं चैव परिधीँश्चाभिजुहुयादिति शालीकिः ॥

स्रुचोर्विमोक इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पत्नीसंयाजेष्वृत्विजां परिक्रमण इति ॥
सूत्रं बौधायनस्य
सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरिति शालीकिः १४

पत्नीनाँ संयाजन इति ॥
सूत्रं बौधायनस्य
ध्रौवाज्येन ध्वानेनैव पत्नीः संयाजयेदिति शालीकिः ॥
अन्तर्धाय देवानां पत्नीः संयाजयेदिति बौधायनोऽनन्तर्धायैवेति शालीकिः ॥
पत्नीसंयाजेषु शम्युवाकस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
ध्रुवाया आप्यायन इति ॥
स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य्
अध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजुर्जुहुयादिति शालीकिः ॥
समिष्टयजुषो होम इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह गौतमः स्वाहा वाचीति हुत्वा बर्हिषो धातूनाँ
संप्रलुप्य ध्रुवायाँ समज्यानुप्रहृत्याभिजुहुयात्स्वाहा वाते धाः स्वाहेति १५

अथातोऽग्न्याधेयं व्याख्यास्यामः ॥
संभारेष्विति ॥
सूत्रँ राथीतराणाम्
अत्रो ह स्माह बौधायनो नाशनिहतं कुर्वीत घोररूपमिति
कुर्वीतैवाशनिहतं न तु मुञ्जकुलायं न ह्येतस्यानुख्या विज्ञायत इति
शालीकिः ॥
पात्राणां करण इति ॥
स ह स्माह बौधायनस्त्वक्तआसेचनानि कारयेदग्रतःपुष्कराण्येवमस्य
प्राचीनपुष्कराः स्रुचः सन्ना भवन्तीत्यत्रो ह स्माह
शालीकिस्त्वक्तआसेचनानि कारयेन्मूलतःपुष्कराण्येवमस्य प्राचीनपुष्कराः
स्रुचः सन्ना भवन्तीति

विज्ञायते तस्मादवाचीनाग्रा वनस्पतयः पृथिवीं ह्वियन्तीति ॥

स्रुचां प्रमाण इति ॥
बाहुमात्राः स्युरिति बौधायनोऽरत्निमात्रा इति शालीकिः
प्रादेशमात्रा इत्यौपमन्यवः ॥
स्रुचामाकृतिविकार इति ॥
हस्त्योष्ठ्यः स्युरिति बौधायनो वायसपुच्छा इति शालीकिर्हँ समुखप्रसेचना
इत्यौपमन्यवः ॥
अम्बरीषस्य करण इति ॥
उत्तरतोऽग्न्यगारस्याम्बरीषं कुर्यादिति बौधायनो यत्रैवाम्बरीषः
स्यात्तद्गच्छेदिति शालीकिः ॥
रोहिते चर्मणीति ॥
सूत्रं बौधायनस्याप्यरोहितँ स्यादिति शालीकिः ॥
ब्रह्मौदनस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥
ब्रह्मौदनस्य निर्वपण इति ॥
पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनोऽपवित्रेण तूष्णीकमिति शालीकिः
॥

ब्रह्मौदनस्य श्रपण इति ॥
पयसि श्रपयेदिति बौधायनोऽप्स्विति शालीकिः ॥
नैवास्मिन्नासिञ्चेन्न निःषिञ्चेदिति बौधायनः
काममस्मिन्नासिञ्चेन्न निःषिञ्चेदिति शालीकिर्विस्राव्य तँ
सूपवन्तमित्यौपमन्यवः ॥
ब्रह्मौदनस्योपस्तरण इति ॥
सूत्रं बौधायनस्य
नोपस्तृणीतेति शालीकिः ॥
ब्रह्मौदनस्योदवासन इति ॥
सूत्रं बौधायनस्यात्रैव पर्युपविशेयुरिति शालीकिः ॥
ब्रह्मौदनस्योपोहन इति ॥

यज्ञो मोपनमत्विति वा तूष्णीं वेति
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
ब्रह्मौदनस्य प्राशन इति ॥
आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो य एव केच नियतपाना इति कात्योऽत्रो ह स्माहौपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुरत्र ह्येवैते सतानुनप्त्रिणो भवन्तीति ॥

समिधामभ्याधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सकृत्प्राशितेऽप्रत्यवमृष्टे समिधोऽभ्यज्यादध्यादित्यत्रो ह स्माहौपमन्यवोऽत्रैवैनाः पार्श्वतः समज्य सादयेत्
ते यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपस्तीर्य यत्स्थाल्यामाज्यमवशिष्टँ स्यात्तत्सकृदभ्युन्नीय तेन समिधोऽभ्यज्यादध्यादिति ॥
गोः करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिरपि बह्वीरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशँ सेति कात्यः ॥
अरण्योः प्रदान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवोऽपररात्र एवास्मा अरणी प्रयच्छेद्दूरं ददामीत्येव वाचं विसृजेदिति ॥
अग्न्यायतनानां परिलेपन इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत् तद्धि विदग्धं भवतीति ॥
संभाराणां निवपन इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिष्ठाप्य त्रेधा निवपेदिति १६

इध्मस्य हरण इति ॥
स ह स्माह बौधायनो जानुदघ्ने प्रथमँ हरेदथ नाभिदघ्नेऽथ ग्रीवदघ्ने प्राणाँस्तु नातिहरेदित्याददान एवैता मात्रा अभिसंपादयेत्
प्राणाँस्त्वेव नातिहरेदिति शालीकिः ॥

संभाराणामाक्रमण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति ॥
अश्वस्य दन इति ॥
अध्वर्यव एतमग्निपदमश्वं दद्यादन्यं ब्रह्मण इति बौधायन एतं ब्रह्मणेऽन्यमध्वर्यव इति शालीकिः ॥
इध्मस्य निधान इति ॥
सूत्रं बौधायनस्य
तूष्णीमेवेध्मं निदध्यादिति शालीकिः ॥
सभ्यावसथ्ययोः करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
सभ्यावसथ्ययोर्विहरण इति ॥
आहवनीयादेवैनौ विहरेदिति बौधायनो ग्रामाग्नेरिति शालीकिर्निर्मन्थ्यौ स्यातामित्यौपमन्यवोऽत्रो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्येतदपि न कुर्यादित्याञ्जीगविः ॥

रथचक्रस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिरत्रो ह स्माहौपमन्यवो रथमेवैतँ संयुक्तं प्राञ्चं प्रवर्तयेत्
तमृत्विग्भ्यो दद्यादित्येतदपि न कुर्यादित्याञ्जीगविः ॥
तनूनामनुदेश इति ॥
प्रत्यधीत्यानुदिशेदिति बौधायनो यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेत्येव ब्रूयादिति शालीकिः ॥
विराजक्रमेष्विति ॥
सूत्रं बौधायनस्य
नर्य प्रजां मे गोपाय त्येव ब्रूयादिति शालीकिः ॥
पूर्णाहुत्यै हवन इति ॥

सूत्रं बौधायनस्य
परिश्रित एव पूर्णाहुतिं जुहुयादिति शालीकिः १७

पूर्णाहुतौ तूष्णीमग्निहोत्र इति ॥
सूत्रँ राथीतराणाम्
अत्रो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति
तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुतिमिति शालीकिः ॥
दशहोतुर्व्याख्यान इति ॥
स ह स्माह बौधायनो यत्र क्वच
हविर्निर्वप्स्यन्स्यात्सामिधेनीर्वानुवक्ष्यन्व्याचक्षीतैव तत्र दशहोतारम्

इत्येष्वेवैतदाग्नयधेयिकेषु तन्त्रेषु दृष्टं भवतीति
शालीकिरस्मिन्नेवैतदाग्नेयेऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः ॥
तन्त्रकरण इति ॥
स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता
इत्यत्रो ह स्माह शालीकिः सप्तदशसामिधेनीकाः
स्युर्वृधन्वन्तावाज्यभागावुपाँशुदेवता इत्यत्रो ह स्माहौपमन्यव
आग्नेयेऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो
रयिमन्तौ पुष्टिमन्तौ पवमानहविःषु वीतवन्तावन्वारम्भेष्ट्यामिति ॥
याजमानस्य करण इति ॥
अभीनामं याजमानं कुर्यादिति बौधायनः ॥
कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

दक्षिणानां दान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्
तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ॥
तन्तरसमास इति ॥
नास्ति तन्त्रसमास आचार्ययोरत्रो ह स्माहौपमन्यव आग्नेयोऽष्टाकपालोऽग्नये
पवमानाय तत्प्रथमं तन्त्रँ स्यादथाग्नये पावकायाग्नये शुचये तद्द्वितीयम्
अथैन्द्राग्नश्चादित्यश्च चरुरन्तं परीयातामिति ॥

दक्षिणानां दान इति ॥
सूत्रँ शालीकेराख्यातं बौधायनस्यात्रो ह स्माहौपमन्यवः सर्वा एवैता
इष्टीर्दक्षिणावतीः कुर्याच्चतस्रश्चतस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ॥
अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
अन्वारम्भेष्ट्यामिति ॥
चतुर्होतारँ सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे
कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्चतुर्होतारँ सारस्वतौ
होमावित्येतदुपवस्थे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति
शालीकिश्चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः
सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः १८

अथातः पुनराधेयं व्याख्यास्यामः ॥
सर्पराज्ञीष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधातीति
तँ षड्भिराधाय सप्तम्योपतिष्ठेतेति ॥
पूर्णाहुत्यै करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
तन्त्रकरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उभयानि तन्त्राणि
कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्
तस्यासमुदितेऽग्न्याधेयदक्षिणा दद्यादथाग्नेयं पञ्चकपालं तस्यासमुदिते
पुनराधेयदक्षिणा दद्यादथैन्द्राग्नं चादित्यं च चरुम्
अथाग्निवारुणम्पारे द्वादशाहस्य तन्व इति ॥
विभक्तीनां धान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्वाँ सर्वामृचमुक्त्वा
यजेतेत्याग्नेयीद्व्र्यक्षरा विभक्तीर्दध्यादित्यौपमन्यवः ॥

पुरोडाशस्य परिहोम इति ॥
दैवतं परिजुहुयादिति बौधायनः

सस्विष्टकृत्कमिति शालीकिः ॥
स्विष्टकृतो निर्वचन इति ॥
स्वे स्थाने निर्ब्रूयादिति बौधायनः
स्वे स्थाने निरुच्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिरत्रो ह
स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति
तेषु सर्वेषु निर्ब्रूयादिति ॥
अथापाहृताग्नेर्नष्टारणीकस्य चेति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः कामं नष्टेषु वापहृतेषु वाग्निषु
नाद्रियेताग्न्याधेयम्
आधानप्रभृति यजमान एवाग्नयो भवन्ति
तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीयः
काममुपावरोह्य जुहुयादिति ॥
अग्नीनां विहरण इति ॥
सूत्रं बौधायनस्याधानप्रभृत्येवैतेऽजस्राः स्युरिति शालीकिः ॥
पात्राणाँ सादन इति ॥
सूत्रँ शालिकेरत्रो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि
सादयेदपसव्यं दारुणा दारु संलीयमानं भवतीति ॥

द्वयोर्होम इति ॥
स ह स्माह बौधायनो यदि पूर्वा भ्रेषं नीयादुत्तरया प्रायश्चित्तं कुर्वीताथ
यद्युत्तरा भ्रेषं नीयादुभयं भ्रेषकृतँ स्यादन्यया प्रायश्चित्तं कुर्वीतेत्यत्रो ह स्माह
शालीकिर्यतरा कतरा चिद्भ्रेषं नीयादुभयं भ्रेषकृतँ स्यादन्ययैव ततः
प्रायश्चित्तं कुर्वीतेति १९

अभिज्वलन इति ॥
सूत्रं बौधायनस्य
गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः ॥
वर्त्म कुर्वन्नुदगुद्वासयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तत्रैव त्रिः प्रतिष्ठापयन्निवोद्वासयेत्
त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठतीति ॥

उन्नयन इति ॥
पूर्णान्वानूचो वेति
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

संमर्श इति ॥
स ह स्माह बौधायन उभयँ संमृशेद्यच्च स्थाल्याँ स्रुग्गतं चेति
स्रुग्गतमेवेति शालीकिः ॥
अथ जघनेन गार्हपत्यमुपसादयतीति ॥
सूत्रं बौधायन्सयाग्रेणातिहायेति शालीकिः ॥
हवन इति ॥
स्वयं व्यवेत्य जुहुयादिति बौधायनो यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः
स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः ॥
आहुत्योर्होम इति ॥
पूर्वापरे जुहुयादिति बौधायनः
प्रष्टी इति शालीकिः ॥
द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः
सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः ॥
द्विरङ्गुल्या प्राश्योदङ्पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥
सूत्रं बौधायनस्योदीचीनदण्डया भक्षयेदिति शालीकिः ॥

निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्दिशतीति जघनेन गार्हपत्यमपो
निनयतीदमहमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहेत्यक्षित्यामक्षिताहुतिमिति
वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥
आग्निपावमानीभिरुपस्थान इति ॥
स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत
आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते
यथायथमित्यत्रो ह स्माह शालीकिर्यत्प्राक्चोर्ध्वं चाग्निपावमानीभ्यस्तेन
संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत
आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते

यथायथमित्येवमौपमन्यवो न चास्यात ऊर्ध्वमाग्निपावमान्य
आहवनीयमागच्छेयुर्न गार्हपत्यं स्वाध्यायार्था एवास्यात ऊर्ध्वँ स्युरिति
व्याहृतीभिरुपस्थाय भर्तुं वः शकेयं श्रद्धा मे मा विगादित्येव
ब्रूयादित्याञ्जीगविः ॥
आशिःष्विति ॥
स ह स्माह बौधायन आत्मने प्रथममाशासीताथ जातेभ्योऽथ तन्तव इत्य्
अत्रो ह स्माह शालीकिर्जातेभ्यः प्रथममाशासीताथात्मनेऽथ तन्तव इत्यत्रो
ह स्माहौपमन्यवोऽजातेष्वेवात्मने च तन्तवे चेति
काममपि सायंप्रातराशासीतेत्यौपमन्यवीपुत्रः २०

पिण्डपितृयज्ञस्य करण इति ॥
स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत
स प्राचीनावीत्येव स्यादाहुतीनाँ होमादाहुतीर्होष्यन्यज्ञोपवीतं कुर्वीत
स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्
सकृदाच्छिन्नँस्तरिष्यन्प्राचीनावीतं कुर्वीत
स प्राचीनावीत्येव स्यादा प्राजापत्यायै
यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्यत्रो ह स्माह
शालीकिरादित एव प्राचीनावीतं कुर्वीत
स प्राचीनावीत्येव स्यादा प्राजापत्यायै
यज्ञोपवीत्येव प्राजापत्ययर्चोदङ्ङेयादिति ॥
तूष्णीँ सकृदुत्पूय सकृत्प्रोद्य सकृद्धविष्कृद्रूपं कुर्यादिति बौधायनः
सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याँ स्थाल्यामोप्य स्थालीपाकँ
श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः ॥

आहुतीनाँ होम इति ॥
सूत्रं बौधायनस्य
नात्र मध्यमामाहुतिं जुहुयाद्येक्षणमेव तृतीयँ स्यादिति शालीकिः ॥
सकृदाच्छिन्नस्य स्तरण इति ॥
उपनिष्क्रम्याग्नयगाराद्दक्षिणे पूर्वेऽवान्तरदेशे
सकृदाच्छिन्नँस्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनोऽन्तरेवैतां

दिशमिति शालीकिर्न चात्रोल्मुकमुपनिदध्यादिति ॥
पिराडानां दान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः परस्तादेवामुतोऽर्वाचोऽपसलैः
पिराडान्दद्यादिति ॥
स्राञ्जनाभ्यञ्जने मनसो निह्नव इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पिराडानामनुप्रहररिगति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽत्रैवैते पिराडाः परिशयीरन्नुच्छिष्टा ह्येते
भवन्ति पितृभिर्भन्नंकृता इति ॥
स्रतिशिष्टस्य प्राशन इति ॥
स्वयं यजमानः प्राश्नीयादिति बौधायनः
पुत्राय वान्तेवासिने वा दद्यादिति शालीकिः

पत्नीं प्राशयेत्
प्रजास्यैषा भवतीत्यौपमन्यवोऽङ्गुल्या
यावन्मात्रमवघ्रायाथेतरदग्नावनुप्रहरेदित्यौपमन्यवीपुत्रो भस्मोत्कर उद्वास्य
संप्रच्छादयेदित्याञ्जीगविरपोऽभ्यवहरेदिति मौद्गल्यः २१

स्राग्रयणस्य तन्त्रसमास इति ॥
नास्ति तन्त्रसमास स्राचार्ययोरत्रो ह स्माहौपमन्यवः सौम्यं निरुप्याथेतराणि
हवींषि निर्वपेदेवमस्य चरुमुखानि हवींषि भवन्तीत्यत्रो ह
स्माहौपमन्यवीपुत्रोऽतिपातादावापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं
चैककपालं च निर्वपेदित्यत्रो ह स्माहाञ्जीगविस्त्रीरयेतानि हवींषि भवन्ति
त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति
श्यामाकेनैवास्य प्रस्तरेरौतदाप्तं भवतीति ॥
स्रज्यानीनाँ होम इति ॥
सूत्रं बौधायनस्य
पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहुयादिति शालीकिः ॥
स्राग्रयणहविषाँ श्रपण इति ॥
पयसि श्रपयेदिति बौधायनोऽप्स्विति शालीकिः ॥

आग्रयण एककपालस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
तन्त्रकरण इति ॥
स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः
स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवताः
कुर्याद्याजमानमित्यत्रो ह स्माह शालीकिः सप्तदशसामिधेनीकाः
स्युर्वृधन्वन्तावाज्यभागावुपाँशुदेवताः
कुर्याद्याजमानमिति २२

विपरिधान इति ॥
स ह स्माह बौधायन आहवनीयेनैकेन विपरिधाय प्रव्रजेत्
प्रोष्य पुनरागम्य सर्वैर्मन्त्रैराहवनीयं प्रत्युपतिष्ठेतेत्यत्रो ह स्माह
शालीकिर्यथोपपन्नमेवाग्निभिर्विपरिधाय प्रव्रजेत्
प्रोष्य पुनरागम्य सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति ॥
अनुपस्थाय प्रव्रजितस्येति ॥
यत्र स्मरेत्परोक्षं तत एनं नित्येनोपतिष्ठेतेति बौधायनो न चेत्स्मरेत्प्रोष्य
पुनरागम्य नित्येनैवेति शालीकिः ॥

प्रवसथाहुताविति ॥
स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तँ स्यान्नाद्रियेत तत्र होतुम्
अथ यद्यकृतँ स्यात्तत्रैनां जुहुयादित्यत्रो ह स्माह शालीकिर्ये
प्रत्याम्नातप्रायश्चित्ता भ्रेषाः स्युस्तान्येव तत्र प्रायश्चित्तानि स्युरथ
येऽप्रत्याम्नातप्रायश्चित्ता भ्रेषाः स्युर्नैवैनामाद्रियेतेत्यत्रो ह स्माहौपमन्यवो यदि
चैव कृतं प्रायश्चित्तँ स्याद्यदि चाकृतं जुहुयादेव तत्र प्रवसथाहुतिमिति ॥
विराजक्रमेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अपामाचमन इति ॥
द्विर्मन्त्रेणाप आचामेत्सकृत्तूष्णीमिति बौधायनः
सकृन्मन्त्रेणाप आचामेद्द्विस्तूष्णीमिति शालीकिः ॥

साक्षीकरण इति ॥
स ह स्माह बौधायनः सर्वा एवैता देवताः साक्षिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतदेव नातिमन्येतेति शालीकिः ॥

कपाले नष्टे भिन्ने वेति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिँ शत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपिसृजेद्धर्मो देवाँ अप्येत्विति
सएष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति
पयो वाज्यं वासिक्तमेतेनैव मन्त्रेण सँसिञ्चेदिति ॥
आज्यग्रहाणां ग्रहण इति ॥
स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माह
शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च
न याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माहौपमन्यवो यथापि
पौरोडाशिका मन्त्रा नाभिवर्तन्त एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति ॥
परिधीनां परिधान इति ॥
स ह स्माह बौधायनोऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च
याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानोऽनुमन्त्रयेतेत्यत्रो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति ॥
समिधोरभ्याधीयमानयोर्जपतीति ॥
सूत्रं बौधायनस्य
सर्व एवैषोऽग्नियोजनो मन्त्रः स्यादिति शालीकिः २३

अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेदिति ॥
स एवमेव संवत्सरेसंवत्सर इति सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यस्याँ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते तस्यामुपसाद्य न तत

ऊर्ध्वमाद्रियेतेत्यत्रो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैव संवत्सरो भवति
यस्याँ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति ॥
दर्शपूर्णमासावालभमान एताहिर्व्याहृतीभिर्हवीँष्यासादयेदिति ॥
स एवमेव संवत्सरेसंवत्सर इति सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्यत्रो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैव संवत्सरो भवति
यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेति ॥
चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीँष्यासादयेदिति ॥
स एवमेव संवत्सरेसंवत्सर इति सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवीँष्यासादयेत्संवत्सरे पर्यवेते तस्यां वैश्वदेवहवीँष्यासाद्य न ततूर्ध्वमाद्रियेतेत्
अत्रो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैव संवत्सरो भवति
यास्यां पौर्णमास्यां वैश्वदेवहवीँष्यासादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याँ शुनासीरीयहवीँष्यासाद्य न ततूर्ध्वमाद्रियेतेति ॥
व्याहृतीनां धान इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
प्राशीत्रेऽवदीयमाने जपतीति ॥
सूत्रं मैत्रेयस्याथाचार्ययोः प्राशित्रेऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशँ सातिति ॥
यजमानभागे यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषमिति ॥
सर्व एवैष स्विष्टकृदनुमन्त्रणो मन्त्रः स्यादित्यौपमन्यवः ॥
वेदे यजमानं वाचयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो वेदे यजमानं वाचयति वेदोऽसि वित्तिरसि विदेयेति ॥

यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्

तदेवास्य सर्वं वृङ्क इति ॥
अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥
स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह
यजमानभागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य जुह्वामवधाय जुहुयात्
प्रस्तरभूयं यजमानभागो गच्छतीत्यत्रो ह स्माह शालीकिरादित एव न
सुरापेण सँसृज्येताथ चेत्सँसृज्येत मन्त्रानु हैनं वाचयेत्किमु भक्षान्न भक्षये-
दिति
भक्षयेच्चैव भक्षानित्यौपमन्यवः ॥
आदित्यस्योपस्थान इति ॥
उपनिष्क्रम्याग्न्यगारादादित्यमुपतिष्ठेतेति बौधायनोऽत्रैव तिष्ठन्निति
शालीकिः ॥
पौर्णमास्यामुपवेषस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
व्रतविसर्ग इति ॥
मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजेतेति बौधायनस्
तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति शालीकिरुपवेषेण चरित्वा व्रतं
विसृजेतेत्यौपमन्यवः ॥

यज्ञस्य पुनरालम्भं जपतीति ॥
सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः २४

अथातः पशुबन्धं व्याख्यास्यामः ॥
स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्ध इति
सोपवसथा वा सद्योयज्ञा वेति शालीकिः ॥
इष्टिकरण इति ॥
पशौपशावेवाग्नेयेनाष्टाकपालेन यजेतेति बौधायनो बभ्रुकर्ण्यां चैवैतद-
जवशायां च दृष्टं बह्वतीति शालीकिः ॥
स्फ्यो यूपो भवतीति ॥
स्फ्यप्रकार एवायं चषालवान्यूपो भवतीति बौधायनोऽस्फ्य
एवायमग्न्यगारिकोऽचषालो यूपः स्यादिति शालीकिः ॥

विशाखो यूपो भवतीति ॥
ऊर्ध्वँ रशनाकालाद्द्वे शाखे चतुरश्रे चतुरश्रचषाले स्यातामथेतरोऽष्टाश्रिर्यूपः स्यादिति बौधायनः

शाखैवेयमचषाला स्यादथेतरोऽष्टाश्रिर्यूपः स्यादिति शालीकिः ॥
सक्तुकरण इति ॥
सूत्रं बौधायनस्य
व्रीहीणामपि कुर्यादिति शालीकिः ॥
षड्ढोतुर्होम इति ॥
सूत्रं बौधायनस्योपवसथ एव षड्ढोतारं जुहुयादिति शालीकिः ॥
यूपाहुत्यै हवन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आज्यं चारणी चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहुयादिति ॥
आव्रश्चनस्याभिहोम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एवमेव जुह्वामन्तर्धाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति सहस्रवल्शा वि वयँ रुहेमेत्यात्मानं प्रत्यभिमृशीताथोदकँ स्पृशेदिति ॥
यूपस्यावाहन इति ॥
यः प्राङ्वोदङ्वा पद्येत तमावाहयेदिति बौधायनो यां कां चिद्दिशमभि पद्येताव्यापन्नश्चेत्स्यादावाहयेदेवेति शालीकिः ॥
वेद्यै करण इति ॥
सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायनो रथसंमिता स्याद्रथाक्षेण पश्चात्तिरश्ची रथेषया प्राची रथयुगेन पुरस्तात्तिरश्च्युत्तरयुगेनोत्तरनाभिरिति

चक्षुर्निमिता वा स्यात्सर्वतो वा दशपदा विराट्संपन्नेति शालीकिः २५

चात्वालस्य परिलेखन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एवमेव परिलिखन्बाह्यतः पुरस्ताच्चोत्तरतश्चालिखेदिति ॥
लोकाग्नीनाँ हरण इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य ततो
लोकाग्नीन्हरेदित्युद्देशादेव लोकाग्नीन्हरेदित्यौपमन्यवः ॥
उत्तरवेद्यै परिमाण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया
परिमिमीत
नात्र मध्यमा वेदिर्भवतीति ॥
ग्रारव्यातं यूपावटस्य परिलेखनम्॥

उत्तरवेद्या ग्रलंकरण इति ॥
सूत्रं बौधायनस्य
पूर्वेद्युरेवोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः ॥
स्फ्येनाग्नीध्रो निघ्नन्नन्वेति होतुः पदानीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पदात्पदं पाँ सूनुपसँहृत्य
तानुत्तरेणोत्तरनाभिमतिकिरेदिति ॥
उत्तरवेद्यै प्रोन्नण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो मन्त्रानुदिशं चैनां प्रोन्नेन्मन्त्रानुलोकं
चेति ॥
ग्रतिशिष्टानां निनयन इति ॥
वेद्यै दन्निणेऽँसे निनयेदिति बौधायन उत्तरवेद्या इति शालीकी
रथसंमितायामेव दन्निणमँ समुपनिनयेदित्यौपमन्यवः ॥
उत्तरवेद्यै व्याघारण इति ॥
सूत्रं बौधायनस्य
प्रत्यनीकेष्वेनां व्याघारयेदिति शालीकिरन्दणयैव व्याघारयन्मध्ये हुत्वोत्तरमँ
समभिजुहुयादित्यौपमन्यवः ॥
इध्मस्य निधान इति ॥
सूत्रं बौधायनस्य ॥
तूष्णीमेवेध्मं निदध्यादिति शालीकिः ॥
ग्रध्वराहुतीनाँ होम इति ॥
सूत्रं बौधायनस्य
चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः ॥

पृषदाज्यग्रहणै संमार्जनसादन इति ॥
सूत्रं बौधायनस्य

लभेतौपभृते संमार्जनसादने इति शालीकिर्न संमृजेदित्यौपमन्यवः ॥
पृषदाज्यस्य ग्रहण इति ॥
सूत्रं बौधायनस्य हृदयान्तेन गृह्णीयादिति शालीकिः
सँसृज्याज्यं च दधि चैतैः पञ्चभिर्गृह्णीयादित्यौपमन्यवोऽत्रो ह
स्माहौपमन्यवीपुत्रस्तूष्णीं द्विरुपस्तीर्य सर्वैर्मन्त्रैर्दध्यानीय तूष्णीं
द्विरभिघारयेदिति ॥
पृषदाज्यस्य प्रायश्चित्तकरण इति ॥
ग्रहणादग्राचरणादत्रैवास्य प्रायश्चित्तं कुर्वीतेति बौधायनः
सादनादग्रा चरणादत्रैवेति शालीकिर्न तु पृषितमात्र इत्यौपमन्यवः ॥
यूपस्य प्रक्षालन इति ॥
सूत्रं बौधायनस्य
तूष्णीमेव यूपं प्रक्षालयेदिति शालीकिः ॥
यूपस्य प्रोक्षण इति ॥
स ह स्माह बौधायनः स्वरुरशनं मैत्रावरुणदण्डं यूपशकलँ
हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि
प्रोक्षेत्पशुना पशुसंयोजनानीति शालीकिः ॥

यूपस्य परिक्रमण इति ॥
दक्षिणेनेति बौधायनः
उत्तरेणेति शालीकिः ॥
यूपस्याञ्जन इति ॥
सूत्रं बौधायनस्याग्निष्ठामेवेति शालीकिः ॥
उदपात्रस्योपनिनयन इति ॥
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
यूपस्य परिव्ययण इति ॥
त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः
सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति शालीकिः ॥

नाभिदघ्ने परिव्ययतीति ॥
सूत्रं बौधायनस्य
मध्यदेश इति शालीकिः २६

स्वरोरवगूहन इति ॥
सूत्रं बौधायनस्याग्निष्टां प्रतीति शालीकिः ॥
पशोरुपाकरण इति ॥
सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायन एवमेवोपाकुर्यान्न तु जोषयेदिति जोषयेच्चैव जुहुयाच्चोपाकरणायेति शालीकिरत्रो ह स्माहौपमन्यव एवमेवैनं पुरस्तात्प्रत्यगावृत्तं बर्हिर्भ्यां च प्लक्षशाखया चाभिसेधेदेतस्यां च प्लक्षशाखायाँ हृदयं निधायावद्येदिति ॥

अरणयोः समञ्जन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्नेर्जनित्रमसीति शकलमाददीत वृष्णौ स्थ इति दूर्वे वा शकले वा निदध्यादुर्वश्यसीत्यधरारणिमाददीत पुरूरवा इत्युत्तरारणिम्
अथैने आज्यस्थाल्याँ समज्य घृतेनाक्ते वृषणं दधातामिति समवदध्यादिति ॥
पशुरशनाया आदान इति ॥
मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥
पशोरभिधान इति ॥
सूत्रं बौधायनस्य
ग्रीवायमेवाभिदध्यादिति शालीकिः ॥
पशोर्नियोजन इति ॥
सूत्रं बौधायनस्य
यूप एव पशुं नियुञ्ज्यादिति शालीकिः ॥
पशोः प्रोक्षण इति ॥
तूष्णीँ सँस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः
कमण्डलुभिरिति शालीकिः ॥
पशोः समञ्जन इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्कर्षेदा दक्षिणायै श्रोणेरिति ॥

स्वरुरशनस्योत्पादन इति ॥
यूपः स्वरुरशनमुत्पादयेदिति बौधायनः पशुरिति शालीकिस्
तन्त्रमित्यौपमन्यवो देवतेत्यौपमन्यवीपुत्रः २७

अत्याश्रावण इति ॥
सूत्रं बौधायनस्य
सोम एवात्याश्रावयेदिति शालीकिः ॥
पशोः समञ्जन इति ॥
सह स्माह बौधायनो यया समञ्ज्यान्न तया विशस्यान्न त्वेतया
शृतस्यावद्येदिति
यथोपपादमिति शालीकिः ॥
पशोः पर्यग्निकरण इति ॥
सहशामित्रं पर्यग्नि कुर्यादिति बौधायनो यदन्यच्छामित्रादिति शालीकिः
पशुं चाज्यानि चेति राथीतरः
पशुमेवेत्यौपमन्यवः ॥
अपाव्यानाँ होम इति ॥
स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति
यथोपपादमिति शालीकिः ॥
उपप्रैषाश्रावण इति ॥
सूत्रं बौधायनस्य
नाश्रावयेदिति शालीकिः ॥
पशोर्निहनन इति ॥
प्रतीचीनशिरसमुदीचीनपादमिति बौधायन उदीचीनशिरसं
प्रतीचीनपादमिति शालीकिः
प्राचीनशिरसमुदीचीनपादमित्यौपमन्यवः ॥
पशुरशनाया उदसन इति ॥
चात्वाले रशनामुदस्येदिति बौधायनोऽद्भिरभ्युन्द्यासंचर इति शालीकिः ॥

पत्न्या उदानयन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽनर्वा प्रेहीत्येनां
प्रणयेदथैनामादित्यमुदीक्षयानर्वा प्रेहीत्येव प्रणयेदिति ॥
अपामवेक्षण इति ॥
उपरिष्टाद्यात्वालस्यावेक्षयेदिति बौधायनः
पार्श्वतः पशोरिति शालीकिः ॥
बर्हिषः समञ्जन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तथाक्तमेवेतरत्स्यादितरत एवैनदक्त्वा
निरस्येद्रक्षसां भागोऽसीत्यथोदकँ स्पृशेदिति २८

वपायाः प्रदान इति ॥
आज्यस्रुवा वा स्युर्हिरण्यं वा द्वितीये चतुर्थे चेति
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पशुपुरोडाशस्य निर्वपण इति ॥
सूत्रं बौधायनस्य
पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ॥
पशोः प्रच्यावन इति ॥
हृदयजिह्वे प्रच्यावयेदिति बौधायनो हृदयमेवेति शालीकिः ॥

हृदयस्य श्रपण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः शूलपाक्यमेवैनच्छ्रपयेदत्रैव हृदयशूलं
परिनिस्तिष्ठेदुपरिष्टाद्य मन्त्रेणोपस्पृशेदिति ॥
पशुपुरोडाशस्येडाया अवदान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो निरवदायैवास्य
स्विष्टकृतमिडामवद्येदेवँ सवनीयानामिति ॥
इडसूनस्य करण इति ॥
सूत्रं बौधायनस्य
बर्हिष्येव प्लक्षशाखायाँ हृदयं निधायावद्येदिति शालीकिः ॥
पशोः संवदन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पृष्ट्वाभिक्रामेत्पूषा मा पशुपाः पात्विति

द्वितीयं पृष्ट्वाभिक्रामेत्पूषा मा प्रपथे पात्विति
तृतीयं पृष्ट्वाभिक्रामेत्पूषा माधिपतिः पात्विति ॥
पशोरभिघारण इति ॥
सूत्रं बौधायनस्य
पृषदाज्येन हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः ॥
पशोरासादन इति ॥
पञ्चहोत्रासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ॥
पशोरवदान इति ॥
स ह स्माह बौधायनो हृदयस्य जिह्वाया वक्षस
इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं चात्रावदानं पञ्चावत्तिनां कुर्यादित्य्
अत्रो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येन्न चात्र तृतीयमवदानं
पञ्चावत्तिनां कुर्यादिति २९

पशोः संमर्शन इति ॥
स ह स्माह बौधायन उभयानि संमृशेद्येभ्यश्चावद्येत्स्रुग्गतानि चेति
स्रुग्गतान्येवेति शालीकिः ॥
कुम्बतः श्रीणातीति ॥
सूत्रं बौधायनस्य
समस्तेनैवास्य पार्श्वेन वसाहोमँ श्रीणीयादिति शालीकिः ॥
पशोः प्रतिपरिहरण इति ॥
प्रतिपरिहरेदिति बौधायनो न प्रतिपरिहरेदिति शालीकिः ॥
अत्याक्रमण इति ॥
सूत्रं बौधायनस्य
जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः ॥
दिशां प्रतीज्याया इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतिय-
जेद्दिशे स्वाहेति
हुत्वोपतिष्ठेत स्वाहा दिग्भ्यो नमो दिग्भ्य इति ॥

वनस्पतेश्चर्याया इति ॥

सूत्रं बौधायनस्य
पृषदाज्याच्चतुर्गृहीतेन चरेदिति शालीकिः ॥
वनिष्ठोराधान इति
षडवत्तँ संपादयेदिति बौधायनः
सकलमेवेति शालीकिः ॥
औपयजेष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति ॥
गुदतृतीय इति ॥
एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनोऽपच्छेदमिति शालीकिः
समस्तमेवैनमनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ॥
अथ बर्हिषि हस्तौ निमार्ष्टीति ॥
सूत्रं बौधायनस्यापोऽप्यस्मा अत्रानयेयुरिति शालीकिः ३०

स्वरोर्होम इति ॥
सूत्रं बौधायनस्य
चतुर्गृहीतेऽवधाय जुहुयादिति शालीकिः ॥
पत्नीनाँ संयाजन इति ॥
सूत्रं बौधायनस्याज्येनैव पत्नीः संयाजयेदिति शालीकिः ॥

उत्तानायै जाघन्यै देवानां पत्नीर्यजति नीच्या अग्निं गृहपतिमिति ॥
सूत्रं बौधायनस्य
सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ॥
उत्तानायै जाघन्यै होत्र इडामवद्यति नीच्या अग्नीधे षडवत्तमिति ॥
सूत्रं बौधायनस्य
सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ॥
फलीकरणहोमस्य करणेति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
ध्रुवाया आप्यायन इति ॥
स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च

यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूँषि जुहुयादिति शालीकिः ॥
समिष्टयजुषाँ होम इति ॥
सूत्रं बौधायनस्य
त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः ॥
हृदयशूलस्योद्वासन इति ॥
कुर्वीतात्र सुमित्राश्च दुर्मित्राश्चेति बौधायनो न कुर्वीतेति शालीकिः ॥
समिधां करण इति ॥
सर्व एवार्द्राः सपलाशाः कुर्वीरन्निति बौधायनो यजमानश्चैव पत्नी चेति
शालीकिः ॥
बर्हिषः पर्युपोषण इति ॥
वेद्यै दक्षिणेऽँसे पर्युपोषेदिति बौधायन उत्तरवेद्या इति शालीकिः ॥

सक्तुहोमस्य करण इति ॥
त्रीन्सक्तुहोमान्कुर्यादिति बौधायन एकमेवेति शालीकिः
प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः ॥
आख्यातं देवतानामुपस्थानम्॥
यूपस्योपस्थान इति ॥
सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः ॥
समन्वानय इति ॥
सूत्रं बौधायनस्य
नाद्रियेतेति शालीकिः ॥
पूर्णाहुत्यै करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
दक्षिणायै दान इति ॥
धेनुं वानड्वाहं वा दद्यादिति बौधायनोऽन्यद्वैकधनमिति
शालीकिरन्यद्वैकधनमिति शालीकिः ३१

## एकविंशः प्रश्नः

अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥
स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि

प्रथमे त्वेव संवत्सरे व्रतं चरेदित्यत्रो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु चातुरमास्यानि ब्रह्मचर्यवन्ति भवन्तीति
यथाप्रयोगमित्यौपमन्यवः ॥
पयसां मन्त्रामन्त्र इति ॥
उभये सायंप्रातर्दोहा मन्त्रवन्तः स्युरिति बौधायनस्
तूष्णीका इति शालीकिरत्रो ह स्माहौपमन्यवो यत्प्राक्सोमेज्यायै चातुर्मासिकानि पयाँसि तूष्णीकानि स्युरथोर्ध्वँ सोमेज्यायै मन्त्रान्लभेरन्नित्यत्रो ह स्माहाञ्जीगविः पञ्चैवैतानि पयाँसि मन्त्रवन्ति भवन्ति दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपायिन्ये सौत्रामण्यामिति ॥
वैश्वानरपार्जन्ययोः करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥
सूत्रं बौधायनस्योदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः ॥

प्रसूमयं प्रस्तरमिति ॥
सूत्रं बौधायनस्य
सर्वमेवैतद्बर्हिः प्रसूमयँ स्यादिति शालीकिः ॥
पञ्चहोतुर्होम इति ॥
सूत्रं बौधायनस्योपवसथ एव पञ्चहोतारं जुहुयादिति शालीकिः ॥
प्रयाजानामनुमन्त्रण इति ॥
चतुरश्चतुर्भिरनुमन्त्र्य पञ्चमेनेतराननुसमियादिति बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां पारे पञ्चमेनानुमन्त्रयेतेति शालीकिः ॥
एककपालानां मन्त्रामन्त्र इति ॥
मन्त्रवन्तः स्युरिति बौधायनस्
तूष्णीका इति शालीकिः ॥
एककपालानामवदान इति ॥
स ह स्माह बौधायनश्चातुर्मासिकानामेव नावद्येदथेतरेषामवद्येदित्यत्रो ह स्माह शालीकिस्तन्त्रहराणामेवावद्येदथेतरेषां नावद्येदित्यत्रो ह

स्माहौपमन्यवो य एव वैश्वदेवपुरुषि तस्य नावद्येदथेतरेषामवद्येदिति ॥

एककपालानामभिहोम इति ॥
यः स्रुचि सँस्रावः स्यात्तेनाभिजुहुयादिति
बौधायनश्चतुर्भिश्चतुर्भिर्ऋृतुनामभिरेकैकमिति शालीकिः १

एककपालानामाशयस्यानुसँहरण इति ॥
अनुसँहरेदिति बौधायनो नानुसँहरेदिति शालीकिः ॥
वाजिनस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
वाजिनस्य भक्षण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽवघ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदिति ॥
निवर्तन इति ॥
निवर्तनेनोपवाप्योभयं केशश्मश्रु वापयीतेति बौधायनो निवर्तनेनोपवाप्य श्मश्रूण्येव वापयीत न केशानिति शालीकिर्निवर्तनेनोपवाप्य नैव श्मश्रूणि वापयीत न केशानित्यौपमन्यवः ॥
वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥
सूत्रं बौधायनस्य
सौवर्णानि वा राजतानि वा स्युरिति शालीकिः
शमीमयानीत्यौपमन्यवः ॥

स्तम्बयजुषोर्हरण इति ॥
व्यतिचारँ स्तम्बयजुषी हरेयातामिति बौधायनः
सहेति शालीकिः ॥
आज्यस्यावेक्षण इति ॥
दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्मध्यत इत्यौपमन्यवः ॥
ऐषीकँ शूर्पमिति ॥

सूत्रं बौधायनस्य
दर्भमयं वा कुशमयं वेति शालीकिः
प्रत्यक्षमित्यौपमन्यवः ॥
शूर्पस्यानुप्रहरण इति
अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिरद्भिरभ्युक्ष्य
भुञ्जीतेत्यौपमन्यवः ॥
आमिक्षयोरवदान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आमिक्षयोरवदाय मेषीमवदध्यान्न
शामीपर्णकरीरसक्तूनामवद्येद्धासोक्ता ह्येते भवन्तीत्युत्तमेनावदानेन सर्वं
विश्वलोपँ समवदध्यादित्यौपमन्यवः २

मारुत्यै चर्याया इति ॥
सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः ॥

मारुत्ये मेक्षणस्यानुप्रहरण इति ॥
अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥
अवभृथ इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवस्तुषैश्च निष्कासेन चावभृथमवेयादिति ॥
आख्यातमुदकान्तस्य प्रत्यसनम्॥
आख्यातमाप्लवनम्॥
आख्यातँ समिधां करणम्॥
आनीकवतस्य निर्वपण इति ॥
पाणिसंमर्शनेनादित्यस्योदयमाकाङ्क्षेतेत्याचार्ययोर्मुष्टिमेव
ग्रहीष्यन्नित्यौपमन्यवः
साकँ रश्मिभिः प्रचरेदित्यौपमन्यवीपुत्रः ॥
एष एवापि सांतपनस्य प्रदेश एष क्रैडिनस्य ॥
गृहमेधीयस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः ॥
गृहमेधीयस्य निर्वपण इति ॥

पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनोऽपवित्रेण तूष्णीकमिति शालीकिः ॥

गृहमेधीयस्य श्रपण इति ॥
पयसि श्रपयेदिति बौधायनोऽप्स्विति शालीकिः ॥
शाकलानां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
गृहमेधीयस्यासादन इति ॥
दात एव बर्हिष्यासादयेदिति बौधायनो येऽन्येऽनुपयुक्ताः कुशाः
स्युस्तेष्विति शालीकिः ॥
गृहमेधीयस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
शाकलानामनुप्रहरण इति ॥
अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥
प्रतिवेशस्य श्रपण इति ॥
अन्वाहार्यपचने श्रपयेदिति बौधायनो ग्रामाग्राविति शालीकिः ॥
पूर्णदर्व्यस्य होम इति ॥
सूत्रमाचार्ययोर्व्याहृतीरुक्त्वा ब्रह्मणो हिंकारे जुहुयादिति गौतमः ३

महापितृयज्ञस्य बर्हिषीति ॥
समूलमेतद्बर्हिर्भवतीति बौधायनस्
तत्र नास्ति प्रत्यभिमर्शन इति
सातिशेषं भवतीति शालीकिस्

तत्र सिद्धः प्रत्यभिमर्शन इति
निर्मूललूनमेवैतल्लुनुयादित्यौपमन्यवः ॥
अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥
सूत्रं बौधायनस्याथ यदि कनीयः स्यादद्भिरभ्युन्नीयेति शालीकिः ॥
तेषां व्रीहिष्वेव हविष्कृतमु द्वादयत्युपोद्यच्छन्ते यवानिति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत

तन्त्रं तु हविष्कृत्स्यादिति ॥
आप्यनिनयन इति ॥
जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनोऽग्रेणातिहायेति
शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥
वेद्यै करण इति ॥
उपनिष्क्रम्याग्नयगाराद्दक्षिणे पूर्वेऽवान्तरदेशे कुर्यादिति बौधायनोऽन्तरेवैतां
दिशमिति शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः ॥
अन्वाहार्यपचनस्योपसमिन्धन इति ॥
स्वे स्थान उपसमिन्धीरन्निति बौधायन इध्ममेवातिप्रणयेयुरिति शालीकिः ॥

आज्यग्रहाणां ग्रहण इति ॥
पञ्चगृहीतानि वा षड्गृहीतानि वा स्युरिति बौधायनः
षड्गृहीतान्येवेति शालीकिः ॥
प्रस्तरस्य मन्त्रामन्त्र इति ॥
ग्रहणं चैवास्य न्यसनं च तूष्णीकँ स्यादथेतरन्मन्त्रवत्स्यादिति बौधायनः
संभरणं चैवास्य न्यसनं च तूष्णीकँ स्यादथेतरन्मन्त्रवत्स्यादिति
शालीकिर्यावन्नयसनमेव तूष्णीकँ स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः ॥
त्रिरपसलैः परिस्तृणन्पर्येतीति ॥
सूत्रं बौधायनस्य
यथोत्पन्नेनैव सँसृणीयादिति शालीकिः ॥
वेद्यै स्तरण इति ॥
सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः ४

परिधीनां परिधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्वान्परिधीन्परिदध्यात्
पितृकर्मणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति ॥
हविषामुद्वासन इति ॥
सूत्रं बौधायनस्य
यथाशृतमेव हवींष्युद्वासयेदिति शालीकिः ॥
हविषाँ संचरोऽधवर्याश्चेति ॥

दक्षिणेनेति बौधायन उत्तरेणेति शालीकिः ॥

विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवीँषीति ॥
सूत्रं बौधायनस्य
नात्र हवींषि विपरिहरेयातामिति शालीकिर्नात्र हवींषि
विपरिहरेयातामध्वर्युश्चैवाग्नीध्रश्च विपरिक्रामेतामित्यौपमन्यवः ॥
आश्रावण इति ॥
ओ स्वधेति बौधायन आ स्वधेति शालीकिः
स्वधेत्यौपमन्यवः ॥
प्रवर इति ॥
सूत्रमाचार्ययोर्विद्वाँश्चिकित्वन्नित्यौपमन्यवः ॥
आख्यातं पिण्डानां दानम्॥
आख्यातमाञ्जनाभ्यञ्जनयोः ॥
आख्यातं पिण्डानामनुप्रहरणम्॥
त्रैयम्बकाणां मन्त्रमन्त्र इति ॥
मन्त्रवन्तः स्युरिति बौधायनस्
तूष्णीका इति शालीकिरप्येनानेककपाल एव श्रपयेदित्यौपमन्यवः ॥
एकोल्मुकस्य हरण इति ॥
अन्वाहार्यपचनाद्धरेदिति बौधायनो ग्रामाग्नेरिति शालीकिः ॥
एतत्समादाय गार्हपत्यमुपतिष्ठन्त इति ॥
स ह स्माह बौधायन उभय एष मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति
याजमान एवेति शालीकिः ॥

त्रैयम्बकाणामुत्खेदन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्परीत्य
त्रिरुत्खिदेद्भगाय त्वा भगाय त्वेति ५

अथैनान्यजमानस्याञ्जलावावपतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं
पत्न्यै च भगकामायै चेति ॥

अथैनान्मूत ओप्य नीललोहिताभ्याँ सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ
विशाखायां वा बध्नातीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
उदपात्रस्योपनिनयन इति ॥
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
शुनासीरीयपरुष इज्याया इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष
आगच्छेत्तस्मिञ्छुनासीरीयपरुषा यजेत

त्रयोदशस्यैवैतन्मासस्यापीज्यार्थं दृष्टं भवतीति ॥
वेद्यै करण इति ॥
दार्शपौर्णमासिकी स्यादिति बौधायनः
पाशुबन्धिकीति शालीकिः ॥
दक्षिणानां दान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये
द्वादश वैश्वदेवे द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने
चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्ये तिस्रः क्रैडिने द्वादश महाहविःषु तिस्र
आदित्ये द्वादश शुनासीरीयहविःष्वित्यत्रो ह
स्माहौपमन्यवश्चतःषष्टिश्चातुर्मास्यदक्षिणाः समाम्नाता भवन्ति
ताश्चेन्नाधिगच्छेद्वासाँस्येतावन्ति मन्थान्वौदनान्वैतावतो दद्यात्
तेनो हैवैतं काममवाप्नोतीति ॥
चातुर्मास्यानामन्त इति ॥
सोमान्तानि स्युरिति बौधायनः
पश्वन्तानीति शालीकिः
सवनेष्ट्या यजेतेत्यौपमन्यवः ६

अथातोऽग्निष्टोमं व्याख्यास्यामः ॥
स ह स्माह बौधायनो नादृष्ट्वा राजानं चर्त्विजश्च दीक्षयेदित्यत्रो ह स्माह
शालीकिर्यदि दीक्षा दीर्घाः स्युराश्वासिका आहर्तारस्तथोद्गीथः कामं
दीक्षयेदिति ॥

शालाया अध्यवसान इति ॥
स ह स्माह बौधायनो मध्यंदिने शालामध्यवस्येदापः पूर्वा गच्छेयुरन्वग्यजमानो राज्ञा चारणिभ्यां चेत्यत्रो ह स्माह शालीकिः कामं पूर्वाह्णे वापराह्णे वा शालामध्यवस्येत्
प्राक्त्वोवास्तमयाद्दीक्षणीयाँ संतिष्ठापयिषेदिति ॥
अग्नीनाँ हरण इति ॥
अजस्रान्हरेदिति बौधायनोऽरण्योः समारोह्येति शालीकिः ॥

सप्तहोतुर्होम इति ॥
सूत्रं बौधायनस्य
षड्ढोतारँ हुत्वा सप्तहोतारं जुहुयादिति शालीकिः ॥
यूपाहुत्यै हवन इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
वाससामुपकल्पन इति ॥
अष्टाविति बौधायनः
सप्तेति शालीकिः ॥
कृष्णाजिनानामुपकल्पन इति ॥
पञ्चेति बौधायनः
षडिति शालीकिः ॥
कृष्णविषाणाया उपकल्पन इति ॥
त्रिवलिरिति बौधायनः
पञ्चवलिरिति शालीकिः
सकलैवैषा स्यादित्यौपमन्यवः ॥
व्रतप्रदान इति ॥
कँस इति बौधायनश्चमस इति शालीकिः ॥
प्रवर्ग्यस्य करण इति ॥
स ह स्माह बौधायनो न प्रथमसोमे प्रवृञ्ज्यादुपनामुको हैनमुत्तरो यज्ञो भवतीति
न प्रवर्ग्यं गच्छेच्चनेति शालीकिः ७

तीर्थगमन इति ॥
स ह स्माह बौधायनः प्रदक्षिणमावृत्यैतत्तीर्थं गच्छेदथामुतोऽपसलैरावर्तेतेत्यत्रो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेदथामुतः प्रदक्षिणमावर्तेतेति ॥

अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥
सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः ॥
अभ्यञ्जन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो महीनां पयोऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति ॥
आञ्जन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याञ्जीतेति ॥
त्रिरनिधावं द्विरुत्तरमप्यु पञ्च कृत्वा आङ्क इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पवन इति ॥
स ह स्माह बौधायनस्त्रीन्सप्तवर्गान्कृत्वा तेषामेकेन प्राणदेशे पवयेदथेतरेण नाभिदेशेऽथेतरेण गुल्फदेशेऽथैनान्यद्भिरभ्युक्ष्योदञ्चयुत्स्विदेदित्यत्रो ह स्माह शालीकिर्द्वाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविँशत्यावग्राहशः पवयित्वाथैनान्यद्भिरभ्युक्ष्योदञ्चयुत्स्विदेदित्यत्रो ह स्माहौपमन्यवः समस्तैरेवैनं प्राणदेशे पवयेद्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति

देवतायांदेवतायामतिवाच्याद्भिरभ्युक्ष्योदञ्चयुत्स्विदेदिति ॥
अथैनँ सव्ये पाणावभिपात्येति ॥
दक्षिण इति प्रोक्तम्पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अथैनमग्रेणाहवनीयं पर्याणीयेति ॥
जघनेनेति प्रोक्तम्पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
पत्न्या उदानयन इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति ॥
पत्न्या दीक्षण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति ॥
न यजमानं व्रतमुपनयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति ॥
न पत्नीँ संनह्यतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो दीक्षणीयायामेनाँ संनह्य सँस्थितायां विमुच्याध्वरिकेण सह याजमानेन तन्त्रेतन्त्रे वात ऊर्ध्वं पौरोडाशिकेन कर्मणाभिसंनह्येदिति ॥
ध्रुवाया आप्यायन इति ॥
स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः ॥
दीक्षाहुतीनाँ होम इति ॥
सूत्रं बौधायनस्य
चतुर्थ्यां पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिरत्रो ह स्माहौपमन्यव आकूत्यै प्रयुज इति तिस्रोऽनन्तरा हुत्वा सरस्वत्यै पूष्णेऽग्नय इत्युपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येतां जुहुयादथौद्ग्रहणमिति ८

कृष्णाजिनयोरिति ॥
द्वाभ्याँ समुब्जिताभ्यां दीक्षयेदिति बौधायनोऽथ यद्यन्यतरत्स्याद्दक्षिणमीर्मं प्रतिषीव्येदित्येकमेव कृष्णाजिनँ स्यादिति शालीकिः ॥
शुक्लकृष्णयोः संमर्शन इति ॥
शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिरित्येवँ शुक्लकृष्णे संमृशेदिति बौधायनः

पृथेनैवैतँ संधिँ संमृशेदिति शालीकिरप्येनमेकाङ्गुल्यैव संमृशेदित्यौपमन्यवः ॥
कृष्णाजिनस्याभिसर्पण इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धर्चे विगृह्णीयात्
तृतीयेन मध्यदेशं गच्छेदिति ॥
श्राख्यातं ग्रन्थिकरणम्॥
श्रथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥
सूत्रं बौधायनस्य
वाससैव संप्रच्छन्नः स्यादिति शालीकिः ॥
कृष्णविषाणायाः प्रदान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां
प्रयच्छेत्
तूष्णीं वेद्यन्तमुद्धन्यात्
तूष्णीं केशान्तमुपस्पृशेदिति ॥
दराडस्य प्रदान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दराडं
प्रयच्छेत्सूपस्था देवः वनस्पतिरूर्ध्वो मा पाह्योदृचसिति ॥
श्रथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति
स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याँ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं
वातादारभ इति ॥

मुष्टिकरण इति ॥
वाचोयमसंयुक्तं मुष्टिकरणँ स्यादिति बौधायन श्रावान्तरदीक्षायै
विसर्गादिति शालीकिः ॥
श्रावेदन इति ॥
यथावर्णमावेदयेदिति बौधायनोऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति
शालीकिः ॥
व्रतदोहन इति ॥
सूत्रं बौधायनस्यापरद्वारिकमेव यजमानव्रतँ स्यादिति शालीकिः ९

यजुषोरनुषङ्ग इति ॥
श्रा कृष्णाजिनप्रासनादनुषज्जेतामिति बौधायन श्रावान्तरदीक्षायै

विसर्गादिति शालीकिरा दक्षिणानयनादित्यौपमन्यवः ॥
संवेशनयजुषीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्ने त्वँ सु जागृहीत्येव
संविशेद्व्रतयिष्यन्नप आचामेद्दैवीं धियं मनामह इति ॥
अथ सनीहारान्प्रहिणोतीति ॥
अन्यत्रोग्रशूद्रयोरिति बौधायनोऽन्यत्रोग्रैरिति शालीकिः
सर्वान्यज्ञसिद्धय इत्यौपमन्यवः
सवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति ॥
अनुषङ्गीण्येतानि बह्वन्तीति बौधायनः
सकृत्कृतान्येवैतान्यह्ने वा रात्रियै वा स्युरिति शालीकिः ॥
दक्षिणानां प्रतिग्रह इति ॥
स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण
प्रतिगृह्णीयात्पुनरप्यागतं मन्त्रेणैव प्रतिगृह्णीयादित्यत्रो ह स्माह शालीकिर्यस्य
कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य
स्यादागन्त्वेवास्यात ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति ॥
अविज्ञातायै दान इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

प्रयाण इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छतीति ॥
मथित्वाग्नीन्विहृत्य व्रतयेदिति बौधायन उत्तरतोऽरणी निधाय दक्षिणतः
परिश्रित्य व्रतयेदिति शालीकिः ॥
अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यत्रैवापर्याणा अप
उपाधिगच्छेत्तज्जपेद्देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं
वो गृह्णामीति
त्रीन्लोष्टानाददीत
तेषामेकमुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यं ध्वँ
सयन्ननुद्रवेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनु गेषमिति

सं वा गाहते सं वा तरति
सेतुमेव कृत्वात्येतीति ब्राह्मणम् १०

रोहिते चर्मणीति ॥
सूत्रं बौधायनस्याप्यरोहितँ स्यादिति शालीकिः ॥
अँशुग्रहणे हिरण्य इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
देवयजनस्याध्यवसान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तादेवैतत्त्रैविध्यगतेषु
देवयजनमध्यवसेद्विज्ञायते सा वा इयँ सर्वैव वेदिरिति ॥
आख्यातं प्रायणीयस्य निर्वपणम्॥

प्रायणीयस्य श्रपण इति ॥
पयसि श्रपयेदिति बौधायनोऽप्स्विति शालीकिः ॥
प्रायणीयस्यासादन इति ॥
षड्ढोत्रासादयेदिति बौधायनस्
तूष्णीमिति शालीकिः ॥
प्रायणीयस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
आदित्यस्योदीक्षण इति ॥
हिरण्यमन्तर्धायादित्यमुदीक्षयेदिति बौधायनोऽनन्तर्धायैवेति शालीकिः ॥
सोमक्रयण्या अतिवित्सन इति ॥
सदसः कालेऽतिवित्सयेदिति बौधायन उपरवकाल इति शालीकिः ॥
सोमक्रयण्यै पदस्यानुनिक्रमण इति ॥
अतिक्रान्तायै पृष्ठ्याकालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति बौधायनो
महावेदिमेवातिक्रान्तायै यस्यैव कस्य चेति शालीकिः ॥
सोमक्रयण्यै पदस्य परिलेखन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं
परिलिखेदन्तरतः कृष्णविषाणा स्यादिति ११

उदपात्रस्योपनिनयन इति ॥
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

राज्ञ उपस्थान इति ॥
स ह स्माह बौधायन उषसा नामेयमोषधिर्भवति
तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति
मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताद्छन्दोमानाँ
साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यत्रो ह स्माह शालीकिः प्रत्यक्षः
खल्वयँ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो
भाग एष ते जागतो भागश्छन्दोमानाँ साम्राज्यं गच्छेति ॥
राज्ञो मान इति ॥
सूत्रं बौधायनस्य
निगदन्नेवैतामृचं पञ्च कृत्वो मिमीतेति शालीकिः ॥
राज्ञः पणन इति ॥
सूत्रं बौधायनस्य
गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः ॥
अजाया उपनिग्रहण इति ॥
सूत्रं बौधायनस्यानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः ॥
मैत्रावरुणस्य दण्डप्रदान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपवृत्यात्रैव
मैत्रावरुणाय दण्डं प्रयच्छेदिति ॥

राज्ञः प्रत्यानहन इति ॥
अन्तर्लोमणचर्मणा प्रत्यानह्येदिति बौधायन ऊर्ध्वग्रीवेण बहिर्लोम्नेति
शालीकिः ॥
ईषाया अन्वारम्भ इति ॥
सूत्रं बौधायनस्यानन्वारभ्यैवेषां प्रत्यङ्ङद्रवन्मन्त्रं जपेदिति शालीकिः ॥
राज्ञः परिवहण इति ॥
प्रदक्षिणं परिवहेदिति बौधायनो यथोपपादमिति शालीकिः ॥
राज्ञः प्रत्युपस्थान इति ॥

स ह स्माह बौधायनो व्रीहिभिश्चारणीभ्यां च राजासन्द्या च राजानं
प्रत्युपतिष्ठेतेत्यत्रो ह स्माह शालीकिरजेन च कृष्णगृहीतेनोल्मुकेन च
राजासन्द्या च राजानं प्रत्युपतिष्ठेत
सोऽग्नीषोमीयः पशुः स्याल्लोहः स्यात्तूपरः स्यात्साण्डः
स्याच्छ्‌वश्रुमान्स्यात्पीवान्स्यादिति विज्ञायते १२

आतिथ्यस्य बर्हिषः सँस्कार इति ॥
असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः
शुल्बप्रभृतीनिति शालीकिः
संभरणप्रभृतीनित्यौपमन्यवः ॥
आतिथ्यस्य निर्वपण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उभौ विमुच्य राजानं प्रपाद्यातिथ्यं
निर्वपेदिति ॥
राज्ञः परिचर्याया इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन ऋचैव राजानं
परिचरेदृचार्घ्यमुपनिगृह्णीयादिति ॥
अर्हण इति ॥
यथागतमर्हयेदिति बौधायनो राजानमर्हयित्वर्त्विजोऽर्हयेदिति शालीकिः ॥
आतिथ्यस्य करण इति ॥
पुरोडाशश्च गौश्च स्यातामिति बौधायनः
पुरोडाश एवेति शालीकिः ॥
आज्यग्रहाणां ग्रहण इति ॥
चतुर्गृहीतानि वा पञ्चगृहीतानि वा स्युरिति बौधायनः
पञ्चगृहीतान्येवेति शालीकिः ॥
आतिथ्यस्यासादन इति ॥
चतुर्होत्रासादयेदिति बौधायनस्
तूष्णीमिति शालीकिः ॥
आतिथ्यस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
तानुनप्त्रस्य भक्षण इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनो निगुप्तमेवैनं निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति ॥

औपसदस्य बर्हिषः सँस्कार इति ॥
असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः
शुल्बप्रभृतीनिति शालीकिः
संभरणप्रभृतीनित्यौपमन्यवः ॥
उपसदां मन्त्रामन्त्र इति ॥
मन्त्रवत्यः स्युरिति बौधायनस्
तूष्णीका इति शालीकिर्यत्पर्याज्यं तत्तूष्णीकँ
स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः
सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥
आहुतीनाँ होम इति ॥
सूत्रं बौधायनस्य
प्राचीरेवैता आहुतीः सँस्थापयेदिति शालीकिः ॥
उपसदाँ होम इति ॥
सूत्रं बौधायनस्यानत्याक्रम्यैवोपसदो जुहुयादिति शालीकिः ॥
स्रुचां परिशायन इति ॥
अहोरात्रं परिशयीरन्निति बौधायनोऽहरेवेति शालीकिः
कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः १३

स्तम्बयजुषो हरण इति ॥
सूत्रं बौधायनस्योपरवकालादप्याग्नीध्रो हरेदिति शालीकिः ॥
आख्यातं चात्वालस्य परिलेखनम्॥
आख्यातं लोकाग्नीनाँ हरणम्॥
स्फ्यविघनानामुपस्थान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चँ स्फ्यँ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्थापयेदिति ॥
अग्नीषोमीयस्य बर्हिषः सँस्कार इति ॥

असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः
शुल्बप्रभृतीनिति शालीकिः
संभरणप्रभृतीनित्यौपमन्यवः ॥
अग्नीषोमीयस्य पशोरनुसंव्रज्याया इति ॥
अनुसंव्रजेदिति बौधायनो नानुसंव्रजेदिति शालीकिः ॥
इध्माबर्हिषोरुपसादन इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवोऽत्रैवास्मा आसीनायेध्माबर्हिराहरेत्
तदादाय प्राङियात्कुशहस्तश्च पृष्ठ्याकालं प्राङ्स्तृणन्गच्छेदिति ॥

हविर्धानयोरभ्यावर्तन इति ॥
काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति बौधायनोऽनन्तर्धायैवेति
शालीकिः ॥
हविर्धानयोः प्रोक्षण इति ॥
तूष्णीँ सँस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः
कमण्डलुभिरिति शालीकिः ॥
वर्त्मनोरभिहोम इति ॥
सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य
वर्तनिमभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्यात्सर्वतश्च परिमृशेदित्यत्रो ह स्माह
शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्यात्सर्वतश्च
परिमृशेदिति ॥
मेथ्योर्निहनन इति ॥
स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं
निहन्यादुत्तरस्य दक्षिणत इति
दक्षिणतश्चोत्तरतश्चेति शलीकिर्मध्य इत्यौपमन्यवः ॥
द्वार्बाहूनां परिषीवण इति ॥
सर्वान्द्वार्बाहून्मन्त्रेण परिषीव्येदिति बौधायनः
पूर्वौपूर्वाविति शालीकिर्दक्षिणौदक्षिणावित्यौपमन्यवः १४

औदुम्बर्या अभिहोम इति ॥
सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायन एवमेव जुह्वदन्तर्धाय

हिरण्यमभिजुहुयादित्युभयोरेव विशाखयोर्हिरण्ये निधायाभिजुहुयादिति
शालीकिः ॥
वसतीवरीणां ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उभयतःशुक्रा
आदित्यवतीर्वसतीवरीर्गृह्णीयात्
ताः शुक्रास्
ताभिराप्याययेत्
ताभिरभिषुणुयादिति
धिष्णियान्नयुप्य वसतीवरीर्गृह्णीयादित्यौपमन्यवः ॥
उपरवाणां परिलेखन इति ॥
त्रिस्त्रिरेकैकं परिलिखेदिति बौधायनः
सकृत्सकृदिति शालीकिः ॥
उपरवपाँ सूनाँ हरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करँ
हृत्वोपस्पृशेदिति ॥
उपरवाणां प्रोक्षण इति ॥
त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः
सकृत्सकृदिति शालीकिस्
तस्मिन्नपोऽवनयेत्तस्मिन्यवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म
कुर्यादित्यौपमन्यवः
सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपूत्रः ॥

धिष्णियानां निवपन इति ॥
स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं
धिष्णियान्नयुप्योदीचीनसँस्थतां कुर्यादित्यत्रो ह स्माह
शालीकिरन्तर्वेद्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं धिष्णियान्नयुप्यन
चोदीचीनसँस्थतां कुर्यादिति ॥
वेद्यै स्तरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्त्रयो दक्षिणतस्त्रय उत्तरतो मध्ये सप्तमः
पृष्ठ्याकालं प्राञ्च स्तृणन्तो गच्छेयुरिति

पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तोऽभ्यवक्रामेयुरित्यौपमन्यवः ॥
अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥
सूत्रं बौधायनस्य
पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति शालीकिः ॥
समन्वानयन इति ॥
सूत्रं बौधायनस्य
नाद्रियेतेति शालीकिः ॥

अर्धस्तनव्रतप्रदान इति ॥
समन्वानीय वासमन्वानीय वा पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः ॥
वैसर्जनानाँ होम इति ॥
सूत्रं बौधायनस्य
चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः ॥
वसतीवरीणामनुसँहरण इति ॥
अनुसँहरेदिति बौधायनो नानुसँहरेदिति शालीकिः ॥
वपानां परिहोम इति ॥
तांतां परिजुहुयादिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥
हृदयशूलानामुद्वासन इति ॥
एकैकश उद्वासयेदिति बौधायनः
सर्वान्सहेति शालीकिः ॥
वसतीवरीणां परिहरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपँ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिमृशेद्यज्ञे जागृतेति १५

सवनीयस्याज्यानां ग्रहणे सादन इति ॥
सूत्रं बौधायनस्याग्नीध्र एव सवनीयस्याज्यानि गृह्णीयात्
तानि खरे सादयेदिति शालीकिः ॥

औदुम्बराणां महापरिधीनां परिधान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः स्त्रुघ्नन्त्रा एवैते स्युरिति ॥
राज्ञ उपावहरण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति ॥
पञ्चहोतुर्होम इति ॥
सूत्रं बौधायनस्य
चतुर्होतारँ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः ॥
प्रातरनुवाकस्योपाकरण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन प्रातरनुवाकमुपाकुर्यादिति ॥
सवनीयानां निर्वपण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति ॥
तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृतस्यादिति ॥
आप्यनिनयन इति ॥
जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनोऽग्रेणातिहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥
पात्राणाँ सादन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः खरे पात्राणि सादयेत् तेषां यथार्थमाददीतेति ॥
अथैकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः १६

अप्सोः प्रस्कन्दन इति ॥
होतृचमसादत्राप्सुं प्रस्कन्दयेदिति बौधायनो वासतीवरात्कलशादिति शालीकिः ॥
क्रतुकरण इति ॥

सूत्रं बौधायनस्य
यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ॥
दधिग्रहस्य ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन श्रौदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा
चैतत्पात्रमत्रैवानुप्रहरेदिति ॥
दक्षिणायै दान इति ॥
सूत्रं द्वैधमेवैतद्भवति ॥
तासु निग्राभ्यासु यजमानं वाचयतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु
निग्रभ्यासु यजमानं वाचयतीति ॥
राज्ञो निर्वपण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो
राजानं निर्वपेदिति ॥

सोऽँशौ स्कन्ने वाचयतीति ॥
सूत्रं बौधायनस्योपाँशावेवाँशौ स्कन्ने वाचयेदिति शालीकिः ॥
उपाँश्वन्तर्यामयोर्होम इति ॥
सूत्रं बौधायनस्योभावेवोदिते जुहुयादिति शालीकिरुभावेवानुदिते
जुहुयादित्यौपमन्यवः ॥
श्राग्रयणस्य ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां
माध्यंदिने सवने चतसृणां तृतीयसवन इति ॥
द्रप्सानुमन्त्रणीयास्विति ॥
सूत्रं बौधायनस्य
स्रुवाहुतीरेवैता जुहुयादिति शालीकिः १७

पवमानग्रहाणांग्रहण इति ॥
सूत्रं बौधायनस्य
सजुष्टान्परिमृज्य सादयेदिति शालीकिः ॥
संतनीनाँ होम इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति ॥
पवमानानामुपाकरण इति ॥
सूत्रं बौधायनस्य
सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ॥
ब्रह्मण उपवेशन इति ॥
यथा सदस्येवमुपविशेदिति बौधायनो यथा दर्शपूर्णमासयोरेवमिति
शालीकिः ॥

यजमानस्योपवेशन इति ॥
यथासदस्येवमुपविशेदिति बौधायनो यथा दर्शपूर्णमासयोरेवमिति
शालीकिः ॥
अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
पञ्चम्यां प्रस्तुतायां वाचयतीति ॥
सूत्रं बौधायनस्य
यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥
सप्तहोतुर्होम इति ॥
सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ॥
धिष्णियानां विहरण इति ॥
स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये
प्रस्कन्दयेदथानुपूर्वमितरेषु
धिष्णियान्विहृत्योदीचीनसँस्थतां कुर्यादित्यत्रो ह स्माह
शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेदथानुपूर्वमितरेषु
धिष्णियान्विहृत्य न चोदीचीनसँस्थतां कुर्यादिति ॥

धिष्णियानां व्याघारण इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
स्वरुरशनस्योत्पादन इति ॥

यूपः स्वरुरशनमुत्पादयेदिति बौधायनः
पशुरिति शालीकिस्
तन्त्रमित्यौपमन्यवो देवतेत्यौपमन्यवीपुत्रः १८

सर्पण इति ॥
सूत्रं बौधायनस्यापरद्वारिक एव यजमानः स्यादिति शालीकिः ॥
तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥
स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः
षोडशिने रात्रिपर्यायेभ्यो राथंतराय संधय इत्यत्रो ह स्माह
शालीकिस्तृतीयसवनातिवृद्धिरेवैषा भवति
यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव तेषाँ स्यादिति
प्रातःसवन एव सर्वेभ्यः सववेभ्यः संप्रसर्पेदित्यौपमन्यवः ॥
आमिक्षायै मन्त्रामन्त्र इति ॥
मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुसमियादिति बौधायनस्
तूष्णीका च स्यात्सर्वाणि च सवनान्यनुसमियादिति शालीकिर्
मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः ॥
सवनीयानामुद्वासन इति ॥
सूत्रं बौधायनस्य
नानापात्रीष्वेव सवनीयानुद्वासयेदिति शालीकिः ॥
प्रातः प्रातःसावस्येति ॥
सूत्रं बौधायनस्य
प्रातःसावस्येत्येव ब्रूयादिति शालीकिः ॥
सवनीयानामनुसँहरण इति ॥
अनुसँहरेदिति बौधायनो नानुसँहरेदिति शालीकिः ॥
प्रतिनिर्ग्राह्याणां ग्रहण इति ॥
सूत्रं बौधायनस्य
द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्निगृह्णीयादिति शालीकिः ॥
आघार इति ॥
सूत्रं बौधायनस्य
ग्रहादेवैतमाघारमाघारयेदिति शालीकिर्द्रोणकलशात्परिप्लुना

पात्रेणेत्यौपमन्यवो यजुरेवैतज्जपेन्नैतमाघारमाघारयेदित्याज्ञीगविः ॥

सँस्रावस्यापिधान इति ॥
सूत्रं बौधायनस्य
यावानेव सँस्रावः स्यात्तमपिदध्यादिति शालीकिः ॥
चमसानामायातन इति ॥
अग्रेण स्रुचः प्राच आयातयेदिति बौधायनो जघनेन स्रुच उदीच
आयातयेदिति शालीकिः १९

ग्रहयोः संधान इति ॥
अरत्नी च ग्रहौ च संदध्यातामिति बौधायनो ग्रहावेवेति शालीकिः ॥
शुक्रवतो मन्थिवत इति ॥
सूत्रं बौधायनस्य
मन्थिवत इत्येव ब्रूयादिति शालीकिः ॥
मन्थिसँस्रावस्य होम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषु
मन्थिनः सँस्रावं जुहुयादिति ॥
होत्रकचमसानाँ होम इति ॥
स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह
सकृज्जुहुयाद्द्विरभ्युन्नीतानित्यत्रो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याँ सह
सकृज्जुहुयाद्द्विरेवाभ्युन्नीतानिति ॥

द्विदेवत्यानां भक्षण इति ॥
सूत्रं बौधायनस्य
प्राणेषूपनिग्राहं द्विदेवत्यान्भक्षयेदिति
शालीकिर्दीर्घभक्षेणैवैनान्भक्षयेदित्यौपमन्यवः ॥
अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥
सूत्रं बौधायनस्य
सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः ॥
अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याँ सादयतीति ॥

सूत्रं बौधायनस्याधस्तादेवैनान्युपहव्यस्य सादयेदिति शालीकिः ॥
वाचि वाचं दधामीति वा तूष्णीं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
होत्रकचमसानां प्रतिभक्षण इति ॥
प्रतिभक्षयेदिति बौधायनो न प्रतिभक्षयेदिति शालीकिः ॥
प्रत्यभिमर्शन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो भक्षयन्नेव भक्षाणां पारे प्रत्यभिमृशीतेति ॥

ऐन्द्राग्नस्य ग्रहण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति ॥
नाराशँसानामनुप्रकम्पन इति ॥
अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्नित्शालीकिर्नैनानुपोद्यच्छेरँश्चनेत्यौपमन्यवः २०

माध्यंदिनीयेऽभिषव इति ॥
नवकृत्वोनवकृत्वोऽभिषुत्य निग्राभमुपेयुरिति बौधायनोऽपरिमितमिति शालीकिः ॥
मरुत्वतीययोर्ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति ग्राह्यलोको ह्येष भवतीति ॥
अष्टम्यां प्रस्तुतायां वाचयतीति ॥
सूत्रं बौधायनस्य
यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥
दधिघर्मस्य ग्रहण इति ॥
सूत्रं बौधायनस्याग्नीध्र एनं गृह्णीयादिति शालीकिः
परिश्रित्योभयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः ॥
दधिघर्मस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
दधिघर्मस्य भक्षण इति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽवभ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्येऽनुवाक्येन मन्त्रेणेति ॥

दक्षिणानामत्याकरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्यादथेतरा यथावकाशं गच्छेयुरिति ॥
संचर इति ॥
नीतासु दक्षिणासु यथार्थँ संचरेरन्निति बौधायनो नासँस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादिति शालीकिः ॥
कृष्णविषाणायाः प्रासन इति ॥
सूत्रं बौधायनस्य
नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः ॥
आत्रेयस्य संवदन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्पृच्छेत्क आत्रेयः क आत्रेय इति २१

दक्षिणानां दान इति ॥
स ह स्माह बौधायनो महर्त्विग्भ्य एना दद्यान्न होत्रकाननुसंचरेरन्निति न च होत्रकाननुसंचरेरन्न च सदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः ॥
मरुत्वतीययोर्होम इति ॥
स ह स्माह बौधायनो यमेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरोऽननुवषट्कृतः स्यादित्युभावेवाननुवषट्कृतौ स्यातामिति शालीकिरुभावेवानुवषत्कृतौ स्यातामित्यौपमन्यवः ॥
तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति ॥
नाराशँसानानामनुप्रकम्पन इति ॥
अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोद्यच्छेरँश्चनेत्यौपमन्यवः ॥
सौम्यस्य मन्त्रामन्त्र इति ॥

मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः
सौम्य एव मन्त्रवान्त्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः ॥
तार्तीयसवनिकेऽभिषव इति ॥
सूत्रं बौधायनस्य
यदाप्याययति तेनाँ शुमदित्येव ब्रूयादिति शालीकिः ॥

आदित्यग्रहस्य ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पुरस्तादेनमभिषवाद्गृह्णीयात्तूष्णीँ
शृतातङ्क्यमवनयेदिति ॥
आदित्यग्रहस्योदाहनन इति ॥
अर्धर्चश उदाहन्यादिति बौधायन ऋचर्चेति शालीकिः ॥
मैत्रावरुणस्य श्रयण आशिरोऽवनयन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं
पयसाशिरमवनयेदिति ॥
नवम्यां प्रस्तुतायां वाचयतीति ॥
सूत्रं बौधायनस्य
यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥
होत्रकाणाँ संतर्पण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽनुसवनमेव होत्राः संतर्पयेदिति
पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥
औपासनेष्विति ॥
स ह स्माह बौधायनोऽनुसंव्रज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च
पुरोडाशशकलानुपास्येदत्र चैव षड्ढोतारं व्याचक्षीतेत्य्
अत्रो ह स्माह शालीकिरनुसंव्रज्यैवौपासनाननुमन्त्रयेत पार्श्वतश्चमसेभ्यः
पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति २२

सावित्रस्य ग्रहणे सादन इति ॥
सूत्रं बौधायनस्य
सजुष्टं परिमृज्य सादयेदिति शालीकिः ॥

तदन्यतोमदं प्रतिगृणातीति ॥
सूत्रं बौधायनस्य
मदा मोद इवेत्येव प्रतिगृणीयादिति शालीकिः ॥
नाराशँ सानामनुप्रकम्पन इति ॥
अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्निति
शालीकिर्नैनानुपोद्यच्छेरँश्चनेत्यौपमन्यवः ॥
सौम्यस्य चर्याया इति ॥
उपाँ शु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
सौम्यस्य परीज्याया इति ॥
स ह स्माह बौधायनो यदि चैव समस्तौ यदि च विहृतावग्नाविष्णू उपाँ
श्वेव स्यातामिति
समस्तावुपाँ शु विहृतावुच्चैरिति शालीकिः ॥
तार्तीयसवनिकानां धिष्णियानां विहरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैश्च-
तुर्धिष्णियान्विहरेदिति ॥

पात्नीवतस्य श्रयण इति ॥
सूत्रं बौधायनस्य
दध्ना वा पयसा वा पात्नीवतँ श्रीणीयादिति शालीकिर्धिष्णियानां
व्याघारणशेषेणाज्येन पात्नीवतँ श्रीणीयादित्यौपमन्यवः ॥
पत्न्या उदानयन इति ॥
सूत्रं बौधायनस्यात्रैवासीतापोहिष्ठीयाभ्य इति शालीकिः ॥
तदुभयतोमदं प्रतिगृणातीति ॥
सूत्रं बौधायनस्य
मोदा मोद इवेत्येव प्रतिगृणीयादिति शालीकिः ॥
ध्रुवस्य प्रच्यावन इति ॥
सूत्रं बौधायनस्य
सर्व एवैषोऽवनयनमन्त्रः स्यादिति शालीकिः २३

चमसानामायातन इति ॥

पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
तेषु त्रीँस्त्रीँश्च दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जीलमिति ॥
सूत्रं बौधायनस्याद्भिरेवैते दद्माः स्युरिति शालीकिः ॥
श्रौपयजेष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन श्राग्नीध्रादग्नीषोमीयस्य च सवनीयस्य चाङ्गारानाहरेच्छामित्रान्मैत्रावरुरायै वशाया इति ॥

मिन्दाहुत्योर्होम इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तान्मिन्दाहुती जुहुयाद्मिन्दाहुती हुत्वा हारियोजनं ग्रहं गृह्णीयादिति ॥
शाकलैश्चर्याया इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यावन्त्येनाँ सि
कृतान्यभिविजानीयात्तेषामवयजनमसीत्यभ्यादध्यादिति ॥
श्रादित्यस्योपस्थान इति ॥
सूरं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥
कृष्णविषाणायाः प्रासन इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
श्रवभृथ इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवोऽत्रैवैनँ स्थरिडले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति ॥
ग्रावोवायव्यस्य प्रप्लावन इति ॥
सूत्रं बौधायनस्य
प्रक्षाल्योदाहरेयुरिति शालीकिः ॥
प्रक्षाल्यैवैता स्थालीरुदाहरेयुस्
तास्वेतानि देविकाहवींषि श्रपयेयुरिति बौधायनः
प्रप्लावयेयुरेवेति शालीकिः २४

कृष्णाजिनस्य प्रप्लावन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युन्द्य पुत्राय वान्तेवासिने वा दद्यात्स्त्रुचोपधानं वैनत्कुर्वीतापि वैनेन पुनर्दीक्षेतापि वैनेन

पुनर्यजेतेति ॥
उदयनीयस्य बर्हिषः सँस्कार इति ॥
असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः
शुल्बप्रभृतीनिति शालीकिः
संभरणप्रभृतीनित्यौपमन्यवः ॥
उदयनीयस्य निर्वपण इति ॥
स्रुचि वावधाय क्षामकाषँ स्थाल्यां वा सक्षामकाषायां निर्वपेदिति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
उदयनीयस्य श्रपण इति ॥
पयसि श्रपयेदिति बौधायनोऽप्स्विति शालीकिः ॥
चरोरनुपरिहरण इति ॥
अनुपरिहरेदिति बौधायनो नानुपरिहरेदिति शालीकिः ॥
उदयनीयस्यासादन इति ॥
षड्ढोत्रासादयेदिति बौधायनस्
तूष्णीमिति शालीकिः ॥
उदयनीयस्य चर्याया इति ॥
सूत्रं बौधायनस्याहवनीय एवोदयनीयेन चरेदिति शालीकिः ॥
अनूबन्ध्यस्य करण इति ॥
सूत्रं बौधायनस्य
मैत्रावरुण्यामिक्षया यजेतेति शालीकिर्
अत्रो ह स्माहौपमन्यवोऽजं पशुमप्यत्रालभेतैकादशपरयाजं त्वेव तन्त्रँ
संतिष्ठापयिषेदिति ॥
वपानां परिहोम इति ॥
तांतां परिजुहुयादिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥
हृदयशूलानामुद्वासन इति ॥
एकैकश उद्वासयेदिति बौधायनः
सर्वान्सहेति शालीकिः २५

उस्रण इति ॥
सर्वान्गोपशूनुस्रयेदिति बौधायनोऽन्यत्रर्षभाच्च वशायै चेति शालीकिः ॥

आमिक्षायै मन्त्रामन्त्र इति ॥
मन्त्रवती स्यादिति बौधायनस्
तूष्णीकेति शालीकिः ॥
मैत्रावरुण्यै परिधिष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पूर्वे स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा बैदलकान्परिधीन्मैत्रावरुण्यै कुर्यादिति ॥

उदवसान इति ॥
सूत्रं बौधायनस्य
पूर्णाहुत्यैवोदवस्येदिति शालीकिः ॥
दक्षिणायै दान इति ॥
सूत्रं बौधायनस्य
नात्राकामनियतं देयमिति शालीकिः ॥
देविकाहविषां करण इति ॥
सूत्रमौपमन्यवीपुत्रस्यात्रो ह स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरँस्त्रीण्युदवसानीयामिति
सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरन्निति शालीकिराज्येनैव देविका यजेतेत्याङ्गीगविः ॥
अग्निभिः प्रत्यवसान इति ॥
अजस्त्रैः प्रत्यवस्येदिति बौधायनोऽरण्योः समारोह्येति शालीकिः ॥
अग्निहोत्रयोः प्रतिहोमः इति ॥
प्रतिजुहुयादिति बौधायनो न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः २६

द्वाविंशः प्रश्नः

अथातोऽग्निकल्पं व्याख्यास्यामः ॥
खरस्य करण इति ॥
उत्तरपूर्वेऽवान्तरदेशे कुर्यादिति बौधायन उत्तर एवेति शालीकिः ॥
सावित्राणाँ होम इति ॥
सूत्रं बौधायनस्य

समृद्ध्याप्यत्र चतुर्गृहीतं जुहुयादिति शालीकिः ॥
गर्दभरशनाया आदान इति ॥
मन्त्रेणाददीतेति बौधायनस्
तूष्णीमिति शालीकिः ॥
वल्मीकवपायै निधाने वैश्यस्योपवेशन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो वल्मीकवपां निदध्यान्न
वैश्यमुपवेशयेद्यत्र खनिः स्यात्तद्गच्छेद्यस्तत्र पृच्छेत्तं प्रतिब्रूयादिति ॥
खनन इति ॥
अर्धर्चशः खनेदिति बौधायन ऋचर्चेति शालीकिः ॥
पुष्करपर्णेनोत्तरदण्डेन सँस्तृणातीति ॥
सूत्रं बौधायनस्य
यथोत्पन्नेनैव सँस्तृणीयादिति शालीकिः ॥
पिण्डानाँ हरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति
गायत्रीभिर्हरेत्त्रिष्टुग्भिः सादयेदित्यौपमन्यवः ॥
अश्वस्यात्यायमन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनस्तूष्णीमश्वमत्यायच्छेत्
सर्व एवैष गर्दभमन्त्रः स्यादिति ॥

द्यावापृथिव्योः समीक्षण इति ॥
उभे षट्कृत्वः समीक्षेतेति बौधायनस्
त्रिरेवेति शालीकिः
प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः ॥
अपो रशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जत इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः १

उखानां करण इति ॥
स ह स्माह बौधायनोऽषाढामप्येतस्यै याजुष्यै पादमात्रीं कुर्याद्यावन्मात्रीं
चादयेष्टकामृत्तिकायामपिसृजेदेवमस्य सर्वोऽग्निर्याजुषो भवतीत्येकामेवोखां
मन्त्रेण कुर्यात्तूष्णीमितरे इति शालीकिः ॥

सर्वासु भिन्नासु प्रत्यय इति ॥
स ह स्माह बौधायनः ससावित्रं मन्त्रकर्माभ्यावर्तयेदिति ॥
यदन्यत्सावित्रेभ्य इति शालीकिः ॥
अथादत्त एकविँशतिं वृष्णो अश्वस्य शकृत्पिण्डानभ्रिमग्निं पचनमिति ॥
सूत्रं बौधायनस्य
यस्यैव कस्य चाश्वस्याददीतेति शालीकिः ॥
उखानां धूपन इति ॥
सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः ॥

उखानां प्रवृञ्जन इति ॥
सूत्रं बौधायनस्यैकामेवोखां मन्त्रेण प्रवृञ्ज्यात्तूष्णीमितरे इति शालीकिः ॥
ताः प्राचीर्वोदीचीर्वायातयतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पचन इति ॥
स ह स्माह बौधायन उखा ऋषभान्मण्डलेष्टका बार्हस्पत्यं महावीरं
लोकंपृणा इत्येतद्गार्हपत्यात्पचेदथेतरद्ग्रामाग्नेरिति
यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्धविरुक्तं गार्हपत्यादिति शालीकिः ॥
पशुशीर्षाणां करण इति ॥
प्रत्यक्षाणि वा मार्त्तिकानि वा स्युरिति बौधायनः
प्रत्यक्षाण्येवेति शालीकिर्हिरण्मयानीत्यौपमन्यवो वायव्यशिरसि
वैतान्मन्त्रान्निगदेदित्यौपमन्यवीपुत्रः ॥
त्रिरपसलैः पर्णशाखया परिकर्षतीति ॥
सूत्रं बौधायनस्यानुपरिकीर्यैव माषान्यमगाथाभिः परिगायेदिति शालीकिः ॥
आघार इति ॥
उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो हिरण्यगर्भः
समवर्तताग्र इत्येतयैवैतमाघारमाघारयेदिति शालीकिः २

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाँ होम इति ॥
अध्वरदीक्षाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन आग्निका एवेति
शालीकिः ॥

वैराजीषु दीक्षास्विति ॥
स ह स्माह बौधायनो नासंवत्सरँ सोष्यन्वैराजीर्दीक्षाः कुर्वीत

कामँ संवत्सरँ सोष्यन्वैराजीर्दीक्षाः कुर्वीत
संवत्सरं वा भृत्वैकाहिकं कुर्वीतैकाहिकस्त्वेवाग्निरिति शालीकिः ॥
काम्यस्यान्ववधान इति ॥
जाते काम्यमन्ववदध्यादिति बौधायनः
पुरस्तादेवेति शालीकिः ॥
औदुम्बरीणाँ समिधामभ्याधान इति ॥
सूत्रं शालीकेरत्रो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्यादध्यात्
तदेव राक्षोघ्नँ स्यादिति ॥
अन्नपतीयायै समिधोऽभ्याधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽन्नपतीयां प्रतिसमेधनीयां
वैष्णवीमित्येता अभ्यादध्यादिति ॥
वात्सप्रविष्णुक्रमयोः संनिपात इति ॥
अहरहः संनिपातयेदिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥
उख्य उद्वाते प्रायश्चित्तकरण इति ॥
स ह स्माह बौधायनः प्रवृज्य परिदायार्काहुतिभिरभिजुहुयादथेतरत्कर्मावृता
कुर्यादित्य्
अत्रो ह स्माह शालीकिः प्रवृज्य परिदायार्काहुतिभिरभिजुहुयान्न
चेतरत्कर्मावृता कुर्यादिति ॥
प्रयाण इति ॥
स ह स्माह बौधायन उभयेन प्रयायादाध्वरिकेण चाग्निकेन
चेत्याग्निकेनैवेति शालीकिः ॥
अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तद्भस्म
प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं चादाय प्रत्यवदध्यात्प्रसद्य भस्मना
योनिमित्यथेतरत्स्थालीषु वा सतेषु वानुनिधापयेदिति ॥
देवयजनस्याध्यवसान इति ॥
स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन

चेत्याग्निकेनैवेति शालीकिः ३

संभाराणां निवपन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो भस्म चैवोषाँश्च मन्त्रेण निवपेत्
तूष्णीमितरौ संभाराविति ॥
गार्हपत्यचिताविति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्निग्रहणँ स्वयंचितिँ
श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति सर्वमेवैतत्कर्मावृता कुर्यादिति
॥

साहस्त्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥
स ह स्माह बौधायनः समाप्यैताश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं
प्रत्याददीत पञ्चचितीकं चेत्यत्रो ह स्माह शालीकिः समाप्यैताश्चतुर्थं
चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याददीतैकचितीकं चेति ॥
वात्सप्रविष्णुक्रमयोः संनिपात इति ॥
स ह स्माह बौधायनो यद्यु ह वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय
संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा
वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्यत्रो ह स्माह शालीकिर्यद्यु ह
वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि
विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते
संनिवापेनैव प्रक्रामेदिति ॥
तस्यामन्यत्रावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं
वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अथैनाँ सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्येति ॥
सूत्रं बौधायनस्य
सिकताभिरेवैनां पूरयित्वोत्तरे शालाखण्डे निदध्यादिति शालीकिः ॥

शिक्यस्यादान इति ॥
मन्त्रेणाददीतेति बौधायनस्

तूष्णीमिति शालीकिः ॥
नैर्ऋतीनामुपस्थान इति ॥
कुर्वीतात्र तयादेवतसूददोहसे इति बौधायनो न कुर्वीतेति शालीकिः ॥
उदपात्रस्योपनिनयन इति ॥
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
गार्हपत्यस्योपस्थान इति ॥
सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ४

स्तम्बयजुषो हरण इति ॥
सूत्रं बौधायनस्योपरवकालादप्यत्राग्नीध्रो हरेदिति शालीकिः ॥
आख्यातं चात्वालस्य परिलेखनम्॥
आख्यातं लोकाग्नीनाँ हरणम्॥
आख्यातँ स्फ्यविघनानामुपस्थानम्॥
कार्ष्णाजिनीनामुपमोचन इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
वज्रिणीनामुपधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्रेण यूपावटीयँ शङ्कुं तिष्ठन्धनुरधिज्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्
तमनुद्रुत्याश्मानमुपदध्यादेवं दक्षिणत एव पश्चादेवमुत्तरत इति ॥

ऐन्द्रिया उपधान इति ॥
सूत्रं बौधायनस्य
पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ॥
उपपात्रस्योपनिनय इति ।
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
दर्भस्तम्बस्योपधान इति ॥
वाक्त्वा समुद्र उपदधात्विति वा तूष्णीं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
दूर्वेष्टकाया उपधान इति ॥
स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां वैवेति

मन्त्रदूर्वैवैषा स्यादिति शालीकिः ॥
औदुम्बरं युगलाङ्गलमिति ॥
सूत्रं बौधायनस्य
दार्ढ्यवृक्षमेवैनत्कुर्यादिति शालीकिः ॥
पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददतेऽध्वर्युः पश्चादिति बौधायनः
प्रत्यक्षमेवैतत्संयुज्य कृषेदिति शालीकिः ॥
कर्षण इति ॥
संप्रत्याहारं कृषेदिति बौधायन आवाजश इति शालीकिः ५

गोयुगानामनुमन्त्रण इति ॥
तत्तदेवानुमन्त्रयेदिति बौधायनः
सर्वाणि सहेति शालीकिः ॥
सर्वौषधस्य वपन इति ॥
अर्धर्चशो वपेदिति बौधायन ऋचर्चेति शालीकिः ॥
इतरमितरत्र विपरिहरतीतरमितरत्रेति ॥
सूत्रं बौधायनस्याददान एवैतां दिशमभिसंपादयेदिति शालीकिर्यजुषा
यजुर्विपरिहरेदित्यौपमन्यवः ॥
स दर्भपुञ्जीलानि पयःप्रोक्षेऽवधाय तैः प्रोक्षत्यग्नीन्वोऽग्निभ्यो
जुष्टान्प्रोक्षामीति वा तूष्णीं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
कुम्भेष्टकानामुपधान इति ॥
सूत्रं बौधायनस्य
पक्षपुच्छेष्वेवैना उपदध्यादिति बौधायनिः ॥
नानामन्त्रासु दिशो भजमानास्विति ॥
तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्
तांतामेवेष्टकां परिनिस्तिष्ठेदिति शालीकिः ॥
इष्टकागणानामुपधान इति ॥
तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्
तंतमेवेष्टकागणं परिनिस्तिष्ठेदिति शालीकिः ॥
अभिमर्शेऽभिहोम इति ॥

सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तादभिमर्शाभिहोमाभ्यां
तयादेवतसूददोहसः कुर्वीतेति ॥

सर्पशिरस उपधान इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
औदुम्बरं चोलूखलमुसलमिति ॥
सूत्रं बौधायनस्य
दार्ढ्यवृक्षमेवैनत्कुर्यादिति शालीकिः ६

सर्वौषधस्यावहनन इति ॥
मन्त्रेणावहन्यादिति बौधायनस्
तूष्णीमिति शालीकिः ॥
उखानामुपधान इति ॥
सूत्रं बौधायनस्यैकामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः ॥
पशुशीर्षाणामुपधान इति ॥
मध्य उपदध्यादिति बौधायनोऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकिः ॥
अथर्वशिरस उपधान इति ॥
पुरस्तात्सर्वतोमुखमग्रेण स्वयमातृणामत्र नवर्चमथर्वशिर उपदध्यादिति
बौधायनो नाथर्वशिर इति शालीकिः ॥
सर्वतोमखस्योपधान इति ॥
सूत्रं बौधायनस्यानुदिशमेव गायत्रीरुपदध्यादिति शालीकिः ॥

अङ्गानामुपधान इति ।ऊत्रं बौधायनस्य
विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः ॥
ऋषभस्योपधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन ईषत्प्रत्यवहृतशिरसमेनमुपदध्याद्यथर्षभो
वाशितुमुपतिष्ठतीति ॥
अतीतानामिष्टकागणानामुपधान इति ॥
आधिमुपदध्यादिति बौधायनश्चित्यन्त इति शालीकिः ॥
व्रतप्रदान इति ॥

मध्यंदिने व्रतं प्रयच्छेदिति बौधायनश्चित्यन्त इति शालीकिः ७

पुरीषचितेरुपधान इति ॥
सूत्रं बौधायनस्य
पूर्वेद्युरेव पुरीषचितिं परिनिस्तिष्ठेदिति शालीकिः ॥
अश्वावभितस्तिष्ठेतां कृष्णा उत्तरः श्वेतो दक्षिण इति ॥
अत्रैवाभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः
कालेकाल एवैनावुदानयेयुरिति शालीकिः ॥
वालखिल्यानामुपधान इति ॥
उपरिष्टाद्वालखिल्या उपदध्यादिति बौधायनः
पार्श्वत इति शालीकिः ॥

सृष्टीनामायातन इति ॥
अग्रेण स्वयमातृराणामुदीचीरेना आयातयेदोत्तरस्मात्पक्षसंधेः सर्वतो वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
व्युष्टीनामुपधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्
पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति ॥
तासां पुरीषवतीं मध्य उपदधातीति ॥
स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं वैवेति
मन्त्रपुरीषैवैषा स्यादिति शालीकिः ॥
वैराजानामुपधान इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
याज्ञसेनीनामुपधान इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
घृतेष्टकानामुपधान इति ॥
स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्धृतेन वाभ्यज्येति
मन्त्रघृता एवैताः स्युरिति शालीकिर्घृतपिराडानेवात्रोपदध्यादित्यौपमन्यवः ॥

इष्टकानामावापस्थान इति ॥

अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावापस्थानं भवतीति ॥
स ह स्माह बौधायनः संवेशनयजुः प्रबुद्धयजुः प्रयाणयजुरपर्याणयजुः
सामिधेनीराप्रीरतीतांश्चेष्टकागणानत्रोपदध्यादित्यत्रो ह स्माह
शालीकिर्नानिष्टकं
मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानत्रोपदध्यादिति ॥
पौर्णमास्या उपधान इति ॥
सूत्रं बौधायनस्योत्तर एवाँ से पौर्णमासीमुपदध्यादिति शालीकिः ॥
नक्षत्रेष्टकानामुपधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः प्रतितारकं चात्रेष्टका उपदध्यात्तत्रतत्र
च रोचयेदिति ॥
सर्वतोमुखस्योपधान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो व्यवेतं खल्विदं कृष्णस्याभिमर्शनेन
भवति
सर्वतोमुखमुपधास्यञ्छ्वेतमश्वमभिमृशेदिति ॥
वर्धनेष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यावन्ति वर्धनानि समानेऽहनि
संनिपतेयुः सर्वेषां पारे तयादेवतसूददोहसः कुर्वीतेति ८

अथ प्रोक्षणीषु हिरण्यशल्कान्प्रत्यस्यत्यूर्ध्वं त्रिभ्योऽपरिमितानिति
सहस्रमिति प्रोक्तं ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
शतरुद्रीयस्य होम इति ॥
सूत्रमाचार्ययोः
पूर्वस्मिन्नेवानीके जुहुयादिति गौतमः ॥
नमस्कारैरुपस्थान इति ॥
स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव
यथेतमेत्य पश्चात्प्राङ्तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्यत्रो ह स्माह शालीकिर्दत्त्वैव
धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य
पश्चात्प्राङ्तिष्ठन्नूर्ध्वामुपतिष्ठेतेति ॥
परिषिच्यमाने यजमानं वाचयतीति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाश्मनि कुम्भं निदध्यादश्मँस्ते चुदमु ते शुगृच्छत्वित्यभिनिर्दिशेद्यं द्विष्यादिति ॥
विकर्षण इति ॥
अर्धर्चशो विकर्षेदिति बौधायन ऋचर्चेति शालीकिः ॥

स्वयमातृगणायै व्याघारण इति ॥
सूत्रं बौधायनस्याग्निचतुरश्रामेनां व्याघारयेदिति शालीकिः ॥
वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥
मन्त्रवन्तः स्युरिति बौधायनस्
तूष्णीका इति शालीकिर्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः ॥
आनीकवतस्य होम इति ॥
सूत्रं बौधायनस्याहवनीय एवानीकवतं जुहुयादिति शालीकिः ॥
अथैनँ संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रानुलोकं चेति ॥
इध्मस्य निधान इति ॥
स ह स्माह बौधायन उभयेनेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ९

शाकलैः परिधान इति ॥
आहवनीयं परिदध्यादिति बौधायनः
पुच्छमेवेति शालीकिः ॥
स्रुवाहुत्योः करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
पूर्णाहुत्यै करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
अत्र जुह्वन्मनसा दिशो ध्यायेदिति ॥
दिग्भ्योऽहमग्निमभिसंभराणीति वा तूष्णीं वेति ॥

पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
प्रसेकस्यायातन इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
तस्मिँश्चतुर उपस्तृणान आहेति ॥
सूत्रं बौधायनस्य
नोपस्तृणीतेति शालीकिः ॥
प्रसेकस्यानुप्रहरण इति ॥
अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः ॥
ब्रह्मौदनस्य श्रपण इति ॥
अग्न्याधेयवच्छ्रपयेदिति बौधायन एतस्मिन्नेवेति शालीकिः ॥
ब्रह्मौदनस्य प्राशन इति ॥
उत्तरे श्रोणयन्ते प्राश्नीयुरिति बौधायनः
पुच्छमेवाभित इति शालीकिः ॥
वातनामानाँ होम इति ॥
सूत्रं बौधायनस्य
वातमप्यत्राञ्जलिना जुहुयादिति शालीकिः
कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः ॥
शाकलानामनुप्रहरण इति ॥
अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः १०

अग्निधिष्णियानामुपधान इति ॥
सूत्रं बौधायनस्य
सर्वा एव याजुषीरुपदध्यादिति शालीकिः ॥

नानाबीजानां निर्वपण इति ॥
निर्वपणेनानुसमेत्य व्यभिमृशेदिति बौधायनस्
तत्तदेव हविः परिनिस्तिष्ठेदिति शालीकिः ॥
तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत
तन्त्रं तु हविष्कृतस्यादिति ॥

आप्यनिनयन इति ॥
जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनोऽग्रेणातिहायेति
शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥
सचरुपशुपुरोडाशा एवेतरेषाँ हविषामिडा अवद्येदभ्यर्धाद्वेति
सपशुपुरोडाशानां वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अत्याक्रमण इति ॥
सूत्रं बौधायनस्य
सह स्विष्टकृतात्याक्रामेदिति शालीकिः ॥
अभिषेक इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः पुरस्तात्स्विष्टकृतो
यावदाम्नातेनाभिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ न पार्थानि भवन्ति कुशानेव
सँस्तीर्य तेष्वेनमभिषिञ्चेदिति ॥

योगे विमोक इति ॥
अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनोऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति
शालीकिरादित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः ॥
क्रतुकरण इति ॥
सूत्रं बौधायनस्य
यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ॥
ऐकादशिनानां पशूनामुपाकरण इति ॥
सूत्रं बौधायनस्यैकयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः ११

वपानां परिहोम इति ॥
तांतां परिजुहुयादिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥
अश्वस्यावघ्रापण इति ॥
सूत्रं बौधायनस्य
माध्यंदिन एव सवनेऽश्वमवघ्रापयेदिति शालीकिः ॥
पशूनामासादन इति ॥
पशुंपशुं पञ्चहोत्रासादयेदिति बौधायनो मुख्यमेवेति शालीकिः ॥

हृदयशूलानामुद्वासन इति ॥
एकैकश उद्वासयेदिति बौधायनः
सर्वान्सहेति शालीकिः ॥

आमिक्षायै मन्त्रामन्त्र इति ॥
मन्त्रवती च स्यादध्यवदानीया चेति बौधायनस्
तूष्णीका च स्यादध्यवदानीया चेति शालीकिर्मन्त्रवती च स्यात्तन्त्रहरया
चैनया निरूढया यजेतेत्यौपमन्यवः ॥
देविकाहविषां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः १२

अथातो वाजपेयं व्याख्यास्यामः ॥
चिन्वीत वाजपेयेऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥
औदुम्बरँ रथचक्रँ सप्तदशारमिति ॥
सूत्रं बौधायनस्य
दार्ढ्यवृक्षमेवैनत्कुर्यादिति शालीकिः ॥
खादिरीं वितृण्णीं वध्रैर्व्यूतामुपकल्पयत इति ॥
सूत्रं बौधायनस्य
बस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः ॥
स ग्रीष्मस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षत इति ॥
सूत्रं बौधायनस्य
शरदि वाजपेयेन यजेतेति शालीकिः ॥

सावित्राणाँ होम इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
वाजपेयिकायै सुरायै संधान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत आहारयेदिति ॥
सोऽरत्निमात्रेऽरत्निमात्रे वा विग्रथ्नाति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
गौधूमं चषालमिति ॥

सूत्रं बौधायनस्य
गोधूमपिष्टानामपि कुर्यादिति शालीकिः ॥
दुन्दुभीनामासञ्जन इति ॥
सूत्रं द्वैधमेवैतद्भवति ॥
क्रतुकरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽतिरात्रमप्यत्र क्रतुमुपेयात्समानपक्षे चैनँ संतिष्ठापयिषेदिति १३

पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति ॥
सूत्रं बौधायनस्य
सर्व एवैते सोमयामा ग्रहीतव्या भवन्तीति शालीकिः ॥
सुराग्रहाणां ग्रहण इति ॥
सूत्रं बौधायनस्य
सजुष्टान्परिमृज्य सादयेदिति शालीकिः ॥

द्विश्रेणि वा त्रिश्रेणि वोदीच आयातयतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
षड्रशना आदाय यूपमभिप्रेयादिति बौधायनः
पञ्च रशना आदाय यूपमभिप्रेयादिति शालीकिश्चतस्रो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रोऽग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याञ्जीगविः ॥
वाजपेयिकानां पशूनामुपाकरण इति ॥
ऐकादशिनानुपाकृत्य वाजपेयिकानुपाकुर्यादिति बौधायनो वाजपेयिकानेव नैवैकादशिनानिति शालीकिः ॥
प्राजापत्यानामुपाकरण इति ॥
एकैकश उपाकुर्यादिति बौधायनः
सर्वान्सहेति शालीकिः ॥
वपानां परिहोम इति ॥
तांतां परिजुहुयादिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥

हृदयशूलानामुद्वासन इति ॥
एकैकश उद्वासयेदिति बौधायनः
सर्वान्सहेति शालीकिः ॥
रथानामभियोजन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं
प्रथमममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति ॥
काष्ठागमन इति ॥
स ह स्माह बौधायनः प्रदक्षिणमावृत्यैतां काष्ठां
गच्छेयुरथामुतोऽपसलैरावर्तेरन्नित्य्
अत्रो ह स्माह शालीकिरपसलैरावृत्यैतां काष्ठां गच्छेयुरथामुतः
प्रदक्षिणमावर्तेरन्निति १४

अथ यजमानं तार्प्यं परिधापयतीति ॥
सूत्रं बौधायनस्योभे एवैते यजमानं परिधापयेदिति शालीकिः ॥
श्रित्या आयातन इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
तां दशभिः कल्पै रोहतीति ॥
सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः ॥
अत्रास्मै प्रत्यवरोहणत आसन्दीं निदधातीति ॥
सूत्रं बौधायनस्य
बस्ताजिनं चैवास्यात्र प्रत्यवरोहेच्छतमानं च हिरण्यमिति शालीकिः ॥

अथैनमेतयासन्द्या सद आवहन्त्या वा व्रजतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अतिग्राह्याणां भक्षण इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
प्राजापत्यानां भक्षण इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
गुदतृतीयेष्विति ॥
द्वेद्वे अत्र गुदतृतीये उपयष्टोपयजेदिति बौधायनोऽपच्छेदमिति शालीकिः

समस्तान्येवैतान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः १५

अथातो राजसूयं व्याख्यास्यामः ॥
चिन्वीत राजसूयेऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥
पुनरध्युप्य पिष्टानि कृत्वाहारयेदिति बौधायनस्
तथाध्युप्तान्येवैतानि स्युरिति शालीकिः ॥
नैर्ऋृतस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः ॥
एकोल्मुकस्य हरण इति ॥
अन्वाहार्यपचनाद्धरेदिति बौधायनो ग्रामाग्नेरिति शालीकिः ॥
नैर्ऋृतस्य होम इति ॥
सूत्रं बौधायनस्य
विस्त्रँ सिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः ॥

दक्षिणानां दान इति ॥
अहरहर्दद्यादिति बौधायन आदितश्चान्ततश्चेति शालीकिः ॥
उदपात्रस्योपनिनयन इति ॥
प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥
स्वाहा नमो य इदं चकारेति ॥
सूत्रं बौधायनस्यान्तमप्यत्र स्वाहाकारां परिणयेदिति शालीकिः ॥
संतनीनामनुप्रयोग इति ॥
स ह स्माह बौधायनो यदहरिष्ट्या वा पशुना वा यजेतापि तदहः संतनी
प्रयुञ्जीतेत्यत्रो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो
यदहरिष्ट्या वा पशुना वा यजेत न तदहः संतनी प्रयुञ्जीतेति ॥
चातुर्मास्यानामनुप्रयोग इति ॥
स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संतनी
प्रयुञ्जीतेत्यत्रो ह स्माह शालीकिरहरहराश्रावणार्थे खल्वेते दृष्टे भवतो
यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संतनी प्रयुञ्जीतेति ॥
आख्यातं पञ्चेध्मीयस्य करणम् १६

अथोपवेषेणाङ्गारान्समूहतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह
बौधायनस्तूष्णीमङ्गारान्समूह्याथैनान्स्रुवाहुतिभिरभिजुहुयादग्नये रक्षोघ्ने
स्वाहेति पञ्चभिरत्र प्रष्टिवाहिनँ रथं दद्यादिति ॥

अपामार्गसक्तूनाँ होम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः समस्तेनैवास्मै
मन्त्रेणापामार्गसक्तूञ्जुहुयात्
तूष्णीँ स्रुवमनुप्रहरेत्
तूष्णीमुपोत्तिष्ठेदिति ॥
देविकाहविषां करण इति ॥
सूत्रं बौधायनस्य
सोमँ सोममनुवर्तेरन्निति शालीकिर्न देविकाहविर्भिर्यजेदित्याञ्जीगविः ॥
अग्निभिः प्रत्यवसान इति ॥
अजस्त्रैः प्रत्यवस्येदिति बौधायनोऽरण्योः समारोह्येति शालीकिः ॥
पयसः समासेचन इति ॥
दृतौ वा विनाडे वा समासिञ्चेदिति बौधायनो नवायां कुम्भ्यामिति
शालीकिः ॥
स्वयंकृतेष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो गोन्यासप्रमृदितानां कुशानां बर्हिः
संनह्येत्स्वयंपतितानां काष्ठानामिध्मं यदेव वेद्यै रूपँ सा वेदिर्दृतिं वा
विनाडं वा रथ आधाय परिवहेद्यत्तत्र नवनीतमुत्सीदेत्तदाज्यँ स्यादिति ॥
मैत्राबार्हस्पत्यस्य निर्वपण इति ॥
समानचतुर्मुष्टी स्यातामिति बौधायनो
नानाचतुर्मुष्टी स्यातामिति शालीकिः  १७

रोहिते चर्मणीति ॥
सूत्रं बौधायनस्याप्यरोहितँ स्यादिति शालीकिः ॥
सोमक्रयणेषूपैते नित्याः शते स्युरिति बौधायन एत एव शततमाः स्युरिति

शालीकिः ॥
वसतीवरीणां ग्रहण इति ॥
सूत्रं बौधायनस्य
सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः ॥
आग्नेयस्यैन्द्राग्न उपालभ्य्यो भवतीति ॥
सूत्रं बौधायनस्याइन्द्राग्न एव सवनीयः स्यादिति शालीकिः ॥
पात्राणां करण इति ॥
यथानिर्भेदं पात्राणि कारयेदिति बौधायनः
प्राकृतान्येवैतानि स्युरिति शालीकिः ॥
सारस्वतीनामभिहोम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां
वहन्तीरभिजुहुयात्ताभ्यां ग्रहेग्रहे जुहुयादथ तूष्णीँ सारस्वतीरभिजुहुयादिति
॥
अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः
पुरस्तात्सदसोऽभिषेचनीयान्ग्रहान्गृह्णीयादिति ॥
धनुषः प्रदान इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

मारुतस्यैकविँशतिकपालस्य कपालोपधान इति ॥
ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो गणैरेवेति शालीकिः ॥
आमिक्षायै मन्त्रामन्त्र इति ॥
मन्त्रवती स्यादिति बौधायनस्
तूष्णीकेति शालीकिः १८

क्लीबस्य स्थान इति ॥
अन्तर्वेदि तिष्ठेदिति बौधायनो बहिर्वेदीति शालीकिः ॥
मणीनां करण इति ॥
औदुम्बर औदुम्बरेण लौहेन प्रच्छन्नः स्यादिति बौधायनोऽउदुम्बर एवेति
शालीकिः ॥

तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥
सूत्रं बौधायनस्याधातॄणामेवैकः संग्रहीता स्यादिति शालीकिः ॥
स्फ्यस्य प्रदान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण
संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति ॥
अक्षाणां करण इति ॥
सौवर्णाः स्युरिति बौधायनो राजता इति शालीकिर्नागदन्ता इत्यौपमन्यवो
वैभीतका इत्यौपमन्यवीपुत्रः ॥
अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥
सूत्रँ शालीकेर्
अत्रो ह स्माह बौधायनो येनास्यानुपपन्नँ स्यात्तं तत्रापिसृजेद्दिशोऽभ्ययँ
राजाभूदिति ॥
अथ विषुवति दर्भस्तम्बे जुहोतीति ॥
सूत्रं बौधायनस्य
यत्रैव दर्भस्तम्बः स्यात्तद्गच्छेदिति शालीकिः १९

अग्नीनाँ हरण इति ॥
अजस्रान्हरेदिति बौधायनोऽरण्योः समारोह्येति शालीकिः ॥
वेद्यै करण इति ॥
सूत्रं बौधायनस्य
पूर्वापूर्वा वेदिर्भवतीति शालीकिः ॥
अथैनं तीर्थादानीय पवयित्वा पुण्डरिस्रजिनमुदानीयेति ॥
स ह स्माह बौधायन उभयानि पुण्डरिकाणि करयेत्सौवर्णानि च नादेयानि
चेति
नादेयान्येवेति शालीकिः ॥
निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥
सूत्रं बौधायनस्य
नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति शालीकिः ॥
सोमक्रयणेषूपैते नित्याः स्युरिति बौधायन एत एव स्युरिति शालीकिः ॥

औपसदाँ हविषां मन्त्रामन्त्र इति ॥
मन्त्रवन्ति स्युरिति बौधायनस्
तूष्णीकानीति शालीकिः ॥
आग्नेयस्य प्राजापत्यस्तूपर उपालम्भ्यो भवतीति ॥
सूत्रं बौधायनस्य
प्राजापत्य एव सवनीयः स्यादिति शालीकिः ॥
भार्गवो होता भवतीति ॥
आदित एव भार्गवँ होतारं वृणीतेति बौधायनो दशपेय एव भार्गवो होता स्यादिति शालीकिः ॥
शतं ब्राह्मणाः पिबन्तीति ॥
यजमान एकशततमः स्यादिति बौधायनो यजमान एव शततमः स्यादिति शालीकिः ॥
दक्षिणानां दान इति ॥
एता एव ब्राह्मणाभिविहिता दक्षिणा दद्यादिति बौधायन एतन्मुखँ सहस्रमिति शालीकिः २०

तेषामुत्थानेष्विति ॥
गच्छेयुरावभृथादिति बौधायनोऽप्सुषोमान्ता इति शालीकिर्ध्रुवान्ता इत्यौपमन्यवः ॥
हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥
बार्हस्पत्यस्यापीष्ट्वा बार्हस्पत्यमभिघारयेदिति बौधायन इतरेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः ॥
उच्चैरादित्याया आश्रावयत्युपाँ शु मारुत्या इति ॥
आदित्याश्रावणप्रभृत्युपाँ श्वथेतरदुच्चैरिति बौधायन आ मारुत्याश्रावणप्रभृत्युपाँ श्वथेतरदुच्चैरिति शालीकिः सर्वैवोच्चैरादित्या सर्वोपाँ शु मारुतीत्यौपमन्यवः ॥
सात्यदूतेष्विति ॥
सूत्रं बौधायनस्येमं तेऽसौ प्राहैषीदित्येव ब्रूयादिति शालीकिः ॥
द्विरात्र इति ॥
सूत्रं बौधायनस्य

यजनीयेऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः ॥
देविकाहविषां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः २१

## त्रयोविंशः प्रश्नः

अथातो इष्टिकल्पं व्याख्यास्यामः ॥
स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यत्रो ह स्माह शालीकिः सप्तदशसामिधेनीकाः
स्युर्वृधन्वन्तावाज्यभागावुपाँशुदेवता इति ॥
याजमानस्य करण इति ॥
सँसिद्धमिष्टिपथे याजमानं कुर्यादिति बौधायनः
कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥
अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी
सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥
स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं
द्वादशकपालमनुनिर्वपेदथातिपन्नां प्रतियजेदित्यत्रो ह स्माह शालीकिः
पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालँ समानतन्त्रमनुनिर्वपेन्न चातिपन्नां
प्रतियजेदित्यन्यतरेणैव सहातिपन्नां प्रतियजेदित्यौपमन्यवोऽत्रो ह
स्माहाञ्जीगविर्वि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रततेऽन्यत्तन्त्रं प्रतायते
य एवैषोऽच्युत आग्नेयोऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा
पाथिकृतं कुर्यान्न चातिपन्नां प्रतियजेदिति ॥
अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव
चरेदिति ॥

आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनोऽन्वाहितेषु चैवोपसमाहितेषु
चाग्निष्विति शालीकिः ॥
अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यँ रक्षाँसि सचेरन्निति ॥
हुत्वाग्निहोत्रमिष्टिँ सँस्थापयेदिति बौधायनः
सँस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः ॥
अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥

स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ॥
अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥
स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति
याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ॥
अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥
स ह स्माह बौधायनो या तत्राम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैवं कुर्यादित्येषैव सार्वकामिकी स्यादिति शालीकिः कामेकाम एषा स्यादित्यौपमन्यवः ॥
अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति ॥

सूत्रँ शालीकेरत्रो ह स्माह बौधायनो
मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेदिति ॥
वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥
स ह स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादशकपालं निर्वपेत्सँस्रावस्य च कुमारं प्रलेहयेदिति
जातमेव विदित्वेति शालीकिर्न च सँस्रावस्य कुमारं प्रलेहयेदित्यनन्तरे पर्वणीत्यौपमन्यवः १

विपर्यस्तहविषीति ॥
मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनोऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवश्चातुष्प्राश्यादित्यौपमन्यवीपुत्रः ॥
वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥
यत्रैव यतिष्यमाणः स्यात्तदायतनं तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः
स्वस्थानेष्वेवाग्निष्विति शालीकिः ॥
यया रज्ज्वोत्तमां गामाजेदिति ॥

सूत्रं बौधायनस्येमां तेऽसौ प्राहैषीदित्येव ब्रूयादिति शालीकिः ॥

बलबजानपीध्मे संनह्येदिति ॥
सूत्रं बौधायनस्य
बलबजानामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ॥
आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥
सूत्रं बौधायनस्य
प्रत्यभिचरन्तमेव विदित्वेति शालीकिः ॥
सारस्वतमाज्यमिति ॥
मन्त्रनिरुप्तमेतद्धृतँ स्यादिति बौधायनस्
तूष्णीकमिति शालीकिः
कालेकाल एवैनद्ध्रुवाव्याद्गृह्णीयादित्यौपमन्यवः ॥
अध्वरकल्पायामिति ॥
स ह स्माह बौधायन इडान्तं प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन सहावशेषं वर्तयेदित्यत्रो ह स्माह शालीकिरा प्रणीनात्प्रथमस्य तन्त्रस्य परिशाययेदेव द्वितीयमेव तृतीयं तृतीयेन सहावशेषं वर्तयेदिति सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः ॥
यो ब्रह्मवर्चसकामः स्यात्तस्मा एतँ सोमारौद्रं चरुं तिष्यापूर्णमासे निर्वपेदिति ॥

उपवसथीयेऽहन्निर्वपेदिति बौधायनो यजनीयेऽहन्निति शालीकिः ॥
आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥
उदकुम्भ आज्यस्त्रुवं प्रत्यस्येदिति बौधायनः
प्रोक्षणं चैव मार्जनं चाज्येन कुर्यादथेतरदद्भिः कुर्यादिति शालीकिर्यत्किं चाद्भिः कार्यँ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः ॥
यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥
विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः
पुरस्तादेव शङ्कमान इति शालीकिः ॥
अर्धेष्विति ॥
सँस्थितायामिष्ट्यामर्धानभ्यादध्यादिति बौधायनोऽत्रैव परिशयीरन्निति

शालीकिः २

विपर्यस्तहविषीति ॥
मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनोऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवश्चातुष्प्राश्यादित्यौपमन्यवीपुत्रः ॥
मारुतीभ्याँ होता यजतीति ॥
स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचनतोऽध्वर्युरिति याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ॥
आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः ससावित्राः सर्वाः समयूखेध्मा इति ॥
पदपाँ सूनाँ हरण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः समस्तेनैवास्य मन्त्रेण पदपाँ सून्हृत्वोत्तर वर्ग्य आवपेद् अथ तूष्णीमुरस्यनुनिनयेदिति ॥
शतँ सुवर्णानि कृष्णलानि भवन्तीति ॥
सूत्रं बौधायनस्योपशतान्येवैतानि स्युरिति शालीकिः परिहारयेच्चैषामिति ॥
चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या इति ॥
स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्व्यवगृहीतान्येव तानि स्युरथेतराणि समावच्छो विभजेरन्नित्यत्रो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्व्यवगृहीतान्येव तानि स्युरथेतराणि प्राशित्रहरण ओप्य ब्रह्मणे परिहारयेदिति ॥
यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति ॥
उपवसथीयेऽहन्निर्वपेदिति बौधायनो यजनीयेऽहन्निति शालीकिः ॥

सांग्रहण्यै परिधिष्विति ॥
ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायनोऽइष्टिकैरेवेति शालीकिः ॥

श्राहुतीनाँ होम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन श्रौदुम्बरैः पात्रैरेता श्राहुतीर्जुहुयाद्धुत्वा चैतानि पात्राणयत्रैवानुप्रहरेदिति ॥
श्राज्यस्यावेत्तण इति ॥
सूत्रं बौधायनस्य
यन्नवमैत्तन्नवनीयमभवदित्येतैरेवाज्यमवेत्तितमुत्पुनुयादिति शालीकिः ३

यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाँश्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति ॥
स ह स्माह बौधायनो वैश्वानरेणैकं प्रतिगृह्णीयादेवं द्वौ
गणं तु प्रतिगृह्य कुर्वीत बहुषु वारुणानेकातिरिक्तानित्यत्रो ह स्माह
शालीकिर्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ
गणं तु प्रतिगृह्य कुर्वीत न तु द्वयोर्बहुषु वा वारुणानेकातिरिक्तानिति ॥

श्रामित्तायै मन्त्रामन्त्र इति ॥
मन्त्रवती स्यादिति बौधायनस्
तूष्णीकेति शालीकिः ॥
पुनः समूहति समूह्यावद्यतीति ॥
सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः ॥
त्रयस्त्रिँशत्कपालं पुरोडाशं निर्वपतीति ॥
सूत्रं बौधायनस्य
संदिग्धपुरोडाश एवैष स्यादिति शालीकिः ॥
वर्षाहूस्तम्बस्याभिहोम इति ॥
सूत्रं बौधायनस्य
यत्रैव वर्षाहूस्तम्बः स्यात्तद्गच्छेदिति शालीकिः ॥
कृष्णाजिनस्यावधवन इति ॥
श्रन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो बहिर्वेदीति शालीकिः ॥
श्रज्ञःसवकारीयैं करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
सँसर्गे प्रायश्चित्तकरण इति ॥

सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो यो नु खल्वाहवनीयोऽत एवैष उद्धृतो भवति
ग्रामयोनिरन्वाहार्यपचनस्
तत्रतत्र नास्ति प्रायश्चित्तम्प्रशस्तो हि वृथाग्निसँसर्ग इति ॥
इतीन्वा इमा इष्टयो व्याख्याताः ४

अभिक्रामं जुहोतीति ॥
कियति नु खल्वेतदुक्तं भवतीति ॥
पञ्च प्रयाजा इति बौधायनो यत्प्राक्शालाया इति शालीकिः ॥
यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति ॥
स ह स्माह बौधायनो यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य प्रत्याख्यायमिष्ट्वा तत्कृत्वा पुनर्यजेतेत्यत्रो ह स्माह शालीकिर्यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य प्रत्याख्यायमिष्ट्वा तत्कृत्वा कृतमेव मन्येताथ यदि भूयोऽथैवं कुर्यादिति ॥
सँसव इति ॥
यत्र क्वच नाव्या वा नदी स्यादन्तरेणोदयन्मवती वासँसवस्तत्रेति बौधायनो यत्र क्वचन शब्दा न सँसृज्येरन्नसँसवस्तत्रेति शालीकिर्यत्र क्वचनान्तरेणयादसँसवस्तत्रेत्यौपमन्यवः
प्रस्थयोरेव जनपदयोरसँसवस्तत्रेत्यौपमन्यवीपुत्रो
नाविद्विषाणयोः सँसवो विद्यत इति छागलेयब्राह्मणं भवतीत्याञ्जीगविः ॥
अभिभूतीनाँ होम इति ॥
आध्वरा हुत्वा सात्त्रायणिका जुहुयादिति बौधायनः
सात्त्रायणिका एवेति शालीकिः ॥
दीर्णप्रवृत्तेष्विति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां पूतभृदाधवनीययोर्जुहुयात्ताभ्यां ग्रहेग्रहे जुहुयादथ तूष्णीँ सँस्रावमवनयेदिति ॥
नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति ॥
सूत्रं बौधायनस्य
पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः ॥

स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनँ सवनं वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
पृष्ठ्यग्रहाणां ग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यत्र क्वचैतान्यहानि
संगच्छेयुर्गृह्णीयादेव तत्र पृष्ठ्यग्रहानिति
संवत्सर एवैते दृष्टा भवन्ति
संवत्सर एवैनान्गृह्णीयादित्यौपमन्यवः ॥

पृष्ठ्यग्रहाणां भक्षण इति ॥
स ह स्माह बौधायनोऽनुसवनभक्षेण चैवैनान्भक्षयेन्नित्येन चेति
नित्येनैवेति शालीकिः ॥
अँशूनां प्रवृँहण इति ॥
एकैकशः प्रवृहेदिति बौधायनः
सर्वान्सहेति शालीकिः ५

आधवन इति ॥
व्यतिचारमाधुनुयादिति बौधायनो यथाधवित्रमिति
शालीकिर्मेक्षयेदित्यौपमन्यवः ॥
अँशोर्होम इति ॥
सूत्रं शालीकेरत्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं
जुहुयादथ तूष्णीमुपस्पृशेदिति ॥
पृश्निग्रहाणां ग्रहण इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
तेन कक्षमुपोषतीति ॥
सूत्रं बौधायनस्यापूपेनैवाप्यत्र कक्षमुपोषेदिति शालीकिः ॥
ऋषभो गोषु जीर्यतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यमप्यन्यं बहिस्तन्त्रात्पशुमालभेत
तत्राप्येतानि कुर्यादुपाकरणीययोर्वपायां देवतास्विति ॥

अष्टापद्यै गर्भस्य वसाहोम इति ॥

सूत्रं बौधायनस्य
न गर्भस्य वसाहोमं जुहुयादिति शालीकिर्न च गर्भस्य वसाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः ६

अजवशाया उपाकरण इति ॥
सूत्रं बौधायनस्य
वायव्ययैवैनामुपाकुर्यादिति शालीकिरत्रो ह स्माह ज्यायान्कात्यायनो यथाप्युपाकरण उपाकरणं नुदत एवमेवाप्युत्तरे मन्त्रा नुद्येरन्निति ॥
यदालब्धायामभ्रो भवतीति ॥
स ह स्माह बौधायनो यद्यहान्तश्रिता अकृष्णा मेघाः स्युः सँस्थापयेदेवाथ चेत्कृष्णाः स्युरथैवं कुर्यादित्यत्रो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः सँस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं कुर्यादिति
नालब्धायामसँस्थापनं विद्यत इति गौतमः ॥
जयेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अभ्यातानेष्विति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्यात्रो ह स्माहौपमन्यवोऽभ्यातानाञ्जयान्राष्ट्रभृत इति स्रुवाहुतीरेवैता जुहुयाद्गच्छेयुश्च दर्शपूर्णमासावभ्यातानाञ्जयान्राष्ट्रभृत इति ॥

शम्यापरिधिष्विति ॥
शम्यैव शम्यापरिधीन्कुर्यादिति बौधायनः
प्राकृता एवैताः स्युरिति शालीकिः ॥
द्विःस्वाहाकारँ राष्ट्रभृतो जुहोतीति ॥
विग्राहं जुहुयादिति बौधायनो द्वेद्वे स्रुवाहुती इति शालीकिः ॥
अधिदेवने जुहोति रथमुखे जुहोति रथनाड्यां जुहोतीति ॥
सूत्रं बौधायनस्यैतदग्नीनेवैतानि स्युरिति शालीकिः ॥
नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥
सूत्रं बौधायनस्य
पृथगेवैतानीध्मान्यभ्यज्य पृथगभ्यादध्यादिति शालीकिः ॥

यद्वाचः क्रूरं तेन वषट्करोतीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन उदश्वित्क्षारमिश्रमर्कपर्णेन सह
जुहुयाद्जहीति वा कडिति वा वषट्कुर्यादिति ॥

प्रसव इति ॥
स ह स्माह बौधायन उभयेन प्रसौयाद्वासिष्ठीयाभिश्च सावित्रेण चेति
सावित्रेणैवेति शालीकिः ७

अतिक्रामेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अतीमोक्षेष्विति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
प्राणग्रहाणां ग्रहण इति ॥
सूत्रं बौधायनस्य
संवत्सर एवैते दृष्टा भवन्ति
संवत्सर एवैनान्गृह्णीयादिति शालीकिः ॥
तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायननः प्राक्चेद्विजिज्ञासायै निषीदेदथैवं
कुर्यादिति ॥
यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदिति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः समस्तमेतमग्निँ सते समुप्य दक्षिणेन
विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य
न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य
शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये
षट्स्रुवाहुतीर्जुहुयादुद्बुध्यस्वाग्ने त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं
तन्वन्नुदु त्यं चित्रमिति ॥

अतिरिक्तसोमेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
ध्रुवे परिहीणे प्रायश्चित्तकरण इति ॥

स ह स्माह बौधायनः प्राक्चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्त्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्यत्रो ह स्माह शालीकिः प्राक्चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति ॥
अह्नां ग्रहण इति ॥
सूत्रं बौधायनस्य
यदेवानन्तरमहः स्यात्तस्मिन्मैत्रावरुणाग्रान्ग्रहान्गृह्णीरन्निति शालीकिः ॥
यूपे विरूढे प्रायश्चित्तकरण इति ॥
सूत्रं बौधायनस्यान्तस्तन्त्रमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः ॥
यस्य सोम उपदस्येत्सुवर्णं रुग्यं द्वेधा
विच्छिद्यर्जीषेऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥
सूत्रं बौधायनस्य
सहिरण्या एवास्यात ऊर्ध्वं मुख्याश्चमसा हूयेरन्नभ्युन्नीयेरन्निति शालीकिः ॥
आदारसोमेष्विति ॥
सूत्रं बौधायनस्यादारसोमेनैवाप्यन्यमागमयेरन्निति शालीकिः ॥

आशिःष्विति ॥
आशिषोऽनुवर्तेरन्निति बौधायन एता एवाशिषः स्युरिति शालीकिः ८

अथातो द्वादशाहं व्याख्यास्यामः ॥
चिन्वीत द्वादशाहेऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥
अतिग्राह्या इति ॥
स ह स्माह बौधायनो गृहपतिरेवारण्योः समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्यत्रो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतोऽपि विसृजेरन्नित्येतदतिग्राह्यस्य रूपं भवतीति ॥
संनिवाप इति ॥
स ह स्माह बौधायनः संनिवप्स्यन्तोऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये क्षत्रवतेऽग्नये क्षत्रभृत इत्यत्रो ह स्माह शालीकिरग्निसंयोजनी खल्वेषेष्टिर्भवति

यत्रैवाग्निं चेष्यमाणः स्यात्तत्रैनां निर्वपेदित्यप्राजापत्यं
पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः ॥
पवन इति ॥
एकैकश एवैनान्पवयित्वैकैकश उदानयेयुरिति बौधायनः
सकृदेवैनान्पवयित्वैकैकश उदानयेयुरिति शालीकिः
सकृदेवैनान्पवयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः ॥
आर्षेयवरण इति ॥
स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः
स्युरेकस्यार्षेयश्च वरण एव तेषां वरणँ स्यादित्यत्रो ह स्माह शालीकिर्यदि
चैव व्यवेता यदि चाव्यवेताः समानगोत्रा एकस्यार्षेयवरण एव तेषां वरणँ
स्यादिति ॥
व्रतधुन्द्विवति ॥
समातच्य समावच्छो विभजेरन्निति बौधायनः
पृथगेवैषां व्रतदुघः स्युरिति शालीकिः ॥

षष्ठ्यामुपसद्युत्तरवेदिँ संनिवपन्तीति सूत्रमाचार्ययोरपि वैकादश्यामिति
विधिः ॥
वसतीवरीणामभिग्रहण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यदि सातिशेषः कलशः
स्यात्तूष्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्यादथैवं कुर्यादिति
शालीकिः ॥
सोऽत्र वैव यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति
॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ॥
विवर्तयन्ति परिधीननुप्रहरति प्रस्तरमिति ॥
सूत्रं बौधायनस्यानुप्रहरेदेवात्र प्रस्तरपरिधीनिति शालीकिः ९

निमील्याध्वर्युरुपाँशु जुहोतीति ॥
सूत्रं बौधायनस्यानन्वीक्षमाण एव जुहुयादिति शालीकिः ॥

शिल्पैरुपाकरण इति ॥
स ह स्माह बौधायन उभयेनोपाकुर्याद्बर्हिभ्यां च शिल्पैश्चेति
शिल्पैरेवेति शालीकिः ॥
न्यूङ्खन इति ॥
विराजां वा प्रतिपत्सु न्यूङ्खयति शस्त्रे वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः ॥
दाक्षिणाँ होम इति ॥
स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्यत्रो ह स्माह
शालीकिर्जुहुयादेवाहुतीर्न तु प्रत्ययमन्त्राञ्जपेदिति
ये के च दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः १०

अविवाक्य इति ॥
अविवाक्यमेतदहर्भवतीति बौधायनो विब्रूयादेवेति शालीकिः ॥
ऋचामुद्धरण इति ॥
सूत्रं बौधायनस्य
यथाप्रकृतिमेवाध्वर्युः कुर्याद्छन्दोगबह्वृचा एव प्रतिकुर्वीरन्निति शालीकिः
॥

सर्पण इति ॥
कृष्णाजिनान्तैः सर्पन्त उत्तरँ हविर्धानमुपस्पृशेयुरिति बौधायनो
नोपस्पृशेयुरिति शालीकिः ॥
आग्रयणाग्रेष्विति ॥
वाचंयमोऽध्वर्युः पूर्वान्ग्रहस्थान्गृह्णीयादिति बौधायनो विसृष्टवागिति
शालीकिः ॥
स शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥
सूत्रं बौधायनस्य

यंयं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः ॥
ग्रहाधानेष्वनुसंव्रज्याया इति ॥
अनुसंव्रजेदिति बौधायनो नानुसंव्रजेदिति शालीकिः ॥
पशुकल्पेष्विति ॥
सर्वे कल्पा बौधायनस्याइन्द्राग्नपशून्येवाहीनरात्रिसत्त्राणि भवन्तीति
शालीकिः ॥
तेषां यानि समहाव्रतानि तानि साग्निचित्यान्यथेतराण्यौत्तरवेदिकानि
स्युरिति बौधायनोऽइकाहिकस्त्वेवाग्निरिति शालीकिः ॥
आत्तीयेष्विति ॥
अभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमित्येतान्यात्तीयन्ति भवन्तीति
बौधायनो
यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकिर्यानि चान्यानि
पृष्ठ्याभिप्लवेभ्यो दशमाच्चाह्न इत्यौपमन्यवः
प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयोऽतिरात्र
इत्येतान्यष्टावात्तीयन्ति भवन्तीति गौतमः ॥
पशुकल्पेष्विति ॥
सर्वे कल्पा बौधायनस्याइकादशिनपशून्येव सांवत्सरिकाणि सत्त्राणि
भवन्तीति शालीकिः ॥
वाणः शततन्तुर्भवतीति ॥
सूत्रं बौधायनस्य
वीणैवैषा तन्त्रीभिः शततमा स्यादिति शालीकिः ॥
अहर्गणे माहाव्रतिकानाँ शिल्पानां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
अहर्गणे शिखानामनुप्रवपण इति ॥
अनुप्रवपेरन्निति बौधायनो नानुप्रवपेरन्निति शालीकिः ११

द्विरात्र इति ॥
सूत्रं बौधायनस्य
यजनीयेऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्त्रमिति शालीकिः ॥
तस्मिन्नुन्नतो वेहद्वामन इति भवन्तीति ॥

उपैवैते नित्याः सहस्रे स्युरिति बौधायन एत एव सहस्रतमाः स्युरिति
शालीकिः ॥
द्रोणकलशस्यावघ्रापण इति ॥
अन्तःपरिध्यवघ्रापयेदिति बौधायनो बहिःपरिधीति शालीकिः ॥
रूपाणाँ होम इति ॥
सूत्रं बौधायनस्याश्वमेधिकान्यप्यत्र रूपाणि जुहुयादिति शालीकिः ॥
उद्यत्स्तोमेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
औपसदानां पुरोडाशानां मन्त्रामन्त्र इति ॥
मन्त्रवन्तः स्युरिति बौधायनस्
तूष्णीका इति शालीकिराग्नेया एककपालाः स्रुवाहुत्या चैनान्सह
सकृज्जुहुयादित्यौपमन्यवः ॥
द्वयीर्गा उपकल्पयन्त इति ॥
सूत्रं बौधायनस्याजा अप्यत्रोपकल्पयीरन्निति शालीकिः ॥

उलूखलबुध्नो यूपो भवतीति ॥
सर्वान्कारान्कुर्यादिति बौधायनः
प्रोह्यैनमुच्छ्रयेदिति शालीकिः ॥
प्रोह्योपास्य यूपशकलमुच्छ्रयेदित्यौपमन्यवः ॥
पाँसूनामनुसँहरण इति ॥
धिष्णियेभ्य औदुम्बर्या अवटादुपरवेभ्य उत्करादुत्तरवेद्यै पाँसूननुसँहरेदिति
बौधायनो नानुसँहरेदिति शालीकिः ॥
अथ यदि दीक्षोपसत्सु
प्रत्ययमाचक्षीरन्संप्रकीर्योदवसानीयाभिरिष्टिभिरिष्ट्वोत्तिष्ठेयुरिति बौधायन
एकाहँ सुत्वोत्तिष्ठेयुरिति शालीकिर्नासँस्थाप्य पृष्ठ्यँ
षडहमुत्तिष्ठेयुरित्यौपमन्यवः १२

तेषामुत्थानेष्विति ॥
गच्छेयुरावभृथादिति बौधायनोऽप्सुषोमान्ता इति शालीकिर्ध्रुवान्ता
इत्यौपमन्यवः ॥

जनकसप्तरात्रोऽतिरात्रः पृष्ठ्यः षडह इति बौधायनः
पृष्ठ्यः षडहोऽतिरात्र इति शालीकिः ॥

दशरात्राय दीक्षिष्यमाणो दशहोतारँ हुत्वा दशरात्राय दीक्षत इति ॥
सूत्रं बौधायनस्य
सप्तहोतारँ हुत्वा दशहोतारं जुहुयादिति शालीकिः ॥
इति नु ब्राह्मणवान्॥
अथ गोबलदशरात्रोऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं
चातिरात्रश्चाष्टमेऽह्नि वाजपेयः ॥
तत्र देवसुवाँ हविषां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिस्
त्रयस्त्रिँ शस्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः ॥
विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण इति ॥
उत्तरे त्रिँ शद्रात्रे गृह्णीयादिति बौधायनः
संवत्सर एवैतौ दृष्टौ भवतः
संवत्सर एवैनौ गृह्णीयादिति शालीकिः ॥
औदुम्बरँ षोडशिपात्रमिति ॥
सूत्रं बौधायनस्य
खादिरमेवेति शालीकिः ॥
अतिरात्रपशूनामुपाकरण इति ॥
सूत्रं बौधायनस्य
सारस्वतीमेवोपाकुर्यादिति शालीकिः ॥

षोडशिवतां चमसानां भक्षण इति ॥
व्यक्तान्भक्षयेदिति बौधायन इन्द्रपीतानिति शालीकिः ॥
रात्रिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं
चमसमभिमृशेदिति ॥

आश्विनस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः ॥
आश्विनस्य चर्याया इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियानां चमसानां
चर्याया अमुत्राश्विनेन चरेदिति ॥
तिरोअह्नियानां चमसानां भक्षण इति ॥
अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो जगतीच्छन्दसेति शालीकिः ॥
गुदतृतीयेष्विति ॥
एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनोऽपच्छेदमिति शालीकिः
समस्तान्येवैनान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः १३

एकादशिन्यै संप्रदान इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायन एकादशाग्नीषोमीया एकादश सवनीया
एकादशानुबन्ध्या इति ॥

उपशयस्य मन्त्रामन्त्र इति ॥
लभेत ग्रामे नारण्य इति बौधायनो लभेतारण्ये न ग्राम इति शालीकिर्नैव
ग्रामे नारण्य इत्यौपमन्यवः ॥
उपशयस्योपासन इति ॥
सूत्रं बौधायनस्यात्रैवोत्तरत उपास्येदिति शालीकिः ॥
पात्नीवतस्य परिलेखन इति ॥
शालामुखीयँ शङ्कुमभिपरिलिखेदिति बौधायन उत्तरत एकादशिन्यै
पात्नीवतं मिनुयादिति शालीकिः ॥
त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥
मन्त्रवान्स्यादिति बौधायनस्
तूष्णीक इति शालीकिः ॥
त्वाष्ट्रस्योत्सर्ग इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽभिपर्यग्निकृतमेनमन्तरेण
चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याद्भिरभ्युक्ष्य

यजमानस्याजास्वपिसृजेदिति ॥
त्वाष्ट्रस्य चर्याया इति ॥
उपाँशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥
पुनश्चिताविति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यमप्यग्निं
चिन्वानोऽपजानीयात्तस्मिन्नुपरि पुनश्चितिं चिनुयादुत्तरतश्च यूपाद्यूपं
मिनुयादिति ॥

कौण्डपायिनीयास्विष्टिष्विति ॥
अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायन
आज्यभागप्रतिपत्का इडान्ता इति शालीकिः
सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः ॥
पिण्डपितृयज्ञस्य दान इति ॥
अहरहर्दद्यादिति बौधायन आदित अन्ततश्च मासस्येति शालीकिः १४

होतॄणां व्याख्यान इति ॥
सग्रहानृतेस्वाहाकारानित्येकम्
ऋतेग्रहानन्तःस्वाहाकारानित्येकं सर्वानित्येकं ॥
पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः ॥
स पौर्णमासीषुपौर्णमासीषु जुह्वद्द्वादश कृत्वः संवत्सरे जुहुयादित्येतदेकम्
अमावास्यापौर्णमासीष्वित्येतदेकं सर्वास्वित्येतदेकम्॥
पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः ॥
त्रयस्त्रिँशच्चिताविति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्निग्रहणँ स्वयंचितिँ
श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति सर्वमेवैतत्कर्मावृता कुर्यादिति
॥

अहरहश्चिताविति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनोऽग्निग्रहणँ स्वयंचितिँ
श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति सर्वमेवैतत्कर्मावृता कुर्यादिति

॥
रथचक्रचितौ पुरीषस्योपधान इति ॥
पुरीषस्यान्तान्कुर्यादिति बौधायन इष्टकास्वेव पुरीषस्यान्तं गच्छेदिति
शालीकिः १५

रोहिते चर्मणीति ॥
सूत्रं बौधायनस्याप्यरोहितँ स्यादिति शालीकिः ॥
उभयनीतस्य करण इति ॥
उभे ऋचौ द्विरभ्यावर्तयेदिति बौधायनः
सकृदेव ब्रुवन्द्विर्ब्रूयादिति शालीकिः ॥

प्राङ्सोमः प्रत्यङ्सोमः
प्रत्यङ्सोमः प्राङ्सोम इति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
सौत्रामणिकायै सुरायै संधान इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत एवाहारयेदिति ॥
सुराग्रहाणां ग्रहण इति ॥
सूत्रं बौधायनस्य
पयोग्रहानप्यत्र गृह्णीयादिति शालीकिः ॥
ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयतीति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
सुरासोमस्य संचर इति ॥
दक्षिणेन हृत्वोत्तरेणावनयेदिति बौधायन उत्तरेण हृत्वा दक्षिणेनावनयेदिति
बौधायनिर्यत एवैनँ हरेत्तत एवैनमवनयेदित्यौपमन्यवः ॥
पावमानीभिरुपस्थान इति ॥
पावमानीभिरुपस्थाय पितॄणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः
पितॄणामेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः ॥
अवभृथ इति ॥
सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः शूलैश्च मासरेण चावभृथमवेयादिति ॥
आख्यातमुदकान्तस्य प्रत्यसनम्॥

आख्यातमाप्लवनम्॥
आख्यातँ समिधां करणं ॥

वैमृधस्यानुनिर्वपण इति ॥
सूत्रं बौधायनस्य
नानिष्ट्वा प्रथमसोमेनानुनिर्वपेदिति शालीकिः १६

पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यामिति ॥
उभयत्र पौर्णमासहविर्भिर्यजेतेति बौधायनो नामावास्यायां किंचन यज्ञरूपं कुर्यादिति शालीकिः
पिण्डपितृयज्ञेन चरेदित्यौपमन्यवः ॥
साकंप्रस्थायीयेन यजेत पशुकाम इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनः स्रुग्भ्यामेव पुरोडाशं जुहुयाच्चमसेन सांनाय्यमिति ॥
नागतश्रीर्महेन्द्रं यजेत
त्रयो वै गतश्रियः शुशुरुवान्ग्रामणी राजन्यस्
तेषां माहेन्द्रो देवतेति ॥
स योऽन्य एतेभ्यो महेन्द्रमियक्षेत स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभेतेति बौधायनोऽत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां लभेतेति शालीकिः ॥
संवत्सरमिन्द्रं यजेत
संवत्सरँ हि व्रतं नातीति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे पर्यवेते तस्यां महेन्द्रं यजेत

सोऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादित्यत्रो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैव संवत्सरो भवति यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे पर्यवेते या ततः पूर्वामावास्या स्यात्तस्यां महेन्द्रं यजेत
सोऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति ॥
दाक्षायणयज्ञेन सुवर्गकामो यजेत
पूर्णमासे संनयेन्मैत्रावरुण्यामिक्षयामावास्यायां यजेतेति ॥

सूत्रं बौधायनस्य
वैमृधमप्यत्रानुनिर्वपेदिति शालीकिः ॥
सांनाय्यस्य भक्षण इति ॥
सूत्रँ शालीकेरत्रो ह स्माह बौधायनो यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षयेदिति ॥
आमिक्षायै मन्त्रामन्त्र इति ॥
मन्त्रवती स्यादिति बौधायनस्
तूष्णीकेति शालीकेः ॥
इडादधे चतुश्चक्र उपाँशुयाजस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः १७

बृहस्पतिसवे दाक्षिणानां होम इति ॥
अनुसवनं दाक्षिणानि जुहुयादिति बौधायनो माध्यंदिन एव सवने दाक्षिणानि जुहुयाद्ददामीत्येवेतरायोः सवनयोर्ब्रूयादिति शालीकिः ॥

हिरण्येन घृतमुत्पुनातीति ॥
मन्त्रनिरुप्तमेतद्धृतँ स्यादिति बौधायनस्
तूष्णीकमिति शालीकिः ॥
अनुद्धते वेद्यै दक्षिणत आहवनीयस्य बृहत स्तोत्रं प्रत्यभिषिञ्चतीति ॥
सूत्रं बौधायनस्य
कृष्णाजिनमप्यत्रास्तृत्याभिषिञ्चेदिति शालीकिः ॥
माषैः पूर्णं कमण्डलुमिति ॥
सौवर्णः सौवर्णैर्माषैः पूर्णः स्यादिति बौधायनो मार्त्तिक एव धान्यमाषैरिति शालीकिः ॥
सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभत इति ॥
पृथगेवासां मनोताः स्युः पृथक्पशुपुरोडाश इति बौधायनः
पृथगेवसां मनोताः स्युरेकः पशुपुरोडाश इति शालीकिरेकैवासां मनोता स्यादेकः पशुपुरोडाश इत्यौपमन्यवः ॥
अग्निष्टुतीन्द्रस्तुतीति ॥
सूत्रं बौधायनस्य

यथाप्रकृतिमेवाध्वर्युः कुर्याछन्दोगबह्वृचा एव प्रतिविकुर्वीरन्निति शालीकिः ॥
अतिरिक्तस्तोत्रेष्विति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

धनुषः प्रदान इति ॥
पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥
एकाहानामन्त इति ॥
सूत्रं बौधायनस्य
मृत्युसवान्त इति शालीकिः ॥
निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥
सूत्रं बौधायनस्य
नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति शालीकिः ॥
अथास्याँ सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां प्रवर्ग्यस्य करण इति ॥
कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥
शवानसोऽधिषवणे फलके पुरुषास्थस्य वृषणाविति ॥
सूत्रं बौधायनस्य
शवानसोऽप्यत्रारणी कुर्यादिति शालीकिः ॥
स यं कं च ग्रहं गृह्णात्येवमेवैनं गृह्णाति
यदु किं च पात्रँ सादयत्येवैनत्सादयतीति ॥
सूत्रं बौधायनस्य
यंयं ग्रहं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः ॥
श्वेतमश्वं ददाति
श्वेतां वडबां ददात्यश्वमसितं ददाति
गर्भिणीं वडबां ललामीं ददात्यनडुच्छतं ददाति
त्रयस्त्रिँ शतं निष्कान्ददाति

सोमचमसं ददाति
हिरण्मयं चमसं ददाति
राशिकृतं धान्यं ददाति

मरायकृतं धान्यं ददातीति ॥
एतानि च नित्यानि च दद्यादिति बौधायन एतान्येवेति शालीकिः १८

अथातः सर्वतोमुखं व्याख्यास्यामः ॥
चिन्वीत सर्वतोमुखेऽग्निमिति बौधायनो न चिन्वीतेति शालीकिरत्रो ह
स्माह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय इतरेषु सावित्राः स्युरित्येतदपि न
कुर्यादित्याङ्गीगविः ॥
अरण्योः समारोपण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह गौतमो गृहपतिरेव प्रथममरण्योः समारोपयेत
इतरे सत्र इति ॥

शालाया इति ॥
प्राकृतेन प्रक्रमेण मीयाद्मध्ये गार्हपत्य इति ॥
सूत्रं बौधायनस्यात्रो ह स्माह शालीकिः त्रिपदेन प्रक्रमेण सर्वत इति ॥
त्रिवृत्प्राच्यां दिशि भवति पञ्चदशो दक्षिणतः सप्तदशः पश्चादेकविँश उत्तरतः
सर्वतो वा ज्योतिष्टोमः सर्वे ज्योतिष्टोमदक्षिणा इति ॥
प्रवर्ग्यस्य करण इति ॥
सूत्रं बौधायनस्य
नोक्थ्ये प्रवृञ्ज्यादिति शालीकिः ॥
याजमान इति ॥
अभीनाम याजमानं कुर्यादिति बौधायनः
कुर्याद्यथावकाशं याजमानमिति शालीकिर्येऽग्निसँस्काराः
स्युस्तान्काममितरत्तन्त्रेणेत्यौपमन्यवः ॥
अग्न्यन्वाधान इति ॥
सूत्रं बौधायनस्यात्रो ह स्माह शालीकिर्गार्हपत्यः सकृदन्वाहितः
स्याद्ग्रामयोनिरन्वाहार्यपचन आहवनीयँ सकृदन्वाधाय ततो यथार्थं
गच्छेदिति ॥

भक्षण इति ॥
सूत्रं बौधायनस्य

सर्वँ समवधाय सकृदेव भक्षयेदिति शालीकिः ॥
मार्जन इति ॥
सूत्रं बौधायनस्य
सकृदेकस्मिन्निति शालीकिः ॥
लोकाग्नीनाँ हरण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह दीर्घवात्स्यः पूर्वस्मिन्नेव याजमानँ स्यादिति ॥
क्रतुपशूनां करण इति ॥
सूत्रं बौधायनस्य
क्रतुपशव ऐकादशिनाश्च विकल्पन्त इति शालीकिः ॥
समञ्जन इति ॥
सूत्रमौपमन्यवीपुत्रस्य
यावन्त स्तोमास्तावत्कृत्वः प्रचरण्या समनक्तीति बौधायनः ॥
दधिग्रह इति ॥
सूत्रं मौद्गल्यस्य
पयसा वाज्येन वेति ॥
पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥
अँश्वदाभ्ययोर्ग्रहण इति ॥
सूत्रं बौधायनस्यात्रो ह स्माह शालीकिर्वाजपेये द्वादशाहे सत्त्रे
ताण्डिनामयन उद्भिदि वलभिदीति तस्य स्यादित्य्
एवमेव पृश्निग्रहैः प्राणग्रहैरिति ॥
षोडशिग्रहाणां ग्रहण इति ॥
सूत्रं बौधायनस्यानुसवनं गृह्णीयुरिति शालीकिः ॥
अतिग्राह्याणाँ होम इति ॥
सूत्रं बौधायनस्य
माहेन्द्रस्यानुवषट्कारमुपजुहुयुरिति शालीकिः ॥
षोडशिन स्तोत्रमुपाकरोतीति ॥
सूत्रं बौधायनस्य
येन केन चिदिति शालीकिः ॥
हृदयशूलानामुद्वासन इति ॥
एकैकश उद्वासयेदिति बौधायनः

सर्वान्सहेति शालीकिः ॥
अवभृथ इति ॥
सूत्रं बौधायनस्य
प्राञ्च एवावभृथमवेयुरिति शालीकिः ॥

अरण्योः समारोपण इति ॥
सूत्रमाचार्ययोरत्रो ह स्माह गौतमो गृहपतिरेवारण्योः समारोपयेत्तत इतर इति १९

## चतुर्विंशः प्रश्नः

पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन सँस्थावशेनेति
छन्दसेति यदवोचाम यथाम्नायप्रणिधीदं पूर्वमिदमुत्तरमित्यथापि मन्त्र एव स्वयं कर्म प्रब्रूते
कर्मानुवादो भवति
यथैतद्भवति प्रेयमगाद्धिषणा बर्हिरच्छोर्वन्तरिक्षमन्विहि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति
यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तद्विकल्पयिषेद्ब्राह्मणमु हैवैनान्मन्त्रानप्रज्ञातान्विदधातीदमनेन करोतीदमनेनेति
यथैतद्भवतीषे त्वोर्जे त्वेति शाखामाच्छिनत्ति वायव स्थोपायव स्थेति वत्सानपाकरोतीत्यथाप्यमन्त्राणि कर्माणि विदधाति
यथैतद्भवत्यष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्येवं व्यवस्थावर्णसंयोगाद्यथो एतत्प्रत्ययेनेति
छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति
यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतं न्यायमनधिगच्छन्ग्रामन्यायं प्रतीयादयमिहार्हताँ समारम्भ इति ॥
यथो एतत्सँस्थावशेनेति सोमेऽपहृत आदाराँश्च फाल्गुनानि चाभिषुणुयादिति
चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्या निर्देशेनाशिषा नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थम्
अथेमे पञ्च हविराकारा औषधं पयः पशुः सोम आज्यमिति १

तेषां पृथक्पृथग्धर्माः पृथगधिकरणानि
यथाधिकरणं मन्त्रा दृष्टास्

तान्न मिथः सँसादयेदनादेशाद्येनयेन यद्धविः सँसिध्येत्तेनतेन
तत्कुर्यात्तत्तस्याधिकरणम्
उक्तान्यधिकरणानि
यज्ञ इति
किमुपज्ञो यज्ञः श्रद्धोपज्ञो माङ्गल इति
क्व उ खलु यज्ञ इति
पुरुष इति
का उ खलु देवता दीक्षेति
वागिति
का उ खलु पथ्या स्वस्तिरिति
वागेवेति
का उ खल्वेकाक्षरा गायत्रीति
वागेवेति
क उ खलु यज्ञस्यारम्भः का प्रतिष्ठेति
विज्ञायते स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याँ
स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति
वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति २

कथमु खल्वेतज्ञानीयादिदं तन्त्रमयमावाप इत्यग्न्यन्वाधानप्रभृति
तन्त्रमाज्यभागाभ्यामन्यत्रौषधात्
तस्मिँस्तन्त्रे सत्यावापस्थानानि भवन्ति यथैतद्धेनूनां दोहनं
कपालानामुपधानँ स्तम्बयजुषो हरणमाज्यग्रहा इति यच्च किं
चाभिनिवपत्यूर्ध्वमाज्यभागाभ्यामेष मध्यत आवापो भवति
यस्मिन्नेतद्धवीँष्योप्यन्ते तस्मिन्नेवावापजानि तन्त्रस्थानं भजन्ते यथैतत्प्राशित्रं
यजमानभागब्रह्मभागौ स्विष्टकृच्चेडा चेत्
अवदानत आवापो भवति तन्त्रं तु प्रदानतः
क्व उ खलु तन्त्रमावापभूयं गच्छत्यावापो वा तन्त्रभूयमिति

मैत्राबार्हस्पत्येऽप्यन्यस्मिँस्तन्त्रमु ह निर्वपणतो भवत्यावाप उ प्रदानतोऽथ वारुणीषु च सँज्ञानीष्ट्यां चावापो ह निर्वपणतो भवति तन्त्रं तु प्रदानतोऽनूयाजप्रभृति तन्त्रमा समिष्टयजुषो होमात्
किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येव ब्रूयाद्विज्ञायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्द्ध इत्यृतुदेवता उ खलु प्रयाजा भवन्तीति ३

कियत्यः पाकयज्ञसँस्थाः कियत्यो हविर्यज्ञसँस्थाः कियत्यः सोमसँस्था इति
हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसँस्था इत्यपरिमिता उ हैके ब्रुवते
यच्च किं चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसँस्था इत्यथ हविर्यज्ञसँस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य इति

सौत्रामणिमु हैके ब्रुवतेऽथ सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसँस्था यदग्निष्टोमस्य क्रतुकरणं तदत्यग्निष्टोमस्य
यदुक्थ्यस्य तत्षोडशिवाजपेययोर्यदतिरात्रस्य तदप्तोर्यामस्येति
सप्तानाँ सोमासँस्थानां द्वे सत्त्राणि न गच्छतो वाजपेयश्चाप्तोर्यामश्चेति ४

कथमु खल्वेतज्ञानीयादियं पूर्वा ततिरियमुत्तरेति
या प्रकृतिः सा पूर्वा ततिरथ यद्विदधाति सोत्तरा ततिरग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिर्दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिरैन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः सर्वे काम्याः पशव उत्तरा ततिर्ज्योतिष्टोमः सोमानां पूर्वा ततिः सर्वे सोमा उत्तरा ततिः श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिर्द्विरात्रोऽहीनानां पूर्वा ततिः सर्वेऽहीना उत्तरा ततिर्द्वादशाहोऽहर्गणानां पूर्वा ततिः सर्वेऽहर्गणा उत्तरा ततिर्गवामयनँ सांवत्सरिकाणाँ सत्त्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्त्राण्युत्तरा ततिः

कियन्ति नु खलु गवामयनानि भवन्तीति
विज्ञायते यथैतन्मासि पृष्ठमुत्तमे मासि सकृत्पृष्ठान्युपेयुर्दशमास्यं तृतीयं
सप्त ग्राम्या ओषधयः सप्तारण्याः
सप्त ग्राम्याः पशवः सप्तारण्याः
सप्त छन्दाँसि चतुरुत्तराणीति
सप्त ग्राम्या ओषधयस्तिलमाषव्रीहियवाः प्रियङ्गवोऽणवो गोधूमाः सप्तमे
कुलत्थानु हैके ब्रुवते
सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च
वास्त्वानि च वेणुयवाश्च सप्तमे
कुरुविन्दानु हैके ब्रुवते
सप्त ग्राम्याः पशवो गोऽश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमेऽश्वतरमु हैके ब्रुवते
सप्तारण्या द्विखुराश्च श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेया सप्तमे
सप्त छन्दाँसि चतुरुत्तराणीति गायत्र्युष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगतीति ५

अथेदं त्रयं भवति कर्माभ्यावर्ति देवताभ्यावर्ति संख्याभ्यावर्तीति
सावित्रं नु खल्विदं कर्माभ्यावर्ति भवत्यथ देवताभ्यावर्ति ध्रुवाज्यं
द्रोणकलशः सर्वपृष्ठेत्यथ संख्याभ्यावर्ति त्रिः पृच्छति शृतँ हवी३ः
शमितरित्यथापि राज्ञो मानं क्व उ खलु मन्त्रमन्तरितं कल्पयेत्
स्थानाद्वा स्थानं प्रजिज्ञासीताभिरूप्येण वा प्रौहेण वेति
स्थानात्स्थानमिति यदवोचाम योऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनँ सह
कल्पयेत्पूर्वकालेन वोत्तरकालेन वेति

यथो एतदाभिरूप्येणेति यथैतद्भवत्याशासानः सुवीर्यँ रायस्पोषँ स्वश्वियम्।
बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेति
यथो एतत्प्रौहेणेत्यग्निकल्पः खल्वयमिष्टकाभूयान्समाम्नातस्
तत्र यो मन्त्रोऽन्तरितः स्यादिष्टकाभूयमेनमापादयेत् ६

अथायमश्वमेध आहुतिभूयान्समाम्नातस्
तत्र यो मन्त्रोऽन्तरितः स्यादाहुतिभूयमेनमापादयेद्नाप्रक्रान्तं प्रक्रमयेन्न प्रक्रान्तं क्रम तूष्णीं कर्मणाभिपूरयिषेदिति
नाप्रक्रान्तमिति यदवोचाम बर्हिर्लवनः खल्वयँ ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म
न क्रमणो हेतोर्मन्त्रोऽभिनिवर्तेताथायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घमु कर्म
न कर्मणो हेतोर्मन्त्रोऽभिनिवर्तेताथास्याँ स्वयमातृणायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वमु कर्म
न कर्मणो हेतोर्मन्त्रो विरम्येद्यथो एतत्त्रिर्यजुषा सकृत्तूष्णीमिति
लोकाम्नींश्च तेषामुपश्रुत्य स्तम्बयजुश्चेति
यथो एतत्पञ्चकृत्वो यजुषा पञ्चकृत्वस्तूष्णीमिति राज्ञस्तेषां मानमुपश्रुत्येति

यथो एतत्सकृद्यजुषा सकृत्तूष्णीमिति राज्ञ एव तेषां मानमुपश्रुत्येति
यथो एतच्चतुरो मुष्टीन्व्रीहीणां निर्वपतीति द्वौ देवतायै स्विष्टकृते तृतीय इडायै चतुर्थ इति सर्व एवैतेषां ब्राह्मणवन्तः ७

अथात आदेशकारितानि व्याख्यास्यामोऽनादिष्टोऽग्निरपि तु
यथैतद्भवत्यधिदेवने जुहोति रथमुखे जुहोति रथनाड्यां जुहोति चतुष्पथे जुहोति वर्त्मनोर्जुहोत्याव्रश्चने जुहोति पदे जुहोत्यजायां जुहोत्यजस्य दक्षिणे कर्णे जुहोत्यजस्य दक्षिणे शृङ्गे जुहोति ब्राह्मणस्य दक्षिणे हस्ते जुहोति दर्भस्तम्बे जुहोत्यप्सु जुहोत्यौदुम्बर्यां जुहोति वल्मीकवपायां जुहोत्यौपासने जुहोत्युत्तपनीये जुहोति शामित्रे जुहोत्याग्नीध्रीये जुहोत्यन्वाहार्यपचने जुहोति गार्हपत्ये जुहोतीत्यनादिष्ट आहवनीय एव होतव्यम्
अनादिष्टोऽध्वर्युरपि तु यथैतद्भवत्युन्नेता जुहोति प्रतिप्रस्थाता जुहोतीत्यनादिष्टेऽध्वर्युणैव होतव्यम्
अनादिष्टं पात्रम्
अपि तु यथैतद्भवत्यञ्जलिना जुहोति शूर्पेण जुहोति कृष्णाजिनपुटेन जुहोति मध्यमेन पर्णेन जुहोत्यन्तमेन पर्णेन जुहोत्यर्कपर्णेन जुहोति पर्णमयेन स्रुवेण जुहोत्यौदुम्बरेण स्रुवेण जुहोत्यङ्गुष्ठाभ्यां जुहोति विस्रँसिकाकाण्डाभ्यां

जुहोति गोमृगकराठेन जुहोत्यश्वशफेन जुहोत्ययस्मयेन कमराडलुना
जुहोतीत्य्
अनादिष्टे स्रुचैव होतव्यम्
अनादिष्टा समिदादेशादेव समिधं जानीयाद्विज्ञायते नासमित्के
जुहुयाद्यदसमित्के जुहुयाद्यथाजिह्वेऽन्नं दद्यात्तादृक्तत्
तस्मात्समिद्वत्येव होतव्यम्
अनादिष्ट उपसमाधायैव होतव्यम् ८

अथातोऽवदानकल्पश्चतुरुन्नयति चतुरवत्तं भवतीत्यनादिष्ट उपहत्यैव
होतव्यम्
अनादिष्टँ हविरादेशादेवान्यद्व्रीहियवेभ्यो जानीयादपि तु नु खलु
क्षिप्रसँस्कारतममाज्यं ब्रुवतेऽनादिष्टः
पशुरादेशादेवान्यमजाज्ञानीयादैन्द्राग्नाद्यदभिहारं तन्त्रँ स्यात्तदभिहारं
कुर्यादग्नग्रभिहारौ दर्शपूर्णमासौ
सोम इन्द्राभिहारः
सावित्रमौषधस्य निर्वपणं दृष्टं भवति
किँ स्वित्सांनाय्यस्य पशो राज्ञ इति
दोहनँ सांनाय्यस्योपाकरणं पशोर्यदुपाँशुसवनमभि मिमीते तद्राज्ञः
प्रज्ञातमन्येषाँ हविषां पर्यग्निकरणं किँ स्विद्राज्ञ इति
यदेवादो वसतीवरीः परिहरति तद्राज्ञ इति ९

अथातो पुरोडाशान्व्याख्यास्यामः
सर्व एवाग्नेया अष्टाकपाला अन्यत्र पौनराधेयिकात्
सर्व एवैन्द्राग्ना एकादशकपाला अन्यत्राग्रयणाच्च शुनासीरीयाच्च
सर्व एवैन्द्रा एकादशकपाला अन्यत्र शुनासीरीयात्
सर्व एवाग्नीषोमीया एकादशकपाला अन्यत्र श्यामाकात्
सर्व एव पशुपुरोडाशा एकादशकपाला अन्यत्र वायव्याद्यद्देवत्यः
पशुस्तद्देवत्यः पशुपुरोडाशोऽन्यत्र वायव्याद्भवति
सर्व एवाग्नावैष्णवा एकादशकपाला अन्यत्राध्वरकल्पायै
तत्रैवाष्टाकपालश्च द्वादशकपालश्च भवतः

सर्व एव सावित्रा द्वादशकपाला अन्यत्राश्वमेधिकेभ्यस्
तत्रैवाष्टाकपालश्चैकादशकपालश्च भवतः सावित्रोऽष्टाकपाल इति च
सर्व एव मारुताः सप्तकपाला अन्यत्राश्वमेधिकानां चातुर्मास्यपशूनां
पशुपुरोडाशेभ्यो मारुताच्चैकविँशतिकपालादन्यत्र
राजसूयिकात्पञ्चशारदीयानां च पशूनां पशुपुरोडाशेभ्यः
किमनुख्यानि नु खलु ते विलेख्यानि कपालानि भवन्तीति
विज्ञायते वैश्वानरं द्वादशकपालं मृगाखरे भूमिकपालं
निर्वपेदित्येतदनुख्यानि भवन्तीत्यथ पूर्वसँस्थाः
पञ्चप्रयाजस्य नवप्रयाजस्यैकादशप्रयाजस्येति प्रयाजाः पूर्वसँस्थाः

पर्यग्निकरणं पशोरुपाँश्वभिषवोऽग्निष्टोमे गवामयने चतुर्विँशमहस्
तदपि विज्ञायते तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्
तावतीः संवत्सरस्य रात्रय इति १०

अथ राजयज्ञा राजसूयोऽश्वमेधः पुरुषमेधः सर्वमेधः सोमसवः पृथिसवो
मृत्युसवः कानान्धयज्ञः शुनस्कर्णयज्ञ इति चाथादितिदेवता अग्न्याधेये
त्वेव प्रथमश्चरुश्चातुर्मास्येषु द्वितीयः
प्रायणीयोदयनीययोरग्निदीक्षणीयायां त्रयो राजसूये रत्निमानेषु च प्रायुजेषु
चादित्यां मल्हां गर्भिणीमालभत इति चैक इष्टिकल एको व्रात्यस्तोमे
चत्वारोऽश्वमेधेऽदित्यै विष्णुपत्न्यै चरुरदित्यै हँससाचिरदित्यै त्रयो रो-
हितैतास्तिस्रो मेष्य आदित्या द्वौ सौत्रामण्याम्
आदित्याविर्वशा
ग्रहोऽष्टादश इति च
त्रीणि तन्त्राणि यज्ञमन्वायत्तानि भवन्ति पञ्चप्रयाजं
नवप्रयाजमेकादशप्रयाजमिति
पञ्चप्रयाजेन दर्शपूर्णमासौ काम्या इष्टय इति वर्तन्ते
नवप्रयाजेन चातुर्मास्यान्येकादशप्रयाजेन पशुः सोम इति
षडिमानि सर्वकल्पे सर्वाभिप्रायिकाणि भवन्ति
यथैतदग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति

तदपि विज्ञायतेऽथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघा अवरुन्द्धेऽथ
यदग्निहोत्रं जुहोति सहस्रं तेनैषा वै वैश्वदेवस्य मात्रैतद्वा एतेषामवमम्
अतोऽतो वा उत्तराणि श्रेयाँसि भवन्ति
सर्वान्लोकान्पशुबन्धयाज्यभिजयत्येकस्मै वै कामायान्ये यज्ञक्रतव
आलभ्यन्ते
सर्वेभ्यः कामेभ्यः पशुः सोम इति ११

अग्नीनाधास्यमानः प्रज्यमात्मानं कुर्वीत
येनास्याकुशलँ स्यात्तेन कुशलं कुर्वीत
यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वाथाप्यग्न्याधेय
एवर्त्विजां वरणं प्रथममुदाहरामस्
तस्य चेत्पूर्वपुरुषैर्वृताः स्युस्तानेव नातिवृणीताव्यवच्छिन्नाश्चेत्कौलेनाध्ययनेन
मानुषेण शीलवृत्ताभ्याँ स्युरिति
किंगत उ खल्वतिवरणं वावरणं वा भवतीति
स्तेयमचारीदभ्यमँ स्थादयाज्यमयाजयत्सादितं कर्म तदु हास्थित
इत्येतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति

ताँश्चिद्वृणीताव्यापन्नाङ्गानेव वृणीत
कं नु खल्वेषां प्रथमं वृणीत
योऽस्य सँस्तुततमः स्यात्तं प्रथमं वृणीत
तेन सचिवेनान्यान्लिप्सेत
यद्यु वै यथाज्येष्ठं ब्रह्माणं प्रथमं वृणीताथ होतारमथोद्गातारमथाध्वर्युम्ब्रह्मणो
वानन्तरमध्वर्युम्पूर्वं वोत्तरं वा यथाकर्म चेत्स्यात्
सृष्टेन धनेनर्त्विजः प्रतिसंवसीत
त्रीण्यधिकरणान्यृत्विजां विनापि यद्द्येऽज्याशिषि भार्यामकृषीति

को नु खल्वृत्विक्षु धर्म इति
य आचार्य इति
कथमर्हण इति १२

आगमआगम इत्येकम्
ऋतुमुखऋतुमुख इत्येकं संवत्सरस्य पार इत्येकं यज्ञाधिगम इत्येतदपरं को नु खल्वृत्विजां धर्म इति
न न्यस्तमार्त्विज्यं कुर्याद्नानुध्यातं नावक्रीतो याजयेद्नावृतो याजयेद्नातिवृतो याजयेद्नानूद्देश्यं याजयेद्न नीतदक्षिणं याजयेद्नापरपक्षे याजयेद्नार्तं याजयेद्न मृतं याजयेद्न त्रिकिणिनं याजयेद्न परिखातिक्रान्तं याजयेद्नान्तगं याजयेद्
नान्त्यजं याजयेद्नाननूचानं याजयेदपि वैतेषां तं याजयेद्यः कपालान्युपहन्याद्वृत्तिप्रेक्षे वर्तमाने
तदपि दाशतये विज्ञायतेऽवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम्। अपश्यं जायाममहीयमानामधा मे श्येनो मध्वाजभारेति नैतेषामयाज्यः सहस्रदक्षिण इति १३

ऊषाश्च सिकताश्चेति
ये भस्मरा इवोषाः स्युस्तानाहारयेदारण्यस्य वराहस्य विहतादाहारयेदारण्यस्याखोरुत्करादाहारयेद्योऽनुपदासी सूदः स्यात्तत आहारयेत्
सूदेऽविद्यमाने कुलीरसुषिरादाहारयेदशनिहतेऽविद्यमाने शीतहतमाहारयेद्वातहतं वा
चित्रियस्याश्वत्थस्येति
येन ग्रामो वा नगरं वा नदी वा तीर्थं वा ज्ञायते तत आहारयेदश्वं पूर्ववाहमिति
युवानमित्येवेदमुक्तं भवति
त्रीन्हिरण्यशल्कानिति
षडिमान्कारयेत्
सौवर्णा उपासनार्था राजता अतिप्रदानार्था
उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतोऽहतवाससाविति
सर्व एवान्यो मानुषोऽलङ्कारोऽन्यत्र नलदादार्तायैवैतदुदाहरन्ति
स्रजमु हैके प्रतिषेधयन्ति १४

ताः संवत्सरे पुरस्तादादध्यादिति
त्र्यहे षडहे द्वादशाहे वा
संवत्सरेऽपर्यवेत उद्गायति कथं तत्र कुर्यादिति
पुनरेव ब्रह्मौदनँ समुत्थापयेदा समिधामभ्याधानाद्न त केशश्मश्रु वापायीत
पुरस्तात्त्वेवैतत्संवत्सरँ संचक्षीत
प्रायश्चित्तार्थ एष उक्तो भवति
स यावत्कृत्व उद्गायेदेवमेव कुर्यात्
पर्यवेते नोपनमेदेवमेव कुर्यादुपनमत्युपवसथगविप्रभृति कर्म तायते
द्विब्रह्मौदनमु हैके ब्रुवत उच्छेषणीयो हेतरः सान्त्वकरण उत्तरोऽथ
संभारेषूषान्निवपन्यददश्चन्द्रमसि कृष्णं तन्मनसा ध्यायेत्तदपीहेति
सामानि चेन्न प्रत्यधीयीत योनीर्निगदेदपि वा व्याहृतीभिरपि वा हिंकारेण
प्रणीतालोकेन रथचक्रं प्रवर्तयेत्
तस्य चेदादधानस्य पुरस्ताच्चन्द्रमा दृश्येत कथं तत्र कुर्यादिति
यः कर्मान्त आरब्धः स्यात्तं परिनिष्ठाप्य क्रमान्तेनोपरमेद्श्वो भूते
परिनिस्तिष्ठेदित्यथ चेदिध्मेऽभ्याहिते दृश्येत कथं तत्र कुर्यादिति

पूर्णाहुत्यन्तं कर्म कृत्वा कर्मान्तेनोपरमेद्श्वो भूते परिनिस्तिष्ठेदिति १५

अथात ऋतुनक्षत्राणामेव मीमाँसा ऋतूनेवाग्रे व्याख्यास्यामोऽथ छन्दाँ
सीति
वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्यो वर्षासु रथकार
इति
सर्वेषां त्वेव वसन्त आधानँ सर्वेषाँ रोहिण्यां यथावर्णं त्वेव छन्दाँस्यपि तु
नु खलु कामनियुक्तान्यग्न्याधेयानि भवन्ति
यथैतद्भवति कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत
पुनर्वस्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्रायामिति
सद्यस्कालान्येतानि भवन्ति
ग्रीष्मे राजन्यः शरदि वैश्य इति नैते सद्यस्काले भवतोऽथात
आर्तिजान्यग्न्याधेयानि व्याख्यास्यामो विपक्ष आपूर्यमाणपक्षे
विपक्षेऽपक्षीयमाणपक्ष इति

विपन्न आपूर्यमाणपन्न आदधानो यावानत्रावकाशः स्यात्तमभिविदधीत
पौर्णमास्यां तु सद्यस्कालम्विपन्नेऽपन्नीयमाणपन्न आदधानो नात्रावकाशः
वाङ्गणाय विद्यते
सर्वमेवैतदहः सद्यस्कालं कुर्याच्चतुर्होतारँ सारस्वतौ होमावन्वारम्भेष्टिमिति
१६

अथ पौर्णमासवैमृधाभ्यामिष्ट्वामावास्यामेव ततः काङ्क्षेदथ चेदमावास्यायाँ
सद्यस्कालममावास्यान्तम्
अथ सारस्वतौ होमौ जुहुवदृचैवर्चमुपसंदध्यादेवं पूर्णदर्व एवं वास्तोष्पतीये
कथमु खलु पूर्णाहुतिं जुहुयादग्नये पृथिव्यै वायवेऽन्तरिक्षाय सूर्याय दिवे
वरुणायाद्भ्यः स्वाहेति जुहुयादथेदं तूष्णीमग्निहोत्रमग्निसँस्कारार्थं दृष्टं भवति
तदाज्येनैव जुहुयादवाचीनमवमृज्योर्ध्वमुन्माष्टर्युभे एवैते सायंप्रातरग्निहोत्रे
प्रतिजुह्वन्मन्यत औपवसथिकायै रात्रेः
सामिधेनीरनुवक्ष्यन्दशहोतारं व्याख्याय व्याहृतीरुक्त्वाथ
हिंकुर्यादथानुब्रूयादेतदत्रानुपूर्व्यं भवति
कथमु खल्वग्न्याधेय सोम इति
पूर्णाहुत्यन्तं क्रम कृत्वा
शालामध्यवस्येद्दीक्षणीयामाग्नेयोऽष्टाकपालोऽनुवर्तेत
प्रायणीयामैन्द्राग्नश्चादित्यश्च चरुरातिथ्यामग्नये पवमानाय
पुरोडाशोऽष्टाकपालोऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये शुचये
प्रातःसवनीयानन्वारम्भेष्टिरपि वा सर्वाण्येवाग्न्याधेयिकानि हवींषि
परिनिष्ठाप्य शालामध्यवस्येदुदवसानीयामन्वारम्भेष्टिरिति १७

अथेदं पुनराधेयं कियन्नु खलु पुनराधेयं भवतीत्यग्नीनाधाय
पापीयानभूवमज्याशिषि पुत्रो मे मृत इत्येतस्मिँस्त्वेवैतत्संवत्सरे दृष्टं भवति
कस्मिन्नु खल्वेनत्काले समुत्थापयेदिति
सा याषाढ्याः पौर्णमास्याः पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य
पुनर्वसुभ्याँ संपद्यते तस्यामादधीतेति
तस्या उपवसथेऽरण्योरग्नीन्समारोप्योदवसाय
मथित्वाग्नीन्विहृत्योद्वासन्येष्ट्येष्ट्वाग्नीन्समारोप्य गच्छेत्पुनरेतदग्न्यगारँ

सँस्कारयेदन्यद्वा नवं कारयेत्पुनरेतानि यज्ञपात्राणि संलेखयेदन्यानि वा नवानि कारयेत्
पुनर्निष्कृतो रथो दक्षिणेति पुनःसँस्कृत एवैष उक्तो भवति
पुनरुत्स्यूतं वास इति पुनःसँस्कृतमेवैतदुक्तं भवति

पुनरुत्सृटोऽनड्वानित्यवशीर्णगव एवैष उक्तो भवत्यथेमान्युपाँशुधर्माणि भवन्ति यथैतदग्न्याधेयं पुनराधेयं पितृयज्ञो दीक्षणीया
प्रायणीयातिथ्योपसदः प्रातरनुवाकः पत्नीसंयाजा अवभृथ
उदयनीयोदवसानीया चितिप्रणयनीयं त्वाष्ट्रो यूपविरोहणीयोऽष्टापदी गर्भवती च
सहकारिप्रत्यया भवन्ति
यथो एतद्बौधायनस्य कल्पं वेदयन्ते १८

सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधातीत्यपोद्धत्य घर्मशिर एतस्य स्थाने सर्पराज्ञीरावपेद्नित्येनोपस्थाय पौनराधेयिकेनोपतिष्ठेत
सिद्धमत ऊर्ध्वम्
ईजानस्य पुनरादधानस्य संनये३न्न संनये३दिति
संनयेदित्येक आहुरथ हैक आहुर्न संनयेदिति
शरीरसँस्पर्शी ह यज्ञो भवति यदैव पुनर्यजेताथ संनयेद्
शताक्षरा भवन्तीत्यक्षरपङ्क्त्य एताश्चतस्र एकैका पञ्चविँशत्यक्षरा तच्छतम्
अथेदं तृतीयाधेयं कतरन्नु खल्विदमुपनिश्रयतीत्यग्न्याधेयं वा पुनराधेयं वेत्यग्न्याधेयमित्येव ब्रूयादथापहृताग्नेर्नष्टारणीकस्य च ब्रह्मौदनेनैव प्रतिपद्यते
सिद्धमग्न्याधेयम् १९

अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासँस्थावाचार्या ब्रुवते
तत्रोपदाहरन्त्यूर्ध्वं मध्यरात्रात्पौर्णमास्यां चन्द्रमाः पूर्यते
स एतं चापररात्रं पूर्णा भवति सर्वं चाहरुत्तरस्याश्च रात्रेरा मध्यरात्रादथामावास्याया उपवसथीयेऽहन्यूर्ध्वं मध्यंदिनाच्चन्द्रमसमादित्यो

लभते
स एतं चापराह्णं लब्धो भवति सर्वां च रात्रिमुत्तरस्य चाह्न आ मध्यंदिनादेतँ सन्धिमभियजेतेति
रात्रिर्ह पौर्णमास्याँ संधेया भवत्यहरमावास्यायां द्वे पौर्णमास्यौ द्वे अमावास्ये पूर्वांपूर्वं पौर्णमासीमुत्तरामुत्तराममावस्यां या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्
गायत्री वा अनुमतिस्त्रिष्टुग्राकेति पौर्णमास्यै नामधेये जगती सिनीवाल्यनुष्टुप्कुहूरित्यमावास्यायै नामधेये २०

अथायं चन्द्रमाः षोडशकलस्
तस्य पञ्चदशभिः पक्षोऽभिविहितो भवति
षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति
स यदेतानि यज्ञे क्रियन्ते तेनैषा संभ्रियतेऽथोपवसथस्यानानि चतुर्दशी पञ्चदशी षोडशी
न तु त्रयोदशी सप्तदशी भवतः
सोऽयमाहिताग्निरुपवसथीयेऽहन्पुरा प्रातरग्निहोत्रात्पिङ्क्ष्यानुपसादयेदन्वाधानार्थान्
व्रतोपायनीयं पाचयीत
तस्याशितौ भवतः
सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिशितं सर्वमेवैतदहः कौशीधान्यं वर्जयेदन्यत्र तिलेभ्यस्
तस्य ब्राह्मणं प्रतिपाद्याश्नीयाद्
नैतदहः शूद्रायोच्छिष्टं दद्यात्
पत्न्या एवैतदहरुच्छिष्टं दद्याद्नासन्द्याँ शयीत न स्त्रियमुपेयात्
कामं त्वेवोपरि शयीत स्त्रियं त्वेव नोपेयाद्व्रतचारी त्वेव स्यात्
स यदि केशश्मश्रु वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सँहृत्य नखानि निकृन्तयीत
स्नायादभ्यञ्जीताञ्जीत
दीक्षायै रूपं कुर्वीताग्नीनन्वादध्यादुपस्थं कृत्वा

गार्हपत्यमूर्ध्वज्ञुरन्वाहार्यपचनं प्रह्व आहवनीयं तिष्ठन्दशमीं निगदेदिति २१

अन्वाहिताश्चेदग्नय उद्वायेयुः सवनीयं गार्हपत्यस्याहवनीय उद्वाते भस्मोद्वाप्य
शकृत्पिण्डेन परिलिप्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय
पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ यदन्वाहार्यपचन उद्वायेदेवमेवैनँ
हरेदनार्ता ह्येषा देवता यदन्वाहार्यपचन इति
पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ यस्याग्निमनुद्धृतँ
सूर्योऽभ्यस्तमियाद्वाभ्युदियाद्वा यथासूत्रं वा कुर्यादपि वा संतनीं जुहुयाद्यनो
ज्योतिर्जुषतां त्रयस्त्रिँ शत्तन्तव इत्येते स्रुवाहुती हुत्वा
व्याहृतीभिरुपतिष्ठेताथाभ्यस्तमिते वारुणीँ स्रुवाहुतिँ हुत्वा
व्याहृतीभिरुपतिष्ठेताथाभ्युदिते मैत्रीँ स्रुवाहुतिँ हुत्वा व्याहृतीभिरुपतिष्ठेत
व्याहृतीभिरेवान्वाहार्यपचनम्
अथारण्योरग्निषु समारूढेष्वात्मनि वाध्वगते न प्रायश्चित्तमाचार्या ब्रुवते

तत्रोदाहरन्ति काममात्मनि समारूढेष्वरण्योरुपावरोह्य मन्थेदपि वामात्यं
विहृत्य तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य
जुहुयादपि वामात्यं विहृत्याग्नीनन्तरारणी निधाय जुहुयात् २२

यथा राजविशामेवं निर्मन्थ्यो वृथाग्नेस्
तत्सिद्धमेके ब्रुवते
यावति कृष्णमृग उपविशेत्तावदवरार्धोऽध्वगतो
विहारोऽग्नीनन्वादध्याद्व्रतमुपेयाद्व्रतोपेतस्य
पर्णशाखामाच्छेयादेतदत्रानुपूर्व्यं भवत्य्
त्रीणि पलाशजातानि भवन्ति श्लक्ष्णको लोमशको व्रततिरिति
लोमशकस्यैवैषा छेत्तव्या भवति
यावन्मात्रे गौर्निकर्षेत न तत ऊर्ध्वं छिन्द्यादपशव्यात ऊर्ध्वँ स्यात्
स यद्यु हाग्निहोत्रोच्छेषणात्प्रमाद्येत्तत्पुनरेवाग्निहोत्रं जुहुयादथेमाः
सांनाय्यदुहः षडवमाः समाम्नाता भवन्ति
ताश्चेत्तिस्र एव स्युः प्रथमां वोत्तमां वा चतुर्विगृह्णीयादथ चेद्द्वे एव
स्यातामितरेतरां त्रिस्त्रिर्विगृह्णीयादथ चेदेकैव स्यात्तामेव षट्कृत्वो

विगृह्णीयात्
विसृष्टवागनवारभ्योत्तरा दोहयेदित्यपरिमितानामेवैतदुक्तं भवतीति २३

द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्
तानि संपाद्यानीति
स्फ्यश्च कपालानि चेति पञ्च
वत्सं चोपावसृजत्युखां चाधिश्रयतीति सप्त
तानि द्वादशामावास्यायामेवैतत्संनयत उपपद्यते नासंनयतेऽथेयं
दार्शपौर्णमासिकी वेदिर्यजमानमात्री भवत्यपरिमिता वा
यथासन्नानि हवींषि संभवेदेवं तिरश्ची
प्राञ्चौ वेद्यँ सावुन्नयत्याहवनीयस्य परिगृहीत्यै
प्रतीची श्रोणी निरूहति गार्हपत्यस्य परिगृहीत्यै
पुरस्तादँ हीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवतीत्येवमिव हि योषेति
तस्यै वदतीयतीं खनति प्रजापतिना यजमानमुखेन संमितामा प्रतिष्ठायै
खनतीति
द्व्यङ्गुलं खेयेत्येकेषां त्र्यङ्गुलं खेयेत्येकेषां चतुरङ्गुलं खेयेत्येकेषां
सीतामात्रीत्येकेषां रथवर्त्ममात्रीत्येकेषां यावत्पार्ष्ण्यै श्वेतमित्येकेषाम्
एतदेव सदन्येषामनुनिक्रान्ततरं भवति
नैता मात्रा अतिखनेद्दक्षिणतो वर्षीयसीं करोति
पुरीषवतीं करोति
प्राचीमुदीचीं प्रवणां निस्तिष्ठन्तीतीयन्तं गृह्णातीति प्रस्तरस्य वदति २४

संनखमात्रो ग्रहीतव्य इत्येकेषाम्विशारुको ग्रहीतव्य इत्येकेषां
स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषां स्रुवदण्डमात्रो ग्रहीतव्य इत्येकेषाम्
उर्वस्थिमात्रो ग्रहीतव्य इत्येकेषाम्
अङ्गुष्ठपरुषा संमितो ग्रहितव्य इत्येकेषाम्
अपरिमितो ग्रहीतव्य इत्येकेषाम्
इयतीर्भवन्तीति समिधां वदति
प्रादेशमात्रीरेवैता उक्ता भवन्त्यनेन संमिताः कार्या इत्याहुरनेन ह्यग्रे
प्रजापतिः प्रजा असृजतेति

किंदेवत्ये उ खलु पवित्रे किंपूते भवत इति
वैष्णवी वायुपूते इत्येव ब्रूयादनखच्छिन्ने स्याताम्प्रणीताः प्रणयन्ननयापः
प्रणयामीति पृथिवीं मनसा ध्यायेत्
समान्येतानि कुर्यात्प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति यज्ञस्य शिर
इत्येतदाचक्षते
किंप्रोक्षिता उ खलु प्रोक्षिण्यो भवन्तीति
विज्ञायते ब्रह्मवादिनो वदन्त्यद्भिर्हवींषि प्रौक्षीः केनाप इति
ब्रह्मणेति
ब्रह्मप्रोक्षिता एव भवन्ति
हविष्कृदेहीति ब्राह्मणस्य वदति हविष्कृदागहीति राजन्यस्य
हविष्कृदाद्रवेति वैश्यस्य
हविष्कृदेहीति पर्जन्य एवैष उक्तो भवत्यथाप्युदाहरन्ति
हविःसँस्कारीमेवैतदाहेति
दृषदुपले वृषारवेणोच्चैः समाहन्तीति
विज्ञायते ब्राह्मणमुच्चैः समाहन्तवयाह विजित्यै

यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति ते पराभवन्तीति
द्विर्द्विर्दृषदि सकृत्सकृदुपलायां नवकृत्वः संपादयतीति विज्ञायते २५

अपाग्नेऽग्निमामादं जहीति
को नु खल्वामाद्भवतीत्यपराग्निरेवैष उक्तो भवति
निष्क्रव्यादँ सेधेत्यादहनाग्निरेवैष उक्तो भवत्या देवयजं वहेत्याहवनीय
एवैष उक्तो भवति
को नु खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयाद्विज्ञायते यदग्ने
कव्यवाहन पितॄन्यक्ष्यृतावृध इति
कुतो नु खलु पिष्टानि संवपेत्कृष्णाजिनादित्येव ब्रूयात्
संवपन्पिष्टानि वाचं यच्छति
तामविदहन्तः श्रपयतेत्येव वाचं विसृजते
यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेव इति
साधुशृतँ श्रपयतीत्येवेदमुक्तं भवति

सं ब्रह्मणा पृच्यस्वेति
विज्ञायते वाग्वै ब्रह्म वाचैवैनमेतत्संपृणक्ति
क्व उ खलु हविः पृक्तँ श्रप्यत इति
यदैवैतदाप्त्येभ्यो निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेति

को नु खल्वेकतः को द्वितः कस्त्रित इति
पिता पितामहः प्रपितामह इत्येके
पृथिव्यन्तरिक्षं द्यौरित्येकेऽग्निरादित्यो वैद्युत इत्येके २६

अग्नेस्त्रयश्रो ज्यायाँ सो भ्रातर आसन्नित्येक ऋषय एतन्नामधेया बभूवुरित्येके
ते देवा आप्त्येष्वमृजतेत्याप्त्यनामधेया देवा भवन्ति
क्व उ खलु पौर्णमास्यां पितृभ्यो दीयत इति
यदेवैतच्छ्रोरायोर्निनयतीति
किमभिघारितं नु खल्वाज्यं भवतीति
सत्याभिघारितमित्येव ब्रूयाद्विज्ञायते सत्येन त्वाभिघारयामि तस्य ते
भक्षीयेति
पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामीत्यनुदिशं वाता विष्वग्वात
एवैषां पञ्चमो भवति
पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामीति हेमन्तशिशिरावत्र समासं गच्छतः
पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामीतीयमेवासामूर्ध्वा दिक्पञ्चमी भवति
पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति देवा मनुष्या असुरा
राक्षसा गन्धर्वा एवैषां पञ्चमा भवन्ति
चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामीत्ययमेवैष आकाशश्चरुः
पञ्चबिलो भवति

दिशोऽस्य पञ्च बिलानि भवन्ति वायुर्मेक्षणमित्यत्राप्युदाहरन्ति संवत्सर
एवापि चरुः पञ्चबिलो भवत्यृतवोऽस्य बिलानि भवन्ति वायुर्मेक्षणमिति
२७

अथाध्वर्योश्च होतुश्च प्रपदनम्

अन्तरेण वेद्युत्करौ प्रागावृत्तोऽध्वर्युः प्रपद्यते प्रत्यगावृत्तो
होताध्वर्युरनन्तरोऽग्नेः स्यादार्षेयमसंप्रजानानस्य प्रवरं ब्रूहीति
मनुष्वद्भरतवन्मनुवदित्येव ब्रूयाद्विज्ञायते मानव्यो हि प्रजासिति
ब्राह्मणम्पुरोहितप्रवरो वा
राज्ञोऽथाप्रज्ञातबन्धुराचार्यामुष्यायणमनुब्रवीताचार्यप्रवरमु हैव प्रवृणीताथ
होतारं प्रवरयेत्
पयसा दैवतमभिवर्धयेद्द्ध्वा स्विष्टकृतं व्यतिषज्यैवाङ्गुली
अवद्येदङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि भवन्ति ज्यायाँ सि
सौविष्टकृतान्यैडानि च
चतुर्धाकरणानि ब्रह्म प्रतिष्ठेति
हुत्वा स्विष्टकृतँ स्रुचमद्भिः पूरयित्वान्तःपरिधि निनयेद्वैश्वानरे हविरिदं
जुहोमीति

किमु खल्वसमुदितं भवतीति प्रागानूयाजिकात्संप्रैषादित्येव ब्रूयात् २८

किंदक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध
इत्युपदोहदक्षिणमग्निहोत्रमित्येके
शरावदक्षिणमग्निहोत्रमित्येके
यत्सायं जुहोति रात्रिमेव तेन दक्षिणयां कुरुते
यत्प्रातरहरेव तेन दक्षिणयं कुरुते
यत्ततो ददाति सा दक्षिणेति
यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवत्यथ दर्शपूर्णमासयोरन्वाहार्यश्च
पुरोडाशस्य च चतुर्धाकरणम्विज्ञायते दक्षिणैवास्यैषाथो यज्ञस्यैव
छिद्रमपिदधातीति
यथैवादः सौम्येऽध्वर आदेशमृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि दक्षिणं
पुरोडाशं चतुर्धाकृत्वा बर्हिषदं करोति
वासोदक्षिणाः काम्या इष्टयो या अनादिष्टदक्षिणा गोदक्षिणः पशुबन्धो
नित्योऽन्वाहार्यो यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नीसंयाजेषु सर्व
एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनभ्यावृत्यैवात्र फलीकरणहोमो होतव्यो
भवत्यथ हैके राकां च सिनीवालीं च कुहूं चानुमतिं च पत्नीहोमं च नारिष्ठौ

च होमौ पुरस्ताद्गृहपतेरुपजुह्वति सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम्। संजानानौ विजहतामरतीर्दिवि ज्योतिरजरमारभेताँ स्वाहा ॥

दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्स्वाहा ॥
यं वां देवा अकल्पयन्नूर्जो भागँ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमँ हहौ स्वाहेति २९

अथेदमग्निहोत्रँ सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते
तत्रोदाहरन्ति ज्योतिषी इमे संनिपतिते भवत आदित्यस्य चाग्नेश्च
ते न व्यवेयात्
सायमाहवनीयमुद्धरन्पुरस्तात्प्रत्यङ्मुखो
निवपेत्प्रातराहवनीयमुद्धरन्पश्चात्प्राङ्मुखो निवपेत्
सायमग्निहोत्रँ होष्यन्नग्रेण परीत्य जुहुयात्प्रातरग्निहोत्रँ होष्यन्नपरेण परीत्य जुहुयादेवमस्यैते ज्योतिषी अव्यवेते भवतोऽथायमुद्धरणमन्त्रो वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाँश्चकार । अह्ना यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति सायं रात्रिया यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातर्
अग्निं निदधात्यमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयानन्तं काममितो जयेम प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहेति सायं
सूर्यमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहेति प्रातर्
एतद्ध वा अग्नेरग्निहोत्रं
पयोहोत्रमितरधोष्यन्यथाहितमग्नीन्परिषिञ्चेद्धुत्वाहवनीयमेवैकं
परिषिञ्चेधोष्यँश्चैव हुत्वा चाहवनीयमेवैकं परिषिञ्चेद्नैव
परिषिञ्चेदित्येतदपरम्
अथेदं परोक्षोपस्थानं भवतीहैव सन्तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीद्ज्योतिषा वो वैश्वानरेणोपतिष्ठ

इत्यथेमाँ समिधं प्रवसतस्तूष्णीमभ्यादध्यात्
प्रवसन्याजमानं कुरुते  ३०

अथेमँ समस्तहोमं यायावरधर्मेण विद्यमानमाचार्या ब्रुवते
तत्रोदाहरन्ति यायावरा ह वै नार्मषय आसंस्तेऽध्वन्यश्राम्यंस्ते
समस्तमजुहवुस्
तस्माद्यायावरधर्मेणाध्वनि समस्तँ होतव्यं तस्यानिमित्तो होमः
संवेशनेन वा निमीलनेन वोपसमाधानेन वान्तर्दध्याद्न शूद्रगव्या अग्निहोत्र
जुहुयान्नाहितायै न मृतवत्सायै न वहलायै न वाहिन्यै न वान्यायै न
वान्यवत्सायै नानुदेश्यप्रतिगृहीतायै नानुस्तरणीप्रतिगृहीतायै

नैकस्यै दुग्धेन बहवो जुहुयुर्न बह्वीनामेवैको दुग्धं लभमानस्योपसादनप्रभृति
स्कन्नानुमन्त्रणं भवति
दीप्यमानेष्वहूयमानेषु यावन्त्यग्निहोत्राण्यभ्यतिक्रान्तानि स्युस्तानि
प्रतिसंख्याय प्रतिजुहुयात्
स यद्यनस्तमिते जुहुयात्पुनरेवास्तमिते जुहुयादथ यदि महारात्रे
जुहुयात्पुनरेवौषसं जुहुयादिति  ३१

कथमु खलु जीवपितुः पिण्डदानं भवतीति
येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति
द्वाभ्यां जीवपिता ददात्येकस्मै जीवपितामहो ददाति
न जीवन्तमतिदद्यादित्येके
पितृव्यस्य चेत्सगोत्रस्य दायमुपयच्छेत कथं तत्र पिण्डदानं भवतीति
यस्मिन्काले पित्रे पिण्डं ददाति तस्मिन्कालेऽस्य पिण्डं निपृणुयाद्
अथ चेदसगोत्रस्य दायमुपयच्छेत कथं तत्र पिण्डदानं भवतीति
स्वेभ्यो दत्त्वा प्रतिवेशं बर्हि स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यादपि वागार
एव स्थालीपाकँ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात्
कथमु खलु पुत्रिकापुत्रस्य पिण्डदानं भवतीत्येतत्तेऽमुष्यै तत मम पितामह
ये च त्वामन्वेतत्तेऽमुष्यै पितामह मम प्रपितामह ये च त्वामन्वेतत्तेऽमुष्यै
प्रपितामह मम प्रप्रपितामह ये च त्वामन्विति

प्रविदानकल्पेन वा दद्यात्स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा
पितृभ्योऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्य इति
पितुश्चेत्पितामहस्य प्रपितामहस्येति नामानि न जानीयात्कथं तत्र पिण्डदानं भवतीति
प्रविदानकल्पेन वा दद्यादपि वैतत्ते तत ये च त्वामन्वेतत्ते पितामह ये च त्वामन्वेतत्ते प्रपितामह ये च त्वामन्वित्युत्तर आयुषि लोम छिन्दीतेति
कस्मिन्नु खल्वेतत्काले छेत्तव्यं भवतीत्यूर्ध्वँ षट्षष्टिभ्यश्च वर्षेभ्योऽष्टाभ्यश्च मासेभ्य इत्येतस्मिन्नेवैतत्काले छेत्तव्यं भवतीति
कथमु खल्वनाहिताग्नेः पिण्डपितृयज्ञो भवतीत्यनिरुप्तँ स्थालीपाकँ श्रपयित्वाग्निमुपसमाधाय संपरिस्तीर्याहुतीर्हुत्वा दक्षिणेनाग्निं दक्षिणाग्रं बर्हि स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्याद्
अपि वागार एव स्थालीपाकँ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्याद्यज्ञोपवीत्येव प्राजापत्ययर्चैतमग्निमुपतिष्ठेतेति ३२

यथो एतद्बौधायनस्य कल्पं वेदयन्ते हविष्कृता वाचं विसृज्याज्यानीर्जुहुयात्कस्मिन्नु खल्वेनाः काले जुहुयादिति
प्रस्कन्दनान्तं कर्म कृत्वैतस्मिन्नेनाः काले जुहुयात्
कथमु खल्वनाहिताग्नेराग्रयणं भवतीत्यनिरुप्तँ स्थालीपाकँ श्रपयित्वाग्निमुपसमाधाय
संपरिस्तीर्याघारावाघार्याज्यभागाविष्ट्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयात्
कामं पुरस्तात्स्विष्टकृतोऽज्यानीरुपजुहुयात्
तस्यैतेनैव मन्त्रेण प्राश्नीयाद्भद्रान्नः श्रेयः समनैष्ट देवा इत्यपि वा श्रुतवतो ब्राह्मणस्य हुतोच्छेषणाल्लिप्सेत
समानः प्राशनमन्त्रः
कथमु खल्वन्तर्विराजं बहिर्विराजमन्तर्बर्हिर्विराजमिति जानीयाद्नित्येनोपस्थाय विराजक्रमैरुपतिष्ठेत प्रोष्य पुनरागम्य विराजक्रमैरुपस्थाय नित्येनैवोपतिष्ठेतैतेनैव बहिर्विराजमुक्तमन्तर्बहिर्विराजं चेति
सोऽधः संवेश्यमाँ साश्यस्त्र्युपायी प्रवसति

विपरीतनामधेय एष भवति

स स्विद्यथेदं प्रायश्चित्तं मध्ये पतितमाश्विनो द्विकपालस्तमन्तमेव परिणयेद्दीक्षणीयायां चेन्नश्येत्प्रायणीयामनुवर्तेत प्रायणीयायां चेन्नश्येदातिथ्यामनुवर्तेतातिथ्यायां चेन्नश्येदग्नीषोमीयस्य पशुपुरोडाशमुत्तरमुत्तरं तन्त्रमनुवर्ती स्यादथ चेदग्निदीक्षणीयायां नश्येत्कस्मिन्नु खल्वेनं काले निर्वपेदिति दीक्षाहुतीर्हुत्वैतस्मिन्नेनं काले निर्वपेदपि वा प्रागौद्ग्रहणाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते प्रवसतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य जुह्वामवधाय जुहुयात्प्रस्तरभूयं यजमानभागो गच्छतीति प्रवसतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेदिति ३३

अथायं पशुः सोपवसथस्
तस्य कः कर्मण उपक्रमो भवतीत्यजस्रैरग्निभिरुदवसाय षड्ढोतारँ हुत्वा यूपाहुतिँ हुत्वा यूपँ सयजुषं कृत्वा वेदिं विमाय व्रतोपायनीयमशित्वाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्योपवसेदथ प्रातराग्नेयेनाष्टाकपालेन यजेतेति नु बौधायनस्य कल्पो नाग्नीनन्वादध्यान्न व्रतमुपेयात्

पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीम्प्रणीते त्वौत्तरवेदिके मन्त्रेणोपविशेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्निकृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्
सिद्धमत ऊर्ध्वम्
अथ शालीकेररणयोरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्यैवमेव षड्ढो-तारँ हुत्वा यूपाहुतिँ हुत्वा यूपँ सयजुषं कृत्वा वेदिं विमायाग्नीनन्वादध्याद्व्रतमुपेयादिध्माबर्हिः संनह्येत्

पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीम्प्रणीते
त्वौत्तरवेदिके मन्त्रेणोपविशेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्निकृत्वा गार्हपत्य
आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिँ
हुत्वा स्फ्यहस्त प्राङेत्य स्तम्बयजुर्हरेत्
सिद्धमत ऊर्ध्वम् ३४

स्फ्यो यूपो भवतीति
कथमु खल्वस्य स्वरुरधिमन्थने यूपशकले इति
भवन्तीत्येतस्यैवावतक्षणायादपि वान्यस्य तज्जातीयस्य वृक्षस्य कुर्याद्
अचषाल एष भवति
प्रोक्षणप्रभृति मन्त्रान्साधयेदा परिव्ययणात्तृतीयवेलायां
परिव्ययेदेवमुपरसंमितायाम्पञ्चारत्निप्रभृतयः पाशुबन्धिका यूपा भवन्त्या
नवारत्नेर्नवारत्निप्रभृतय आग्निष्टोमिका यूपा भवन्त्यैकविँशत्यरत्नेस्
त्र्यरत्निश्चतुररत्निर्वा निरूढपशुबन्धस्य पालाशो यूपः
किमु खलु प्रवसतः पशुबन्धः सिध्यती३ न सिध्यती३ इति
सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति
लोकाग्नीन्खल्विमान्द्वितीयमग्न्याधेयं ब्रुवते
न तु खलु प्रवसतः पशुबन्धः सिध्यतीति ३५

कियन्नु खलु पशुबन्धे याजमानं भवतीति
व्रतोपायनव्रतविसर्जने यज्ञस्य पुनरालम्भ आज्यावकाशमु हैके ब्रुवत
उपप्रैषाश्रावण इति
किंदेवत्यं नु खल्विदं भवतीति
मृत्युदेवत्यमित्येव ब्रूयादथेमाः पशुबन्धे षट्प्रोक्षण्यस्तिस्रो ह
मन्त्रवत्यस्तिस्रस्तूष्णीका यवमतीरिन्द्रघोषवतीः पशुप्रोक्षणीरिति तूष्णीकाः
पशुपुरोडाशीयप्रोक्षणीः पात्रप्रोक्षणीरिध्माबर्हिःप्रोक्षणीरिति मन्त्रसँस्कृताः
पशुबन्धे चेदाज्यभागावुदाजिहीर्षेत्कस्मिन्नु खल्वेनौ काले यजेदिति

स्वाहाकृतिप्रैषेण चरित्वा प्राग्वपायै
पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोऽन्य
इत्यादित्यस्यैवैते रश्मयः प्राचीनाश्च प्रतीचीनाश्च भवन्त्यथायं पशुपुरोडाशस्
तस्य कः कर्मण उपक्रमो भवतीति
जघनेन गार्हपत्यँ स्फ्यं निदध्यात्
स्फ्योपरि पात्रीम्पात्र्यां व्रीहीनावपेद्शूर्पादानप्रभृति कर्मान्तस्तायत
आप्यनिनयनान्तो जघनेन गार्हपत्यमाप्येभ्यो निनयेत्
प्रोक्षणीशेषेण पुरोडाशीयानि पिष्टानि संयौयादेवँ सवनीयानां यथो
एतद्बौधायनस्य कल्पं वेदयन्ते ३६

निरवदायैवास्य स्विष्टकृतमिडामवद्येत्कथमत्र चतुरवत्तं भवतीत्युपस्तीर्य
पुरोडाशं द्वेधा कृत्वाभिधारयेदेवमस्य चतुरवत्तं भवत्यथ हैक आचार्या
एकादश धर्मान्पशुबन्ध उत्सादयन्त्यग्न्यन्वाधानं व्रतोपायनं पृष्ठ्यां प्रणीतां
याजमानमाज्यभागौ प्राशित्रं यजमानभागब्रह्मभागौ चतुर्धाकरणं
विष्णुक्रमानिति
कियन्नु खलु पशुबन्धे दर्विहोमा दृष्टा भवन्तीति
षड्ढोता यूपाहुति स्तोक्या दिशांप्रतीज्यौपयज इति
किंदेवत्या उ खलु मनोता भवतीत्याग्नेयीत्येव ब्रूयात्
किंदेवत्य उ खलु वनस्पतिर्भवतीति
वैष्णव इत्येव ब्रूयाद्विज्ञायते वैष्णवा वै वनस्पतय इत्यथाप्युदाहरन्ति यज्ञो
वै विष्णुरित्यथायं पशुः सार्वत्रैष्टुभो भवत्येकादश प्रयाजा एकादशानुयाजा
एकादशकपालः पशुपुरोडाश एकादशावदानान्येकादशोपयाजा इत्य्
यथो एतच्छालीकेः कल्पं वेदयन्तेऽरण्योरग्नीन्समारोह्योदवस्येत्ता चेत्तत्र
चेष्टन्तमादित्योऽभ्यस्तमियात्कथं तत्र प्रायश्चित्तँ सिध्यती३ न सिध्यती३ इति
सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति
यज्ञाभिपरीत एष आकाशो भवति
नैव सिध्यतीतीन्वा अयं पशुः सार्वत्रैष्टुभो व्याख्यातः ३७

अथातः काम्यान्पशून्व्याख्यास्यामः

को नु खल्वेषामुपाँशु भवतीति
य एवाश्वमेधिकाः प्राजापत्याः सावित्राः सारस्वताः पौष्णा याम्याः
पितृदेवत्या द्यावापृथिव्या वायव्याः सौर्या वैश्वकर्मणा इति
गर्भिणयो भवन्तीति कथमत्र प्रयश्चित्तँ सिध्यती३ न सिध्यती३ इति
सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीत्येतत्समृद्धय एता भवन्ति
नैव सिध्यतीत्यादित्यां मल्हां गर्भिणीमालभत इत्यृषिनामधेयमेवैतद्भवत्य्
अपन्नदती भवतीत्यहीनदतीत्येवेदमुक्तं भवत्यथेयं दशर्षभा संवत्सरमभि
विहिता
प्राजापत्य एवैषां कद्रुर्दशमो भवतीति
कथमत्र ब्रह्मचर्यँ सिध्यती३ न सिध्यती३ इति
सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति
संतिष्ठते
नैव सिध्यतीति
पर्यारिणी भवतीति
परिहारसूरित्येक आहुरथ हैक आहुरनुजैवैषोक्ता भवति
वेहदित्येतामाचक्षते ३८

सोमापौष्णं त्रैतमालभेतेति
त्रयाणामेवैष उक्तो भवत्यथाप्युदाहरन्ति यस्तिस्रो धयतीति
त्वाष्ट्रं वडबमालभेतेति
यमेवैतं पुमाँ सँसन्तमधिरोहति स वडबो विषम आलभेतेति
देवयजनं वा विषमँ स्याद्यस्मिन्वा पशुमालभेतापां चौषधीनां च
सन्धावालभत इत्युदकान्त इत्येक आहुरथ हैक आहुः प्रावृषि वा शरदि
वेति
यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतेति
प्रायणीये चेदतिरात्रे न दृश्येतारम्भणीयस्याह्नः सवनीयस्योपालम्भ्यं कुर्याद्
अथ चेदुदयनीयेऽतिरात्रे न दृश्येतैकाहिके वानूबन्ध्यस्योपालम्भ्यं कुर्युरपि
वोदवसायैवैतेन पशुना यजेरन्नितीन्वा इमे काम्याः पशवो व्याख्याताः ३९

पञ्चविंशः प्रश्नः

कथमु खल्व्यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो भवतीति
फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्याँ शुनासीरीयपरुषा यजेताथ
वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना
सोमेन वा यजेत कथं तत्र कुर्यादिति
प्रतिकृष्यैतस्य पद्मस्य शुनासीरीयपरुषा यजेताथैतेषामेकेन यजेताथ
वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेतेति
यथो एतद्बौधायनस्य कल्पं वेदयन्ते यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि
स्युरन्तर्मिथुनानि
प्रथमे त्वेव संवत्सरे व्रतं चरेदिति कथमत्रेष्टिपशुबन्धा इति
काममिष्ट्या कामं पशुबन्धेनेति
क्व उ खलु चातुर्मास्यानि समासं गच्छन्तीति
राजसूये च चातुर्मास्येषु च सोमेष्वित्येव ब्रूयादथाप्युदाहरन्ति द्वादशाहेऽपि
चातुर्मास्यैर्यजेत
वैश्वदेवेनेष्ट्वा चतुर्थ्यां वरुणप्रघासैरष्टम्यां च नवम्यां च साकमेधैर्द्वादश्याँ
शुनासीरीयपरुषा यजेतेति
विज्ञायते संवत्सरप्रतिमा वै द्वादशरात्रयो भवन्तीति
त्रिवृद्बर्हिर्भवतीति
तूष्णीकानि हान्तराणि भवन्तीति मन्त्रवदुहबाह्यम्
एतदेव सदन्यत्रेष्टिसंनिपाते विपरीतं भवतीति
क्व उ खलु करम्भपात्राणि प्रथमं मन्त्रं लभन्त इति

प्रोक्षण इत्येव ब्रूयात्
सह हविर्भिः करम्भपात्राण्यभिपर्यग्निकुर्यात्
किंदेवत्यानि नु खलु करम्भपात्राणि भवन्तीति
वारुणानीत्येव ब्रूयाद्विज्ञायतेऽन्यमेव वरुणमवयजत इत्यस्तं प्रेत सुदानव
इति गृहान्प्रेक्षेतेत्येवेदमुक्तं भवति
तौ व्यतिचारँ स्तम्बयजुषी हरेयातामितश्चामुतश्च यन्तं प्रतिप्रस्थाताध्वर्युं
परिगृह्णीयात्
सहनिरुप्तस्य प्रतिप्रस्थातापो निःषिच्याध्वर्योराज्यस्य
वाचयेदथेध्मयोरतिप्रणयनादादायाध्वर्युः स्वमिध्ममपक्रम्यैव तिष्ठति १

अथायं प्रतिप्रस्थातान्तरेणेध्मं चाहवनीयं चोपातीत्य स्वमिध्ममाददीत
तावपसलैः पर्यावृत्येध्मौ हरेयाताम्
अथामुतः प्रदक्षिणमावृत्येध्मौ प्रतिष्ठाप्यैतेनैव यथेतमेत्य प्रतिनिर्वेष्टयते
प्रतिप्रस्थातान्तरेण वेदी प्राचीनमुपयमनीहारोऽथेमा अध्वर्योः प्रोक्षरायो
दक्षिणेन प्रतिप्रस्थातारं परिगृह्यासादयेदेवमेताभिरनभिपरिहृतो भवत्यथेयं
मारुती दक्षिणां वेदिं गच्छति सप्तमी हविषामधिश्रीयते
कथमेतयाव्यवेतानि भवन्तीति
प्रतिकृष्यैनामग्रेण दक्षिणेन हवींष्यनभिघारितामुद्वासयेदथैनां
पुनरधिश्रित्याभिघारितामुद्वास्यान्तर्वेद्यासादयेदेवमेतान्यव्यवेतानि
भवन्त्यथायं प्रतिप्रस्थाता मारुत्यै दैवतस्य
सकृदेवानुवाचयेत्सकृदाश्रावयेदथान्यत्राध्वर्योः कृतानुकारो भवतीति
तद्यदिहाश्रावयतीह यजतीति तत्प्रतिप्रस्थाता कृतानुकार एव भवत्यथेदं
मारुत्यै मेक्षणमग्रेणौत्तरवेदिकमग्निं परिगृह्यानुप्रहरेद्यथो एतदौपमन्यवस्य
कल्पं वेदयन्ते तुषैश्च निष्कासेन चावभृथमवेयादिति दैवतं प्रदाय स्विष्टकृतं
प्रयच्छेत्तुषान्संप्रकीर्योदकान्तं प्रत्यस्येत्

सिद्धमत ऊर्ध्वम्
अथायं गृहमेधीय आज्यभागप्रतिपत्केडान्तः संतिष्ठते
तत्र नास्ति प्राशित्रं तूष्णीँ
समक्ताञ्छाकलान्परिधीनग्नावनुप्रहरेदभिवान्यायामविद्यमानायाँ संधिनीक्षीरं
दोहयेदिति २

अथायं महापितृयज्ञस्
तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्याद्देवानां पितृणां परिषूतमसि देवपितृबर्हिर्मा त्वान्वङ्मा
तिरक्पर्व ते राध्यासमित्यपहतोऽररुः पृथिव्यै देवपितृयजन्या इत्यपहतोऽररुः
पृथिव्या अदेवपितृयजन इत्येवमेतेष्वधिकरणेषु कुर्याद्यत्र देवाश्च पितरश्च
संनिगच्छेयुः
पाणी संमृशीत

परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यँ स्फ्यं निदध्यात्
स्फ्योपरि पात्रीम्पात्र्यां व्रीहीनावपेद्शूर्पादानप्रभृति कर्मान्तस्तायत आप्यान्तो जघनेन गार्हपत्यमाप्येभ्यो निनयेद्विपरिक्रामन्त्येत ऋत्विजोऽध्वर्युरनन्तरोऽग्नेः स्यादथ यजमानोऽथ ब्रह्माथाग्नीध्रोऽपि वाग्नीध्र एवानन्तरोऽग्नेः स्यादथ यजमानोऽथ ब्रह्माथाध्वर्युर्
विपरिहरन्ति हवीँष्यग्रेण पुरोडाशं धाना जघनेन धानाः करम्भमित्येवं विपरिहृतानामेवैतेषाँ हविषामेकैकमुद्वासयेत्
क्व उ खलु त्रैयम्बका निरुप्यन्त इत्युद्वास्य हवींषि रुद्रायाम्बिकायै जुष्टं निर्वपामीति यस्य मन्त्रवन्तः
कायेति कायं निर्वपेत्
कायानुब्रूहीत्यनुब्रूयात्
कं यजेति यजेत्
क्व उ खलु त्रैयम्बकाणाँ सौविष्टकृतं भवतीति
यदेवातो मूत आसजतीत्यसमुदित ऋषभं ददातीति
महाहविषामेवैषोऽसमुदिते दातव्यो भवति
सर्वमेव याजमानं पितृयज्ञ उत्सीदेत्पशुबन्धे
सौम्येऽध्वरेऽन्यत्रतत्रोत्पत्तिवचनात्
सर्व एवाग्निर्याजमानोऽग्निचये सर्वमेवाग्न्याधेयच्छन्दो याजमानमग्न्याधेये
३

अग्निष्टोमेन यक्ष्यमाणः प्रज्यमात्मानं कुर्वीत
येनास्याकुशलँ स्यात्तेन कुशलं कुर्वीत
यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वा
स पुरस्तादेवोपकल्पयते प्रभूतं ऋणवँ शं पश्चाज्यँ स्थाल्यमत्रं कुम्बं च कुरीरं चेति

विदलमु ह कुम्बं भवति जालमु कुरीरं द्वादशशतं दक्षिणानाम्विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति

शतेन वीरं निरवदयते
दशभिर्दश प्राणान्यैकादशी तयात्मानं यैव द्वादशी सा दक्षिणेत्यथ हैक
एकविँशतिदक्षिणेन यजन्त एकविँशं यज्ञायज्ञियमिति वदन्तोऽथ हैके
सप्तगुना यजन्ते सोमक्रयण्यतिथिगव्यनूबन्ध्याश्चतस्रो मध्यतस्
तदपि दाशतये विज्ञायते प्र सप्तगुमृतधीतिं सुमेधामिति ४

अथातो देवयजनकल्पः
स एतद्देवयजनकल्पं जोषयते
पुरस्तादुदकमनूषरमनुपहितमविसृग्दार्यनिरिणमसुषिरमभङ्गुरमवल्मीकं
बहुलौषधि यत्रान्यान्यान्या ओषधयो व्यतिषक्ताः स्युः प्रागुदक्प्रवणं यथा
चात्वालसारिणीरापः स्युर्नातिप्रवणं यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं
न विन्देयुस्

तदेतां प्राचीनवँ शाँ शालां मापयन्ति
कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति
तासाँ संदर्शनेन मापयेदित्येतदेकं श्रोणासंदर्शनेन मापयेदित्येतदेकं
चित्रास्वात्योरन्तरेणेत्येतदपरं दिक्षवतीकाशा भवतीति
द्वाभिरेवैषा दिक्षवतीकाशा भवत्यथाप्युदाहरन्ति वँ
शानामेवातीकाशान्कुर्यादिति
द्वौ स्तोमौ प्रातःसवनं वहत इति
त्रिवृत्पञ्चदशौ प्रातःसवनं वहतः
पञ्चदशसप्तदशौ माध्यन्दिनँ सवनं सप्तदशैकविँशौ तृतीयसवनम्
एष एव सँश्चतुष्टोमो भवति
द्वादश हि स्तोत्राणि भवन्ति
यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तादेवैतत्त्रैविध्यगतेषु
देवयजनमध्यवस्येद्विज्ञायते सा वा इयँ सर्वैव वेदिरिति ५

अथेममाग्नावैष्णवमेके प्रागप्सुदीक्षायै ब्रुवत उपरिष्टाद्वा

क्व उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति व्युपनिधाय

संभारान्प्राक्पाणिसंमर्शनाद्न यजमानं व्रतमुपनयति न पत्नीँ
संनह्यतीत्यध्वरदीक्षायै व्रतं प्रणुदते
सर्वैवैषा व्रतोपायनीया भवतीष्टिरग्रमु पत्नीसंनहनं न यजमानभागं करोति न ब्रह्मभागमित्याशीःसंयोजनावेवैतावुक्तौ भवतः
किमुपक्रममाणो यज्ञमाशिषं वदेदित्यथापि सुभिक्षो व्रतोपायनीयस्य भवतीति
कस्मै किँ सुभिक्षायावद्येद्यजमानभागस्य खलूत्सादनाद्ब्रह्मभाग उत्सीदति संयुक्तौ ह्येतौ यजमानभागब्रह्मभागाविति
न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याचतीति
दक्षिणोक्तावेवैतावुक्तौ भवतोऽन्या उ खल्विह दक्षिणाः प्रतिख्याता भवन्ति न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ भवतः
किमुपक्रममाणो यज्ञमन्तं परिणयेदिति
न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान्क्रमत इत्यवभृथोक्तः खलु पूर्णपात्रो भवत्य्
अन्यः खल्विहावभृथः प्रतिख्यातो भवत्यन्तपरिक्रमिणो विष्णुक्रमाः
किमुपक्रममाणो यज्ञमन्तं परिणयेदिति ६

द्वादश वात्सबन्धान्युदयच्छन्निति
कतमानि खल्विमानि वात्सबन्धानि भवन्तीत्येता एव स्रुवाहुतीरन्यत्र स्वाहाकारादित्यथाप्युदाहरन्ति समानसंख्यानोऽग्निर्ऋचि तिस्रो देवतास्तानि द्वादशाथेदं कृष्णाजिनं नौरुक्तं भवत्याच्य जान्वेतत्पार्श्वत एवाभिसर्पेद्दक्षिणं प्रति रन्ध्रं यथा नावं नक्तं चेदमेध्यं पश्येदाहवनीयमेवैतेन यजुषोपतिष्ठेताथेमानि दैक्षाणि व्रतानि सायमुपक्रमाणि प्रातरपवर्गाण्यथौपसदानि प्रातरुपक्रमाणि सायमपवर्गाण्यथेदं दैक्षं व्रतं परिश्रित्यैव व्रतयेदाहवनीय एवैतत्पुराग्निहोत्रँ हूयते स मानुष्यास्यतीति ७

अथायं प्रायणीयस्
तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतँ स्यात्

पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यँ स्फ्यं निदध्यात्
स्फ्योपरि पात्रीम्पात्र्यां व्रीहीनावपेद्शूर्पादानप्रभृति कर्मान्तस्तायत आ प्रस्कन्दनात्
प्रस्कन्दनान्तं कर्म कृत्वाहवनीये स्रुवाहुतिँ हुत्वोपनिष्क्रम्य संप्रैषमुक्त्वाभिप्रपद्य तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदथाज्यं निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्
सिद्धमत ऊर्ध्वं शंय्वन्तः प्रायणीयः संतिष्ठते
को नु खल्वस्य कर्मणोऽवशेषो भवतीत्या स्रुचां विमोकाद्न चरुहविषामाप्यनिनयनं विद्यत इति
स्थालीभिश्चैव चरुं निर्वपेदिति नु बौधायनस्य कल्पः
किंदेवत्या उ खलु पदाहुतिर्भवतीत्याग्नेयीत्येके
वैष्णवीत्येके
प्राजापत्येत्येके
वाग्देवत्येत्येव ब्रूयात्
कृष्णायोर्णास्तुकया सोमविक्रयिणमन्तरेण भ्रूमके विध्यति
राजानं प्रत्यपोर्णुते यजमानः ८

वयः सुपर्णा उपसेदुरिन्द्रमित्येतयाथ यदि न सोमविक्रयी स्यादग्रेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं पलाशशाखायाँ समासज्योपासीताथ यदि कश्चित्प्रसवसंयुक्तं व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वा तद्राजानमाददीत
न संवादा आवर्तेरन्
स सोमविक्रयी स्यादथेयं प्रथमा सुब्रह्मण्योंकारान्तैवैषोक्ता भवत्यथायमातिथ्यस्
तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतँ स्यात्

पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेश्य दक्षिणमनड्वाहं
विमुच्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यँ स्फ्यं निदध्यात्
स्फ्योपरि पात्रीम्पात्र्यां व्रीहीनावपेद्शूर्पादानप्रभृति कर्मान्तस्तायत आ
प्रस्कन्दनात्
प्रस्कन्दनान्तं कर्म कृत्वोत्तरमनड्वाहं विमुच्य राजानं प्रपादयेत्
सिद्धमत्राग्निष्टोमिकं कर्म जानीयादा संप्रैषात्
कृष्णाजिनावधवनेनैवातिथ्यं प्रतिपद्यते
सिद्धमत ऊर्ध्वम् ६

स दर्भपुञ्जीलमुद्वृह्येति
कतरन्नु खल्विदं दर्भपुञ्जीलं भवतीति
यदेवैतद्गोदानयोर्निदधातीति
सप्त गिरीन्भित्त्वेति
कतमे नु खल्विमे गिरयो भवन्तीति
प्रयाजानूयाजा एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया
आतिथ्याया अग्नीषोमीयस्येत्य्
अथाप्युदाहरन्ति दीक्षणीया प्रायणीयातिथ्योपसदोऽग्नीषोमीयः सप्तम इति
यज्ञो देवेभ्यो निलायतेति
कतमो नु खल्वयं यज्ञो भवतीति
य एवैष इडान्त आतिथ्यः संतिष्ठते
तं देवा हस्तान्सँरभ्यैच्छन्निति
यदेवैतत्तानूनप्त्रँ समवमृशन्तीति
तमिन्द्र उपर्युपर्यत्यक्रामदिति
यदेवैतदुपसद्भिश्चरन्तीति
तमेभ्यो यज्ञ एव यज्ञमाहरदिति
कतमो नु खल्वयं यज्ञो यज्ञमाहरदिति
दीक्षणीया प्रायणीयातिथ्यैष एव यज्ञो यज्ञमाहरदिति
वराहोऽयं वाममोष इति

सुत्यमह्नां वर्षिष्ठं तद्यजमानं वामं वसु मुष्णातीति
के नु खल्वातिथ्यस्यानूयाजा भवन्तीत्युपसद इत्येव ब्रूयात्
किंदेवत्या उ खलूपसदो भवन्तीत्याग्नेय्य इत्येव ब्रूयात्
कथमु खलूपसदामुपक्रमो भवतीति
बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतँ स्यात्
पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्यदन्तीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं
निरुप्याधिश्रित्या पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्
सिद्धमत ऊर्ध्वं यथा प्रकृत्यामेवं प्रथमायामुपसदि स्रुचः सादयेद्
अभ्यूढा द्वितीयस्यामभ्यूढतरास्तृतीयस्यां संत्वरमाणा इवोपसद्भिः
प्रचरेयुर्नाकृतमाद्रियेरन्
समग्राङ्गुलिः स्रुवमादायास्यन्निवोपसदं जुहुयादिति १०

क्व उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादित्युद्वास्य प्रवर्ग्यं
प्रागाहवनीयस्य प्रणयनात्
सवनीयेभ्यश्च वत्सानुपाकुर्याद्व्यवच्छिन्न आहवनीये गार्हपत्ये
पदतृतीयमुपवपेदेवमुपयमनीष्वथेयमौदुम्बरी स्थूणा यजमानेन संमिता
कार्या भवत्यथायं यूपो यजमानस्यारत्निभिर्विमितो भवति
सहोपर इत्येकेऽत्रो हैवैतानि कुर्याद्यूपावटं तु परिलिख्य पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः
संमार्ष्टि
ता उत्तरवेदिँ हरन्ति प्रोक्षणीश्चाथ प्रतिप्रस्थाता
पत्नीमभिसंनह्येत्पौरोडाशिकेनाथैनां
गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्
पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजोऽनु
प्रेहीत्यथैनदाहवनीयेऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण
प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः

प्रसिद्धमाहवनीयसकाशे पृषदाज्यवन्त्याज्यानि गृह्णीतेति
सिद्धमत ऊर्ध्वं यथो एतच्छालीकैः कल्पं वेदयन्ते पत्नीशाल
एवाग्नीषोमस्याज्यानि गृह्णीयात्तानि खरे सादयेदिति
समन्वानीय वासमन्वानीय वा पुराणगार्हपत्यं पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि
ता अत्रैव सह सँसादयन्ति प्रोक्षणीश्च
न प्रतिप्रस्थाता पत्नीमभिसंनह्येत्पौरोडाशिकेन
नैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्
पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजोऽनु
प्रेहीत्यथैनद्गार्हपत्येऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण
प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धं
गार्हपत्यसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा ११

परिक्रमिभ्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छेत्
संप्रच्छन्नेषु स्रुवाहुती जुहुयात्
संप्रच्छन्नाश्चैव गच्छेयुराहवनीयाद्राजा दक्षिणार्ध्यः स्यादथाग्निरथ
ग्रावोवायव्यान्युत्तरार्ध्यान्याज्यान्यपि वाग्निर्दक्षिणार्ध्यः स्यादथ राजाथ
ग्रावोवायव्यान्युत्तरार्ध्यान्येवाज्यानि
पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधायाभिहुत्य
प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यतेऽन्वञ्च आज्यैराहवनीये
हुत्वेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय
पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः
प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं
विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं
प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिँ स्तृणीयाद्बर्हिषि विधृती
विधृत्योराश्ववालं प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरा एता असदन्निति
समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं

प्रपादयेदात्मानमभिपरिहरमाण इव

सिद्धमत ऊर्ध्वम् १२

क्व उ खलु शिल्पवदिध्माबर्हिरपवर्गं गच्छतीत्यग्नीषोमीय इत्येव ब्रूयात्
क्व उ खल्वग्नीषोमीयः सुत्यमहरनुसमेतीति
सद्यस्क्रियामित्येव ब्रूयात्
क्व उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति
सद्यस्क्रियामित्येव ब्रूयात्
का उ खलु देवता सुब्रह्मण्या प्रथमाहूयत इति
वागेव वाचमाह्वयतीति
क्व उ खलु पितापुत्रीया सुब्रह्मण्या प्रथमाहूयत इत्यग्नीषोमीयस्य हुतायां
वपायां परिहृतासु वसतीवरीषु द्वितीया
प्रातरनुवाके तृतीया
दक्षिणानामु ह काल एक आह्वयन्तीत्यथ यो वीडितः कुम्भस्तं याचतीति
दृढ इत्येवेदमुक्तं भवति
पयश्च सक्तूँश्च कुरुतेति श्रयणार्थे एवैते उक्ते भवतश्चतस्रो रशनाश्चतस्रो
वपाश्रपणीर्द्वयमिध्माबर्हिरिति सवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति
काश्चतस्र स्थालीर्वायव्याः
सोमग्रहणीरित्यादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली ध्रुवस्थालीत्यथेमानि
द्वादशोर्ध्वपात्राणि भवन्ति दधिग्रहपात्रमपाँ श्वन्तर्यामयोर्द्विदेवत्यानाँ
शुक्रामन्थिनोर्ऋतुपात्रे आदित्यस्थाल्या औपशयं पात्रमुक्थ्यस्थाल्या
औपशयं पात्रम्

अथेम एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य
ब्राह्मणाच्छँ सिनोऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुरिति
तेषां त्सरूणि सरूपाणि कारयेन्नैयग्रोधानाम्विज्ञायत उत्तरस्यां ततौ
यदत्सरुकैश्चमसैर्भक्षयन्ति न्यग्रोधचमसैरित्येतस्मान्नैयग्रोधा एव भवन्ति
रश्मिश्च म इत्यदाभ्य एवैष उक्तो भवत्यधिपतिश्च म इति प्राजापत्य एष
दधिग्रहो भवति

सारस्वतश्च मे पौष्णश्च म इति वसतीवरीरित्येक आहुरथ हैक आहू
राजसूयिक एष महाग्रहो भवति
पोषणादु ह पौष्णो भवति ग्रहणादु सारस्वत इति १३

अथेदं महारात्रिकं कर्म
तस्य कः कर्मण उपक्रमो भवतीति
हस्तपादान्प्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभि प्रपद्यन्ते
तेषां यथासंप्रैषं विहितानि कर्माणि
भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथैष आग्नीध्रः
पूर्वः पत्नीशालं द्रुत्वाग्नीनुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य
सँसाद्याज्यं विलाप्योपास्तेऽपरः प्रतिप्रस्थाता प्रोक्षणीः सँस्कृत्य पात्राणि
प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि
ता उत्तरवेदिँ हरन्ति प्रोक्षणीश्चाथाध्वर्युराग्नेय्यर्चा स्रुचोऽभिमृशति
संमृष्टानि द्विधा पात्राण्यभिमन्त्रयन्त इति
वायव्यया वायव्यान्यैन्द्र्या सदोऽथैष उन्नेता ग्रावोवायव्यँ संप्रक्षाल्य
द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षँ
सँसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र
इध्माबर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभिसंनह्येत्पौरोडाशिकेनाथैनां
गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्
पत्न्या तदेवेक्षितमुपयच्छीत तेजोऽसीत्यथैनच्छशलेनोपयत्य हरेत्तेजोऽनु
प्रेहीत्यथैनदाहवनीयेऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण
प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः
प्रसिद्धमाहवनीयसकाशे पृषदाज्यवन्त्याज्यानि गृह्णीते सिद्धमत ऊर्ध्वम् १४

अथ शालीकैरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि
भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथोपरमत्यथैष
आग्नीध्रः पूर्वः पत्नीशालं द्रुत्वाग्निमुपसमाधाया संपरिस्तीर्य पात्राणि
निर्णिज्य सँसाद्याज्यं विलाप्योपास्तेऽपरः प्रतिप्रस्थाता प्रोक्षणीः सँस्कृत्य
पात्राणि प्रोक्षेदाज्यं निरुपयाधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि
ता आग्नीध्रँ हरन्ति प्रोक्षणीश्चाथाध्वर्युराग्नेय्यर्चा स्रुचोऽभिमृशति

संमृष्टानि द्विधा पात्राण्यभिमृक्ष्यन्त इति
वायव्यया वायव्यान्यैन्द्र्या सदोऽथैष उन्नेता ग्रावोवायव्यँ संप्रक्षाल्य
द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षँ
सँसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र
इध्माबर्हिरुपसादयति
न प्रतिप्रस्थाता पत्नीमभिसंनह्येत्पौरोडाशिकेन
नैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्
पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजोऽनु
प्रेहीत्य्
अथैनदाग्नीध्रीयेऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धृत्वोत्तरेण प्रोक्षणीः
सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः
प्रसिद्धमाग्नीध्रीयसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य
उत्प्रदाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यतेऽन्वञ्च आज्यैरथेध्मं
प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं
गृहीत्वैकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः
प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती
प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे
खरस्य बर्हिर्मुष्टिँस्तृणीयाद्बर्हिषि विधृती
विधृत्योः प्रस्तरम्प्रस्तरे जुहूम्बर्हिषीतरा एता असदन्निति समभिमृश्य योगेन
युनक्ति
सिद्धमत ऊर्ध्वम् १५

किमग्निहोत्रो दीक्षितः किमौपसदः किम्प्रसुत इति
विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रो घर्मोच्छिष्टमौपसदस्योपाँश्वन्तर्यामौ
प्रसुतस्य
यो हानुदिते स सायमग्निहोत्रभक्तिर्य उदिते स प्रातरग्निहोत्रभक्तिः
किंदर्शपूर्णमास इति

विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दार्शं यज्ञमाग्नेयं
पशुमकुर्वतेति

यथो एतदौपमन्यवस्य कल्पं वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सकृदुपहितान्येव कपालानि स्युरा समभिवासनात्सँसृष्टं कर्म तायते
तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्यादपि वा व्यभिमृष्टानां पिरडानां परिशाययीतेतरयोः सवनयोर्यद्येककपालश्चिकीर्षितः स्यात्प्रातःसवनिकैरेव वर्तयेत्कृतान्तात्पौरोडाशिकं कर्म प्रत्याददीतेतरयोः सवनयोरनुसवनमङ्गाराध्यूहनेनैव कपालेषु प्रतिपद्येत
सिद्धमत ऊर्ध्वम् १६

यथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादित्युपर्यर्धँ होतृचमसं कृत्वेत्येतेनैवापि तृतीयेन वर्तयेत्
त्रयीरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं परिगृह्यापरया द्वारैकधनान् एतस्मिँश्च काले सर्वश एव मैत्रावरुणचमसीयाः पर्यस्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेकधनानाम्

एवमस्य प्राक्केवलः शुक्रो भवति
सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येत्यनिरुप्तस्यैवैष राज्ञो ग्रहीतव्यो भवति
का उ खलु देवताः प्रथमँ सोमं भक्षयन्तीत्याप इत्येव ब्रूयाद्विज्ञायत पहूताः सोमस्य पिबतोपहूतो युष्माकँ सोमः पिबत्विति

क्व उ खलु सोमस्य सोमपीथो भवतीति
विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्
तेषाँ संनिपतितानामानुपूर्वतेति
निग्राभ्यासु वाचयित्वादाभ्येन चरेदथोपाँशुसवनमाददीताथ राजानं निर्वपेत्
सिद्धमत्राग्निष्टोमिकं कर्म जानीयादा फलकयोरभिमर्शनात्

फलके अभिमृश्य पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाँ शूनुपसंगृह्णीयादथाँ शुना चरेदथोपाँ शुना
कालेऽन्तर्यामेण
सिद्धमत ऊर्ध्वम् १७

यथो एतद्बौधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इत्युपाँ श्वन्तर्यामयोश्च सँस्रावः संततश्च शुक्र एते द्वे प्रातःसवने
संततश्चैव शुक्र आग्रयणश्चोदचनेन च तृतीया माध्यंदिने सवन आदित्यस्थाल्यामतिशिष्टो राजादित्यग्रहस्य च सँस्राव आग्रयणश्चैवोदचनेन च चतुर्थी तृतीयसवने
संपूतँ राजानं त्रयेण श्रिणीयात्पयसा सक्तुभिर्हिरण्येनेति
स यं कं चन ग्रहं गृह्णात्युभयत उदबुध्नँ हिरण्यश्रयणमेवैनं करोति
तिष्ठता ग्रहा होतव्या अन्यत्र प्राजापत्याच्च मन्थिसँस्रावाच्चेति
यथो एतच्छालीकेः कल्पं वेदयन्ते द्रप्सानुमन्त्रणीयास्विति स्रुवाहुतीरेवैता जुहुयात्कस्मिन्नु खल्वेनाः काले जुहुयादिति
संतनीर्हुत्वैतस्मिन्नेनाः काले जुहुयादित्यथोन्नेतरित्याह प्राञ्चँ राजानं पूतभृतमभि संपवयताद्दशाभिराधवनीयं मृष्ट्वा न्युब्जतादित्युक्तसंप्रैष एष शेत आवकाशेभ्योऽवकाशैरुपस्थाय दशाभिरेवैनं मृष्ट्वा न्युब्जति १८

समानं कर्माश्विनाद्ग्रहादित्या धिष्णियव्याघारणसंपातादित्येष समुद्देशो भवति

कथमु खलु धिष्णियानां यथान्युप्तं व्याघारणं भवतीति
विभुवे प्रवाहणाय स्वाहेति व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिँसीरिति
सप्त वृणीत इति
होतैवैषाँ सप्तमो भवत्यहर्गण उत्तरेष्वहःसु प्रातःसवनिकं प्रसर्पणं कथँ स्यादित्याहवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत्स्फ्यविघनानामुपस्थानं
कथमु खल्वेषां विसँस्थितसंचरः स्यादित्यन्तरेण होतुश्च धिष्णियं

ब्राह्मणाच्छँ सिनश्च येऽधिष्णिया अथ धिष्णियवन्तः स्वँ स्वमेव
धिष्णियमुत्तरेण परिक्रामेयुरथेमावध्वर्यू अचमसौ भवतः
क्व उ खल्वेतयोर्भक्षो भवतीति
होतृचमस इत्येव ब्रूयात्
क उ खल्वृत्विजामेकाहे सोमं न भक्षयन्तीत्युन्नेता ग्रावस्तुत्सुब्रह्मण्य इत्येव
ब्रूयात्
क्व उ खलु सत्रे दीक्षिता भक्षयेयुरिति
नेष्टुश्चमस उन्नेता भक्षयेदच्छावाकचमसे ग्रावस्तुदुद्गातृचमसे सुब्रह्मण्योऽपि
वा सर्व एवाग्नीध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ तेषां य एवाग्नीध्रः
स ग्रावस्तुत्स सुब्रह्मण्यः स उन्नेतेति १९

यथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव
सवनीयानुद्वासयेत्पुरोडाशस्यैवैषोऽलङ्कारो दृष्टो भवति

मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना दक्षिणतः करम्भं
पश्चात्परिवापमामिक्षामुत्तरतः
कथमु खल्वेषाँ संचरी स्यादिति
प्रज्ञातो हविष्पथोऽथापरम्पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण
कर्तॄन्जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्यान्यस्मै
प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं
पर्याहृत्यान्तर्वेद्यासादयेदध्वर्युश्चेद्धविर्धानं प्रपन्नः स्यादुपनिष्क्राम मा
त्वाभिपरिहारिषमित्येव ब्रूयाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते
द्विदेवत्येषूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्य प्रयच्छतीति यदाध्वर्युः
पुरोडाशान्प्रत्यङ्हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्थातारं
परिगृह्णीयाद्ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्तेऽपरेण
परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छतीति

हुत्वा व्यवनीय प्रदक्षिणमावृत्य प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादथाध्वर्युः
प्रतिप्रस्थातारं प्रत्यङ्द्रवन्पात्रेण
सिद्धमत ऊर्ध्वम्

अथेमे द्विदेवत्या अननुवषट्कारा भवन्ति
क्व उ खल्वेषामनुवषट्कारो भवतीति
विज्ञायते द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः । आदित्यग्रहसावित्रौ
तान्स्म मानुवषट्कृथा इति
यथो एतदौपमन्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु
दीर्घभक्षेणैवैनान्भक्षयेद्भक्षेहि माविशेति प्रतिपद्य क्रत्वे दक्षाय रायस्पोषाय
सुवीरताया इत्यातः
प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे हर्दि त्विषा वधीः । वृषणे
शुष्मायायुषे वर्चस इत्यथानुसवनभक्षेणैव सवनमुखीयान्भक्षयेदिति २०

क्व उ खलु वसतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति
विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके ह शस्त्रभक्तिः
क्व उ खलूपाँश्वन्तर्यामयोर्द्विदेवत्यानाँ स्तोत्रशस्त्रभक्तिर्भवतीति

यदुपाँशु शँसति तदुपाँश्वन्तर्यामयोः
प्रौग उक्थे द्विदेवत्यानाम्
अथायं प्रतिप्रस्थातर्तुग्रहेष्वध्वर्योरुत्तरतःसेवी भवतीतश्चामुतश्च यन्तं
प्रतिप्रस्थाताध्वर्युं प्रैगृह्णीयादथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ्द्रवन्पात्रेण
सिद्धमत ऊर्ध्वं किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता इत्येतदेकम्
अथापरम्
इन्द्रँ होता यजति
मरुतः पोता यजति
ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छँसी यजति
मित्रावरुणौ मैत्रावरुणो देवं द्रविणोदां चत्वारोऽश्विनाध्वर्यू अध्वर्यू
अग्निं गृहपतिं गृहपतिः
क्व उ खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति
बहिष्पवमान इत्येव ब्रूयाद्ये के चन ग्रहा अस्तोत्राः पवमान एव तेषाँ
स्तोत्राणि भवन्ति
क्व उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति
क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्

क्व तृतीयसवनीयामाहिन्द्रस्य स्तोत्र इत्येव ब्रूयात् २१

नाराशँ समुपदस्तँ हुतादेवैनँ होतृचमसाद्गृह्णीयाद्
द्विनाराशँ सं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशँ सं तृतीयसवनं
चत्वार्युन्नीयमानसूक्तानि भवन्तीति
सवनमुखेषु चाच्छावाकचमसे च
त्रयो दीर्घभक्षाः
क्व उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति
दधिघर्म इत्येव ब्रूयात्
किमुपसदां सौम्यस्य परीज्येति
तिरश्चर्मन्फलके ग्राव्णोद्वादयतीति
शुष्काभिषव इत्येतदाचक्षते
कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयाद्महाँ इन्द्रो य ओजसेत्येतया
गायत्र्या माहेन्द्रं गृह्णीयादथ बृहत्पृष्ठे महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया
त्रिष्टुभा माहेन्द्रम्
अथोभयपृष्ठे यया पृष्ठं तया गृह्णीयात्पुरोरुचमितरां कुर्यादिति २२

कथमु खलु सवनीयस्य पशोश्चर्याया उपक्रमो भवतीतीडसूनँ सँस्तीर्य
पृषदाज्यं विहत्य जुह्वाँ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य
संवदेताभिघारयेदासादयेत्पशुं पञ्चहोत्रा चतसृभूपस्तृणीते
मनोताप्रभृतिनेडान्तेन चरेत्
सिद्धमत ऊर्ध्वम्
अथोक्थ्यविग्रहेषु य एव प्रातःसवनिको ग्रहणमन्त्रः स एव माध्यंदिनीयः स
तृतीयसवनिको
देवतामेव व्यञ्जयेद्चमसायचमसायैव त्रींस्त्रीन्पुरोडाशशकलानुपास्येन्नव
होतृचमस इति
त्रयाणामेवैष उक्तो भवत्यथायमाग्रयणस्त्रयस्त्रिँ शतो देवतानां गृह्यते
क्व उ खल्वेताः प्रदाने विज्ञायन्त इति
पात्नीवते
विज्ञायते पत्नीवतस्त्रिँ शतं त्रींश्च देवानिति

कथमु खलु पात्नीवतं भक्षयेदादित्यवद्गणस्य सोम देव ते
मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दसोऽग्निना वैश्वानरेण पत्नीवता
त्वष्ट्रा पीतस्य मधुमत उपहूयस्योपहूतो भक्षयामीति २३

कथमु खल्वन्तरुक्थ्यो भवतीति
प्रसिद्धं तृतीयसवन आग्रयणं गृहीत्वोक्थ्यं गृह्णीयादथैनं ध्रुवमुपस्थाप्य
त्रिषूर्ध्वपात्रेषु विगृह्णीयातुपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य
उक्थायुवं यज्ञस्यायुष इन्द्रावरुणाभ्यां जुष्टं गृह्णामीति
पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
परिमृज्य सादयत्येष ते योनिरिन्द्रावरुणाभ्यां त्वेति
तदानीमेवापरं गृह्णात्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य
उक्थायुवं यज्ञस्यायुष इन्द्राबृहस्पतिभ्यां जुष्टं गृह्णामीति

पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
परिमृज्य सादयत्येष ते योनिरिन्द्राबृहस्पतिभ्यां त्वेति
तदानीमेवापरं गृह्णात्युपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य
उक्थ्यायुवं यज्ञस्यायुष इन्द्राविष्णुभ्यां जुष्टं गृह्णामीति
नात्र पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति
दशाभिरेवैनां मृष्ट्वा न्युब्जति
परिमृज्य सादयत्येष ते योनिरिन्दाविष्णुभ्यां त्वेत्यथैनान्ध्रुवेऽवनीय
होतृचमसेऽवनयेत्
स्तोत्रे स्तोत्राण्यावपेच्छस्त्रे शस्त्राणि
तस्य प्रत्तस्य भक्ष इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना
वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्येतेनैव वा
भक्षयेदपि वा नित्यपूर्वेणादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य
सवनस्य जगतीच्छन्दस
इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः
पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति
यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तान्मिन्दाहुती जुहुयाद्मिन्दाहुती
हुत्वा हारियोजनं ग्रहं गृह्णीयादित्यथ हैके चात्वालदेशेऽवभृथं निधाय दध्ना

पयसा मधुमिश्रेण नैष्टयनैर्ऋजीषमभिजुह्वति यत्ते ग्राव्णा चिच्छिदुः सोम राजन्नित्य्
अवभृथयजूँषि जुहोतीति
कतमानि खल्विमान्यवभृथयजूँषि भवन्तीति
यदेवैनदाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसोऽवयजनमसि
मनुष्यकृतस्यैनसोऽवयजनमसि
पितृकृतस्यैनसोऽवयजनमसीत्यवभृथाहुताविति
कतमा उ खल्वियमवभृथाहुतिर्भवतीत्यप उद्गृह्य जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेति
तिष्ठन्त एवावभृतेन प्रचरेयुः
पराङावृत्तः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम् २४

अथायमुदयनीयस्
तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्यात्
पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेद्ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यँ स्फ्यं निदध्यात्
स्फ्योपरि पात्रीम्पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति क्रमान्तस्तायत आ प्रस्कन्दनात्
प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदथाज्यं निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौपसदायां वेद्याँ स्तम्बयजुर्हरेत्
सिद्धमत ऊर्ध्वं तस्य शृतस्यासादनं दक्षिणं परिधिसन्धिमपरं विमुच्य दक्षिणं वा परिधिमग्रेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयम्

अग्निमुखा अत्र देवता इज्यन्ते
शय्वन्त उदयनीयः संतिष्ठते २५

अथ यदि पशुरुपकृप्तः स्यात्पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाददीत
संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते
सिद्धमत ऊर्ध्वं यथो एतच्छालीकेः कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति तस्यै सह सवनीयैर्वत्सापाकरणँ सह सायंदोहम्
उदयनीयेन चरित्वा पाणी संमृशीत
परिस्तृणीयात्
पात्राणि निर्णिज्य सँसादयेत्
प्रोक्षणीः सँस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं धेनूर्दोहयेदथैनां गार्हपत्ये श्रपयित्वानभिघारितामुद्वासयेदथाज्यं निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये वैदलकान्परिधीन्परिधायाथैनां पुनरधिश्रित्याभिघारितामुद्वास्यान्तर्वेद्यासादयेदाज्यभागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि निकृन्ततेऽथाज्यभागप्रतिपत्केडान्ता संतिष्ठतेऽथेयमुदवसानीयोपाँशु भवति पुनराधेयधर्म हि
सकृन्महावेद्यै स्तम्बयजुषो हरणम्
असंनद्धा पत्नी यज्ञपुच्छमन्वास्ते २६

अथेममग्निचयं त्र्युपसत्कँ षडुपसत्कं द्वादशोपसत्कमिति चिन्वते
स यदि साहस्त्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय संचिताहुती जुहोति
द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती जुहोति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिँ षष्ठीं चितिँ सपुरीषामुपधाय संचिताहुती जुहोत्यौपवसथिकैव तृतीयाथ यदि साहस्त्रँ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय संचिताहुती जुहोति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती जुहोति

स एवमेव पञ्चाहम्
औपवसथिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथासूत्रं तथाथ यदि द्विषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधाति

द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधाति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिँ षष्ठीं चितिँ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधात्यौपवसथिकैव तृतीयाथ यदि द्विषाहस्रँ षडुपसत्कं चेष्यमानो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधाति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधाति
स एवमेव पञ्चाहम्
औपवसथिकैव षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताँ रात्रिं वसति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधाति

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताहुती हुत्वाहार्याँ सपुरीषामुपदधात्यौपवसथिकैव द्वादशी २७

अथ यदि त्रिषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वा द्वे आहार्ये सपुरीषे उपदधाति
द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती हुत्वा द्वे आहार्ये सपुरीषे उपदधाति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिँ षष्ठीं

चितिँ सपुरीषामुपधाय संचिताहुती हुत्वा द्वेद्वे ग्राहार्ये सपुरीषे
उपदधात्यौपवसथिकैव तृतीयाथ यदि त्रिषाहस्रँ षडुपसत्कं चेष्यमाणो
भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिँ सपुरीषामुपधाय
संचिताहुती हुत्वा द्वे ग्राहार्ये सपुरीषे उपदधाति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिँ सपुरीषामुपधाय संचिताहुती
हुत्वा द्वे ग्राहार्ये सपुरीषे उपदधाति
स एवमेव पञ्चाहम्
ग्रौपवसथिकैव षष्ठ्यथ यदि त्रिषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति
पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताँ रात्रिं
वसति
श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताहुती हुत्वा द्वे ग्राहार्ये
सपुरीषे उपदधाति
स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताहुती हुत्वा
द्वेद्वे ग्राहार्ये सपुरीषे उपदधात्य्
ग्रौपवसथिकैव द्वादशी
कथमु खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति
विजानीयाद्दैक्षस्य संवत्सरस्य द्वादशावशिष्य राजानं
क्रीणीयात्सोऽन्तरुपसत्कः
संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को दैक्षस्य संवत्सरस्य
षडवशिष्य राजानं क्रीणीयात्ताश्चोपसदः स्युरुत्तरश्च षड्रात्रः
सोऽन्तर्बहिरुपसत्कः २८

मृदमेताँ समां बिलेन करोतीति
समां भूम्यां निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति
पुरस्ताद्वा प्रत्यञ्चौ
स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणोऽश्व उत्तरतो गर्दभोऽथ यद्युत्तरतः
पूर्वोऽश्वोऽपरो गर्दभोऽग्निभ्यः पशूनालभत इति
पञ्चानां पशूनां ब्राह्मणं भवति
स यद्यु हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पशुबन्धिकं कर्म वर्तयित्वा
शिराँसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो देहानभ्यवहरन्तीति विज्ञायते

मासमेतं ब्रह्मचर्यं चरति
सोऽधःसंवेश्यमाँ साश्यस्त्र्युपायो भवति पूर्वदीक्षेत्येतामाचक्षते
त्रयोदशमेवैतं मासमभि दीक्षमाणो मन्यतेऽत्र कृष्णाजिने यजमानं वाचयति
मुष्टी चैव न करोति वाचं च न यच्छतीति
कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्
प्रथमायामुपसदि वेदिं विमिमीते स्तम्बयजुर्हरतीति
कर्मवशकारितमेवैतद्भवत्यथ संभारेषूषान्निवपन्यददश्चन्द्रमसि कृष्णं
तन्मनसा ध्यायेत्तदपीहेति २९

उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तराँ सीतां कृषन्सर्वौषधं
वपन्स्वयमातृण्णावकाशं नावक्रामेदित्यथ हैके पुरुषे च स्वयमातृण्णायां च
साम गायन्ति
किमु खलु स्वयमातृण्णानिकोतं भवतीति
हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव ब्रूयाद्यंयमिष्टकागणमुपदध्यात्तंतं न
व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरं स यदि दक्षिणतः पुरस्ताद्वेष्टका
उपदध्यादपसलैरत्रावर्तेताथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य
स्वयमातृण्णामेवाभिमुख इष्टका उपदध्यात्
कृत्तिका उपदधातीति

कतमा उ खल्विमाः कृत्तिका भवन्तीति
विद्युत इत्येव ब्रूयादस्त्रवणार्थे बौधायनस्याग्नावग्नौ पुनश्चितिः
सह सा न पुरीषचितिः षष्ठ्या वृद्धिजेति
वृद्धिजैवेति शालीकिः
षष्ठं प्रच्छादमाहरमाणः कस्मिन्नु खल्वेनत्काल आहरेदिति
नक्षत्रेष्टका उपधायेत्येव ब्रूयात्
स त्रिभिः कर्मभिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन
धेनुकरणेनेति
सोऽष्टाभिः कर्मभिरभिप्रैत्युत्तमे संचिताहुती शतरुद्रीयं नमस्काराः परिषेचनं
विकर्षणँ सर्पाहुतीः सामभिरुपस्थानमनुशँ सनमिति ३०

अथ किं नानाबीजानां निर्वपणे तन्त्रमिति
स्रुगादानं तन्त्रँ शूर्पादानं तन्त्रं धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं भवत्या सावित्राद्बीजंबीजमभ्यावर्तते सावित्रं तन्त्रं दशहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति
तन्त्रं कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयानामावपनं तन्त्रं मुसलस्यावधानं तन्त्रँ शूर्पस्योपोहनं तन्त्रँ हविष्कृद्
आवपनप्रभृतिमन्त्रो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतात्याक्रामेदित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे
यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो
यावदाम्नातेनाभिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ न पार्थानि भवन्ति कुशानेव सँस्तीर्य तेष्वेनमभिषिञ्चेदिति
कथमु खलु सत्त्रिणामभिषेक आवर्तत इत्यभिषेक आवेदनं
प्रथमेऽहन्यभिषेकः प्रथमेऽहन्यश्वस्यावघ्रापणमादितश्चान्ततश्च
बहिष्पवमानमास्तावे स्तुवीरन्नहरहर्यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभिमृशेदिति
३१

कथमु खल्वेकादशिनानां पशूनां चर्याया उपक्रमो भवतीतीडसूनँ सँस्तीर्य पृषदाज्यं विहत्य जुह्वाँ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशुं पञ्चहोत्रा चतसृषूपस्तृणीते
मुख्यस्य पशोर्दैवतमवदाय वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद् यूष्णोपसिच्याभिघारयेदथोपभृति स्विष्टकृते सर्वेषां त्र्यङ्गाणाँ सकृत्सकृत्स्विष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुयाद्यूष्णोपसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नौ वनिष्ठुमिति पात्र्याँ समवधाय यूष्णोपसिच्य नाभिघारयेदथ कँसे वा चमसे वा वसाहोमं गृहीत्वा यूष्णोपसिच्याथाभिघारयेत्
संमृशेत्पशुम्पार्श्वेन वसाहोमं प्रयौयान्मँ स्तः कुम्बतो जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्
परिशिँ ष्याच्च दिग्भ्योऽथेतरद्वसाहोमहवन्याँ समवनयेद्वषट्कृते हविर्जुहोति

सोऽनिष्ट्वैव स्विष्टकृतमुदङ्ङत्याक्रम्य जुह्वां चैव वसाहोमहवन्यां चोपस्तृणीते
द्वितीयस्य पशोर्दैवतमवदाय वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभिघारयेदथोपभृति स्विष्टकृते अर्वेषां त्र्यङ्गाणाँ सकृत्सकृत्समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुयात् समवत्तमेतद्यूष्णोपसिच्य नाभिघारयेत्

अथैव कँसे वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिञ्चेदथाभिघारयेत् संमृशेत्पशुम्पार्श्वेन वसाहोमं प्रयौयान्मँ सतः कुम्बतो जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात् परिशिँ ष्याच्च दिभ्यो वषट्कृते हविर्जुहोति
स एवमेव सर्वेषां पशूनां स यत्र वारुणस्य स्विष्टकृतेऽवद्येत्तद्द्विरभिघारयेत् सम्वत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्
तथैव कँसे वा चमसे वा वसाहोम गृह्णीयाद्यूष्णोपसिच्याभिघारयेत् संमृशेत्पशुम्पार्श्वेन वसाहोमं प्रयौयान्मँ स्तः कुम्बतो जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात् परिशिँ ष्याच्च दिग्भ्योऽथेतरद्वसाहोमहवन्याँ समवनयेद्वषट्कृते हविर्जुहोत्यजथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेदथ वनस्पतिना चरेदथ स्विष्टकृता
सिद्धमत ऊर्ध्वं यथो एतदौ पमन्यवस्य कल्पं वेदयन्ते मैत्रावरुणयामिक्षया निरूढया यजेतेति सिद्धमत्रौपवसथिकं कर्म जानीयाद्यथामावास्यायाँ संनयतोऽन्यत्र पिण्डपितृयज्ञात्
संवत्सरं न कंचन प्रत्यवरोहेन्न शीर्षमाँ सं खादेन्न वयसां माँ सं नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि धावेदुपावर्तेतान्नाद्यमेवाभ्युपावर्तत इति ब्राह्मणम् ३२

अथास्मिन्वाजपेये सप्तदशानाँ रथानां त्रयस्त्रयोऽश्वास्
ते एकपञ्चाशतम्
उत्तरतः प्रष्टिं नियुञ्ज्याद्चतुर्विँशतिं पशूनित्यग्नीषोमीयश्चानूबन्ध्यश्च चतुर्विँशौ भवतोऽथ वै भवति

सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति
दीक्षणीयां निर्वप्स्यन्सावित्रं जुहोतीति
सावित्रादेव सावित्रं भवति
दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा दीक्षाहुतीर्जुहुयात्
प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति
सावित्रादेव सावित्रं भवत्यन्तर्हिरण्याँ होष्यन्सावित्रं जुहोतीति सावित्रँ
हुत्वान्तर्हिरण्यां जुहुयात्
पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति
सवित्रादेव सावित्रं भवति
प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरेद्महावेद्यै पूर्वं परिग्राहं
परिग्रहीष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा स्फ्यमाददीताहवनीयं प्रणेष्यन्सावित्रं जुहोतीति

सावित्रँ हुत्वेध्ममाददीत
रथवाहने सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं
जुहोतीति
सावित्रँ हुत्वाग्नीषोमौ प्रणयेद्यूपमुच्छ्रयिष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा प्रोक्षणीराददीत
स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा बर्हिषी आददीत
तस्य प्रसिद्धं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति
सावित्रँ हुत्वा कुम्भमाददीत
पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहोतीति
सावित्रादेव सावित्रं भवति ३३

तूपरश्चतुरश्रिर्भवतीत्यनुदिशमश्री स्थापयित्वाग्निष्ठां च सूर्यस्थां च संमि-
नुयात्

पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति
सर्व एवैते सोपयामा ग्रहीतव्या भवन्ति
मारुत्या प्रचर्यैतान्संज्ञपयेदिति
तन्त्रमुल्मुकहरणं तन्त्रमध्रिगुप्रैषोऽभ्यावर्तेत
संज्ञप्तहोम ऊर्ध्वे बर्हिषी भिन्द्यात्स्वाहाकृतिप्रैष आज्यं द्वेधा
विभजेदुभयभागिन्य स्तोकीया अथेदँ रथचक्रं प्रादेशमात्रं भूमेरुच्छ्रितं भवत्य्
अपरेण परीत्य पक्षसी संमृशतीति रथचक्रे एवैते संमृशत्यथाहाजिसृतो
दक्षिणापथेनोपातीत्येति सूतराजन्या एवैत उक्ता भवन्ति
मारुता अग्रेणाहवनीयं परीत्येति क्षत्तसंग्रहीतार एवैत उक्ता भवन्त्यथ
यजमानं तार्प्यं परिधापयतीत्याज्येनैवैतत्तृप्तं वासो भवत्यथाप्युदाहरन्ति तृपा
नाम वृक्षास्
तेषामेवैतद्भवत्यथेमं वाजपेयँ सर्वसप्तदशमेके ब्रुवत आदेशादेव
बृहत्सामैकविँशं वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्निति ३४

षड्विंशः प्रश्नः

अथायँ राजसूयोऽर्धसप्तदशैर्मासैः संतिष्ठतेऽर्धषोडशैर्वा
तस्मिन्सोमसँस्थाः पञ्चैकाहा अहीनो द्विरात्रः
षट्छाला अष्टौ यूपाः षड् हाग्निष्टोमिका द्विपशौपशुबन्धे सौत्रामरयामष्टमस्
तावन्त एवावभृथाः
क्व उ खलु हविषो हविर्निरुप्यत इत्यानुमत इत्येव ब्रूयात्
कृष्णं वासः कृष्णतूषं दक्षिणेति
कृष्णादशमित्येवेदमुक्तं भवति
काममिष्ट्या पशुबन्धेनेति
संतन्येष्ट्येष्ट्वाग्रयणेन वा पार्वणेन वा यजेत
कथमु खलु साकमेधपरुषीति
महारात्रे पूर्वा संतनिः श्वो भूत उत्तरा प्रदोषे
किमु खल्वसमुदितं भवतीति
प्रागनूयाजिकात्संप्रैषादित्येव ब्रूयाद्बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इति
योऽन्यो याजमानासंयुक्तो ब्राह्मणो भवति
भगाय चरुं वावातायै गृह इति

यान्या महिष्या एव सुभगा भवति
नैर्ऋतं चरुं परिवृक्त्यै गृह इति
दुर्भगैवैषोक्ता भवति
पौष्णं चरुं भागदुघस्य गृह इति

महानसिक एवैष उक्तो भवत्यथाप्युदाहरन्ति यो भागलाभी दोग्धि स एषैष उक्तो भवति
द्वादशाहेन रत्निनाँ हवींषि
त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहोऽवशिष्ट एतस्यैव पूर्वपक्षस्य
तस्मिन्संतनीभ्यां यजेताथ चेदुक्थ्येऽभिषेचनीयेऽग्निं चिन्वीतैतस्मिन्नेव द्विरात्र आग्निकानि सावित्राणि हुत्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेत १

अपां पतिरसीत्यपांपतीयाः
समुद्रियाणामेवैता उक्ता भवन्ति
मरुतामोज स्थेति निवेष्ट्या आवर्तानामेवैता उक्ता भवन्ति
सूर्यवर्चस स्थेत्यभिदृश्याः
प्रसन्नानामेवैता उक्ता भवन्ति
शक्वरी स्थेति गोरु जरायोरेवैता उक्ता भवन्ति
सोऽत्रैवाग्नेयेनाष्टाकपालेन यजेतेति
सद्यः संतिष्ठमान उक्थ्य एतत्सूत्रं भवत्यथ चेदतिप्रवर्धेत
तदानीमेवाग्नेयेनाष्टाकपालेन यजेत

श्वो भूते सारस्वतेन
दशदशात्र चमसमभिसंजानत इति
होतृचमसे चोद्गातृचमसे च सप्तसप्ताथेतरेषु नवनव
प्रसर्पणप्रभृतय एवैते भवन्त्यप्सुषोमान्ता अथायं प्रतीचीनस्तोमः
केशवपनीयोऽतिरात्रः षोडशिको भवति
तस्य हाग्निष्टोमिकानि स्तोत्राण्यावृत्तानि भवन्त्येकविँशो बहिष्पवमानः
सप्तदशान्याज्यानि माध्यंदिनश्च पवमानः पञ्चदशानि पृष्ठान्यार्भवश्च

पवमानस्त्रिवृद्यज्ञायज्ञियमित्यथ प्रतीचीनस्तोमाय केशवपनीयायातिरात्राय दीक्षते
तस्य षड्दीक्षाः षडुपसदस्त्रयोदश्यां प्रसुतश्चतुर्दश्यामुदवसानम्
अथैतस्मिन्नेव पक्षावशेषे व्युष्टये द्विरात्राय दीक्षते
स एतां चैकाँ रात्रिं पूर्वपक्षस्य दीक्षितो भवति द्वे चापरपक्षस्य
तासां द्वादशोपसदोऽथोपवसत्यथोपवसथीयेऽहन्यमावास्यायां
पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति
संतिष्ठते व्युष्टिर्द्विरात्रोऽथोत्तराँ शालामध्यवस्येदथ
मथित्वाग्नीन्विहृत्योदयनीयायाग्निष्टोमाय दीक्षते

तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः
संतिष्ठत एष उदयनीयोऽग्निष्टोमः सहस्रदक्षिणोऽथैतस्मिन्नेव पक्षावशेषे
क्षत्रस्य धृतिनाभिविधत्ते देविकाहविर्भिस्त्रैधातवीयया सौत्रामण्येति
संतिष्ठते राजसूयोऽर्धसप्तदशैर्मासैरथ शालीकैः केशवपनीयान्तस्
तेऽर्धषोडशाः  २

अथातोऽञ्जसवः
प्रसिद्धमेव प्रथमोऽर्धमासः संतिष्ठते
पञ्चाहेन चातुर्मास्यानि द्व्यहेन संतनी अष्टमेऽहनीन्द्रतुरीयं नवमेऽह्नि पूर्वाणि
देविकाहवींषि दशमेऽह्नयुत्तराण्येकादशे द्वादशे त्रयोदश इति
त्रिषंयुक्तैश्चतुर्दशे वैश्वानरो द्वादशकपालः पञ्चदशे वारुणो यवमयश्चरुरिति
मासो द्वादशाहेन रत्निनाँ हवींषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी
अर्धमासेनाभिषेचनीय उक्थ्य इति द्वौ मासवर्धमासेन सप्तदशो
दशपेयोऽर्धमासं दीक्षिते दीक्षितव्रतीति त्रयो मासा अर्धमासेन
प्रतीचीनस्तोमः केशवपनीयोऽतिरात्रोऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो
मासा अर्धमासेन क्षत्रस्य धृतिरिति
तेऽर्धपञ्चमा अथ शालीकैः
सप्ताहेन पवित्रोऽग्निष्टोमः स एवमेव पक्षावशेषँ सिद्धमा वारुणाद्द्वादशाहेन
रत्निनाँ हवींषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी इति
मासोऽर्धमासेनाभिषेचनीय उक्थ्योऽर्धमासेन सप्तदशो दशपेय इति द्वौ

मासवर्धमासेन प्रतीचीनस्तोमः केशवपनीयोऽतिरात्रोऽर्धमासेन व्युष्टिर्द्विरात्र
इति त्रयो मासा अर्धमासेन क्षत्रस्य धृतिरिति
तेऽर्धचतुर्था अथ पतन्तको द्वादश दीक्षा द्वादशोपसदः
सप्ताहोऽहीनो राजसूयो यथावकाशमितरै राजसूयहविर्भिर्यजतेऽथ
देविकाहविर्भिर्यजतेऽथ त्रैधातवीयया यजतेऽथ सौत्रामण्या यजते
संतिष्ठते राजसूयः ३

अथेममिष्टिकल्पं पञ्चदशसामिधेनीकं च सप्तदशसामिधेनीकं च
समामनामस्
तत्र सिद्धं याजमानं बौधायनस्य कल्पो यथाम्नायँ शालीकेस्
त्रीँस्तृचाननुब्रूयादिति
त्रिः प्रथमामनूच्य तिस्रोऽनन्तरा अनुब्रूया त्रि रुत्तमां ताः पञ्चदश
पञ्चदशानुब्रूयादित्येकादशेमाः सामिधेन्यः समामनामस्
तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश
सप्तदशानुब्रूयादेकविँशतिमनुब्रूयाच्चतुर्विँशतिमनुब्रूयात्त्रिँ शतमनुब्रूयाद्द्वात्रिँ
शतमनुब्रूयात्षट्त्रिँ शतमनुब्रूयाच्चत्वारिँ शतमनुब्रूयाच्चतुश्चत्वारिँ
शतमनुब्रूयादष्टाचत्वारिँ शतमनुब्रूयादिति धाय्यालोक एता धातव्या भवन्त्य्
आग्नेय्यः सर्वा गायत्र्यः
सर्वाणि छन्दाँस्यनुब्रूयादपरिमितमनुब्रूयादिति धाय्यालोक एवैता धातव्या
भवन्ति
नैताः सर्वा गायत्र्यो गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या
पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या
मूर्धन्वती पुरोऽनुवाक्या भवति नियुत्वत्या यजत्युपाँ शुयाजमन्तरा यजतीति
दर्शपूर्णमासयोरेवैतदुपपद्यते नान्यत्र ४

अथेमाः काम्या इष्टयो निष्पुरीषेणैव प्रयोक्तव्या भवन्ति
स संवत्सरं पयोव्रतः स्याद्द्वादशाहं वा यावद्वा शँ सीत
तासां याः समानसंयोजना एकां चेत्तासां निर्वपेत्सर्वा एवैता निर्वप्तव्या
भवन्ति यथो एतदनायुक्तोऽग्निपरिचरोऽल्पमुद्धृत्य पुनरप्युद्धरति
कथमत्र प्रायश्चित्तँ सिद्यती३ न सिध्यती३ इति

सिध्यतीत्येक ग्राहुरथ हैक ग्राहुर्न सिध्यतीति
निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्य इत्युभावु
खल्विमावनिर्दिष्टभागौ भवतो नैव सिध्यतीति
तन्त्रं धृष्टेरादानं गार्हपत्यसकाशाद्धृष्टिमाददीत
तयाहवनीये वैश्वानरस्य कपालान्युपदध्यात्
प्रदक्षिणमावृत्य गार्हपत्ये मारुतस्य कृतानि पिष्टानि समुप्य संयुत्य
व्यभिमृश्य पिण्डौ कृत्वाग्रेण मारुतस्य पिण्डं पर्याहृत्याहवनीये
वैश्वानरमधिपृञ्च्यात्

प्रदक्षिणमावृत्य गार्हपत्ये मारुतं त्वचं ग्राहयित्वेमं त्वचं ग्राहयेदमुं पर्यग्नि
कृत्वेमं पर्यग्नि कुर्यादमुँ श्रपयित्वेमँ श्रपयेदपि वोभयमेवोभयत्र कुर्यात्
तस्य शृतस्यासादनं दक्षिणं परिधिसंधिमपरं विमुच्य दक्षिणं वा
परिधिमग्रेण
सिद्धमत ऊर्ध्वम्
एतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नमत्तीतीतरमितरेणेत्येवैष उक्तो
भवति
यं मृधोऽभि प्रवेपेरन्राष्ट्राणि वाभि समियुरिति
प्रतिवेशा राजानो मृधः
स्व एव जनपदा राष्ट्राणि विशो यो हतमनाः स्वयंपाप इव स्यादिति
सति बले हतमनाः स्वयंपाप इव स्यादिति
साधुरूपे कुले स्वयंपापो यस्मै प्रत्तमिव सन्न प्रदीयेतेति

प्रत्तमनुपाकृतं प्रतिबध्यमानमेवैतद्भवत्यथास्यामध्वरकल्पायामिडान्तं प्रथमं
तन्त्रं कुर्याद्तृतीयेन सहावशेषं वर्तयेत्
कथमत्र भक्षा इति
तत्रतत्र वा भक्षयेदपि वा सर्वासाँ समवदाय हुत्वान्ततो भक्षयेदनड्वान्होत्रा
देय इति
यजमानस्यैवैष गौष्ठाद्दातव्यो भवति
वेदिं परिगृह्यार्धमुद्धन्यादर्धं नेति
दक्षिणं वा वेदेरर्धमपरं वेत्यैन्द्रस्यावदाय

वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिति
द्वे एवैते ग्रवदाने उक्ते भवत उपाधाय्यपूर्वयं वासो दक्षिणेति
प्रवेणतो वान्ततो वा ताम्राणि वा नीलानि वा सूत्राण्युपहितानि भवन्त्यपि
वोपधानरज्जुरेवैषोक्ता भवत्यथास्याँ सञ्ज्ञानेष्ट्याँ
सकृदेवानुवाचयेत्सकृदाश्रावयेद्द्वे ह्यस्यै याज्यानुवाक्ये भवतः ५

ग्रथ वै भवति
यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्वपाम्यामुष्मादमुष्यै
विशोऽवगन्तोरिति निर्वपेदिति निरुप्योपरमति
परिदानान्तं कर्म कृत्वाथैतान्व्रीहीन्कृष्णाजिने
समुप्योत्तरार्धेऽग्न्यगारस्यासञ्जयेदथावगते सँसादयेत्
प्रोक्षणप्रभृतिना कर्मणा प्रतिपद्येत
सिद्धमत ऊर्ध्वं यथा नखनिर्भिन्नायामेवँ शतकृष्णलायाम्पुरा वा
तण्डुलानामावपनाद्रुक्ममवदध्याच्छृतमुत्तरमपि वैनँ शृतमेव सुवर्णरजताभ्याँ
रुक्माभ्यां परिगृह्यान्तर्वेद्यासादयेदाग्नेयस्य च सौम्यस्य चैन्द्रे
समाश्लेषयेदिति
व्यभिमृष्टानां पिण्डानां पुराधिपृञ्जनात्समाश्लेषयितव्यं भवति
सर्वेषामभिगमयन्नवद्यतीति सदैवतस्य सस्विष्टकृत्तस्येत्येवेदमुक्तं भवत्यथो
खलु यावतीः समा एष्यन्मन्येत तावन्मानँ स्यादिति
त्रिँ शद्वर्षश्चेत्स्यात्सप्ततिमानं कुर्वीत
चत्वारिँ शद्वर्षश्चेत्स्यात्षष्टिमानं कुर्वीतैष एवैतस्याभिवृद्धिकल्पोऽथ वारुणेषु
च संज्ञानेष्ट्यां च सकृदेवानुवाचयेत्सकृदाश्रावयेत्सकृत्प्रदानाः समानदेवता
ग्रापोनप्त्रीयं चरुं पुनरेत्य निर्वपेदिति
को नु खल्वपां नपाद्भवतीति
वैद्युत इत्येव ब्रूयात्
कृष्णामधु चेति
पौत्तिकमित्येवेदमुक्तं भवत्यनस्त्रिगधमिति
त्रिवलीकमित्येवेदमुक्तं भवत्यथाप्युदाहरन्ति त्रिच्छदिष्कमित्येवेदमुक्तं
भवति
यथा त्रिधातावेवँ संदिग्धपुरोडाशस्यावदानकल्पः ६

स सर्पानसृजतेति
मासा एवैत उक्ता भवन्ति
स वयाँस्यसृजतेति
छन्दाँस्येवैतान्युक्तानि भवन्ति
स वैव स्यादिति
पुराणगार्हपत्यमभ्युपदिशन्ति
तस्य पशुवेलायामुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्यान्तरेण यूपं चाहवनीयं चोपातिहृत्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेन पशुँ श्रपयेयुरथ यदाहवनीयादुल्मुकँ स्याद्वपया तत्सहाहरेयुः

किंदेवत्यानि खल्वपाव्यानि भवन्तीति
द्वे प्राजापत्ये आग्नेयं वायव्यं वैश्वदेवमितीष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्ग इत्युष्णाग्रमित्येवेदमुक्तं भवत्यथाप्युदाहरन्त्यध्वर्युरेवैष उक्तो भवत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इत्यनुव्याहारो ह वा आसन्यो मन्त्रस्
तस्मान्मा पाहीत्येवेदमुक्तं भवति
तस्माद्यज्ञवास्तु नाभ्यवेत्यमित्यहोरात्रावित्येकं यावदग्नयः शीताः स्युरित्येतदेकं यावदेनमभिवर्षेदित्येतदपरं द्वौ समुद्रौ विततावजूर्यवित्यहोरात्रावेवैतावुक्तौ भवतः
पर्यावर्तेते जठरेव पादा इत्युदरे पादा इत्येवेदमुक्तं भवति
तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यमित्यहः पश्यन्तो अतियन्ति रात्रिं स्वप्नेन सेतुनातियन्त्यन्यमिति
द्वे द्रधसी सतती वस्त एक इत्यादित्योऽहोरात्रे वस्त इत्येवेदमुक्तं भवति
तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनुहाय जार्या इति
रात्रिं वसानस्तिरोधायैति शुक्रमादत्तेऽहरित्येवेदमुक्तं भवति
कीटावपन्नस्येति
कतमो नु खल्वयं कीटो भवति
य एवैष पिण्डान्संवर्तयतीति

नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति

पृषदाज्य एवैषानुवर्तयितव्या भवति ७

अथातोऽतिग्राह्यान्व्याख्यास्याम इमे न्वेव पृष्ठ्यातिग्राह्याः पञ्चैन्द्रा वाजपेये
परःसामानश्चार्वाक्सामानश्च सौर्यो वैषुवते
वैश्वकर्मणादित्यौ गवामयने
प्राजापत्यो महाव्रते
बार्हस्पत्यो बृहस्पतिसवे
वैमृधे चोद्भिदि च त्विषिमति च वृषा सो अँशुः पवत इति च
द्वावश्वमेधे महिमानवादेशादेवाश्वस्य वपां महिमाभ्यां परिजुहुयात्
कथमु खलु परःसाम्नां भक्षो भवतीति
रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य
त्रिष्टुप्छन्दसोऽद्भिरोषधीभिः पीतस्यौषधीभिः प्रजाभिः पीतस्य प्रजाभिः
प्रजापतिना पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्येष
एवार्वाक्साम्नामावृत्तो भक्षोऽष्टाप्रूड्हिरण्यं दक्षिणेत्यष्टापिलकमित्येवेदमुक्तं
भवति
द्वौ चेद्गर्भौ स्यातां द्वादशप्रूट्स्यादेको ह महाकोशः स्याद्द्वाववान्तरकोशौ
स्याताम्

अथास्थिगर्भाया आज्येनैवैतान्यस्थानि समुदायुत्य मध्यमेन पर्णेनान्तःपरिधि
निनयेद्भूर्भुवः सुवरिति ८

यदालब्धायामभ्रो भवतीत्यालब्धायां चेदभ्रः स्यात्सँस्थापयेदेवाथ
चेदुपाकृतायामभ्रः स्यादन्यमेतस्मिन्स्थान
उपाकृत्योत्तरममेघसंपन्नमेतयागम्येरन्नित्यथेमे जया अभ्याताना राष्ट्रभृत
इत्याहिताग्नेश्चानाहिताग्नेश्चान्यत्र विहाराद्दृष्टा
भवन्त्यभिसमारम्भात्त्वेवैनानाचार्याः प्राक्स्विष्टकृत उपजुह्वत्यष्टौ वसव इति
कतमे नु खल्विमे वसवो भवन्तीति
पृथिव्यन्तरिक्षं द्यौरग्निर्वायुरादित्यश्चन्द्रमा आप इत्येतेऽष्टौ वसव एतेषु वा

इदँ सर्वं प्रतिष्ठितं यदिदं किं च
य एवं वेद प्रत्येव तिष्ठत्येकादश रुद्रा इति
प्राणा एवैत उक्ता भवन्ति
द्वादशादित्या इति
मासा एवैत उक्ता भवन्ति
पञ्च गृह्यन्ते नवनव गृह्यन्ते पञ्चधा विगृह्यन्ते
नवनवाँ शवो भवन्त्य्
अथ य एव दशमो मन्त्र एतेषामेवैषोऽभिग्रहणार्थो दृष्टो भवति
तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति
भैक्षाय प्रत्यवस्थितायैवैषा दातव्या भवति
किंदेवत्या उ खल्वतिरिक्तसोमा भवन्तीति
यंयं ग्रहमभ्यतिरिच्येरँस्तत्तद्देवत्या एव स्युरित्येतदेकम्
अथापरम्विज्ञायत उ खल्वेषां ब्राह्मणमथ कस्मादैन्द्रो यज्ञ आ
सँस्थातोरित्येतस्मादैन्द्रावैष्णवा एव भवन्ति
तेन शीतीभवता षडहसँस्थां काङ्क्षेयुरिति
षडहब्राह्मणमेवैतद्भवत्यथ चेदहःसंयोग एवमापद्येत यथापि नव मध्यमानि
सांवत्सरिकाण्यहानि संनिगच्छेयुस्तदानीमेवैनँ शीतीकृत्वा संचिनुयुरथ
चेदुदयनीयेऽतिरात्र एतदेव
प्रजा वै सत्त्रमासत तपस्तप्यमाना अजुह्वतीरिति
तत्पृच्छन्ति कतमत्तत्सत्त्रं भवतीति
यदेवैतदनाहिताग्नयो वृथाश्रमँ श्राम्यन्त्येतत्सत्त्रं भवतीति ९

आश्विनं प्रागाश्विनमिति
कियन्नु खल्वाश्विनं भवतीति
द्वियोजनं वा यावद्वाश्वोऽह्ना गच्छेद्द्विस्तावा वेदिर्भवतीत्याग्निकस्य प्रक्रमस्य
चतुरश्रकृतस्याक्ष्णयामानमाददीत
स प्रक्रमः स्यात्
तेन वेदिं विमिमीतापि वा विँशत्याश्च रथाक्षाणामेकविँशत्याश्च
पदानामष्टाङ्गुलस्य च चतुर्विँशं भागमाददीत
स प्रक्रमः स्यात्

तेन वेदिं विमिमीते
त्रिस्तावोऽग्निर्भवतीति
त्र्यः त्रयः सप्तविधाः
स एकविँशतिविधोऽथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयत इति
किमर्थौ खल्विमौ ह्रदौ भवत इत्यश्वप्लावनो ह दक्षिण आवभृथिक उत्तरो
द्वौ दासावनुजायै च पुत्रोऽन्वाधेयायै चेति
योऽस्य पितुरनुजायाः पुत्रः स पुरस्तान्नयत्यथ योऽस्य मातुरन्वाधेयायै पुत्रः
सोऽपरो जरत्पूर्वया सव्यं जानु वेष्टयित्वेत्युपधानरज्जुरेवैषोक्ता भवति
शतं वै तल्प्या राजपुत्रा इति

प्रतिहिता एवैत उक्ता भवन्ति
शतँ राजान उग्रा इति
राजन्या एवैते नाभिषेच्या भवन्त्यथ सावित्रमष्टाकपालं प्रातर्निर्वपतीत्येषैव
प्रथमा सावित्री
वैश्वदेवपरुषि द्वितीयापराह्ने तृतीयैतदत्रैकाहिकं कर्म जानीयादुत्तरतश्च
देवयजनादुदवस्येच्चातुर्मासिकानां पशूनामेवं वायव्याय पशव एवं तूपराय
सप्ताहान्येतयेष्ट्या यजत इति
कथमत्र भक्षा इति
तत्रतत्र वा भक्षयेदपि वा पुरस्तादेवैतस्मै सप्ताहाय
यूपमाम्नाये राज्जुदालमग्निष्ठं मिनोतीति
श्लेष्मातक इत्येवेदमुक्तं भवति
अथाप्युदाहरन्ति राज्जुदालमग्निष्ठं मिनोति भ्रूणहत्याया अपहत्यै
पौतुद्रवावभितो भवतः पुण्यस्य गन्धस्यावरुद्ध्या इति
तृतीयं दक्षिणानां ददातीत्याग्निकानामु ह तृतीयं कामप्रेण सह तृतीयमतिरात्रे
तृतीयं चतुष्टोम एष भवति
चतुरुत्त्रीय एष चतुष्टोमो भवति १०

एकस्मै स्वाहा द्वाभ्याँ स्वाहेति
कथमु खल्वेताननुवाकाञ्जुहुयादिति
यथाप्रकृत्यस्तथानन्तरायँ होतव्याश्चतुर्विँशतिँ रशना आदाय यूपानभ्यायन्ति

चतस्त्रश्चतस्त्र इतरे परिकर्मिण इति
कथमेतासु नियुञ्ज्यादित्यश्वस्तूपरो गोमृग इति ते त्रयःसमानरशना रराटचेषु तिस्त्रः
पर्यङ्ग्येषु पञ्चाग्नयेऽनीकवते रोहिताञ्जिरनड्वानित्येतेष्वष्टौ
सोमाय स्वराज्ञेऽनोवाहावनड्वाहवित्येतेषु सप्तार्थैतेषां त्रयस्त्रयः
समानरशनार्मुख्यस्यैवैषां चतुर्थी भवति
समानं कर्मा पर्यग्निकरणात्
पर्यग्निकृतानामेतेषां पशूनामूनविँशतिरुत्सृज्यन्त एकचत्वारिँ
शतमतिशिष्यन्ते
द्विचत्वारिँ शतमेषाँ शासा भवन्त्यश्वेऽत्र द्वौ समासं गच्छतोऽथेतरेषां प्रतिपशु
संपद्यन्त इन्द्राग्निभ्यामोजोदाभ्यामुष्टारविति
प्रासङ्ग्यावेवैतावुक्तौ भवतोऽथैतस्मिञ्छल्मलिशर्च आशुपिष्टानि संयुत्येत्य्
आशुकानामेवैतानि व्रीहीणां पिष्टानि शल्मलिश्लेष्मणा संयुतानि भवन्ति
पृथक्प्रतिप्रस्थातारोऽवद्यन्ति
तेषां मैत्रावरुण एवानुब्रूयुश्चत्वार्येवैतानि प्रदानानि भवन्तीलुवर्दाय स्वाहा
बलिवर्दाय स्वाहेति
सूर्याचन्द्रमसावेवैतावुक्तौ भवतोऽथाप्युदाहरन्ति संवत्सरो वा इलुवर्दः
परिवत्सरो बलिवर्द इति
तस्य मूर्ध्नि जुहोति जुम्बकाय स्वाहेति
किंदेवत्या उ खल्वियमाहुतिर्भवतीति
वारुणीत्येव ब्रूयात्
किकिदीविर्विदीगय इति
विदिदिहीविकीदीह किकिदीविर्भवति
पृषत उग्र पतंगो विदीगयोऽथैतान्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति
यमा एवैते छागाः समानयोनयो भवन्ति
तेषामुक्तं चरणं यथैकादशिनानां पशूनां किंदेवत्या उ खल्वृतुपशवो
भवन्तीत्यृतुदेवता इत्येतदेकम्
अथापरम्
आग्नेयाः प्रथमा ऐन्द्रा द्वितीया वैश्वदेवास्तृतीया मैत्रावरुणाश्चतुर्था
बार्हस्पत्याः पञ्चमाः सावित्राः षष्ठाः संवत्सराय निवन्नस इति प्राजापत्याः

११

अथायं द्वादशाह उभयविधो भवत्यहीनो वा सत्त्रं वा
स यद्यु हैको दीक्षतेऽहीनो भवत्यथ यदि बहवः सत्त्रं यदि चैवाहीनो यदि च सत्त्रमुभयथैवोभयतोऽतिरात्रो भवत्यन्यतरतोऽतिरात्रा ह्यहीना भवन्त्युभयतोऽतिरात्राणि सत्त्राण्यादेशादेवोभयतोऽतिरात्रोऽहीनो भवत्यादेशात्तु सत्त्रमनतिरात्रं यथैतदग्निष्टोमायनँ सारस्वतमयनं विश्वसृजामयनमिति
कथमु खल्वेषाँ संनिवापः स्यादिति
सावित्रेभ्यः प्रथमँ संनिवपेरन्
हुत्वा सावित्राणि विसमारोह्याग्निहोत्राणि जुहुयुरथ वायव्याय पशवे संनिवपेरन्
वायव्येनेष्ट्वा विसमारोह्यैवाग्निहोत्राणि जुहुयुरथ यदि दीक्षणीयायै संनिवपेरँस्तेषां तत्संन्युप्तान्येव स्युर्व्युदवसानीयाद्व्द्व्यदवसायैव प्रतिवेशा यज्ञपुच्छानि कुर्वीरन्
कथमु खलु संदीक्षिता विष्णुक्रमान्क्रमेरन्निति
महापाशाभिपरीता वा क्रमेरन्नपि वा पाशानभिसंधित्वाभिक्रमः स्यादथाह क्रमस्वाथाह क्रमस्वेत्य्
अतिगुरुस्तथा कल्पः स्याद्यथो एतत्सूत्रं भवति षष्ठ्यामुपसद्युत्तरवेदिँ संनिवपन्त्यपि वैकादश्यामित्यनग्निचय एवैतदुपपद्यते न साग्निचये
कथमु खल्वेषामहीनसंततिर्भवतीति
वसतीवरीणामभिग्रहणेनाध्वर्युः संतनोतीध्माबर्हिषोरुपकल्पनेन च पयसां विशासनेन च वाचो यम्येन ब्रह्मातिप्रैषेण होता पुनरभ्यासेन च सुब्रह्मण्ययोद्गाता यज्ञस्य पुनरालम्भेन यजमानः
प्रचरन्त एवैतद्ध्रुवाज्यँ समाददतेऽथेमानि सवनानि बर्हींषि संचिनुयुस्
तेषां महारात्र उत्थायाग्नीध्र आज्यानि गृह्णन्तो ज्वलयेरन्निति १२

कथमु खलु दिवा प्रातरनुवाकस्याह्न उपक्रमो भवतीति
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावोवायव्यँ संप्रक्षाल्य द्रोणकलशे

दशापवित्रे समवधायाग्नीध्रं द्रुत्वा समिद्धारा यन्त्य्
आहृत्य समिध आहवनीय उपसादयन्ति
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मण्यायाँ सवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्य पयाँसि विशिष्याग्निध्रं द्रुत्वाग्नीध्रे
संवेशनरूपाणि कृत्वा प्रातःकर्मणा प्रतिपद्यते
प्रसिद्धेन महारात्रिकेण
सिद्धमत ऊर्ध्वम्
उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानीति
त्रिवृच्चैकविँशश्च चक्रे आग्नेय उपस्तम्भनम्पञ्चदशश्च त्रिणवश्च चक्रे ऐन्द्र
उपस्तम्भनँ सप्तदशश्च त्रयस्त्रिँशश्च चक्रे सौर्य उपस्तम्भनं यथो
एतद्बौधायनस्य कल्पं वेदयन्ते निर्मन्थ्यो मन्त्रवान्भवतीत्याध्वर्यवा एवात्र
मन्त्रा आवर्तन्ते नाग्निमन्थनीयाः
स्वयमृतुयाजमेवैतदहर्भवति नैतदहरन्योन्यस्यर्तुयाजं यजतीति १३

आश्राव्याध्वर्युरन्यस्मै ग्रहं प्रदायैतेनैव यथेतमेत्य जघनेन हविर्धाने
उपविश्यर्तुसंप्रैषमुक्त्वोपोत्थाय हुत्वा व्यवनीय प्रदक्षिणमावृत्य
यत्रायाक्षीत्तत्प्राङासीनो होतृभक्षं
भक्षयेत्प्रत्यङ्ङासीनोऽध्वर्युभक्षम्पारुच्छेपीर्होता शँसति वालखिल्या
मैत्रावरुणो विहरति वृषाकपिं ब्राह्मणाच्छँसी शँसत्येवयामरुतमच्छावाकः

किंकर्मा तर्ह्यध्वर्युर्भवतीति प्रत्यागृणातीत्येव ब्रूयाद्या एता अध्वर्युरनुष्टुभ
उद्धृत्याहरति ताश्चतस्रो गायत्र्यस्तास्तिस्रोऽनुष्टुभः
सोम राजन्नेह्यवरोहेत्येतस्यै गायत्र्यै पदमात्रेण राजानमुपावहरेत्
कथमु खलु दशममहर्भक्त्या सर्वचतुर्विँशं च भवति त्रिष्टोमं चान्यत्र तूष्णीँ
स्तोमादिति
चतुर्विँशो बहिष्पवमानः पञ्चदशं ब्रह्मसाम त्रयस्त्रिँशमग्निष्टोमसाम
तासामु ह नवागच्छन्ति
ताश्चतुर्विँशतिः संपद्यन्त एतदेवापि दशममहर्भक्त्या सर्वचतुर्विँशं च भवति
त्रिष्टोमं चान्यत्र तूष्णीँ स्तोमादित्युपसृजन्मात्रे वत्सं धारयन्धरुणो धयन्निति

किंदेवत्या उ खल्वियमाहुतिर्भवतीति
प्राजापत्येत्येव ब्रूयादिति १४

अथेमं द्वादशाहं ग्रहाग्रैरेव प्रतिव्यूहामस्
अथेमं तस्य नवाहानि प्रतिव्यूहं गच्छन्ति यान्यन्यानि प्रायणीयोदयनीयाभ्यां दशमाच्चाह्नोऽथ छन्दोमास्
तत्षडेव
स्वस्थानो हि प्रथमस्त्रिरात्रो गायत्रीप्रातःसवने प्रथमे त्रिरात्रेऽष्टौ कृत्वोऽग्रे प्रथममुपाँश्वभिषवमभिषुणुयादेकादश कृत्वो द्वितीयं द्वादश कृत्वस्तृतीयम्महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रं गृह्णीयाददब्धेभिः सवितः पायुभिष्ट्वमित्येतया जगत्या सावित्रम्
अष्टाकपालान्प्रातःसवनीयान्कुर्यादेकादशकपालान्माध्यंदिनीयान्
द्वादशकपालाँस्तृतीयसवनीयान्
वसुमद्गणेन गायत्रच्छन्दसा प्रातःसवनीयान्भक्षयेद्रुद्रवद्गणेन त्रिष्टुप्छन्दसा माध्यंदिनीयान्
आदित्यवद्गणेन जगतीच्छन्दसा तृतीयसवनीयानित्य्
अथ जगतीप्रातःसवने द्वितीये त्रिरात्रे द्वादश कृत्वोऽग्रे प्रथममुपाँश्वभिषवमभिषुणयादष्टौ कृत्वो द्वितीयम्
एकादश कृत्वस्तृतीयम्महाँ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं ग्रहं गृह्णीयाद्वाममद्य सवितरित्येतया त्रिष्टुभा सावित्रं
द्वादशकपालान्प्रातःसवनीयान्कुर्यादष्टाकपालान्माध्यंदिनीयान्
एकादशकपालाँस्तृतीयसवनीयान्
आदित्यवद्गणेन जगतीच्छन्दसा प्रातःसवनीयान्भक्षयेद्वसुमद्गणेन गायत्रच्छन्दसा माध्यंदिनीयान्
रुद्रवद्गणेन त्रिष्टुप्छन्दसा तृतीयसवनीयानित्यथ त्रिष्टुप्प्रातःसवने तृतीये त्रिरात्र एकादश कृत्वोऽग्रे प्रथममुपाँश्वभिषवमभिषुणुयाद्द्वादश कृत्वो द्वितीयमष्टौ कृत्वस्तृतीयम्महाँ इन्द्रो य ओजसेत्येतां गायत्रीं त्रिरभ्यावर्तयेदनुपयामां सा जगती संपद्यते
तया माहेन्द्रं गृह्णीयाधिरण्यपाणिमूतय इत्येतया गायत्र्या सावित्रम्
एकादशकपालान्प्रातःसवनीयान्कुर्याद्द्वादशकपालान्माध्यंदिनीयान्

अष्टाकपालाँस्तृतीयसवनीयान्
रुद्रवद्गणेन त्रिष्टुप्छन्दसा प्रातःसवनीयान्भक्षयेदादित्यवद्गणेन जगतीच्छन्दसा माध्यंदिनीयान्
वसुमद्गणेन गायत्रच्छन्दसा तृतीयसवनीयानिति १५

अथायं वैषुवतो लभेत मासगणानामित्येक आहुः सप्तदश दीक्षा द्वादशोपसदो वैषुवतं त्रिँ शत्तमं कथमु खलु गोआयुभ्याँ स्तोमा भवन्तीति
गोर्नु खलु पञ्चदशो बहिष्पवमानस्तिवृन्त्याज्यानि सर्वसप्तदशं माध्यंदिनँ सवनँ सर्वैकविँशं तृतीयस्वनँ सोक्थ्यम्
अथायोस्त्रिवृद्बहिष्पवमानः पञ्चदशान्याज्यानि सर्वसप्तदशं माध्यंदिनँ सवनँ सर्वैकविँशं तृतीयसवनँ सोक्थ्यम्
अथेमौ विश्वजिदभिजितावग्निष्टोमौ सत्रगतौ भवतः
के नु खल्वेतयो स्तोमा भवन्तीत्यभि जिन्नु खलु त्र्युदयश्चतुरावृत्तोऽथ विश्वजिच्चतुरुदयस्त्र्यावृत्तः
कथमु खल्वेकविँशतिगर्भो भवतीत्यभिजितमुपेत्य पृष्ठ्यँ षडहमुपेयुरथ त्रीन्परःसाम्नोऽथ वैषुवतमथ त्रीन्प्रत्यक्साम्नोऽथावृत्तं पृष्ठ्यँ षडहमथ विश्वजितं कथमु खलु गोआयुषी विहृते जानीयादिति
पुरस्तादभिजितो गामुपेयात्स्वस्थान एवायुर्भवतीति
कियन्तो नु खलु गवामयनेऽग्निष्टोमा भवन्तीति

ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो विश्वजिदभिजितावग्निष्टोमौ वैषुवतं दशममहर्महाव्रतमिति सप्तेति ह वा इदं गवामयनं प्रज्ञातस्तोमं ब्रुवते तस्य होत्तरं पक्ष आवृत्तं भवति यदन्यद्गोआयुभ्यां च दशरात्राच्च त्र्यनीकानत्रावृत्तान्ग्रहान्गृह्णीयात् १६

अथेमा द्वात्रिँ शतमेकादशिन्यो गवामयने
तेषां पूर्वस्मिन्पक्षसि षोडश निष्ठीयन्ते सप्तदश एकादशिन्यै बार्हस्पत्यो वैषुवते सवनीयः संपद्यते
तस्य नवाहान्यपशुकान्यतिरिच्यन्त इति
कतमानि खल्विमान्यहानि भवन्तीति

पृष्ठ्यस्य षडहस्योत्तराणि त्रीणि त्रयश्छन्दोमा
दशममहर्महाव्रतमुदयनीयोऽतिरात्र इत्यभिप्लवाश्चाद्मीयन्ति च
तदङ्गिरसामयनमिति
पृष्ठ्यानामत्र स्थानेऽभिप्लवानेव दधाति
पृष्ठ्याश्चाद्मीयन्ति च तदादित्यानामयनमित्यभिप्लवानामत्र स्थाने पृष्ठ्यानेव
दधात्यग्निष्टोमाश्चाद्मीयन्ति च तत्प्रजापतेरयनमित्युभयेषामत्र
पृष्ठ्याभिप्लवानाँ स्थानेऽग्निष्टोमानेव दधात्
आघाटीभिः पिञ्छोलाभिः कर्करीकाभिरित्याघाट्योऽह कोलोष्ठा भवन्ति
पिञ्छोला उ ह वीणाकाणभ्रशा वीणा उ कर्करीकास्
तं काल एव शस्त्र्यातृणत्तीत्यातृन्द्यादित्येवेदमुक्तं भवति १७

अथ वै भवति
ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्निष्टोमेन यजमानोऽथ सर्वस्तोमेन
यजेतेति
चत्वारि पञ्चदशान्याज्यानि
तौ द्वौ त्रिँ शद्वर्गौ
तयोरितरस्मिँ स्त्रिँ शद्वर्गे तिस्त्र उपास्यति
तौ द्वौ त्रिणवत्रयस्त्रिँ शौ
गायत्रं पूर्वेऽहन्साम भवति त्रैष्टुभमुत्तर इति होतुराज्यमेतानि
संपादयेदेवमेवोत्तरेऽह्नि होतुरेवाज्ये

अथास्यैषा सहस्त्रतम्यन्यतएनी कण्डूकृतोपक्लृप्ता भवतीति
सँसेवितेत्येवेदमुक्तं भवति
कस्मिन्नु खलु काले लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्यादिति
संग्रामं जित्वा राजन्य एनां दद्यात्
कथमु खलु गर्गत्रिरात्रेणर्तुमुखेषु विहृतेन यजेतेत्याषाढे वा श्रावणे वा
पक्षेऽग्निष्टोमेन वा यजेत
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले
वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावोवायव्यँ संप्रक्षाल्य द्रोणकलशे
दशापवित्रे समवधायाग्नीध्रं द्रुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय

उपसादयन्ति
परिहृतासु वसतीवरीष्वाहूतायाँ सौब्रह्मरायायाँ संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्याविशिष्य पयाँस्युपवसन्त्यथ श्वो भूते
सवनेष्ट्या यजेत
तत स्तम्बयजुर्हरति
स एवमेवाहरहर्वसतीवरीः परिहरमाणश्चतुरो मासः सवनेष्ट्या यजते

नाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजतेऽथ चतुर्षु मासेषु पर्यवेतेषु
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मरायायामहरहः संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्य पयाँ सि विशिष्योपवसन्ति १८

अथ श्वो भूत उक्थ्येन यजते
तत्तथैव पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं
काले वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावोवायव्यँ संप्रक्षाल्य
द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं द्रुत्वा समिद्धारा यन्त्याहृत्य समिध
आहवनीय उपसादयन्ति
परिहृतासु वस्तीवरीष्वाहूतायाँ सुब्रह्मरायायाँ संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्याविशिष्य पयाँस्युपवसन्त्यथ श्वो भूते
सवनेष्ट्या यजते
तत्र तथैव न स्तम्बयजुर्हरति
स एवमेवाहरहर्वसीवरीः परिहरमाणोऽपराँश्चतुरो मासः सवनेष्ट्या यजते
नैवाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजतेऽथ चतुर्षु मासेषु पर्यवेतेषु
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मरायायामहरहः संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्य पयाँ सि विशिष्योपवसन्त्यथ श्वो
भूतेऽतिरात्रेण यजते सयज्ञपुच्छेनाथैताँ सहस्रतमीं प्राचीं वोदीचीं
वावर्तयँस्तया विहारं चात्मानं च न व्यवेयादिति १९

किंदक्षिणा उ खल्वहीना भवन्तीत्यहर्गणोऽहर्गणः सहस्रदक्षिणः
स्यादित्येतदेकम्
एकैकमहः सहस्रदक्षिणँ स्यादित्येतदेकं द्वादशशतदक्षिणँ स्यादित्येतदेकं

यथाश्रद्धदक्षिणँ स्यादित्येतदपरमादेशादेवैतस्मिन्नतिरात्रे सहस्रमनुविहितं ददाति
द्विरात्रप्रभृतयोऽहीना भवन्त्यैकादशरात्रादथेमान्यहीनाभिपरीतानि सत्त्राणि भवन्ति यथैतत्संवत्सरगर्भ एकादशरात्र उभयविधो हि भरतद्वादशाहो द्वादशाग्निष्टोमा रथंतरसामानः
स ह भरतद्वादशाहोऽथोद्यत्स्तोमेषु त्रिवृत्प्रथममहः स्यात्पञ्चदशं द्वितीयँ सप्तदशं तृतीयमेकविँशं चतुर्थमितीन्वेकम्
अथापरस्त्रिवृत्प्रथमस्याह्नः प्रातःसवनं पञ्चदशं माध्यंदिनँ सवनँ सप्तदशं तृतीयसवनम्
अथ द्वितीयस्याह्नः पञ्चदशं प्रातःसवनँ सप्तदशं माध्यंदिनँ सवनमेकविँशं तृतीयसवनम्

अथ तृतीयस्याह्नः सप्तदशं प्रातःसवनमेकविँशं माध्यंदिनँ सवनं त्रिणवं तृतीयसवनम्
अथ चतुर्थस्याह्न एकविँशं प्रातःसवनं त्रिणवं माध्यंदिनँ सवनं त्रयस्त्रिँ शं तृतीयसवनम् २०

अथेम औपसदाः पुरोडाशाः शूर्पादानप्रभृतय आप्यान्ताः
स्रुवाहुत्या चैनान्सह सकृज्जुहुयादौपमन्यवीयेन कल्पेनाग्नेयानेककपालान्
अनुसरस्वति प्राञ्चो यान्तीत्याहवनीयसकाशाच्छम्यां प्रास्येत्
सा यत्र निपतेत्तद्गार्हपत्यस्यायतनँ स्यात्प्राचीनं तत आहवनीयोऽथ यद्यपर्याणा अप उपाधिगच्छेयुरपोनप्त्रीयं चरुं तृतीयसवनीयानामनुनिर्वाप्यं कुर्युरथोपोत्तरेद्युः समाप्यत्वेव शम्यां प्रास्येत्
त्र्यहा भवन्ति पञ्चाहा भवन्तीत्यभिप्लवानामेवैतेऽपच्छेदा भवन्त्यष्टमेऽह्नि वाजपेय इति
तत्र यदेव सुत्याभिपरीतं वाजपेयिकं कर्म तत्कुर्याद्
अथेदँ सँसदामयनमच्छन्दोमं भवतीति
विज्ञायत उ खल्वस्य छन्दोमभक्तयश्चतुर्विँशं चतुश्चत्वारिँ शमष्टाचतुर्विँशमिति २१

अथायमतिरात्र उभयविधो भवत्यहीनो वैकाहो वापि तु खल्वस्याहीनस्यैव रूपं द्वादशोपसदोऽनेकमहरभिविधत्तेऽथैकाहस्यैव रूपं सकृद्वसतीवरीर्गृह्णाति सकृत्पशूनुपाकरोत्येकं क्रतुकरणं समयाविषिते सूर्ये हिरण्येन षोडशिन स्तोममुपाकरोतीत्यर्धास्तमित इत्येवेदमुक्तं भवति तस्य चेदनुपाकृत आदित्योऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथ यस्योक्थ्येऽतिरिच्येतातिरात्रं कुर्वीतेत्यतिक्रान्ताः खल्वस्य दीक्षोपसदोऽतिक्रान्तं क्रतुकरणमतिक्रान्तँ षोडशिनो ग्रहणम्
अथ तदानीमेव षोडशिपात्रमुपकल्प्य तिसृभिर्ऋग्भिर्गृह्णीयादथैतेन पुरस्ताद्रात्रिपर्यायेभ्यश्चरेत्
तत्रैवमेव संप्रैषः प्रतिप्रस्थातराग्रयणतृतीयं गुदतृतीयानि जाघनीः पृषदाज्यं गोपायाग्नीदाश्विनं ते द्विकपालँ शृतमप्यपररात्रेऽस्त्विति

कस्मिन्नु खलु काल आश्विनो द्विकपालो निरुप्यत इति तार्तीयसवनिकैर्वा पुरोडाशैः सहापि वा पुरस्तादुत्तमस्य रात्रिपर्यायस्य त्रिवृद्वै स्तोमानामवमस्त्रिवृत्परम इत्यतिरात्रब्राह्मणमेवैतद्भवत्यथेयँ सौत्रामणिकी सुरा पादकिण्वा वा भवत्यपि वा पञ्चिका
शष्पाणि च तोक्माणि चेति
यवानामु ह शष्पाणि भवन्ति व्रीहीणामु ह तोक्माणि माषास्तु नग्नहुरथायं कारोतरो दारुमयो वा वैदलो वा मृन्मयो वा चर्मणा त्वेवाभिविदि स्यादयँ सुतासुतीति
सुतमु हास्यामुत्र भवत्यासुतमु हास्येह भवत्यथास्मिन्दाक्षायणयज्ञे कुर्यादुपाँशुयाजमिति २२

अथास्यामेकादशिन्यां यूपाहुतिस्तन्त्रं याग्नौ हूयतेऽथाव्रश्चनजा संचारिणी सँस्पर्शकं कर्म तद्भवत्यग्निष्ठां प्रथमस्याश्रिँ सकृदाहन्याद्द्विर्द्वितीयस्य त्रिस्तृतीयस्यैवमेवेतरेषामनुपूर्वं छेदनज्ञायाय चाथ वेदिविमानं दशानां च रथाक्षाणामेकादशानां च पदानामष्टाङ्गुलस्य च चतुर्विँशं भागमाददीत स प्रक्रमः स्यात्
तेन वेदिं विमिमीताथेमावुपस्थावानौ चतुरङ्गुलमात्रेण विकृष्टतमौ स्याताम्

अथेतरे रथाक्षान्तराला एव स्युरित्यथ वै भवत्युपरसंमितां
मिनुयात्पितृलोककामस्येति
यावत्यग्निष्ठस्योपर तावन्मात्रा इतरे भवन्ति
चषालसंमितामिन्द्रियकामस्येति यावदग्निष्ठस्य रशना तावन्मात्रा इतरे
भवन्ति
सर्वान्समान्प्रतिष्ठाकामस्येति सर्वान्समान्प्रतिष्ठाकामस्य करोति
ये त्रयो मध्यमास्तान्समान्पशुकामस्येति तान्समान्पशुकामस्य करोति
व्यतिषजेदितरानिति स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजत्यथ वै
भवति
यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ
ह्रसीयाँ समित्युत्तरार्ध्यमत्र वर्षिष्ठं मिनोति दक्षिणार्ध्यं ह्रसीयाँ सम्

एष वै गर्तमिद्यस्यैवं मिनोति ताजक्प्रमीयत इति ब्राह्मणं दक्षिणार्ध्यं वर्षिष्ठं
मिनुयात्सुवर्गकामस्याथ ह्रसीयाँ समिति २३

अङ्गुष्ठपर्वमात्रेणाङ्गुष्ठपर्वमात्रेणोत्तरमुत्तरं यूपँ ह्रसीयाँ सं मिनुयादपि वा
यूपावटानामेवैता मात्रा अतिखनेद्कथमु खलु यूपावटाँश्च परिलिखतो
यूपाँश्चोच्छ्रयतः पशूँश्चोपाकुर्वतः संचरी स्यादित्यन्तरेणाग्निष्ठं चोपस्थावानं
चोपातीत्य जघनेनोत्तरवेदिं परिक्रम्यान्तरेणाग्निष्ठं चैवोपस्थावानं
चोपातीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वापि वा यंयं
परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा तंतं न व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरम्
अपि वा सर्वानेवाग्रेण यूपान्परीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा
व्यतिषङ्गं तेन पूर्वाः संपद्यन्त एवं व्यतिषक्तानामेवैतेषां पशूनां पञ्च
दक्षिणार्ध्यान्पशूनुपक्रम्यैव स्थापयेयुर्
वारुणं प्रथममत्यानयेयुरथानुपूर्वमितरान्
अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य प्रस्थान्वा निहन्युरपि वा
मण्डलीकृतांस्तेषां वपा उत्खिद्याहरेयुर्यथा वपाभिर्विहारं चात्मानं च न
व्यवेयुरथायं पात्नीवतोऽङ्गुष्ठपर्वमात्रेणोत्तरार्ध्याद्यूपाद्ध्रसीयान्स्यादपि वा
यथाब्राह्मणमवाङ्नाभिमचषालमनवस्तीर्णम्
अथेदँ सर्पाणामयनँ स्तोमतो विकृतं भवत्यथेदं विश्वसृजामयनं

कथमिदानीन्तनेषु स्यादिति
शतं दीक्षाः शतमुपसदः सहस्रं प्रसुतः २४

अथेदं कुण्डपायिनामयनमग्निहोत्रपूर्वमेके ब्रुवते सोमपूर्वमुपयन्ति
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले
वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावोवायव्यँ संप्रक्षाल्य द्रोणकलशे
दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्य्
आहृत्य समिध आहवनीय उपसादयन्ति
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मण्यायाँ संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्याविशिष्य पयाँस्युपवसन्त्यथ श्वो भूत
आमावास्येन हविषा यजते
तत्र न स्तम्बयजुर्हरति
त एवमेवाहरहर्वसतीवरीः परिहरमाणा अष्टाविँशतिमहान्यामावास्येन
हविषा यजन्ते
नाग्निहोत्राणि जुह्वति न पौर्णमासीं यजन्ते
स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति
समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभि पर्यग्नि कृत्वा तैर्मार्जालीये
प्रचरति
गार्हपत्य एव पिण्डपितृयज्ञँ श्रपयित्वा तेन मार्जालीय एव प्रचरति
प्रतिपूरुषमुवेवैषां प्रवरान्प्रवृणीत एकैकस्यैवैषां त्रयस्त्रयः पिण्डास्
ते पञ्चदश
महापितृयज्ञे स्तीर्णं बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति
नाज्यानि गृह्णीते
स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं मार्जालीयं करोति

समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवीँषि श्रपयित्वा तैर्मार्जालीये
प्रचरेदाहवनीये मारुत्या प्रचरेदन्तमेवावभृथः परीयाद्धितृतीया वेदिर्भवति
प्रक्रमाणामु ह तृतीयं नवमस्तु भूमेर्भागो भवतीति २५

अथ पञ्चहविषमिष्टिमिष्ट्वान्वहं पुनरावृत्तमेकैकेन हविषा यजेतैकं चेद्द्वे वा

हविषी पर्यवेते स्यातामथ संवत्सरः समाप्येत कथं तत्र कुर्यादिति
प्रतिकृष्यैतस्य पन्नस्य पञ्चहविषमिष्टिं निर्वपेदथ संवत्सरतमेऽह्नि पञ्चहविः स्यादिति
प्रथमे द्वादशाहेऽग्निं चिन्वीतेति
प्रथमे द्वादशाहेऽग्निं चिन्वानश्चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमयाष्टाहोनँ संवत्सरमुत्तमयाथेतराँश्चतुरहोनाँश्चतुरहोनानेकैकया चतुरश्चतुरो मासान्प्रत्याददीत
चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव मासानेकैकयोपसदा गच्छेदित्युत्तमे द्वादशाहेऽग्निं चिन्वीतेत्युत्तमे द्वादशाहेऽग्निं चिन्वानोऽष्टाहोनँ संवत्सरं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयाथेतराँश्चतुरहोनानेकैकया चतुरश्चतुरहोनान्मासान्प्रत्याददीत
चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव मासानेकैकयोपसदा गच्छेदिति २६

अथ लोकंपृणा इष्टका उपदधन्मासमेतीति
लोकंपृणा इष्टका उपदधन्मासं गत्वा त्रिँशत्तमस्यामहः सर्वं प्रच्छादं प्रच्छादयेदपि वा त्रिँशतोऽवकाशं कृत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति
कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका अथापराह्णिके प्रवर्ग्योपसदौ मासि वसोर्धारेति
मासं पुरीषेण यन्तीति
कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीषमथापराह्णिके प्रवर्ग्योपसदौ
चतुरो मास उपसद्भिरेतीति

यदमुत्र मासेन करोति तदिह दशरात्रेण करोति
चतुरो मासः सुनोतीति
कतमे नु खल्विमे मासा भवन्तीति
गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो विषुवतः सह वैषुवतेन

वसतीवरीषु मृत्पिराडमन्ववधायेति
किमर्थो नु खल्वयं मृत्पिराडो भवतीति
संतन्यर्थ एष भवतीति
भिन्ने कुम्भेऽन्यस्मिन्कुम्भ एतं मृत्पिराडमन्ववधायाप ग्रानयेत्
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले
वसतीवरीरभिगृह्याहीनसंततिं कृत्वा ग्रावोवायव्यँ संप्रक्षाल्य द्रोणकलशे
दशापवित्रे समवधायाग्नीध्रं द्रुत्वा समिद्धारा यन्त्याहृत्य समिध ग्राहवनीय
उपसादयन्ति
परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मरायायाँ संवेशनीयाः
समिधोऽभ्याधायेध्माबर्हिः संनह्याविशिष्य पयाँस्युपवसन्त्यथ श्वो भूते
सवनेष्ट्या यजन्ते
तत्र न स्तम्बयजुर्हरति
त एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरँ सवनेष्ट्या यजन्ते
नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्तेऽथ संवत्सरतम्यां
पर्यवेतायां परिहृतासु वसतीवरीष्वाहूतायाँ सुब्रह्मरायायामहरहः
संवेशनीयाः समिधोऽभ्याधायेध्माबर्हिः संनह्य पयाँ सि
विशिष्योपवसन्त्यथ श्वो भूतेऽभिजितेष्ट्वोत्तिष्ठन्ति २७

ग्रथ वै भवति
छन्दश्चितं चिन्वीत पशुकाम इत्यभ्र्यादानप्रभृतीन्मन्त्रान्साधयेदा वायव्यात्
स प्रत्यक्षं वायव्येन पशुना यजेत प्रत्यक्षं
दीक्षणीययोरवाप्रवृञ्जनप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः
प्रत्यक्षं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्
विहरेदग्निं रूपाणि दर्शयेद्वच्छेदिरिणं तत्र नैर्ऋतान्मन्त्रान्निगदेत्
स प्रत्यक्षं गार्हपत्यमुपतिष्ठेत
प्रत्यक्षं प्रायणीयया
प्रत्यक्षमातिथ्यया
कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा कर्षणवपनाभ्याम्प्रत्यक्षं कर्षणवपने
प्रथमां चितिँ सपुरीषां निगदेद्
एवं द्वितीयामेवं तृतीयां सर्वां चितिँ सपुरीषाँ सवराडां चितिँ सपुरीषां

निगदेद्या अहान्तःशालीका आहुतयः स्युर्जुहुयादेव ता अथ य औत्तरवेदिका मन्त्राः स्युर्निगदेदेव तान् २८

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येक आनुपूर्व्यं ब्रुवतेऽथाप्युदाहरन्त्याग्नयाधेयं पूर्वस्यां ततावेकादशप्रयाजँ सर्वँ सहोत्पन्नम् ऋतवः षड्ढोतेति
षाण्मास्य एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सुषट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभियजेत माघमासे धनिष्ठाभिरुत्तरेणेति भानुमानर्धाश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्
तदन्ततोऽनीजानस्य संवत्सरो नातीयाद्
अथ चातुर्मास्येषु सोमेषु पञ्चहोता सप्तहोतु स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सीदत्येष पशुसंयोजनेव भवति परिधौ पशून्नियुञ्जीतेति ब्राह्मणमेतद्यूपा एव तदस्माकं भवन्त्यथ महापितृयज्ञे स्तीर्णं बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाज्यानि गृह्णीते स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्त्रं मार्जालीयं करोति महाहविर्भिश्चरित्वा समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरेदाहवनीये मारुत्या प्रचरेदन्तमेवावभृथः परीयात्
तस्य प्रथमा चितिः पुरीषवती मन्त्रवती भवतीति
प्रथमैवास्य चितिः पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका यांयां चितिँ सपुरीषां ब्रुवते सासैवास्य चितिः पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीकाः २९

अथेम एकाहास्
तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव तानि जानीयादथाहीनरात्रिसत्त्रेषु यान्यहान्यनादिष्टान्युक्थ्या इत्येव तानि जानीयाद्माध्यंदिनीया एवैनं चमसा निमृजन्तो यन्तीति

सदस्यासीनं माध्यंदिनीया एवैनं चमसा निमृजन्तो यन्ति भक्षार्थाश्चतुर्विँश

एष भवति
शुक्रामन्थिनोः सँस्रावेणाभिषिञ्चतीति
यजमानायतन आसीनँ शुक्रामन्थिनोः सँस्रावँ समानीयाभिषिञ्चति
चतुष्टोम एष भवति
सप्त हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयोऽष्टाकपालः पौष्णश्चरुः
सावित्रो द्वादशकपालस्त्वाष्ट्रोऽष्टाकपालो वारुणो दशकपालो
वैश्वदेवश्चरुर्मारुतः सप्तकपाल इत्यष्टौ हवींषि प्रातःसवनीयाननुवर्तन्त
इत्याग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रो द्वादशकपालो
बार्हस्पत्यश्चरुरग्नीषोमीय एकादशकपालः सारस्वतश्चरुर्वारुणो दशकपालो
द्यावापृथिव्य एककपाल इति
यत्किं च राजसूयमृतेसोमं तत्सर्वं भवतीति
मारुतं चात्रैकविँशतिकपालं प्रतिषेधयत्यौपसदाश्चेष्टीरर्धचतुर्दशैरेष मासैः
संतिष्ठते
यत्किं च राजसूयमनुत्तरवेदीकं तत्सर्वं भवतीति
द्विपशुं चात्र पशुबन्धं प्रतिषेधयति चातुर्मास्यानि चाध्यर्धेनैष मसेन संतिष्ठते
सिँहे व्याघ्र उत या पृदाकाविति

किंदेवत्या उ खल्वियमाहुतिर्भवतीति ३०

इन्द्राणीदेवतेत्येव ब्रूयात्
सप्तदशिना पशुबन्धेनेष्ट्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना
यजेतापि वा पुरस्तादेव तूष्णीँ संभृताः संभृत्य मन्त्रवतीं मृदँ संभृत्य
तयानुप्रलिप्य
नियुनक्त्युक्थ्यस्योपयामगृहीतोऽस्यग्नये त्वा बृहद्व्रते वयस्वत उक्थ्यायुवे
यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्थायुव इति
नियुनक्ति ध्रुवस्य मूर्धानं दिवो अरतिं पृथिव्यार्मघवन्तमृताय जातमग्निम्।
कविँ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥
उपयामगृहीतोऽसीन्द्राय त्वा मघवते जुष्टं गृह्णामीति
परिमृज्य सादयत्येष ते योनिरिन्द्राय त्वा मघवत इति

नियुनक्ति पात्नीवतस्योपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्द्रो
इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णामीन्द्रा३ पत्नीवा३ इति
नियुनक्ति हारियोजनस्योपयामगृहीतोऽसि रोहिदसि रोहिद्योजनो रोह्यो
स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य
शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धानाः सहसोमा अग्नये
स्वाहेति ॥

योऽग्निष्टुतीन्द्रस्पर्शस्तमुत्सादयेद्य इन्द्रस्तुत्यग्निस्पर्शस्तमुत्सादयेदिनत्या अन्या
देवताः
किंदेवत्यानि खल्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यच्च किं च
रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्वेकम्
अथापरम्
आग्नेयं प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति ३१

स ग्रीष्मस्य जघन्याहःसु प्रजहितेषु यवेष्विति
प्रमृदितेष्वित्येवेदमुक्तं भवत्यधिकरणेनेत्येवेदमुक्तं भवत्यृत्विजः
पदेनाह्वापयतीति तत्पूर्वं वेत्यथैनमभ्यज्य पवयित्वोदानयतीति
सिद्धमत्राग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेतस्मिँश्च काले त्रीणि
बर्हींषि यजुषा कुर्याद्दीक्षणीयायाः प्रायणीयाया आतिथ्याया इत्य्
अथ निर्वपेद्दीक्षणीयां प्रायणीयामातिथ्यादाज्येन वर्तयेद्यावद्रथा आगच्छेयुः
सहनिरुप्तमाज्यं तिसृषु स्थालीषु विगृह्णीयाद्या दीक्षणीयायै सँस्था तया
दीक्षणीयाँ संतिष्ठापयिषेत्
प्रणीताभिः प्रायणीयस्य प्रतिपद्येतैष एवातिथ्याया उपक्रमो भवतीति
त्रिवत्सेन साण्डेन वत्सतरेण राजानं क्रीत्वोह्यातिथ्यं निर्वपतीति
त्रिहायणेनेत्येवेदमुक्तं भवति
कथमु खल्वस्य मन्त्रानभिनमयेद्चिदसि मनोऽसि धीरसि दक्षिणोऽसि
यज्ञियोऽसि क्षत्रियोऽस्यदितिरस्युभयतःशिराः स नः सुप्राङ्संभवेत्येकगणा
उपसदो भवन्तीति
पूर्वाह्णिका एवैता उक्ता भवन्ति
खलेवाली यूपो भवतीत्येतामेवैषां मेथीं कुर्वन्ति

स खलेवाली यूपस्
तस्यै कटे परमिव चषालभाजनं भवतीत्याकुट्ट इत्येवेदमुक्तं
भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेयमनूबन्ध्यमिति
यमा एवैते छागाः समानयोनयो भवन्ति
तेषामुक्तं चरणम्
अथास्याँ सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियामवभृथप्रभृत्यस्तमिते
यज्ञपुच्छं तासां प्रथमैव सरथा प्रथमा चित्ससोमक्रयणी
प्रथमाग्निहोत्रोच्छेषणव्रताथास्याँ सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां
त्रिस्तनद्विस्तनैकस्तनव्रतस्य रूपाणि कुर्वन्ति
क्व उ खल्वेकाहे दृष्टः संनिवापो भवतीति
व्रात्यस्तोमे चेन्द्राग्नयोश्च कुलाय इत्येव ब्रूयादथास्मिन्व्रात्यस्तोमे बहव
एकस्मै दीक्षन्तेऽदीक्षिता एवैनान्याजयन्ति
दण्डोपानहँ शामुलाजिनमिति
शामुलकानामुह दभ्रमिश्राः कम्बला भवन्ति स च भवति श्वेतं चौरभ्राजिनम्
३२

स एष ज्येष्ठानामग्निष्टोम एष एव सन्कनीयसामुक्थ्यश्चतुष्टोमं पूर्वमहर्भवति
पञ्चस्तोममुत्तरं रथो हविर्धानं कुर्यात्तल्परूपमुत्तरं हविर्धानम्
उत्सीदेयुः शकटमन्त्रा द्वौ त्रयस्त्रिँ शौ मध्यत स्तोमौ भवत इति
पृष्ठ्यस्तोमावेवैतावितश्चामुतश्च प्रतिलोमौ भवतोऽथामावास्यायां प्रतिसमस्य
चान्द्रमसं पिण्डपितृयज्ञं दद्यात्
तं ब्रह्मणः सन्तं पर्युपविश्य भक्षयन्ति यदृतं मन्यन्ते तेन ब्राह्मणम्ब्राह्मणो वै
वर्णानाँ श्रेष्ठोऽग्निर्देवानामित्येतेन वा भक्षयेदपि वा व्याहृतीभिश्चतुष्टोम एष
भवतीति चतुरुत्तरीय एष दिशां चतुष्टोमो भवत्य्
अथास्मिन्कानान्धयज्ञेऽवभृथप्रभृत्यस्तमिते यज्ञपुच्छं तस्य दशसु
बहिष्पवमानः शते सहस्रेऽयुते नियुते प्रयुतेऽर्बुदे न्यर्बुदे समुद्रे मध्येऽन्ते
परार्धे पद्मे पल्वे नित्यमुक्त्वा मनसैव स्तुवानो मन्यत एतावति मे
स्तुतमित्यथ सकृत्प्रवर्ग्य एकमेवाग्निहोत्रम्
अथास्मिञ्छुनस्कर्णयज्ञे

तिलमिश्रमशित्वा मत्स्यान्खादित्वा क्षारमात्रं पिबेदथ सामपथे संविशेत्
स्वप्नादेव स्वप्ने गच्छति
राशिकृतं धान्यं ददाति मरायकृतं धान्यं ददातीति
मूतकृतमित्येवेदमुक्तं भवति
प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्तीति
यः प्रत्यङ्विहारो दक्षिणतौपचार एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यात
एतेन सहस्रशालोऽथैनमिह पवयित्वामुत्र पवयन्तीति
सिद्धमत्राग्निष्टोमिकं कर्म जानीयादुत्तरस्यैव शालायै

स द्वौ त्रिरात्रौ कुरुत एकं च द्विरात्रमिति
दीक्षोपसद्भिरेवास्यैतान्यहान्यभिविधत्तेऽहीनविधोऽति यज्ञं दद्यात्
तदिदं प्रोक्तं यदक्लृप्तँ सूत्रतः
सामयिकं त्वेव क्रतुयोगं यज्ञे यज्ञमुपलक्षयेतेति बौधायनो यज्ञे
यज्ञमुपलक्षयेतेति बौधायनः ३३

## सप्तविंशः प्रश्नः

अथातो मन्त्रगणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः
सर्वत्रोपरिष्टान्मन्त्रकृतं यद्यधस्तान्निपतेद्ब्रह्म प्रतिष्ठा मनस इत्येतया
प्रतिष्ठाप्यैतयैव स्रुवाहुतिं जुहुयाधुत्वा वा प्रतिष्ठापयेद्धुत्वानन्तरं कर्म
कुर्यादेवमन्येष्वप्यतिक्रान्तं कर्म नाद्रियेत यद्यर्थलुप्तं भवति
सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणामत्युक्तानुक्तहीनेष्वाश्रावितमत्याश्रावि
तमित्येतया स्रुवाहुतिं जुहुयात्
सर्वत्र देवोच्चारणेषु भागिनीं देवतामनुच्चारयित्वा योन्यामुच्चारयेद्यद्वो देवा
अतिपादयानीत्येतया स्रुवाहुतिं जुहुयात्
सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योन्यामावाहयेदेतयैव
स्रुवाहुतिं जुहुयाद्यत्र स्मरेत्तदुपोत्थायैनां मनसावाहयेदथातिरिक्तामाज्येन
यथोढां यजेत
सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां वा यदि विप्रुषो विपतेयुः स्रवेद्वा
चमस आपो हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु
तायते पुनरित्येतया स्रुवाहुतिं जुहुयात्

सर्वत्र वितते यज्ञकर्मणि यदि सूर्यो नाविर्भवत्यन्यत्रादेशादुद्वयं तमसस्पर्युदु त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं विद्यत एतदेवाथ यति यजमानस्यर्त्विजां वा स्वप्ने रेतोविसर्गः स्यादिमं मे वरुण तत्त्वा यामीत्येताभ्याँ स्रुवाहुती जुहुयात्
सर्वत्र हविर्देवतायाज्यापुरोऽनुवाक्याहुतीनाँ हुताहुतभ्रेषेष्वन्तरिते विपर्यासे च त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्याँ स्रुवाहुती जुहुयात्
सर्वत्र दर्विकूर्चप्रस्तरपरिधिबर्हिर्विधृतिपवित्रवेदोपवेषेध्मद्रव्यसंभाराणां छेददाहोपघातेषु नाशे विनाशे वान्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वमग्ने अयासि प्रजापत इत्येताभ्याँ स्रुवाहुती जुहुयात्
सर्वत्र वितते यज्ञकर्मणि १

यदि पुरा प्रजाजेभ्यो बहिःपरिध्यङ्गारा अभिपर्यावर्तेरन्ब्राह्मणोक्तं प्रायश्चित्तं कृत्वेमं जीवेभ्यः परिधिं दधामीत्येतया स्रुवाहुतिं जुहुयात्
सर्वत्र वितते यज्ञकर्मणि यदि यज्ञभ्रेष आगच्छेदिष्टेभ्यः स्वाहा वषडनिष्टेभ्यः स्वाहेत्येतैरष्टाभिः स्रुवाहुतीर्जुहुयात्
सर्वत्र वितते यज्ञकर्मणि यदि जन्यं भयमागच्छेद्यत इन्द्र भयामहे स्वस्तिदा विशस्पतिरित्येताभ्याँ स्रुवाहुती जुहुयादभये वा पुनर्यजेत

सर्वत्रोपाँशुप्रभृति वाच स्थानानाँ स्वराक्षरपदवृत्तभ्रेषेष्वाभिर्गीर्भिर्यदतो न ऊनमित्येतया स्रुवाहुतिं जुहुयात्
सर्वत्रानाज्ञातप्रायश्चित्तेष्वनाज्ञातम्पुरुषसंमित इत्येताभ्याँ स्रुवाहुती जुहुयात्
सर्वत्रेध्माबर्हिषः प्रयाजानूयाजानां पाकत्राकर्मसु यत्पाकत्रा मनसेत्येतया स्रुवाहुतिं जुहुयात्
सर्वत्र स्कन्ने भिन्ने छिन्ने भग्ने नष्टे क्षामे विपर्यास उद्दाह ऊनातिरिक्ते वा यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्याँ स्रुवाहुती जुहुयात्सर्वेष्वग्न्युपघातेषु पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया समिधमादध्यादेतयैव स्रुवाहुतिं जुहुयात्सर्वेषु यज्ञक्रतुषु पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति ब्रह्म प्रतिष्ठा मनस इत्येतेनानुवाकेन प्रत्यृचम्

अथ वै भवति
समिष्टयजूँषि जुहोति यज्ञस्य समिष्ट्यै
यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापिकरोति
तदेव तैः प्रीणातीति ब्राह्मणम्

एतान्येव ब्राह्मणविधिविहितान्याप्यायनानि मन्त्रवन्ति भवन्तीति बौधायनो
मन्त्रगणाम्नातानि नैमित्तिकानीति शालीकिः २

अथ कपालकरणे रथचक्रचित्याकृत्यश्वशफमात्रँ स्थानं कल्पितं भवति
संकल्पोऽधिकारः कपालवृद्धिः कपालह्रासो वा कपालानामनभिप्रथने
व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्येतावदेव नानाप्रथने
चातिप्रथने चाथ हविषामशृतद्रवदाहोत्सेकनिस्रावे प्रायश्चित्तिरशृते रुद्राय
स्वाहेत्याहवनीये स्रुवाहुतिं जुहुयाद्द्रवे वायवे विदग्धे निर्ऋत्यै
यदि दग्धँ स्याद्यत्तत्र शृतँ स्यात्तेन प्रचरेदथ यदि सर्वमेव दग्धँ
स्यादपोऽभ्यवहृत्य मिन्दाहुती जुहुयादथान्यं निर्वपेदाज्येन वा प्रचरेत्
सैव ततः प्रायश्चित्तिर्यस्यैयस्यै दिश्युत्सिच्येत तस्यैतस्यै देवतायै स्रुवाहुतिं
जुहुयाद्यदि प्रागग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः
सोमायाथ यदि सर्वत एवोत्सिच्येतैताभ्यः सर्वाभ्यो देवताभ्यः
स्रुवाहुतीर्जुहुयात्
तमाज्येनाप्यायनीभ्यामाप्याययत्याप्यायस्व सं त इत्यथ
हविषामुद्वासनकाले पतनफालनखण्डनोद्वर्तनसँसर्पणविपरीतव्यवायकरणेषु
व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथान्तरेण
वेद्युत्करावुदङ्ङुपनिष्क्रम्या तमितोरुदङ्ङुपनिःसृप्य व्याहृतीरुक्त्वा
व्याहृतीभिरेव प्रतिपद्यते ३

व्याहृतयस्तु चतुष्पादा नवाँ शाश्च षडक्षराः ।
चतुर्णामपि वेदानामादिमध्यावसानिकाः ॥
मन्त्रोनं वातिरिक्तं वा दुरिष्टं वापि यद्भवेत्।
व्यपोहयन्ति पाप्मानं तस्माद्व्याहृतयः स्मृता इति ॥
यद्यृक्तो यज्ञभ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव

इत्यन्वाहार्यपचने
यदि सामतः सुवरित्याहवनीये
यदि सर्वतः सर्वा जुहुयाद्
उद्धते तु पुरोडाशे वेपिते स्यन्दिते तथा ।
भिन्ने सँसर्पणे चापि प्रायश्चित्तं कथं भवेदिति ॥
विज्ञायते
उद्धते तु कुलँ हन्याद्वेपिते नश्यति प्रजा ।
भिन्ने सँसर्पणे चापि यजमानः प्रमीयत इति ॥
अथ पतनफालनखण्डनोद्वतनसँसर्पणेषु प्रसिद्धमुद्वास्य बर्हिषदं कृत्वा प्रभूतेन सर्पिषावसिच्याभिमन्त्रयते किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि ।
अघोरो यज्ञियो भूत्वासीद सदनँ स्वमासीद सदनँ स्वमिति
ब्रह्मणे वरं दत्त्वान्तर्वेद्यासादयेत्
तस्याँ सँस्थितायाँ सुरभिमतीं निर्वपेत्
तस्याँ सँस्थितायां तन्तुमतीं निर्वपेदायुष्मत्यस्तु कर्तव्या उत्तराश्छन्दसः क्रियाः ।
हविर्भ्रेषविधिस्त्वेष विहितस्तत्त्वदर्शिभिरिति ॥

स्कन्ने ग्रहणनिर्वापे द्रव्याणां चानुमन्त्रणे ।
यस्मिन्काले विजानीयात्तत्कुर्यात्कर्मसँस्तरे ॥
प्रणवो व्याहृतयश्चैव यज्ञ एष परोऽवरः ।
तस्माद्यज्ञस्य यत्स्कन्नम्विपरीतं च यद्भवेत्।
तत्सर्वं व्याहृतीभिः कुर्यादन्यत्र च वषट्कृतात्॥
अजानद्भिः कृतं यच्च त्वरमाणैश्च यत्कृतम्।
व्याहृतीनां प्रयोगेण यत्कृतं कृतमेव ततिति ।
कपालानां प्रमाणानि ब्रूयादाध्वर्यवे विधौ ।
समानि चतुरश्राणि द्व्यङ्गुलानि समन्ततः ॥
हविर्विकाराणां प्रमाणेन समविषमाणि वर्धयन्तीति बौधायनः ४

अथारणिगतानामात्मगतानामजस्राणामन्वाहितानाँ सवनगतानां

चाग्नीनामुद्वातानां प्रायश्चित्तिररणिगतं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोति मनो ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु ।

या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्येतत्प्रायश्चित्तमनुगतेऽहुतेऽभ्युदितेऽभिनिम्रुक्ते चैतत्परिवित्तस्यैतत्परिविन्नस्यैतत्परिविविदानस्यैतत्सोमवामिने सोमातिपविताय भक्षान्तरितस्यैतद्भक्षरहितस्यैतत्परीष्टस्यैतत्परियष्टुरेतदेव यस्य पुरुषो रथोऽश्वो गौर्महिषो वराहोऽहिर्मृगः श्वा वान्यद्वा श्वापदमन्तराग्नीन्गच्छेदेतदेव यस्याग्नेरेकदेशमपहरेयुरेतदेव सर्वास्वेवाग्निहोत्रस्यार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान्भवतीति ब्राह्मणम् ५

अथ दर्शपूर्णमासयोश्चत्वार ऋत्विजस्
तेषामेकस्मिन्नविद्यमाने त्रयः प्रचरेयुर्द्वौ वाथ यद्येक एव स्यात्पुरा प्रयाजेभ्य आज्यस्थाल्याः स्रुवेणोपघातमेकाध्वर्यवप्रायश्चित्तानि जुहोति जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् ।
यद्वाचो मधुमत्तस्मिन्मा धाः सरस्वत्यै स्वाहा ॥

इमामेवाश्विना यज्ञस्य यद्वाचो यद्दुरिष्टम्।
तदश्विनौ भेषजेन संदधाताँ स्वाहा ॥
त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवँ शूरमिन्द्रम्।
हुवे नु शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः स्वाहा ।
यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः ।
देवास्तच्छमयन्तु सर्वँ सोमो बृहस्पतिश्च स्वाहा ॥
यद्विद्वाँसो यदविद्वाँसो मुग्धाः कुर्वन्त्यृत्विजः ।
अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताँ स्वाहा ॥
यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिँसिम ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसँस्वाहा ॥

ब्रह्मत्वे हौत्र आध्वर्यव आग्नीध्रे याजमाने चैक एव यज्ञे यत्पर्याणि तन्मे देवा रक्षन्ताम्प्राणान्मे मा हिँसिषुः स्वाहा ॥
 अहं ब्रह्माहँ होताहमध्वर्युरहमग्नीध्रोऽहं यजमान एक एव यज्ञे पर्याणि तन्मे देवा रक्षन्ताम्प्राणान्मे मा हिँसिषुः स्वाहेत्येकाध्वर्यवप्रायश्चित्तानि हुत्वानतर्वेद्यासीनः सर्वा देवता यजतीति विज्ञायते
अतिक्रान्तेषु होमेषु पर्वस्वाग्रयणेषु च ।
अरण्योर्ध्रियमाणेषु कथं तन्त्रं न लुप्यते ॥

शुचिश्च पावमानी च तन्तुमानथ पाथिकृत्।
एता इष्टयः प्रयोक्तव्यास्ततस्तन्त्रं न लुप्यते ॥
शुचिः शोधयते पापं तन्तुस्तन्तं न लोपयेत्।
पथिकृत्पन्थानमारोहेत्पावमानी तु पावयेदिति नु बौधायनस्य कल्पो दर्शे व्यतीते पाथिकृती कार्या पौर्णमासे व्यतीते वैश्वानरी कार्योभये व्यतीत उभे कार्ये बहुषु व्यतीतेष्वन्वारम्भणीया स्यादिति शालीकिः ६

अथ यद्यरणी जीर्णे स्यातां जन्तुभिर्मन्थनेन वा समाने नवे अन्ये अरणी आहृत्यामावास्यायामुपोष्य श्वो भूते दार्शेनेष्ट्वा तस्मिञ्जीर्णे शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्य दक्षिणेनोत्तरारणिमादाय सव्येनाधरारणिमुपर्यग्नौ धारयञ्जपत्युद्बुध्यस्वाग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेत्ययं ते योनिर्ऋत्विय इत्यरण्योरग्नीन्समारोह्य मन्थनस्यावृता गार्हपत्यं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोति मनो ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु ।

या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति
शरावं दक्षिणां ददाति
सा प्रसिद्धेष्टिः संतिष्ठते ७

अथारण्योर्व्यापत्तिं
व्याख्यास्यामोऽष्टाभिर्निमित्तैर्विनश्यत्यमेध्यश्वचाण्डालशूद्रवायसपतितरास
भरजस्वलाभिश्च सँस्पर्शनेऽरण्योर्विनाशस्
तयोरुत्सृज्य समाने नवे अन्ये अरणी आहृत्याग्निसहमग्न्याधेयमरणिगतं
पुनराधेयं नष्टारणी अप्सु निमज्जति भवतं नः समनसवित्यथोत्तरां छित्त्वा
भित्त्वा शकलीकृत्य मन्थनसामार्थ्यँ समारोपणसामर्थ्यं मन्थनशेषं वा
प्रमन्थनं च कुर्यात्समस्तशल्यवर्जं
संतिष्ठतेऽरण्योर्व्यापत्तिः ८

अथ हविर्दोषान्व्याख्यास्यामो यथैतन्नीलमक्षिकाशातिका
मत्कुणश्चैलशिरसोर्यूके कीटो वा पिण्डकारी
स्यात्क्षुद्रकीटमक्षिकापिपीलिकावर्जँ
श्वमार्जारनकुलकुक्कुटमर्कटध्वाङ्क्षाखुपुरीषसिक्पदकेशमृतनखकुनखपूतिद्र-
प्सस्वेदासृक्स्नेहाश्रुकासक्षवथ्वार्द्रघ्रणैर्वोपहतमन्यैर्वोपहतँ रजस्वलया वा
स्पृष्टं तथाप्रयतेन भ्रूणघ्नेन वा दृष्टं तथापपात्रेणामेध्ये वा देशे
स्कन्नं दुष्टँ हविरपोऽभ्यवहरन्ति
शीते भस्मनि वा निधापयति
मिन्दाहुती हुत्वाथान्यन्निर्वपेदाज्येन वा प्रचरेदपि तु खलु क्षिप्रसँस्कारमाज्यं
ब्रुवत इति

मिन्दाहुती हुत्वा मनस्वतीं जुहोति
सैव ततः प्रायश्चित्तिः ९

अथातोऽग्नीनामुद्वातानां प्रायश्चित्तिराहुतयः सँस्कारार्था दृष्टा भवन्ति
चतुर्होतार इत्येके
व्याहृतय इत्येके
मिन्दाहुती इत्येके
मनस्वतीत्येके
महाव्याहृतय इत्येकेऽथ यदि सर्व एवोद्वायेयुरायतनेभ्योऽरण्योरग्नीन्समारोह्य
मन्थनस्यावृता गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि

जातवेदाः ।
स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति
छनोद्भिरेवैनँ स्वाद्योनेः प्रजनयतीति ब्राह्मणम्
अथ यदि मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य
होतव्यमित्यथान्यमत्वरमाणः पुनर्मन्थेदथ यदि जात
एवोद्वायेत्समारोपणमन्त्रं जपित्वा पुनरेव मन्थेदथैनमुपतिष्ठत इषे रय्यै रमस्व
सहसे द्युम्नायोर्जेऽपत्यायेत्य्
अथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धातां सम्राडसि
विराडसीत्यथैनमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धृत्य
न्युप्योपसमाधाय गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा
दशहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ
प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य गार्हपत्ये दशात्मकं ब्राह्मण
एकहोतेत्येतस्यानुवाकस्य दश स्रुवाहुतीरथ यद्यन्वाहार्यपचन
उद्वायेद्गार्हपत्यादेनमुद्धृत्यान्वाहार्यपचने चतुर्होतारं जुहोति गार्हपत्ये
दशात्मकम्
अथ यद्याहवनीय उद्वायेद्गार्हपत्यादेनमुद्धृत्याहवनीये पञ्चहोतारं जुहोति
गार्हपत्ये दशात्मकम्
अथ यदि सवनगतानामग्नीनामग्नीध्रीय
उद्वायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं जुहोति शालामुखीये
दशात्मकम्
अथ यद्यौत्तरवेदिक आहवनीय उद्वायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक
आहवनीये सप्तहोतारं जुहोत्याग्नीध्रीये दशात्मकम् १०

एतयैवावृतैकस्मिन्नुद्वाते द्वयोर्वा प्रतिविभज्य होतॄञ्जुहुयाद्द्व्याहुतीश्चेद्व्यस्ताः
समस्ताश्च जुहुयात्तथा मिन्दाहुती जुहुयान्मनस्वतीं चेदाहवनीये
जुहुयात्सैषाजस्राणामन्वाहितानाँ सवनगतानां चाग्नीनामुद्वातानां
प्रायश्चित्तिरेतदेव होमकालेऽन्वाधानवर्जम्

अथ यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदिति यथासूत्रं वा कुर्यादपि वा
गार्हपत्यादिध्ममादीप्य

मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेदपि वा ज्योतिष्मतीमिष्टिं निर्वपेदपि वा ज्योतिष्मतीभ्यामृग्भ्यां पूर्णाहुतिं जुहुयादपि वा ज्योतिष्मतीँ स्रुवाहुतिं जुहुयादग्नये ज्योतिष्मते स्वाहेतीष्टपूर्णाहुतिस्रुवाहुतीनां पूर्वं पूर्वं विधिं बलीयाँ समाचार्या ब्रुवते
तत्रोदाहरन्ति
येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
कर्म तैर्न प्रसङ्गेन कुर्यादापत्सु तद्धनम्॥
विशेषान्सर्ववेदेभ्यः प्रयत्नेनोपधारयेत्।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयादिति ॥

यदि प्रसङ्गेन हुतं च लौक्ये मुग्धैर्वा बालैर्हुतँ स्याद्विहृतं च पत्न्या तानरण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येत्यथ यद्यप्रसङ्गेन हुतं च लौक्ये मुघैर्वा बालैर्हुतँ स्याद्विहृतं च पत्न्या तान्व्याहृतीभिर्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येति ११

अथ वै भवति
निर्ऋृतिर्वा एतस्य यज्ञं गृह्णाति यस्या कस्यां च हविः क्षायति यद्यवदानानि विन्दन्ति नात्र प्रायश्चित्तं कुर्वन्ति
दहति ह वा एषोऽध्वर्युरवदानानि
समूहैतान्येष तर्पयति
दहति ह वा एष य आज्यं पुरस्तादहुत्वाथावदानानि
जुहोत्याज्येनोपरिष्टान्नाभिघारयति

तेषाँ संदग्धानां न देवास्तृप्यन्ति न यजमानोऽथ हैनान्येष संतर्पयति य आज्यं पुरस्ताद्धुत्वाथावदानानि जुहोत्याज्येनोपरिष्टादभिघारयति
तेषाँ संतृप्तानां तृप्यन्ति देवास्तृप्यति यजमानोऽथ
यद्याग्नेयात्पुरोडाशादग्नीषोमौ यजेताग्नीषोमीयाद्वाग्निं यजेत
नैतत्प्रदानमित्याहवनीये स्रुवाहुतिं जुहुयाद्यद्वो देवा अतिपादयानीति
देवपवित्रमाग्नेय्यो याज्यापुरोऽनुवाक्या देवपवित्रमैन्द्रियो देवपवित्रं प्रजापत्या देवपवित्रं व्याहृतय इत्यथ यदि होता याज्यापुरोऽनुवाक्यासु

मुह्येत सर्वाभिराग्नेयीभिर्यजेतेति
विज्ञायतेऽग्निः सर्वा देवता इत्यैन्द्रीभिर्विज्ञायत इन्द्रो वै सर्वा देवता इति
प्राजापत्याभिर्विज्ञायते प्रजापतिः सर्वा देवता इति
व्याहृतीभिर्विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूँ षि
यद्व्याहृतय इत्यथ यदि यजमानो याजमानेषु मुह्येत व्याहृतीभिरेवान्तरेण
वेद्युत्करौ प्रपदनं व्याहृतीभिरेवोपनिष्क्रमणं व्याहृतीभिरेवानुमन्त्रणं
विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूँ षि यद्व्याहृतय
इत्युपासते ह वै यज्ञं देवा अन्तरिता इदमु नो हविर्न हुतं तद्घोष्यत इत्या
स्विष्टकृत इत्येक एडाया इत्येक आनुयाजेभ्य इत्येक आ शंयुवाकादित्येक
आ समिष्टयजुष इत्येक ऊर्ध्वं चेत्समिष्टयजुषः
स्मरेत्सँस्थाप्यैतामिष्टिमन्यामिष्टिमनुल्बणां तन्वीत
यज्ञो ह वै यज्ञस्य प्रायश्चित्तिरिति विज्ञायते १२

अथ सांनाय्यदुहो धयेयुश्चेद्वत्सा वायव्यया यवाग्वा सायं यजेताप्येकस्यां
दुग्धायां न धीतां दोहयेद्दुग्धाभिः सँस्थाप्यादुग्धानां वत्सानपाकृत्य श्वः
सांनाय्येन यजेत

सायंदोहश्चेदार्तिमार्छेदिन्द्राय व्रीहीन्निरुप्योपवसेदिति यथासमाम्नातम्
अपि वा प्रातर्दोहं द्वैधं कृत्वान्यतरदातच्य सायंदोहस्थाने कुर्याच्छृतस्थान
इतरत्
प्रातर्दोहश्चेदार्तिमार्च्छेदैन्द्रं वा माहेन्द्रं वा पुरोडाशं निरुप्य तेन दध्ना सह
प्रचरेदुभयं चेदार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति
प्रसिद्धमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत्
सर्वाणि चेद्धवींषि दुष्येयुर्नश्येयुरपहरेयुर्वाज्येनैता देवताः
प्रतिसंख्यायमिष्ट्वैतामिष्टिमन्यामिष्टिमनुल्बणां तन्वीत
यज्ञो ह वै यज्ञस्य प्रायश्चित्तिरिति विज्ञायते १३

अथातश्छन्दस्यनाम्नातानि हुतानुमन्त्रणानि व्याख्यास्यामो
वैमृधमिष्टमनुमन्त्रयत इन्द्रस्य वैमृधस्याहं देवयज्ययेद्रियाव्यसपत्नो
वीर्यवाञ्छ्रीमान्भूयासमित्यसपत्नो वीर्यवान्भूयासमिति वा

पर्यन्यस्याहं देवयज्यया सुयवसो भूयासं सोमस्याहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय सुरेता रेतो धिषीयेति वा
सवितुरहं देवयज्यया स्वस्तिमान्पशुमान्भूयासं सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं सरस्वतोऽहं देवयज्यया श्रद्धामना भूयासम्पूष्णोऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासम्मरुतामहं देवयज्यया प्राणैर्ऋध्यासम्विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयं द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासम्भूमानं प्रतिष्ठां गमेयमिति वा
वाजिनामहं देवयज्यया रेतस्वी भूयासम्वरुणस्याहं देवयज्यया धर्मभाग्भूयासं कस्याहं देवयज्यया शविष्ठो भूयासम्विश्वकर्मणोऽहं देवयज्यया विश्वानि कर्माण्यवरुन्धीयादित्या अहं देवयज्ययाँ हसो मुच्येय वायोरहं देवयज्यया रत्नभाग्भूयासं सूर्यस्याहं देवयज्यया सुदृशीको भूयासम् अग्नाविष्णवोरहं देवयज्यया वीर्यवान्भूयासम्विष्णोरहं देवयज्यया शिपिविष्टो भूयासम्

अर्यम्णोऽहं देवयज्यया स्वर्गं लोकं गमेयमिति
यथादेवतमिष्टमनुमन्त्रयत एवम्
अनादिष्टानष्टाकपालानाग्नेयविकारानाचक्षत
एकादशकपालानग्नीषोमीयविकारान्द्वादशकपालान्वैश्वदेवविकारानेककपालं भूमिकपालं च
द्यावापृथिव्यविकारावतोऽन्यानाग्नेयविकारांश्चरून्सौम्यविकारान् दधिपयआमिक्षापशवः सांनाय्यविकारा वनस्पतिः स्विष्टकृद्विकार उपाँशुयाजानुपाँशुयाजविकारानाचक्षत इत्यथाप्युदाहरन्ति हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं बलीय इत्यपि वास्य यज्ञस्यागुर उदृचमशीयेति सार्वत्रिकम् १४

## अष्टाविंशः प्रश्नः

अथ वै भवति

यः पापयक्ष्मगृहीतः स्याद्यो वापरुध्येत देवेभ्य ऋषिभ्यः पितृभ्यो गोभ्यो ब्राह्मणेभ्यस्तेनाभिशस्तोऽभिशस्यमानो वा रहस्येष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्याः प्रज्ञात उपवसथोऽथ प्रातर्हुतेऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामँ हिरण्मयम्।
तेन ब्रह्मविदो वयम्पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याँ स्तीर्त्वापः प्रणीयाग्नयेऽँहोमुचेऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति श्रपयित्वासादयति
तस्याः सप्तदश सामिधेन्यः
समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्त इति द्वे
पावकवन्तावेवाज्यभागवग्नी रक्षाँ सि सेधति शुक्रशोचिरमर्त्यः ।
शुचिः पावक ईड्य इति पुरोऽनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।

ब्रह्म तेन पुनीमह इति यजति
यो धारया पावकया परिप्रस्यन्दते सुतः ।
इन्दुरश्वो न कृत्विय इति पुरोऽनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते ।
उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्नेर्मन्वे प्रथमस्य प्रचेतस इत्येतस्मिन्ननुवाके याज्यापुरोऽनुवाक्याः सहसंयाज्या भवन्त्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचम्प्रसिद्धेडाथान्वाहार्यमासाद्य हिरण्यं ददाति
समानं कर्मा पत्नीसंयाजेभ्योऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचं संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा

विसृजते व्रतम्
एतयैव यजेतर्तुव्यतिक्रमे दारव्यतिक्रमेऽयोनौ वा रेतः सिक्त्वैतयैव यजेत
पातकोपपातकसंयुक्तो द्वादशाहं महापातकसंयुक्तो मासं
पुरायमिच्छन्संवत्सरमृतुं वा तामेतां महापवित्रेष्टिरित्याचक्षते मृगारेष्टिरिति
वा रहस्येष्टिरिति बौधायनः १

यथो एतत्सोऽपरिमितं प्रवसतीति न संवत्सरमति प्रवसतीत्येवेदमुक्तं भवति
स उ चेदति प्रवसेत्पवित्रेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते
हिरगयं तस्याः प्रज्ञात उपवस्तथोऽथ प्रातर्हुतेऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य
आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे
यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं
गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामँ हिरगमयम्।
तेन ब्रह्मविदो वयम्पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय
एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रसृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ
पृष्ठ्याँ स्तीर्त्वापः प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति
सरस्वत्यै प्रियाया उपाँश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति
सरस्वत्यै प्रियाया उपाँश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति
सवित्रे सत्यप्रसवायोपाँश्वाज्यमग्नये शुचये पुरोडाशमष्टाकपालं निर्वपति
वायवे नियुत्वत उपाँश्वाज्यमग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपति
विष्णवे शिपिविष्टायोपाँश्वाज्यमग्नये वैश्वानराय पुरोडाशमष्टाकपालं
निर्वपति दधिक्राव्ण उपाँश्वाज्यमिति

श्रपयित्वासादयति
तस्याः सप्तदश सामिधेन्यः
समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं
नमस्त इति द्वे
पावकवन्तावेवाज्यभागवग्नी रक्षाँसि सेधति शुक्रशोचिरमर्त्यः ।
शुचिः पावक ईड्य इति पुरोऽनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने

विततमन्तरा ।
ब्रह्म तेन पुनीमह इति यजति
यो धारया पावकया परिप्रस्यन्दते सुतः ।
इन्दुरश्वो न कृत्विय इति पुरोऽनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते ।
उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्न ऋायूँ षि पवसेऽग्ने पवस्वेत्यग्नेः पवमानस्योत नः प्रिया प्रियास्विमा जुह्वाना युष्मदिति सरस्वत्याः प्रियाया ऋग्ने पावक स नः पावकेति पावकस्या विश्वदेवमा सत्येनेति सवितुः सत्यप्रसवस्याग्निः शुचिव्रततम उदग्ने शुचयस्तवेति शुचेर्वायुरग्रेगा वायो शुक्रो ऋयामि त इति वायोर्नियुत्वतस्त्वमग्ने व्रतपा ऋसि यद्वो वयं प्रमिनाम व्रतानीति व्रतपतेः प्र तत्ते ऋद्य किमित्ते विष्णो परिचद्द्यं भूदिति विष्णोः शिपिविष्टस्य वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य दधिक्राव्णो ऋकारिषमा दधिक्रा इति दधिक्राव्णोऽथ हुतानुमन्त्रणमग्नेः पवमानस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमग्नेः पावकस्याग्नेः शुचेरग्नेर्व्रतपतेरग्नेर्वैश्वानरस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमित्य्
उपाँ शुयाजायामुपाँ शुयाजवदित्यथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचम्
ऋतिथिवत्यौ दमूनवत्यौ संयाज्ये जुष्टो दमूना ऋतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान्।
विश्वा ऋग्ने ऋभियुजो विहत्य शत्रूयतामाभरा भोजनानि ॥
मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो ऋतिथिः शिवो नः ।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ ग्ने सहसा प्रास्यन्यानिति
प्रसिद्धेडाथान्वाहार्यमासाद्य हिरगयं ददाति
समानं कर्मा पत्नीसंयाजेभ्योऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचं संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतम्
एतयैव यजेताभिशस्तोऽभिशस्यमानो वैतयैव यजेतर्तुव्यतिक्रमे दारव्यतिक्रमेऽयोनौ वा रेतः सिक्त्वैतयैव यजेत
संवत्सरमर्धपादमेकविँशतिरात्रं वा

तिर्यग्योनिगतान्ज्ञातीन्जात्यन्तरे वर्तमानान्दुष्कृतैरपरुद्धान्दश पूर्वान्दशापरानात्मानं चैकविँशं पङ्क्तिं च पुनाति न च पुनरावर्तत इत्य्
अथाप्युदाहरन्ति
वैश्वानरीं व्रातपतीम्पवित्रेष्टिं तथैव च ।
ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषमिति २

अथातो नक्षत्रेष्टीर्व्याख्यास्यामोऽग्निर्वा अकामयतान्नादो देवानाँ स्यामिति ता ब्राह्मणेन व्याख्याताः
सा या वैशाख्याः पौर्णमास्याः पुरस्तादमावास्या भवति स सकृत्संवत्सरस्यापभरणीभिः संपद्यते तस्यामारभेतेति
तस्या उपवसथेऽरण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्याजस्रान्वापि वा पौर्णमास्याममावास्यायां वोपपसेद्यस्यां तल्लक्ष्म संपद्यते

तत्रैषोऽत्यन्तप्रदेशो हविरुच्छिष्टव्रतो यजमानो भवतीति विज्ञायतेऽपि वा जन्मनक्षत्रे कुर्यादायुष्कामस्य यावज्जीवं त्र्यवराध्यौ वा प्रयोगो जीववन्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना त्वँ सोम महे भगमित्यथ निर्वपत्यग्नये कृत्तिकाभ्यो जुष्टं निर्वपामीत्यग्निं कृत्तिका यजेति संप्रेष्यत्याग्नेयमष्टाकपालमनुमत्यै चरुमिति सर्वत्रानुषजति नक्षत्रहविर्मध्ये श्रपयित्वासादयति
तस्याः सप्तदश सामिधेन्यः
समिध्यमानां च समिद्धां चान्तरेण श्रीमत्यौ धाय्ये दधाति स्वारुहा यस्य श्रियो दृशेऽदाभ्यः पुरएतेति
रयिमन्तौ पुअ्रृष्तिमन्तावाज्यभागौ यजत्यग्निना रयिमश्नवद्वयस्फानो अमीवहेत्यथ हविषामग्निर्मूर्धा भुवोऽनु नोऽद्यानुमतिरन्विदनुमते त्वमिति संचर्योर्याज्यापुरोऽनुवाक्या

नक्षत्रहविषानग्निर्नः पातु कृत्तिका इति यथासमाम्नातम्
अथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति यथासमाम्नातं स्विष्टवत्यौ संयाज्ये हव्यवाहँ स्विष्टमिति

संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा
विसृजते व्रतम् ३

एवमुत्तरमुत्तरं प्रतितन्त्रमुत्तरौत्तरेऽहनि यजेत
विशेषान्व्याख्यास्यामः
प्रजापतिः सवितेत्युपाँशु सर्पेभ्य आश्रेषाभ्य आज्ये करम्भमिति
सर्वे यवा भवन्ति
अधिश्रयणकाले तिरः पवित्रमाज्यमानीयाधिश्रित्य तिरः पवित्रं
करम्भानावपति
पितृभ्यो मघाभ्यः पुरोडाशँ षट्कपालमिति
पैतृयज्ञिकेन निर्वपणप्रोक्षणाधिवपनसंवपनादीनि व्याख्यातानि भवन्ति
तार्तीयसवनिकेन सौम्येन प्रचरणकल्पो व्याख्यातोऽथैतद्वायवे निष्ट्यायै
गृष्ट्यै दुग्धमिति
पयसः प्रातर्दोहवत्सँस्कार आ विशाखाभ्यामिष्ट्वा तदानीमेव
पौर्णमासीमाज्येन यजेताथ श्वो भूते
मित्रायानूराधेभ्यश्चरुमित्युत्तराभिरषाढाभिरिष्ट्वा तदानीमेवाभिजिता यजेताथ
श्वो भूते विष्णवे श्रोणायै पुरोडाशं त्रिकपालमित्युत्तरेषु प्रोष्ठपदेषु पुरोडाशं
भूमिकपालमिति
कपालमात्रं भूमौ परिलिख्याङ्गारमधिवर्तयति
तस्यैककपालवत्सँस्कार आपभरणीभिरिष्ट्वा तदानीमेवामावास्यामाज्येन
यजेताथ श्वो भूते चन्द्रमसे प्रतीदृश्यायै पुरोडाशं
पञ्चदशकपालमित्यभिनीयैवाहनि निर्वपेदुदिते चन्द्रमसि प्रचरेत्
ते एतमहोरात्राभ्यां चरुं निरवपतां द्वयानां व्रीहीणां शुक्लानां च कृष्णानां न
सवात्योर्दुग्धे श्वेतायै च कृष्णायै चेत्यभिनीयैवाहनि निर्वपेदस्तमिते
प्रचरेदपि वा सन्धावेव निर्वपेत्सन्धावेव प्रचरेद्निर्वपेदुषसि प्रचरेदथैतस्मै
नक्षत्राय चरुं निर्वपति
यथा त्वं देवानामस्येवमहं मनुष्याणां भूयासमिति निर्वपणकाले
यजमानायतन आसीनो यजमानो जपत्
अभिनीयैवाहनि निर्वपेदुदितेषु नक्षत्रेषु प्रचरेदथैतँ सूर्याय
नक्षत्रेभ्यश्चरुमित्यभिनीयैव रात्रौ निर्वपेदुदिते सूर्ये प्रचरेदथैतमदित्यै

चरुमथैतं विष्णवे चरुमिति यजति
यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति ब्राह्मणम्वरो दक्षिणा भवतीति विज्ञायतेऽपाघावद्वा
प्रसिद्धः पशुः
पाथिकृत्येष्ट्येष्ट्वा दर्शपूर्णमासाभ्यां यजेत नक्षत्रसत्त्रेण द्युतिरानन्त्याय ज्योतिषामयनेनेष्ट्वा पापं निर्णुद्य ज्योतिष्टमुपजायतेऽप पुनर्मृत्युं जयतीति ह स्माह बौधायनः ४

नवैरेवामावास्यायां पौर्णमास्यां वा यजेत नवैर्वाग्निहोत्रं जुहुयाद्
अपि वाग्निहोत्रीं वा नवानादयित्वा तस्याः पयसा जुहुयादपि वा नवानां यवाग्वा सायंप्रातरग्निहोत्रं जुहुयादपि वा गार्हपत्ये चतुःशरावमोदनँ श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयादपि वा नवैरेव ब्राह्मणान्भोजयेत्
स एष इष्ट्युपचारकल्पो
हरितयवशमीधान्यौषधिवनस्पतिमूलफलशाकानामनिष्ट्वाग्रयणं याथाकामी स्यात्पक्तिवैषम्याद्व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यो यवैरिष्ट्वा यवैरेव यजेता व्रीहिभ्योऽपि वा व्रीहिभिरेव यवैर्वा यजेत
संतिष्ठन्त आग्रयणानि ५

अथातः पशुप्रायश्चित्तानि व्याख्यास्यामः
स यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्येताँ हुत्वा नैमित्तिकीं द्वितीयां जुहोति यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि ।
प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुषे स्वाहेति
यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः शकृदकृथार्मूत्रमकृथा इत्येतेषु निमित्तेषु य इदमकस्तस्मै नमस्तस्मै स्वाहेति तृतीयां स यदि निषीदेद्यस्माद्भीषा न्यषद इत्येताँ हुत्वा तं
मैत्रावरुणदण्डेनोत्थापयेदन्येनौदुम्बरेण वोर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणम्
उदुस्र तिष्ठेत्युस्त्रम्
उदश्वेत्यश्वम्

उच्छागेति छागम्
उन्मेषेति मेषम्
उद्वश इति वशां स उ चेत्प्राक्पर्यग्निकरणान्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां
कृत्वाथान्यं तद्दैवत्यं तद्वर्णं तद्वयसं तद्रूपं तज्जातीयं पशुमालभेत
तस्योपाकरणादि सर्वमावर्तते निर्मन्थ्य
सामिधेनीतच्छेषाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जम्
अथ यदि तज्जातीयं न विन्देताजावयो गोअश्वा इत्यन्योन्यस्य प्रतिनिधयो
भवन्तीति

तेषां छागश्च मेषश्चोपाकरणीयवलाभेऽन्यतममालभेत
त्वाष्ट्रेण प्रचरणकल्पो व्याख्यातोऽथास्य शरीरमप्सु प्रवेशयति न वा
उवेतन्म्रियस आशानां त्वा विश्वा आशा इति द्वाभ्याम् ६

अथ यद्यङ्गहीनः पशू रूपतो वर्णतो वाग्नेयीमाग्नावैष्णवीमैन्द्रीं वायव्यां
पाजापत्यामिति च हुत्वा तमेवोपाकुर्यादथ यदि वपामाह्रियमाणाँ
श्येनोऽपहरेन्नश्येद्वा पात्र्याँ हिरण्यमन्तर्धाय चतुर्गृहीतं गृहीत्वाहवनीये
जुहोत्यन्वारब्धे यजमान उद्यन्त्सुपर्णो न विभाति सर्वं हिरण्यकुक्षिः
सप्तशिराः पुरस्तात् ।
सर्वेषु लोकेषु विभुः प्रविष्टो गातुमस्मिन्यज्ञे यजमानाय विन्द
स्वाहेत्यथैतस्यै वपायै स्थाने यत्किंचिन्मेदोरूपमवशिष्टँ स्यात्तदुत्पाट्य तेन
प्रचरेद्
अथ यद्येनां पुनर्विन्देत नैनामाद्रियेताथ यदि वपा हविरवदानं वा स्कन्देदा
त्वा ददे यशसे वीर्याय चास्मास्वघ्निया यूयं दधाथेन्द्रियं पय इत्यादाय
जुहोति यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश ।
स नः पाह्यरिष्ट्यै स्वाहेत्यथ यद्यसँस्थिते पशौ शकुनिश्चषाल
उपविशेच्चषालं प्रक्षाल्य यूपं प्रोक्ष्य तथैवाज्येन जुहोत्यापवस्व वदस्व वा
सोमपीतये गातुमस्मिन्यज्ञे यजमानाय विन्द स्वाहेति ७

अथातश्चातुर्मास्यान्तरालव्रतानि व्याख्यास्यामस्
तस्यैतद्व्रतं नानृतं वदति

न माँ समश्नाति
न स्त्रियमुपैति
नास्य पल्पूलनेन वासः पल्पूलयन्त्यमृन्मयपाय्यशूद्रोच्छिष्टो
स्वयं पादौ प्रक्षालयते
न लवणमश्नाति
न कौशीधान्यमन्यत्र तिलेभ्यो नासन्द्याँ शयीत
न स्त्रियमुपेयात्
काममृतौ जायामुपेयाद्यद्यजातपुत्रः स्यादुभयोः कालयोर्मधुपूर्वं व्रतमुपैति

मध्वश्नातीति ब्राह्मणं घृतमित्येवेदमुक्तं भवति
दैव्यं मध्विति विज्ञायतेऽञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना
दैव्येनेति
नान्यस्योच्छिष्टं भुञ्जीत
नान्यस्यार्त्विज्यं कुर्वीत
नाञ्जीत
नाभ्यञ्जीत
न श्राद्धं भुञ्जीत
न लोमानि वापयीत
न दतो धावते
न नखानि निकृन्तते
कामं पर्वसु केशश्मश्रुलोमनखानि वापयीत
चतुर्षुचतुर्षु मासेषु निवर्तयेतेति ब्राह्मणं संवत्सरादूर्ध्वं दार्शपौर्णमासिकमेव
व्रतमुपदिशन्ति तस्य चेद्वैश्वदेवस्य कालो नातीयाद्यद्यतीयादग्नये व्रतपतये
पुरोडाशमष्टाकपालं निर्वपति
सा प्रसिद्धेष्टिः संतिष्ठत आमावास्यकालादिति व्याख्याताः
कालातिक्रमेष्वापदि यजेत ८

अथातोऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामो दीक्षितश्चेदनृतं वदेदिमं मे
वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्जपेत्
कृष्णाजिनाद्व्यवच्छिन्नो दण्डाद्वा देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरवतु।

वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमँहस इति जपेदमेध्यमनिष्टं वा
दृष्ट्वा जपतीत्युक्तमेतदभिवृष्टोऽभिवृष्यमाणो वा जपतीत्युक्तमेतद्व्रतयित्वाप
आचम्य जपति शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः ।
इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवस इति
छर्दयित्वा निष्ठीव्य वा जपति यदत्रापि रसस्य मे निरष्ठविषमस्तृतः ।
अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति
रेत स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोषात्तदर्पिथ ।
अग्निहोत्रमिव सोमेन तदहं पुनराददं इति
मूत्रं करिष्यन्पुरीषं वा पृथिव्या लोष्टमादत्त इयं ते यज्ञिया तनूरिति
करोत्यपो मुञ्चामि न प्रजामँहोमुचः स्वाहाकृताः पृथिवीमाविशतेति

लोष्टं प्रतिनिदधाति पृथिव्या संभवेति
बीभत्सा नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेत्यश्रु
कफस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्नूहानं तपस्या नाम
स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदं दुःस्वप्नं दृष्ट्वा
जपत्यभिपर्यावर्तते दुःस्वप्न पापस्वप्नादभूत्यै ।
ब्रह्माहमन्तर करवै न हि स्वप्नमुपग्रथ इति
स्वप्नेऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तत्प्रातः क्षुधोऽवति ।
सर्वं तदस्मान्मा हिँसीन्न हि तद्ददृशे दिवेति
लोहितमुत्पतितं दृष्ट्वा कण्डूय वा जपति नमो रुद्रियाभ्योऽद्भ्यः स्वाहेति
न वर्षति धावेद्यदि धावेद्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेद्नान्येन
दीक्षेतेन समेयाद्यदि समेयात्कया नश्चित्र आभुवदित्येतामृचं
जपेद्देवयजनादन्यत्राभ्युदितोऽभिनिम्रुक्तो वा सूर्यो मा देवो देवेभ्यः पात्विति
जपेदितीन्वा इमानि सर्वास्वेवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति
बौधायन
आवान्तरदीक्षायै विसर्गादिति शालीकिः ९

अथातः सर्वयज्ञानां प्रायश्चित्ता व्याख्यास्यामः
सर्वत्र स्कन्नच्छिन्नभिन्नभग्ननष्टदुष्टविपरीतहीनेषु
हविःस्यन्दनास्रावितपतितस्फुटितेष्वद्विजश्वानबिडालकाकखरमृगपशुपक्षि

सरीसृपादीनामन्यत्कीटानामृत्विजोऽग्नीनामन्तरागतानां द्वादशगृहीतेन स्रुचं पूरयित्वा दुर्गां मनस्वतीं महाव्याहृतीस्तिस्रो जुहुयाद्जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहेति कार्यविपर्यासे च मन्त्रब्राह्मणमात्रं दर्भेध्माबर्हिःपरिधिविधृतिपवित्रहविःकपालस्रुक्स्रुवारणिकृष्णाजिनप्रणीता- ग्न्युद्वासनेन यत्किंचित्कार्यविपर्यासः स्याद्ये चान्ये चाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहेत्यथ पितामहां जुहोति भृगूणां पतये स्वाहाङ्गिरसां तपसे स्वाहेत्यथ महाव्याहृतीर्जुहोति भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुव सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहेत्यथ व्याहृतीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेति १०

मन्त्रहीनेऽतिरिक्ते वा दुरधीते दुरागते ।
अनागतेऽवषट्कारे अतीते वापि यद्धुते ॥
हविषः स्यन्दनादग्नेर्होतुर्हीनस्वरेण च ।
अतिदाहे च हविषां यत्किंचित्पात्रभेदने ॥
कपालनाशे भेदे च चतुष्पाद्यन्तरागते ।
प्रणाशे च पवित्रस्य आज्यस्यैवावलोडने ॥
हविषां च विपर्यास ऋत्विद्ध्वप्रयतेषु च ।
यज्ञप्रसारणीकाले द्वैधीभावे समुत्थिते ॥
मिन्दाहुती च होतव्ये व्याहृत्यः प्रणवादिकाः ।
वारुण्यस्तन्तुमत्यश्चान्वग्निश्च मनस्वती ॥
महाव्याहृतयः सप्त प्राजापत्या तथैव च ।
प्रसंधानाय यज्ञस्य त्वेते मन्त्राः प्रकीर्तिताः ॥
अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रभुज्यते ।
असुरैर्भुक्तयज्ञस्तु देवान्दोषेण सँश्रयेत ॥

ऋत्विजो यजमानं च आयुषो ब्रह्मवर्चसात्।
प्रच्यावयेद्दुरिष्टं तत्तस्माद्दोषान्प्रणाशयेदिति ११

अथातोऽनुग्रहान्व्याख्यास्यामः
सायँ होमं चोपोदयं जुहुयात्प्रातर्होमं चोपास्तमयं कालेन कालमनतिक्रम्य
कालो दर्शपूर्णमासयोरग्निहोत्रस्य च न स्कन्दते न व्यथत इति विज्ञायत आ
प्रातराहुतिकालात्सायमाहुतिकालो नातीयादा
सायमाहुतिकालात्प्रातराहुतिकालोऽथ यदि सायं सायं दोषा वस्तोर्नमः
स्वाहेत्याहुतिँ हुत्वाग्निहोत्रं जुहुयाद्यदि प्रातः प्रातर्दोषा वस्तोर्नमः
स्वाहेत्याहुतिँ हुत्वाग्निहोत्रं जुहुयादथ यदि पूर्वस्यामाहुत्याँ
हुतायामाहवनीयोऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदञ्छकले हिरण्यं
निधायोत्तरामाहुतिं जुहुयात्

कालातिक्रमेष्वापद्धोम आमावास्यस्य कालात्पौर्णमासस्य कालो नातीयादा
पौर्णमासादामावास्यस्या व्रीह्याग्रयणस्य कालाच्छ्यामाकाग्रयणस्य कालो
नातीयादा यवाग्रयणस्य कालाद्व्रीह्याग्रयणस्या
श्यामाकाग्रयणाद्यवाग्रयणस्या वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो
नातीयादा साकमेधेभ्यो वरुणप्रघासात्रामा शुणसीर्यात्साकमेधानामा
वैश्वदेवाच्छुनासीर्यस्या दक्षिणायनपशोः कालादुत्तरायणपशोः कालो
नातीयादोत्तरायणपशोर्दक्षिणायनपशोरोत्तरवसन्तज्योतिष्टोमस्य
कालात्पूर्ववसन्तज्योतिष्टोमस्य कालो नातीयात्
समस्तस्य संवत्सरस्या निज्यासुत्या ऋषयो ह स्म तत्प्रयोयुगा
आसंस्तेऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः
प्रतिपदि सायं चतुर्दशगृहीतानि गृह्णाति

सकृदुन्नयते हविरेका समित्
सकृद्धोमः सकृदुपस्थानं सकृत्पाणिनिमार्जनम्
एवं प्रातरथ षण्मासानहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः
पशुबन्धेन चाग्नये पथिकृतेऽग्नये तन्तुमतेऽग्नये वैश्वानरायाग्नये व्रतपतय इति

पुरोडाशान्निरुप्याग्निहोत्रँ हुत्वा दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः
पशुबन्धेन चाथ संवत्सरमहुतेऽग्निहोत्रे
दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन चाग्नये पवमानायाग्नये
पावकायाग्नये शुचयेऽग्नये पथिकृतेऽग्नये तन्तुमतेऽग्नये वैश्वानरायाग्नये
व्रतपतय इति पुरोडाशान्निरुप्याग्निहोत्रँ हुत्वा
दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन च १२

अथ हविषामर्थे व्रीहियवौ
तयोरलाभे प्रियङ्गवः कोद्रवोदारवरकवर्जँ
श्यामाकनीवारवेणुयवास्तरसंपाककन्दमूलफलान्यापः सक्तुमिति
घृतमाज्यार्थे
गव्यमिति प्रत्ययस्

तस्यालाभे माहिषमाजं वा घृतमाज्यार्थे प्रयुञ्जीत
भोजनेष्वविरुद्धं मन्यन्त एके
तयोरलाभे तैलं प्रतिनिधिस्
तस्यालाभे जर्तिलतैलम्
अतसीकुसुम्भसर्षपवार्क्षस्नेहा इति शिष्टप्रामाण्यादत ऊर्ध्वमलाभे
यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः सँसृज्याज्यार्थे प्रयुञ्जीत
कुशा स्तरणार्थे
तेषामलाभे शरमयकुतपाश्ववालमुञ्जसुगन्धितेजनार्जुनादारदूर्वाश्यामाकाः
क्षीरवृक्षा इक्षव इत्येतेभ्यः
प्रस्तरबर्हिर्विधृतिपवित्रयूपरशनाशालाकपरिस्तरणान्तर्धानासनशयनस्तोत्रोपा
करणार्थाः कार्याः सर्वतृणेभ्यो वा
शुष्कशुण्ठिनलबल्बजकृष्णतूलतृणवर्जम्पालाशः खादिरो वेध्मस्तयोरलाभे
याज्ञिकानां वा
वृक्षाणामन्यतमस्तेषामलाभेऽररुकपित्थकोविदारशल्मलिश्लेष्मातकनीपनिम्
बतिलकवाधकविभीतकराजवृक्षकरञ्जपलाण्डुवर्जं
सर्ववनस्पतीनामिध्मो भवतीत्येके
दक्षिणानां काले गौर्हिरण्यं वासस्

तेषामलाभे फलानां मूलानां भक्ष्याणां दद्याद्न त्वेव न यजेत
नित्यं नित्येषु युक्तः स्यात्तथैवाजस्त्रिकेषु च ।
यस्य नित्यानि लुप्तानि तथैवाजस्त्रिकाणि च ॥
विपथस्थो न स स्वर्गं गच्छते पतितो हि सः ।
तस्मान्मूलैः फलैर्वापि मधुना तरसेन वा ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत्॥
न च नित्यानि लोपयेदिति १३

एकोनत्रिंशः प्रश्नः

अथाभिदग्धानि सदोहविर्धानानि समस्तदेवयजनमावृतैव क्रियेरन्ननावृता वा वसतीवरीः प्रथमं गृह्णीयादिति वाधूलकस्य मतम्
अथेतरानाउपूर्वमित्यथ यदि भिन्नेषु कपालेषु सर्वाणि निपतेयुस्तत्र यावत्मूतं पुरीषमादाय वसतीवरीभिः संयुत्य विस्राव्य प्रचरेत्तत्र प्रायश्चित्तं ग्रहाणामेकेन जुहुयादग्नीध्रीयविनाश आग्नेय्यर्चा जुहुयादग्निर्मूर्धा दिव इति वैष्णव्या हविर्धाने विष्णो त्वं नो अन्तम इत्याग्नेय्या स्रुक्वयमग्निः सहस्त्रिण इति
वायव्यया वायव्येषु वायो शतँ हरीणामिति
ऐन्द्रिया सदसीन्द्रं विश्वा अवीवृधन्निति
वैश्वदेव्या प्रागँ शे विश्वे देवाः शृणुतेमँ हवं म इति

सर्वेषु मिन्दाहुती जुहुयाद्व्याहृतीश्चापि वेष्टिं निर्वपेदगारदहने क्षामवान्सर्वविनाशे तन्तुमती
दग्धेषु सोमेषु वा नष्टेषु वा सोमानामुपघातापहारेषु वा यथालाभमँ शून्गृहीत्वा वसतीवरीभिः संयुत्याभिषुत्य प्रचरेत्
सर्वविनाश ओषधीभिरभिषुत्य प्रचरेत्
तत्कृत्वा पुनर्यजेतेति श्रुतिरेवमेव कुर्यात्
सा प्रायश्चित्तिरिति १

अथ होत्रकाणामन्योऽन्यस्य मैत्रावरुणश्चोदयेदपि वान्योऽन्यस्य याज्यापुरोऽनुवाक्याभ्यां यजेत तस्य प्रायश्चित्तम्ब्राह्मण

एकहोतेत्यस्यानुवाकस्य प्रथमेन होतुर्जुहुयाद्द्वितीयेन मैत्रावरुणस्य तृतीयेन ब्राह्मणाच्छँ सिनश्चतुर्थेन पोतुः पञ्चमेन नेष्टुः षष्ठेनाच्छावाकस्य सप्तमेनाग्नीध्रस्याध्वर्युः प्रधानदेवतामनुच्चारयित्वा योन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयाद्दशात्मकेनाष्टमेन नवमेन पूर्वोक्तं प्रायश्चित्तं कुर्याद्
उक्थ्यपर्यायेषु यथाक्रमेण जुहुयाद्दशमेन षोडशिरात्रिपर्यायेभ्यो राथंतराय संधये
तथा शिपिविष्टस्तोत्रे वाजपेये
तथातिरिक्तस्तोत्रेष्विति यथाचोदितमन्यो यजेत्तत्प्रथमो यजेज्जपेद्वा स्वयं चोदितः स्वयमेव यजेद्द्वितीय एव प्रायश्चित्तं भवेत्सोमेऽन्यत्रैवं कुर्याद्धोतान्येन यजेदन्येनैव मैत्रावरुणो वा पूर्वोक्तं प्रायश्चित्तं कुर्यात्
तथा याज्यापुरोऽनुवाक्यास्वन्यथान्यत्प्रायश्चित्तं भवेदथाश्वमेधस्यान्नहोमेष्वारण्यानां पशूनाँ स्रुवाहुत्या ऊनातिरिक्तपुनरुक्तव्याघातेषु मिन्दाहुती जुहुयात्
तथेष्टकोपधानेऽथ देवसुवाँ हविषामन्यद्बीजमन्यदैवतस्य कुर्यात्तदुत्सृज्य पुनरुत्पाद्य यजेदतिशिष्टँ सह यजेज्जपेद्वा
पूर्वोक्तं प्रायश्चित्तं कुर्यादिति २

अथ वितते यज्ञकर्मणि प्रायश्चित्तानि व्याख्यास्यामस्
तत्रौषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु वा पुनरुत्पाद्य गृह्णीयाद्यत्र स्मरेत्प्राक्स्विष्टकृत उत्पादनं भवति
स्विष्टकृत ऊर्ध्वँ स्मरेत्तत्सँस्थाप्यैतेनैव पुनर्यजेत्सह यजेद्वाथ यदि निरुप्य स्मरेदन्यं दैवतममुष्मै त्वेति प्रतिविभज्याभिमृश्य सर्वं जुहुयादमुष्मै स्वाहेति यत्र स्मरेत्तत्रैवमेव कुर्यादासादनादथ यद्यासाद्य स्मरेदन्वायात्य स्थानेषु जुहुयादन्यद्वा पूर्वोक्तं प्रायश्चित्तं कुर्यादन्यासु देवतास्विष्टासु नष्टेषु दुष्टेषु वा दोषवति तन्त्रे प्रधानमावर्तयेत्सर्वेष्टिरशेषतस्
तस्य कः कर्मण उपक्रमो भवतीति
भागिनो दैवतस्य शूर्पादानप्रभृति कर्म कृत्वा श्रपयित्वासाद्य स्वस्थाने प्रचरेत्

तत्र प्रायश्चित्तं मिन्दाहुती जुहुयाद्व्याहृतीश्चैवं पशावुपाकरणप्रभृत्या स्विष्टकृतः पूर्वोक्तं प्रायश्चित्तं कुर्यादथ यदि प्रातरनुवाकमनुपाकृतमादित्योऽभ्युदियात्कथं तत्र प्रायश्चित्तं भवतीत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् ।
देवेभ्यो मधुमत्तमँ स्वाहेति मिन्दाहुती व्याहृतीश्च हुत्वोपाकुर्यादथ यदि प्रातरनुवाके शस्यमान आदित्योऽभ्युदियादुद्वयं तमसस्पर्युदु त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयादथ यदि सोमो नाविः स्यान्नवोनवो भवति जायमानो यमादित्या अँशुमाप्याययन्तीत्येताभ्याँ स्रुवाहुती जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं विद्यत एतदेव  ३

अथ यदि ग्रहान्ग्रहीष्यमाणो भागिनीं देवतामगृहीत्वा योन्यां गृह्णीयात्तथामुष्मै स्वाहेति तदानीमेव सर्वं जुहुयाद्भागिनीं पुनर्गृहीत्वा मिन्दाहुती जुहुयादपि वा ग्रहाणामेकेन जुहुयात्सर्वान्वाचस्पते विधे नामन्नित्येवमादीन्ग्रहान्होत्रकाणां ग्रहेषु वा चमसेषु वा हविर्दोषोक्तदोषो भवेत्

तथापोऽभ्यवहृत्य तत्प्रायश्चित्तँ हुत्वा तथा पुनर्गृहीत्वा जुहुयाच्चमसेषु पुनरुन्नीय जुहुयाद्धुत्वा वा तस्मिन्हिरण्यमन्तर्धायाप आनीय भक्षयेत्
सैव ततः प्रायश्चित्तिरथ यदि सवनकालोऽतिक्रामेदग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य प्रथमेन गायत्रेण जुहुयात्प्रातःसवने
तथा त्रैष्टुभेन माध्यंदिने सवने
तथा जागतेन तृतीयसवनेऽत ऊर्धमतिरात्र उत्तरमहर्नाधिगच्छेद्यदि गच्छेद्यज्ञभ्रेष आगच्छेत्
तत्र प्रायश्चित्तँ सर्वान्होतॄन्जुहुयाद्विज्ञायते ब्रह्म वै चतुर्होतार इति तस्माच्चतुर्होतॄनेव जुहुयादत ऊर्ध्वमहःसंख्यां नाधिगच्छेदेकाहेष्वथ सवनीयानां प्रायश्चित्तिरथ यदि पूतिगन्धः स्यात्तदुत्सृज्य पुनरुत्पाद्य प्रचरेदपि वोष्णोदकेन प्रक्षाल्याज्येऽवधाय पुनः श्रपयित्वा प्रचरेत्
तत्रापि यदि पूतिगन्धो भवेत्तदुत्सृज्य पुनरेवोत्पाद्य प्रचरेत्
तथा सवनीयानां पुरोडाशानां
तथा सांनाय्यानाम्

अथ यदि स्तोत्रँ शस्त्रं प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वोपाकुर्यादथ यद्येकाँ
स्तोत्रीयाँ सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वा जपेत्
स्तोत्रोपाकरणप्रभृत्या होमाद्वाचं यच्छेद्यदि वाचं विसृजेद्वैष्णवीमृचं जपेदथ
यद्याश्राव्य वाचं विसृजेद्वैष्णवीमृचं जपेद्विष्णो त्वं नो अन्तम इति
पुनरेवाश्राव्य यजेदूनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वान्यत्र प्रायश्चित्तं
मिन्दाहुती जुहुयात्
सर्वस्थानेषु मिन्दाहुती यज्ञशरीरमिति श्रुतिस्
तस्मात्सर्वेषामाचार्याणां प्रशस्तमिति ४

अथ यदि हुताहुतौ सोमौ सँसृज्येयातामाहवनीयादुदीचोऽङ्गारान्निरूह्य तेषु
जुहुयाद्यज्ञस्य हि स्थ ऋत्वियविन्द्राग्नी चेतनस्य च ।
हुताहुतस्य तृप्यतमहुतस्य हुतस्य च ॥
हुतस्य चाहुतस्य चाहुतस्य हुतस्य च ।
इन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथाँ स्वाहेति
तस्य नित्यभक्षमनुवर्तयति मा यजमानं तमो विदद्यर्त्विजो मो इमाः प्रजाः ।
मा यः सोममिमं पिबात्सँसृष्टमुभयं कृतमित्यथ यद्यन्यहुताश्चमसा अन्यहुतैः
सँसृज्येरन्सोमे वा सोममभिगृह्णीयादित्येतदेवाथ यद्यन्यवृता
ऋत्विजोऽन्यवृतैः सँसृज्येरन्दीक्षिता दीक्षितैर्वान्यत्र
व्रात्यस्तोमात्सत्राच्चेत्येतदेवाथ यदि सुतः सोमोऽभिवृष्येत तदित्पदम्प्रत्यस्मै
पिपीषत इत्येताभ्याँ स्रुवाहुती हुत्वा तस्य
नित्यभक्षमनुवर्तयतीन्दुरिन्दुमवागादिन्दोरिन्द्रोऽपात्।
तस्य त इन्दविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथ यदि सुते
सोमे यजमानो म्रियेत भयं वागच्छेत्सर्वाणि हवींषि पात्र्याँ समवधाय
द्रोणकलशे सोमं जुह्वामाज्यं पशुमन्यस्यामित्येकामाहुतिं जुहुयाद्ये देवा
येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः ।
इन्द्रज्येष्ठेभ्यो वरुणराजभ्योऽग्निहोतृभ्यो देवेभ्यः स्वाहेति हुत्वात ऊर्ध्वं
पैतृमेधिकं कर्म प्रतिपद्येताभये वा पुनर्यजेत
जीर्णस्याशक्तस्य चाग्निहोत्रचेष्टायामात्मन्यग्निसमारोपणं विद्यत इत्यात्मनि
समारूढेष्वग्निषु न खादेन्न पिवेन्नोपरि शय्याँ शयीत नाप्सु निमज्जेन्न मैथुनं
व्रजेत्कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्याँ शयीत नैवाप्सु निमज्जेन्न

मैथुनं व्रजेदिति

प्रक्षालितपादपाणिरप आचम्य प्राङ्मुख उपविश्याग्निहोत्रयजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्नित्येवमेवोपासीता श्रीरविमोक्षणात् ५

अथ वै भवति
यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति
यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्
स एव पुनः परीध्यः
स्वादेवैनं योनेर्जनयति
नास्मै भ्रातृव्यं जनयतीति ब्राह्मणम्
उख्यश्चेदुद्वायेदप्सु भस्म प्रवेश्योखाँ शकृत्पिण्डेन परिलिप्य पुनरेवैनां प्रवृज्य परिदायाहुतिषाहं कृत्वाथैनाँ स्रुवाहुतिभिरभिजुहोति सुवर्ण घर्मः स्वाहा सुवर्णार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्ण ज्योतिः स्वाहा सुवर्ण सूर्यः स्वाहेत्यर्कवतीभ्यामर्कसमिधावभ्यादधात्यर्कः पवित्रम्पवित्रमर्को रजसो विमान इति द्वाभ्यां
मुञ्जकुलायप्रभृतिना कर्मणा प्रतिपद्येता कृष्णाजिनवाचमादथ वै भवति
तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति
मृत्युस्तमः
कृष्णं वासः कृष्णा धेनुर्दक्षिणेति
कृष्णं वासः कृष्णां धेनुँ शतमानँ हिरण्यमिति ददाति
तमसैव तमो मृत्युमपहतेऽथो तेजो वै हिरण्यं
तेज एवात्मन्धत्त इति ब्राह्मणम्
अथ यद्यासन्दी शिक्यमगारं वा दह्येत वैश्वानरीभिः
समिधोऽभ्यादध्याद्वैश्वानरो न ऊत्येत्येतेनाष्टार्चेनाथ यदि वसतीवरीकलशः पान्नेजन एकधनाः कुम्भेष्टकाः क्वथनेष्टका वा परासिच्येरन्यूपो वा भिद्येत रशना वा छिद्येत चषालं वा भिद्येतौदुम्बरी वा भिद्येत ग्रावा वा भिद्येत द्रोणकलशो वा दीर्येतान्यद्वा यज्ञे दारुमयं मृन्मयं वा पात्रं भिद्येत तत्स्वेनैव यजुषा स्व आयतने निधायोपधायाभिमन्त्रयते भूरायुर्मे धारयत प्राणं मे

धारयत प्रजां मे धारयत पशून्मे धारयत मा म आयुः प्राणः प्रजाः पशवः परासिच्येरन्नित्
अथ यदि दारुमयं पात्रमाहवनीयेऽनुप्रहरेदथ यदि मृन्मयमपोऽभ्यवहरेद्भूमिर्भूमिमगान्माता मातरमप्यगात् ।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ६

अथातोऽग्निहोत्रस्य लौकिकविधिं व्याख्यास्यामः
पुराग्निहोत्राद्गार्हपत्यादरण्योरग्नीन्समारोपयन्त्ययं ते योनिर्ऋत्विय इत्यन्तर्वेद्यरणी निधाय लौकिकेऽग्नौ जुहुयात्
सायमुद्धरति सायमाहुतिँ हुत्वा प्रातरुद्धरति प्रातरुद्धरति प्रातराहुतिँ हुत्वेति विज्ञायतेऽथाग्निहोत्रं चतुर्भिर्लुप्यते होमोपस्थानव्रतदर्शपूर्णमासैरिति
तन्तुमत्येष्टयेष्ट्वा दर्शपूर्णमासाभ्यां यजेत
संतिष्ठते विच्छिन्नप्रायश्चित्तिः ७

अथापद्यग्निहोत्राणाँ समासस्
तद्यथा राष्ट्रविभ्रमो व्याधयोऽध्वगमनं गुरुकुलवासो देशकालद्रव्यानुपपत्तिरन्यैश्चायोगो यासु विद्यत इति
तस्य कः कर्मण उपक्रमो भवतीति
कामं पूर्वाह्णे वापाराह्णे वाग्निहोत्रवेलायां वा यथासूत्रं वा कुर्यात्प्रसिद्धं वा यजमानस्या प्रसावात्
प्रसूतः प्रसिद्धं प्रतिपदि सायं चतुर्दश चतुर्गृहीतानि गृह्णाति सोपवसथे पार्वणे वाथेतरस्मिन्पञ्चदश
प्रसिद्धँ सर्वँ समित्प्रभृति कर्म
मन्त्राँश्चैकवत्सँस्थाप्य सायमग्निहोत्राणि हुत्वा प्रातरग्निहोत्राणि जुहुयात्
सायमुपक्रमः प्रातरपवर्गः
काले पार्वणे न यजेत
नोर्ध्वं पाक्षिकात्समासो न प्रसङ्गे नाश्रद्दधानस्याथाप्युदाहरन्ति

अश्रद्धा परमः पाप्मा पाप्मा ह्यज्ञानमुच्यते ।
अज्ञानाल्लुप्यते धर्मो लुप्तधर्मोऽधमः स्मृतः ॥

श्रद्धया शुध्यते बुद्धिः श्रद्धया शुध्यते मतिः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रणाशिनी ॥
तस्माच्छ्रद्दधानेनाप्रसङ्गेन सपन्ने काले तन्तुमत्या यजेतैवं लौकिकप्रयोग
एवमहुत एवं विध्यपराधे चाथाप्युदाहरन्ति न वृथाग्नीनुद्वासयेन्नैवानापत्सु
वीरहा वा एष देवानां योऽग्निमुद्वासयत इति
तस्माच्छ्रद्दधानस्याप्रासङ्गिकस्य चान्यत्रापि
येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
तैः कर्मसँस्तरे कुर्याद्न्यायोपेतं यथा भवेत्॥
स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्तते ।
भ्रूणहत्या समं तस्य स्वशास्त्रमवमन्यतः ॥
आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः ।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयादिति ८

यथो एतत्सोऽपरिमितं प्रवसति न संवत्सरमति
प्रवसतीत्यविशेषाज्जायापत्योराहिताग्न्योरित्येवेदमुक्तं भवति
विज्ञायते चार्धो वा एष आत्मनो यत्पत्नीत्यथ यदि प्रवसति यजमाने पत्न्याः
प्रवासनिमित्तँ स्यात्तद्वास्तोष्पतीयँ हुत्वाध्वर्युः समारोपयेदयं ते योनिर्ऋत्विय
इति
यत्र गच्छेत्तत्रानो हरेत्
तत्र प्राप्याग्निं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय
स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं जुहोति मनो
ज्योतिर्जुषतामाज्यम्विच्छिन्नं यज्ञँ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये
तन्तुमते पुरोडाशमष्टाकपालं निर्वपति
शरावं दक्षिणां ददाति
सा प्रसिद्धेष्टिः संतिष्ठतेऽथ यदि यजमानश्चैव पत्नी चोभौ त्वेव निष्क्रामतो
ग्रामान्ते ग्रामसीमान्ते वा वसतोऽग्निहोत्रमेव लुप्येताविकृतमग्न्याधेयं
कुर्वीताग्नीन्हरन्तो नोच्छ्वसेयुयद्युच्छ्वसेयुरग्नयो लौकिकाः संपद्येरन्ननो
विना समारूढेष्वग्निषु नाद्रियेत शम्याप्रासे सत्त्रनिदर्शनात् ९

अथ वै भवति
सर्वान्वा एषोऽग्नौ कामान्प्रवेश्यति योऽग्नीनन्वाधाय व्रतमुपैति स यदनिष्ट्वा प्रयायादिति
स यदनिष्ट्वा प्रयास्यन्भवति तद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने तुभ्यं ता अङ्गिरस्तमेति
योऽग्नीनन्वाधाय व्रतमुपैति स यद्युद्वायतीति तत्पुरस्ताद्व्याख्यातं
यस्याहिताग्नेरग्निरपक्षायति यावच्छम्यया प्रविध्येद्यदि तावदपक्षायेत्तँ संभरेदिदं त एकं पर उत एकमिति
संभृत्यानुप्रहरेदग्निहोत्रकालेषु वान्येषु वा
यदि परस्तरामपक्षायेदनुप्रयायावस्येदित्यनुप्रयायावस्येत्तद्यत्रैवावस्येत्तत्र वोद्वासयेयुरोषधीर्वा एतस्य पशून्पयः प्रविशति यस्य हविषे वत्सा अपाकृता धयन्ति
तान्यद्दुह्याद्यातयाम्ना हविषा यजेत
यन्न दुह्याद्यज्ञपरुरन्तरियाद्वायव्यां यवागूं निर्वपेदित्यथैतेषां दोहयित्वा तस्मिन्नप आनीय व्रीहिप्रभृति सिद्धमत ऊर्ध्वम्
अथ यस्य सायंदुग्धँ हविरार्तिमार्च्छतीन्द्राय व्रीहीन्निरुप्योपवसेदिति
निर्वपणान्तं कर्म कृत्वा श्वो भूत आग्नेयेन प्रचर्यैन्द्रेण प्रचरेद्
शृतस्थानं तत्कुर्यादथ यस्योभयँ हविरार्तिमार्च्छत्यैन्द्रं पञ्चशरावमोदनं निर्वपेदिति
प्रकृत्या वा निर्वपेच्छरावेण वेति
प्रकृत्या निर्वपेत्तथा शरावपरिमाणार्थँ शरावमिति वदन्तस्
तथा चतुष्पात्रं निर्वपेदित्यत्र पात्र्यामेव निर्वपेत्सांनाय्यस्थाने कुर्याद्यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति
तामपरुध्यैव यजेत सर्वेणैव यज्ञेन यजते
तामिष्ट्वोपह्वयेतामू हमस्मीत्यृतुकाल उपगमनमन्त्रोऽग्न्यन्वाधानप्रभृत्यपरुध्यैव यजेत तथैकाहानाम् १०

अथ यदि दीक्षोपसत्सु तथाहर्गणेष्वन्येष्वहःसु वा यथा त्र्यहे पर्यवेते गोमूत्रेणोष्णोदकमिश्रेण लोहितं छित्स्वेत्युक्त्वा प्रक्षाल्य दर्भपुञ्जीलैः पवयतीति

विज्ञायत आपो वै दर्भास्तैर्हि स्नाता भवतीति
विज्ञायते ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्त इति
तस्माद्धविर्नान्वीक्षेत न स्पृशेदित्यथ सूतिकाया दशाहे पर्यवेते यथाम्नातँ
शौचं कृत्वा पत्नीं कर्मसु योजयेत्
तत्कर्म पुत्रो ब्रह्मचारी वा कुर्यात्
तन्मन्त्रं यजमानो जपेदेषा पत्न्यकुशली यदि स्यादेवमेव कारयेदित्यथ यदि
सांनाय्ये घर्मे वा प्रवृत्तायां पयो न स्याद्येन केन चिदुपायेन किं चित्पयो
दोहयित्वाद्भिः सँसृज्य प्रचरेद्नैवान्यत्पय आनीय कुर्यात्
सैव ततः प्रायश्चित्तिरथ यदि सोमाधानमारभ्य पुरा दीक्षणीयाया
अनालम्भुका भवति नाग्निहोत्रं जुहोति
त्र्यहे पर्यवेतेऽप्सुदीक्षाप्रभृति सिद्धमत ऊर्ध्वम्
अथ यदि पुरा व्रतदोहनादनालम्भुका भवति त्र्यहँ हविष्यमश्नीयाद्यदि व्रते
दुग्धे हविष्यमेव व्रतमपोऽभ्यवहरेत्

त्र्यहे पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम्
अथ यदि पुरा प्रवर्ग्यस्य स्यान्न प्रवृञ्ज्याद्धविष्यप्रभृति यथाम्नातँ शौचं
कृत्वा गोमूत्रादि सिद्धमत ऊर्ध्वम्
अथ यदि प्रवृक्तेऽनालम्भुका भवति हविष्यमेव तदहः सँस्थाप्य त्र्यहे
पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम्
अथ दीक्षित वाचं यच्छ व्रत्य वाचं यच्छ पत्नि वाचं यच्छेति
संप्रैषादेकस्तनप्रभृत्यानालम्भुका भवति सिद्धमावभृथात्कृत्वा त्र्यहे
पर्यवेतेऽवभृथमवयन्ति
सुत्येऽहनि मार्जालीये सिकतोपोप्ते परिश्रित्योपविशेदन्येष्वहःसु
पत्नीशालायामेवोपविशेत्
प्राग्वँशं न प्रपद्येत  ११

अथातः प्रायश्चित्तसमुच्चयं व्याख्यास्यामः
सर्वत्रानादिष्टेषु मनस्वती मिन्दाहुती व्याहृतयो होतार इति
जुहुयात्सर्वेष्वव्रत्येषु मिन्दाहुती पितृयज्ञलोपे सप्तहोतारमतिजुहुयादथ

यद्यग्न्याधेय सर्वमौपासनमभिप्रव्रजेयुः पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया स्रुवाहुतिँ हुत्वा लौकिकेऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत यद्यर्धमवशिष्येताथ यदि ब्रह्मौदनिको धारितः स्यादौपासनवत्स्यात् तथोद्वाते पाकादूर्ध्वं जयादीँश्च जुहुयादथ यदि गार्हपत्यमनाहितमादित्योऽभ्युदियादादित अरभ्यान्यस्मिन्काल आदध्यान्मध्ये चेदग्निविनाश एतदेवाथ यदि पत्नीमृत्वियं विन्देत प्राग्दक्षिणाया एतदेवात ऊर्ध्वमपरोधोऽग्निहोत्रे च सोमे चावभृथादिषु सर्वत्रेष्टिपशुसोमेषु तावन्मात्रं पत्न्या वा सर्वम्
अथ यदि गार्हपत्याहवनीयावुद्वायेतामभिनिम्रोचेदभ्युदियाद्वाग्न्याधेयं तत्र प्रायश्चित्तिः
पुनराधेयमित्येकेऽथ यदि पत्नी बहिः सीमां पुनराधानम्
अथ यद्यात्मनि समारूढेष्ववत्यं चरेदरणिविनाशोक्तदोषो वा भवेदग्न्याधेयम्
अरणिविनाशेनाग्निविनाश उक्तोऽथ यदि ग्राममर्यादां नदीं वाग्नीनतिहरेयुरेतानेवाग्नीन्ह्रियमाणानन्वारभेयातां
प्रवसति यजमाने न पत्नी प्रवसति नात्र प्रायश्चित्तम्भिन्नयोनिश्चेदन्वाहार्यपचन उद्वायेद्या प्रकृतिस्तत आहरणं पृथगरणी वा १२

अथ यद्येककपालः परावर्तते प्रजापतेर्वर्तनिमनुवर्तस्वेत्यध्वर्युः स्वस्थाने प्रतिष्ठापयेत्
प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे विश्वमन्याभिवावृध इत्येताभ्यां यजमानोऽनुमन्त्रयतेऽस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीत्येताभ्याँ स्रुवाहुती जुहुयात्
सँस्थिते वैश्वानरीमिष्टिं निर्वपेद्विज्ञायते च यत्प्राङ्पद्येत देवलोकमभिजयेद्यद्दक्षिणा पितृलोकं यत्प्रत्यग्रक्षाँ सि यज्ञँ हन्युर्यदुदङ्मनुष्य-लोकमभिजयेत्
प्रतिष्ठितो होतव्य इत्यथ यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत
सर्वं चेत्सुत्यमहरतिक्रामेत्समन्वारब्धाः प्रागुपवेशनादपच्छिद्येरन्समाप्य पुनर्यजेत

सोमेन दीक्षितो न दद्यान्न जुहुयान्न पचेन्न जपेदित्यादित एव
विभजेदित्याहुर्व्रतोपेतो न स्नायान्नापोऽवगाहेत न वासो जह्यान्न रजः
प्रप्लावयेत्

सर्वत्र यजमानस्यर्त्विजां च यावत्कर्म व्रतमुपदिशन्ति
नर्त्विजामार्त्विज्यमन्यत्र विद्यते न महर्त्विजाँ समासो न सर्वत्र
यजमानस्यार्त्विज्यमन्यत्र सत्रात्
सर्वेषु सोमेषु
सोमापचारकालातिक्रमान्तरितविपर्यासव्यवायसमासादिष्वन्येषु चाज्ञातेषु
ज्ञातेषु च दोषेषु प्राक्समिष्टयजुष आज्यस्थाल्याः स्रुवेणोपघातँ
सर्वप्रायश्चित्तानि जुहुयाद्जयानित्येकेऽभ्यातानानित्येके
राष्ट्रभृत इत्येकेऽमात्यहोमानित्येके
छन्दाँ सीत्येके
सौरीरित्येके
तनूरित्येके
होतॄनित्येके
दशात्मकमित्येके
पौरुषीरित्येके
वैष्णवीरित्येके
महाव्याहृतीरित्येके
व्याहृतीरित्येके
प्राजापत्यामित्येके
प्रणवमित्येके
सर्वानित्याचार्यः सर्वानित्याचार्यः १३

त्रिंशः प्रश्नः

अथेमेऽग्निचयास्
तेषां भूमेः परिमाणविहारान्व्याख्यास्यामोऽथाङ्गुलप्रमाणं चतुर्दशाणवश्चतुस्त्रिँ
शत्तिलाः पृथुसँश्लिष्टा इत्यपरं दशाङ्गुलं क्षुद्रपदं द्वादश प्रादेशः
पृथोत्तरयुगे त्रयोदशिके

पदं पञ्चदशाष्टाशीतिशतमीषा चतुःशतमक्षः
षडशीतिर्युगं द्वात्रिँशज्ञानुः
षट्त्रिँशच्छम्याबाहू
द्विपदः प्रक्रमो द्वौ प्रादेशावरत्निरथाप्युदाहरन्ति पदे युगे प्रक्रमेऽरत्नावियति शाम्यायां च मानार्थेषु याथाकामीति
पञ्चारत्निः पुरुषो व्यामश्च
चतुररत्निर्व्यायामश्चतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्तावतीँ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति
लेखामालिख्य तस्या मध्ये शङ्कुं निहन्यात्
तस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेद्विष्कम्भान्तयोः शङ्कू निहन्यात्
पूर्वस्मिन्पाशं प्रतिमुच्य पाशेन मण्डलं परिलिखेदेवमपरस्मिंस्ते यत्र समेयातां तेन द्वितीयं विष्कम्भमायच्छेद्विष्कम्भान्तयोः शङ्कू निहन्यात्
पूर्वस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेदेवं दक्षिणत एवं पश्चादेवमुत्तरतस्
तेषां येऽन्त्याः सँसर्गास्तच्चतुरश्रँ संपद्यतेऽथापरम्प्रमाणाद्द्विगुणाँ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति
स प्राच्यर्थोऽपरस्मिन्नर्धे चतुर्भागोने लक्षणं करोति

तन्न्यञ्चनम्
अर्धेऽँसार्थम्पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्चनेन दक्षिणापायम्यार्धेन श्रोणयँ सान्निर्हरेद्दीर्घचतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्तावत्यां भूम्यां द्वौ शङ्कू निहन्याद्द्वौद्वावेकैकमभितः समौ
यावती तिर्यङ्मानी तावतीँ रज्जुमुभयतःपाशां कृत्वा मध्ये लक्षणं करोति
पूर्वेषामन्त्ययोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे लक्षणं करोति
मध्यमे पाशौ प्रतिमुच्य लक्षणस्योपरिष्टाद्दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात्
सोऽँस एतेनोत्तरोऽँसो व्याख्यातस्
तथा श्रोणी

यत्र पुरस्तादँ हीयसीं मिनुयात्तत्र तदर्धे लक्षणं करोत्यथापरं प्रमाणादध्यर्धाँ रज्जुमुभयतःपाशां कृत्वापरस्मिँस्तृतीये षड्भागोने लक्षणं करोति
तन्नयञ्चतम्
इष्टेऽँसार्थम्पृष्ठ्यानतयोः पाशौ प्रतिमुच्य न्यञ्चनेन दक्षिणापायम्येष्टेन श्रोणयँ सान्निर्हरेत्
समचतुरश्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति
प्रमाणं तिर्यक्द्विकरण्यायामस्
तस्याक्ष्णयारज्जुस्त्रिकरणी
तृतीयकरण्येतेन व्याख्यात
नवमस्तु भूमेर्भागो भवतीति
दीर्घचतुरश्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति

तासां त्रिकचतुष्कयोर्द्वादशिकपञ्चिकयोः पञ्चदशिकाष्टिकयोः सप्तिकचतुर्विंशिकयोर्द्वादशिकपञ्चत्रिँ शिकयोः पञ्चदशिकषट्त्रिँ शिकयोरित्येतासूपलब्धिः १

नानाचतुरश्रे समस्यन्कनीयसः करण्या वर्षीयसो वृध्रमुल्लिखेद्वृध्रस्याक्ष्णयारज्जुः समस्तयोः पार्श्वमानी भवति
चतुरश्राच्चतुरश्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तस्य करण्या वर्षीयसो वृध्रमुल्लिखेद्वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसँहरेत्
सा यत्र निपतेत्तदपच्छिन्द्याद्छिन्नया निरस्तं समचतुरश्रं दीर्घचतुरश्रं चिकीर्षँ स्तदक्ष्णयापच्छिद्य भागं द्वेधा विभज्य प्रार्श्वयोरुपदध्याद्यथायोगम्
अपि वैतस्मिँश्चतुरश्रँ समस्य तस्य करण्यापच्छिद्य यदतिशिष्यते तदितरत्रोपदध्याद्दीर्घचतुरश्रँ समचतुरश्रं चिकीर्षँ स्तिर्यङ्मानीं करणीं कृत्वा शेषं द्वेधा विभज्य पार्श्वयोरुपदध्यात्
खण्डमावापेन तत्संपूरयेत्

तस्य निर्हार उक्तश्चतुरश्रमेकतोऽणिमच्चिकीर्षन्नणिमतः करणीं तिर्यङ्मानीं कृत्वा शेषमक्ष्णया विभज्य विपर्यस्येतरत्रोपदध्याद्चतुरश्रं प्रौगं

चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिँ समचतुरश्रां कृत्वा पूर्वस्याः करणया मध्ये शङ्कुं निहन्यात्
तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोः श्रोण्योर्निपातयेद्बहिस्पन्द्यमपच्छिन्द्याद्चतुरश्रमुभयतःप्रौगं
चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिं दीर्घचतुरश्रां कृत्वा पूर्वस्याः करणया मध्ये शङ्कुं निहन्यात्
तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोर्मध्यदेशयोर्निपातयेद्बहिस्पन्द्यमपच्छिन्द्यादेतेनापरं प्रौगं व्याख्यातं चतुरश्रं मण्डलं चिकीर्षन्नक्ष्णयार्धं मध्यात्प्राचीमभ्यापातयेद्यदतिशिष्यते तस्य सह तृतीयेन मण्डलं परिलिखेन्मण्डलं चतुरश्रं चिकीर्षन्विष्कम्भमष्टौ भागान्कृत्वा भागमेकोनत्रिँशधा विभज्याष्टाविँशतिभागानुद्धरेद्भागस्य च षष्ठमष्टमभागोनम्
अपि वा पञ्चदश भागान्कृत्वा द्वावुद्धरेत्
सैषानित्या चतुरश्रकरणी
प्रमाणं तृतीयेन वर्धयेत्तच्चतुर्थेनात्मचतुस्त्रिँशोनेन सविशेषः २

अथाग्न्याधेयिके विहारे गार्हपत्यादाहवनीयस्यायतनं विज्ञायतेऽष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्यायामतृतीयेन त्रीणि चतुरश्राण्यनूचीनानि कारयेदपरस्योत्तरस्याँ श्रोण्यां गार्हपत्यस्
तस्यैव दक्षिणेऽँसेऽन्वाहार्यपचनः पूर्वस्योत्तरेऽँस आहवनीयोऽपि वा गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वा संभुज्य षष्ठँ सप्तमं वा भागमागन्तुकमुपसमस्य समं त्रैधं विभज्य पूर्वस्मादन्ताद्द्वयोर्भागयोर्लक्षणं करोति
गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति
तद्दक्षिणाग्नेरायतनं भवत्यपि वा प्रमाणं पञ्चमेन वर्धयेत्
तत्सर्वं पञ्चधा संभुज्यापरस्मादन्ताद्द्वयोर्भागयोर्लक्षणं करोति
पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति तद्दक्षिणाग्नेरायतनं भवति

विपर्यस्तैतेनोत्करो व्याख्यातोऽपरेणाहवनीयं यजमानमात्री भवतीति
दार्शपौर्णमासिकाया वेदेर्विज्ञायते
तस्यास्त्रिभागोनं पश्चात्तिरश्ची
तस्या एवार्धं पुरस्तात्तिरश्च्येवं दीर्घचतुरश्रमेकतोऽणिमद्विहृत्य स्रक्तिषु
शङ्कून्निहन्याद्यावती पार्श्वमानी द्विरभ्यस्ता तावतीँ रज्जुमुभयतःपाशां कृत्वा
मध्ये लक्षणं करोति

दक्षिणयोः पार्श्वयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं
निहन्यात्
तस्मिन्पाशौ प्रतिमुच्य लक्षणेन दक्षिणं पार्श्वं परिलिखेदेतेनोत्तरं पार्श्वं
व्याख्यातम्पूर्वं पार्श्वं तया द्विरभ्यस्तया परिलिखेदेवमपरं दशपदा
पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्चीति पाशुबन्धिकाया
वेदेर्विज्ञायते
मानयोगस्तस्या व्याख्यातो रथसंमितेत्येकेषाम्विराट्संपन्नेत्येकेषां
शम्यामात्री चतुःस्रक्तिर्भवतीत्युत्तरवेदेर्विज्ञायते
समचतुरश्राविशेषाद्वितृतीया वेदिर्भवतीति पैतृक्या वेदेर्विज्ञायते
महावेदेस्तृतीयेन समचतुरश्रकृतायास्तृतीयकरणी भवतीति
नवमस्तु भूमेर्भागो भवति
यजमानमात्री चतुःस्रक्तिर्भवतीत्येकेषां दिक्षु स्रक्तयो भवन्ति
वेदितृतीये यजेतेति सौत्रामणिकीं वेदिमभ्युपदिशन्ति
महावेदेस्तृतीयेन समचतुरश्रकृताया अष्टादशपदा पार्श्वमानी भवति
तस्यै दीर्घकरण्यामेकतोऽणिमत्करण्यां च याथाकामीति ३

प्राग्वँशः षोडशप्रक्रमायामो द्वादशव्यासोऽपि वा द्वादशप्रक्रमायामो
दशव्यासस्
तस्य मध्ये द्वादशिको विहारस्
त्रिँशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति षट्त्रिँशत्प्राची चतुर्विँशतिः
पुरस्तात्तिरश्चीति महावेदेर्विज्ञायते
मानयोगस्तस्या व्याख्यात आहवनीयात्षट्प्रक्रमान्महावेदिस्
तत एकस्मिन्सदस्

तद्दशकम्
उदक्सप्तविँशत्यरत्नयोऽष्टादशेत्येकेषां ततश्चतुर्षु हविर्धानं तद्दशकं द्वादशकं वा
मानयोगस्तयोर्व्याख्यातो यूपावटीयाच्छङ्कोरर्धप्रक्रममवशिष्योत्तरवेदिं विमिमीते
दशपदोत्तरवेदिर्भवतीति सोमे विज्ञायते
मानयोगस्तस्या व्याख्यातश्चात्वालः शम्यामात्रोऽपरिमितो वाथोपरवाः प्रादेशमुखाः प्रादेशान्तराला अरत्निमात्रँ समचतुरश्रं विहृत्य स्रक्तिषु शङ्कून्निहन्यादर्धप्रादेशेनार्धप्रादेशेनैकैकं मण्डलं परिलिखेत्
सदसः पूर्वार्धाद्द्विप्रक्रममवशिष्य धिष्ण्यानां द्विप्रादेशो विष्कम्भस् तथान्तराला आग्नीध्रागारस्य पार्श्वमानी पञ्चारत्निरेतेन मार्जालीयो व्याख्यातस्
तस्योदीचीं द्वारं कुर्वन्ति
रथाक्षान्तराला यूपावटा भवन्तीत्येकादशिन्यां विज्ञायते

तस्या दशानां च रथाक्षाणामेकादशानां च पदानामष्टाङ्गुलस्य च चतुर्विँशं भागमाददीत
स प्रक्रमः स्यात्
तेन वेदिं विमिमीतेऽथाश्वमेधे विँशत्याश्च रथाक्षाणामेकविँशत्याश्च पदानामष्टाङ्गुलस्य च चतुर्विँशं भागमाददीत
स प्रक्रमः स्यात्
तेन वेदिं विमिमीतेऽथ प्राच्येकादशिन्यां यूपार्थं वेदेः पूर्वार्धात्पदार्धव्यासमपच्छिद्य तत्पुरस्तात्प्राञ्चं दध्याद्नात्राष्टाङ्गुलं विद्यते न व्यतिषङ्गो यूपावटाः पदविष्कम्भास्त्रिपदपरिणाहानि यूपोपराणीति ४

अर्धाष्टमाः पुरुषाः प्रथमोऽग्निरर्धनवमा द्वितीयोऽर्धदशमास्तृतीय एवमुत्तरोत्तरो विधाभ्यास ऐकादशविधात्
तदेतत्सप्तविधप्रभृत्येकशतविधान्तम्
अत ऊर्ध्वमेकशतविधानेव प्रत्याददीतानग्निकान्वा
यज्ञक्रतूनाहरेदन्यत्राश्वमेधादश्वमेधमप्राप्तं चेदाहरेदत ऊर्ध्वं

विधामभ्यस्येन्नेतरदाद्रियेतातीतं चेदाहरेदाहृत्य कृतान्तादेव प्रत्याददीत

कथमु खलु विधामभ्यस्येद्यदन्यत्प्रकृतेस्तत्पञ्चदश भागान्कृत्वा
विधायांविधायां द्वौद्वौ भागौ समस्येत्
ताभिरर्धाष्टमाभिरग्निं चिनुयादूर्ध्वप्रमाणाभ्यास जानोः पञ्चमस्य चतुर्विंशैनैके
समामनन्त्यथ हैक एकविधप्रभृतीनपक्षपुच्छाँश्चिन्वते
तन्नोपपद्यते पूर्वोत्तरविरोधादथ हैकेषां ब्राह्मणं भवति श्येनचिदग्नीनां पूर्वा
ततिरित्यथापरेषां न ज्यायाँसं चित्वा कनीयाँसं चिन्वीतेत्यथास्माकम्पक्षी
भवति
न ह्यपक्षः पतितुमर्हत्यरत्निना पक्षौ द्राघीयाँसौ भवतस्
तस्मात्पक्षप्रवयाँसि वयाँसि
व्याममात्रौ पक्षौ च पुच्छं च भवतीति
नापक्षपुच्छः श्येनो विद्यते
न चासप्तविधस्य पक्षपुच्छानि विद्यन्ते न च सप्तविधं चित्वैकविधप्रसङ्गस्
तस्मात्सप्तविध एव प्रथमोऽग्निर्भेदान्वर्जयेदधरोत्तरयोः पार्श्वसंधानं भेदा
इत्युपदिशन्ति
तदग्न्यन्तेषु न विद्यते न स्रक्तिपार्श्वयोः साहस्रं चिन्वीत प्रथमं चिन्वान इति
पञ्चमायां वा चितौ संख्यां पूरयेद्द्विशताश्चेच्चिकीर्षेत्पञ्चचोडाभिर्नाकसदः
समानसंख्यं प्रतीयात् ५

पशुधर्मो ह वा अग्निर्यथा ह वै पशोर्दक्षिणेषामस्थ्नां यद्दक्षिणं पार्श्वं
तदुत्तरेषामुत्तरं यदुत्तरेषां दक्षिणं तद्दक्षिणेषामुत्तरं यदवाक्चोर्ध्वं च
तत्समानमेवमिष्टकानाँ रूपाण्युपदध्याद्या दक्षिणावृतो लेखास्ता दक्षिणत
उपदध्यात्सव्यावृत उत्तरत ऋजुलेखाः पश्चाच्च पुरस्ताच्च भवन्ति
त्र्यालिखिता मध्येऽथ या विशयस्था यथा ह वै पशोः पृष्ठवँशो
नैवैकस्मिन्पार्श्वे व्यतिरेकेण वर्तते नैवापरस्मिन्नेवं तासामुपधानं
प्रतीयादथापि ब्राह्मणं भवति
प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थानीति
तस्माद्बहिस्तन्वं चेच्चिनुयात्तन्वोपव्लयमध्यैरात्मोपव्लयमध्यात्संदध्यात्
प्राञ्चमेनं चिनुत इति विज्ञायतेऽमृन्मयीभिरनिष्टकाभिर्न संख्यां पूरयेद्

इष्टकचिद्वा अन्योऽग्निः पशुचिदन्य इत्येतस्मात्ब्राह्मणात्
पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियते यत्प्राचीनमैष्टकाद्यजुः क्रियत इति च
लोकबाधीनि द्रव्याणयवटेषूपदध्याद्मगडलमृषभं विकर्णीमितीष्टकासु लन्दमाणि प्रतीयादिष्टकामन्त्रयोरिष्टकाव्यतिरेके लोकंपृणाः संपद्यन्ते
परिमाणाभावादतीतानेव वेष्टकागणानत्रोपदध्यात्
पञ्च लोकंपृणार्मन्त्रव्यतिरेकेऽक्ताः शर्कराः संधिषूपदध्यात्
प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः
प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तुर्मुखवादः
पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः
प्राचीरित्यपवर्गश्चतुरश्रास्वेवैतदुपपद्यते ६

न खगडामुपदध्याद्न भिन्नामुपदध्याद्न कृष्णामुपदध्याद्न जीर्णामुपदध्याद्न लन्दमणामुपदध्याद्न स्वयमातृगणाँ स्वयं चितावुपदध्यादूर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेदर्धेन नाकसदां पञ्चचोडानां च

यच्छोषपाकाभ्यां प्रतिह्रसेत पुरीषेण
तत्संपूरयेत्पुरीषस्यानियतपरिमाणत्वाद्व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते
चतुरश्रेत्येकेषाम्परिमगड्लेत्येकेषां चतुरश्रँ सप्तधा विभज्य तिरश्चीं त्रेधा विभजेदपरस्मिन्प्रस्तार उदीचीरुपदधाति
समचतुरश्राश्चेदुपदध्याद्व्यायामषष्ठेनेष्टकाः कारयेच्चतुर्थेन तृतीयेनेति
तासां नव प्रथमा द्वादश द्वितीया इति पूर्वस्मिन्प्रस्तार उपदधाति
पञ्च तृतीयाः षोडश प्रथमा इत्यपरस्मिन्
परिमगडलायां यावत्संभवेत्तावत्समचतुरश्रं कृत्वा तन्नवधा विभजेत्प्रधींस्त्रिधात्रिधेत्यपरं प्रस्तारं तथोपदध्याद्यथा प्रध्यनीकेषु स्रक्तयो भवन्ति
धिष्णया एकचितीकाश्चतुरश्राः परिमगडला वा
तेषामाग्नीध्रीयं नवधा विभज्यैकस्या स्थानेऽश्मानमुपदध्यादथ होतुर्धिष्णयं

नवधा विभज्य पूर्वाँस्त्रिभागानेकैकं द्वेधा विभजेदथेतरान्नवधानवधा
विभज्य मध्यमपूर्वौ द्वौ भागौ समस्येदथ मार्जालीयं त्रेधा विभज्य पूर्वापरौ
भागौ पञ्चधा विभजेदुख्यभस्मना सँसृज्येष्टकाः कारयेदिति
संवत्सरभृत एवैतदुपपद्यते न रात्रिभृत एवमस्य मन्त्रवती
चितिक्लृप्तिश्छन्दश्चितं त्रिषाहस्रस्य परस्ताच्चिन्वीत कामविवेकात्

तस्य रूपँ श्येनाकृतिर्भवतीति ७

अथ वै भवति
श्येनचितं चिन्वीत सुवर्गकाम इत्याकृतिद्वैविध्यं चतुराश्रात्मा श्येनाकृतिश्च
विज्ञायत उभयं ब्राह्मणम्पञ्च दक्षिणायाँ श्रोणयामुपदधाति पञ्चोत्तरस्याम्बस्तो
वय इति दक्षिणेऽँस उपदधाति
वृष्णिर्वय इत्युत्तरे
व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति
सिँहो वय इत्युत्तरे
पुरुषो वय इति मध्य इति चाथापरम्वयसां वा एष प्रतिमया चीयते
यदग्निरित्युत्पततां छाययेत्यर्थः
समचतुरश्राभिरग्निं चिनुते दैव्यस्य च मानुषस्य च व्यावृत्त्या इति
मैत्रायणीयब्राह्मणं भवति
तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थेन पञ्चमेन षष्ठेन दशमेनेत्यथाग्निं विमिमीते
यावान्पुरुष ऊर्ध्वबाहुस्तावदन्तराले वेणोश्छिद्रे करोति मध्ये तृतीयं
यदमुत्र स्पन्दया करोति तदिह वेणुना करोति
तस्यात्मा समचतुरश्रश्चत्वारः पुरुषाः
पक्षः समचतुरश्रः पुरुषः
स तु दक्षिणतोऽरत्निना द्राघीयान्
एतेनोत्तरः पक्षो व्याख्यातः
पुच्छः समचतुरश्रः पुरुषस्
तमवस्तात्प्रादेशेन वर्धयेदेवँ सारत्निप्रादेशा सप्तविधः संपद्यत उपधाने
पक्षाग्रादुत्तरतः पुरुषतृतीयवेलायां चतस्रः पञ्चम्यस्तासामभितो द्वेद्वे पादेष्टके
ततोऽष्टौ चतुर्थ्यः

पक्षशेषँ षड्भागीयाभिः प्रच्छादयेदेतेनोक्तरः पक्षो व्याख्यातः
पूर्वापरयोः पुच्छपार्श्वयोश्चतुर्भागीया उपदध्याद्दक्षिणोत्तरयोः पादेष्टकाः
शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः प्रस्तारोऽपरस्मिन्प्रस्तारे
पक्षाग्रादुत्तरतोऽर्धव्यायामवेलायां तिस्रस्तिस्रः षष्ठ्यो द्वेद्वे द्विपदे इति
विपर्यासमुपदध्यात्
तथोत्तरे
दक्षिणस्याँ श्रोण्यां नव षष्ठ्यश्चतुरश्रकृतास्
तथोत्तरस्यां नवनव षष्ठ्यो द्वेद्वे द्विपदे इति दक्षिणादँ सादोत्तरादँ
साद्विपर्यासमुपदध्याद्शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेदेष द्विशतः
प्रस्तारो व्यत्यासं चिनुयाद्यावतः प्रस्ताराँश्चिकीर्षेत् ८

अथापरः
पुरुषस्य पञ्चम्यस्
ता एवैकतोऽध्यर्धास्
तासामर्ध्याः पाद्याश्चोपधाने पूर्वापरयोः पक्षपार्श्वयोरर्धेष्टका उदीचीरुपध्यात्
तथोत्तरे
दक्षिणोत्तरयोः पुच्छपार्श्वयोश्चतस्रश्चतस्रोऽध्यर्धा उदीचीः
पुच्छस्यावस्ताच्चतस्रोऽर्धेष्टका उदीचीस्
तासामभितो द्वे पादेष्टके

जघनेन पुच्छाप्ययोरेकैकामर्धेष्टकां प्राचीं शेषमग्निं पञ्चमभागीयाभिः
प्रच्छादयेदेष द्विशतः प्रस्तारोऽपरस्मिन्प्रस्तार आत्मस्रक्तिषु चतस्रः पादेष्टका
उपदध्यात्
तासामभितो द्वेद्वे अर्धेष्टके
पूर्वस्मिन्ननीके पञ्च
पक्षाग्रयोस्तिस्रस्तिस्रोऽध्यर्धा उदीचीस्
तासामन्तरालेष्वेकैकामर्धेष्टकां प्राचीं शेषमग्निं पञ्चमभागीयाभिः
प्रच्छादयेदेष द्विशतः प्रस्तारो व्यत्यास चिनुयाद्यावतः प्रस्ताराँश्चिकीर्षेत् ९

अथ वक्रपक्षो व्यस्तपुच्छस्

तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्यस्
तासामर्ध्याः पाद्याश्च
नित्यमक्ष्णयापच्छेदनमनादेशे
पादेष्टकाश्चतुर्भिः परिगृह्णीयादर्धपदेन पदेनाध्यर्धपदेन पदसविशेषेणेति
ते द्वे यथा दीर्घसँश्लिष्टे स्यातां तथार्धेष्टकां कारयेदथाग्निं विमिमीत आत्मा
द्विपुरुषायामो दशपदव्यासस्
तस्य दक्षिणादँसादुत्तरतोऽध्यर्धप्रक्रमे लक्षणं करोत्येवमपरतस्
तयोरुपरिष्टात्स्पन्द्यां नियम्याँ समपच्छिन्द्यादेतेनेतरासाँ स्रक्तीनामपच्छेदा
व्याख्याताः
स आत्मा
शिरोऽर्धषष्ठपदायाममर्धपुरुषव्यासं
तस्याँ सौ प्रक्रमेणप्रक्रमेणापच्छिन्द्यात्
पुच्छस्य षट्पदा प्राची द्विपुरुषोदीची
तस्य पूर्वे स्रक्ती त्रिभिस्त्रिभिः प्रक्रमैरपच्छिन्द्यात्
पक्षो द्वादशपदायामो दशपदव्यासस्
तस्य मध्यात्प्राञ्चि षट्पदानि प्रक्रम्य शङ्कुं निहन्याद्श्रोण्योरेकैकम्
अथैनँ स्पन्द्यया परिचिनुयादन्तस्पन्द्यामपच्छिद्य तत्पुरस्तात्प्राञ्चं दध्यात्
स निर्णाम एतेनोत्तरस्य पक्षस्य निर्णामो व्याख्यातः
पक्षाग्रयोः प्रक्रमप्रमाणानि पञ्चपञ्च चतुरश्राण्यनूचीनानि कृत्वा
सर्वाण्यवाञ्चमक्ष्णयापच्छिन्द्यादर्धान्युद्धरेदेवँ सारत्निप्रादेशः सप्तविधः
संपद्यत उपधाने शिरसोऽप्यये चतुर्थीमुपदध्याधँ समुखीं पुरस्तात्पादेष्टके
अभितस्
तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः
शेषे पादेष्टका अपि वा शिरसोऽग्रे हँ समुखीमुपदध्यात्
तस्य अवस्ताच्चतुर्थीमुपदध्यात्पादेष्टके अभितस्
तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः
शेषे पादेष्टकाः
शिरसोऽवस्तात्पञ्च पादेष्टका व्यतिषक्ता उपदध्यात्
तथा पुच्छस्य पुरस्ताद्यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः
पादेष्टकाश्चोपदध्याद्शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्

पाद्याभिः साध्यार्भिः संख्यां पूरयेदेष द्विशतः प्रस्तारोऽपरस्मिन्प्रस्तारे हँ
समुखीश्चतस्त्रश्चतसृभिः पादेष्टकाभिः संयोजयेद्यथा दीर्घचतुरश्रँ संपद्यते
तत्तिर्यक्स्वयमातृरणावकाश उपदध्याद्
हँ समुख्यौ प्रतीच्यौ पुच्छाप्ययेऽर्धपदेनात्मनि विशये
तयोरवस्तादभितस्तिस्त्रः पादेष्टकाः प्राङ्मुखीरुपदध्यात्
पुच्छस्यावस्तात्पञ्चदश पादेष्टका व्यतिषक्ता उपदध्यात्
पादेष्टके अर्धेष्टकेति पक्षपत्त्राणां प्राचीर्व्यत्यासं चिनुयाद्विशये यदपच्छिन्नं
तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्याद्शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत्
पाद्याभिः साध्यार्भिः संख्यां पूरयेत् १०

अथापरः
पुरुषस्य पञ्चमीभिः शतमशीतिः सप्तार्धं च सारत्निप्रादेशः सप्तविधः संपद्यते
तासां पञ्चाशद्द्वे चात्मन्यर्धचतुर्थ्यः शिरसि
पञ्चदश पुच्छेऽष्टपञ्चाशत्साध्यार्था दक्षिणे पक्ष उपदध्यात्
अथोत्तरेऽर्धव्यायामेन स्त्रक्तीनामपच्छेदः
संनतं पुच्छम्पक्षयोस्त्रिभिस्त्रिभिररत्निभरपनामोऽध्यर्ध्याभिः षट्षट्पत्त्राणि
कुर्यादाकृतिः शिरसो नित्याथेष्टकानां विकाराः
पुरुषस्य पञ्चम्यस्
ता एवैकतोऽध्यर्धास्
ता एवैकतः सपादाः
पञ्चमभागीयायाः पाद्याः साध्यास्
तथाध्यर्धायास्
तयोश्चाष्टमभागौ तथा श्लेषयेद्यथा तिस्त्रः स्त्रक्तयो भवन्ति
पञ्चमभागीयायाश्चाष्टम्यस्
तानि दशात्मनि पञ्चमभागीयाः साध्यार्था उपदध्यात्
तथा पुच्छे
पक्षयोश्चाध्यर्धाः साध्याः
शिरसि याः संभवन्त्यपरस्मिन्प्रस्तारे पूर्वयोः
पक्षाप्यययोरेकैकामुभयीमुपदध्यादेकैकामपरयोर्
द्वेद्वे शिरसः पार्श्वयोः

पुच्छस्यावस्तादध्यर्धाः प्राचीर्यथावकाशम्पार्श्वयोः पाद्याः साष्टमभागाः
पक्षयोश्चाध्यर्धाः सावयवाः
शेषं यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् ११

कङ्कचित एतेनात्मा पुच्छं च व्याख्यातं शिरसि पञ्चोपदध्यात्
तस्याकृतिर्व्याख्याता
सप्तपञ्चाशद्दक्षिणे पक्ष उपदध्यात्
तथोत्तरे
व्यायामेन सप्रादेशेन पक्षयोरपनामः
पञ्चमभागीयाध्यर्धाभिः षट्षट्पत्त्राणि कुर्यादध्यर्धावशिष्यते
तया पुच्छस्यावस्तात्पादावरत्निमात्रावरत्न्यन्तरालौ प्रादेशव्यासौ भवतस्
तयोरवस्तादभितो द्वौद्वावष्टमभागौ प्राग्भेदावुपदध्यादेवँ सारत्निप्रादेशः
सप्तविधः संपद्यतेऽथेष्टकानां विकाराः
पञ्चमभागीयाः सावयवाः
पादेष्टकां चतुर्भिः परिगृह्णीयादर्धप्रादेशेनाध्यर्धप्रादेशेन प्रादेशेन
प्रादेशसविशेषेनेत्यध्यर्धेष्टकां चतुर्भिः परिगृह्णीयादर्धव्यायामेन
द्वाभ्यामरत्निभ्यामरत्निसविशेषेणेति
ताः षट्
तासां चतुरश्रपाद्याः साष्टमभागाः पादयोरुपधाय शेषं यथायोगं यथासंख्यं
यथाधर्मं चोपदध्यात् १२

अलजचित एतेनात्मा शिरः पुच्छं च व्याख्यातं पदावपोद्धृत्य
त्रिषष्टिर्दक्षिणे पक्ष उपदध्यात्
तथोत्तरे
पुरुषेण पक्षयोरपनामोऽप्रस्मादपनामात्प्राञ्चमरत्निं मित्वा तस्मिन्स्पद्यां
नियम्यापरं पक्षपत्त्रापच्छेदमन्वायच्छेदेवं पञ्च पञ्चम्यः साध्यर्धा उद्धृता भवन्ति
पादेष्टकामपनाम उपधाय तासां चतुरश्रपाद्याः साष्टमभागा अपोद्धृत्य शेषं
यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् १३

प्रौगचितं चिन्वीतेति

यावानग्निः सारत्निप्रादेशस्तावत्प्रौगं कृत्वा तस्यापरस्याः करण्या
द्वादशेनेष्टकास्तदर्धव्यासाः कारयेत्
तासामर्ध्याः पाद्याश्च
तासां द्वे अर्धेष्टके बाह्यसविशेषे चुबुक उपदध्यादर्ध्याश्चान्तयोः
शेषमग्निं बृहतीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां
पूरयेदपरस्मिन्प्रस्तारेऽपरस्मिन्ननीके सप्तचत्वारिँशत्पादेष्टका व्यतिषक्ता
उपदध्याद्चुबुक एकाँ शूलपाद्यां दीर्घे चेतरे चतस्रः स्वयमातृण्णावकाश
उपदध्यादर्ध्याश्चान्तयोः
शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् १४

उभयतःप्रौगं चिन्वीतेति
यावानग्निः सारत्निप्रादेशस्तावदुभयतःप्रौगं कृत्वा
नवमेन तिर्यङ्मान्याः प्रौगचितोक्ता विकारास्
तथोपधानम्
अपरस्मिन्प्रस्तारे चुबुकयोर्द्वे पादेष्टके उपदध्यात्संध्यन्तयोश्च दीर्घपाद्ये
दीर्घे चेतरे च चतस्रः स्वयमातृण्णावकाश उपदध्यादर्ध्याश्चान्तयोः
शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् १५

रथचक्रचितं चिन्वीतेति विज्ञायते
द्वयानि तु खलु रथचक्राणि भवन्ति साराणि च प्रधियुक्तानि चाविशेषात्ते
मन्यामहेऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते
यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा
तस्मिन्यावत्संभवेत्तावत्समचतुरश्रं कृत्वा तस्य करण्या द्वादशेनेष्टकाः
कारयेत्
तासाँ षट्प्रधावुपधाय शेषमष्टधा विभजेदपरं प्रस्तारं तथोपदध्याद्यथा
प्रध्यनीकेषु स्रक्तयो भवन्त्यथापरः
पुरुषार्धात्पञ्चदशेनेष्टकाः समचतुरश्राः कारयेन्मानार्थास्
तासां द्वे शते पञ्चविँशतिश्च सारत्निप्रादेशः सप्तविधः संपद्यते
तास्वन्याश्चतुःषष्टिमावपेत्
ताभिः समचतुरश्रं करोति

तस्य षोडशेष्टका पार्श्वमानी भवति

त्रयस्त्रिँशदतिशिष्यन्ते
ताभिरन्तान्सर्वशः परिचिनुयाद्नाभिः षोडश
मध्यमाश्चतुःषष्टिरराश्चतुःषष्टिर्वेदिर्नाभिः शेषा
नाभिमन्ततः परिलिखेद्नेमिमन्ततश्चान्तरतश्च परिलिख्य नेमिनाभ्योरन्तरालं
द्वात्रिँशद्धा विभज्य विपर्यासं भागानुद्धरेदेवमवाप उद्धृतो भवति
नेमिं चतुःषष्टिं कृत्वा व्यवलिख्य मध्ये परिकृषेत्
ता अष्टाविँशतिशतं भवन्त्यराँश्चतुर्धाचतुर्धा नाभिमष्टधा विभजेदेष प्रथमः
प्रस्तारोऽपरस्मिन्प्रस्तारे नाभिमन्ततश्चतुर्थवेलायां परिकृषेन्नेमिमन्तरतो
नेमिमन्तरतश्चतुःषष्टिं कृत्वा व्यवलिखेदराणां पञ्चधा विभाग आ
परिकर्षणयोर्नेम्यामन्तरालेषु द्वेद्वे नाभ्यामन्तरालेष्वेकैकां यच्छेषं
नाभेस्तदष्टधा विभजेत्
स एष षोडशकरणः सारो रथचक्रचित् १६

द्रोणचितं चिन्वीतेति विज्ञायते
द्वयानि तु खलु द्रोणानि भवन्ति चतुरश्राणि च परिमण्डलानि चाविशेषात्ते
मन्यामहेऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते
चतुरश्र आत्मा भवति
तस्य त्रयः पुरुषास्त्रिभागोनाः पार्श्वमानी
पश्चात्त्सरुर्भवति
तस्यार्धपुरुषो दशाङ्गुलानि च प्राची
त्रिभागोनः पुरुष उदीचीत्येवँ सारत्निप्रादेशः सप्तविधः संपद्यतेऽथेष्टकानां
विकाराः
पुरुषस्य षष्ठ्यस्
त एवैकतोऽध्यर्धास्
तासामर्ध्यास्तिर्यग्भेदाः पुरुषस्य चतुर्थ्य इति
तासां त्सरुश्रोण्यन्तरालयोः षट्षष्टीरुपधाय शेषमग्निं बृहतीभिः
प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे
दक्षिणेऽँसेऽध्यर्धामुदीचीमुपदध्यात्

तथोत्तरे
पूर्वस्मिन्ननीके षड्भागीया उपदध्याद्दक्षिणोत्तरयोश्चतुर्भागीयास्
त्सरोः पुरस्तात्पार्श्वयोर्द्वे चतुर्भागीये उपदध्यात्
तयोरवस्तादभितो द्वेद्वे अध्यर्धे विषूची
तयोरवस्तान्मध्यदेशे द्वे षष्ठ्यौ प्राच्यौ
शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् १७

अथापरः
पुरुषस्य षोडशीभिर्विँशशतँ सारत्निप्रादेशः सप्तविधः संपद्यते
तासामेकामपोद्धृत्य शेषाः परिमण्डलं करोति
तत्पूर्वेण रथचक्रचिता व्याख्यातं षोडशीं पुरस्ताद्द्विशय उपधाय तया सह मण्डलं परिलिखेद्
यदवस्तादपच्छिन्नं तत्पुरस्तादुपदध्यात्
प्रधीनाँ सप्तधा विभागः
प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति
चतुरश्राणामर्ध्याभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे प्रधिमध्यमामोष्ठ उपधाय यदवस्तात्तद्द्वेधा विभजेत्
स एष नवकरणो द्रोणचित्परिमण्डलः
समूह्यपरिचाय्यौ पूर्वेण रथचक्रचिता व्याख्यातौ
समूह्यस्य दिक्षु चात्वालान्खानयित्वा तेभ्यः पुरीषँ समूह्योपदध्यात्
परिचाय्य इष्टकानां देशभेदस्
तँ सर्वाभिः प्रदक्षिणं परिचिनुयात् १८

श्मशानचितं चिन्वीतेति विज्ञायते
सर्वमग्निं चतुरश्रान्पञ्चदश भागान्कृत्वा तेषामाख्यातमुपधानं
त्रिभिर्भागैर्भागार्धव्यासं दीर्घचतुरश्रं विहृत्य पूर्वस्याः करण्या मध्याच्छ्रोणी प्रत्यालिख्यान्तावुद्धरेत्
तस्य दशधा विभागस्
तानि विँशतिः सर्वोऽग्निः संपद्यतेऽपरस्मिन्प्रस्तारे प्रौगमध्येऽनूचीनं विभजेत्
तस्य षड्धा विभागस्

ते द्वे पार्श्वयोरुपदध्याद्भागतृतीयायामाश्चतुर्थव्यासाः कारयेत्
तासामर्ध्यास्तिर्यग्भेदास्
ता अन्तयोरुपधाय शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेद्
अर्धेष्टकाभिः संख्यां पूरयेदूर्ध्वप्रमाणमग्नेः पञ्चमेन वर्धयेत्
तत्सर्वं त्रैधा विभज्य द्वयोर्भागयोश्चतुर्थेन वा नवमेन वा चतुर्दशेन वेष्टकाः कारयेत्
ताभिश्चतस्रो वा नव वा चतुर्दश वा चितीरुपधाय
शेषमवाञ्चमक्ष्णयापच्छिन्द्यादर्धमुद्धरेत्
तस्य नित्यो विभागो यथायोगमिष्टकानाँ ह्रासवृद्धी १६

कूर्मचितं चिन्वीत यः कामयेत ब्रह्मलोकमभिजयेयमिति विज्ञायते
द्वयाः खलु कूर्मा भवन्ति वक्राङ्गाश्च परिमण्डलाश्चाविशेषात्ते
मन्यामहेऽन्यतरस्याकृतिरित्यथाग्निं विमिमीते
चतुरश्र आत्मा भवति
तस्य दश प्रक्रमाः पार्श्वमानी भवति
तस्य द्वाभ्यांद्वाभ्यां प्रक्रमाभ्याँ स्रक्तीनामपच्छेदः
पूर्वस्मिन्ननीके प्रक्रमप्रमाणानि चत्वारि चतुरश्राणि कृत्वा तेषां ये अन्त्ये ते अक्ष्णयापच्छिन्द्यादेवं दक्षिणत एवं पश्चादेवमुत्तरतः
स आत्मा
शिरः पञ्चपदायाममर्धपुरुषव्यासं तस्याँ सौ प्रक्रमेणप्रक्रमेणापच्छिन्द्यात्
स्रक्त्यपच्छेदे पादानुन्नयेत्
तस्य द्विपदाक्ष्णया तिरश्ची तद्द्विगुणायाममनूची
तस्य द्विपदाक्ष्णया पूर्वमँ समपच्छिन्द्यादेतेनेतरेषांपादानामपच्छेदा व्याख्याता
अपरयोः पादयोरपरावँ सावपच्छिन्द्यादेवँ सारत्निप्रादेशः सप्तविधः संपद्यते
तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्यस्
तासामर्ध्याः पाद्याश्चाध्यर्धपाद्याश्चतुर्भिः परिगृह्णीयात्प्रक्रमेण द्वाभ्यां पदाभ्यां पदसविशेषेणेति
ते द्वे यथा दीर्घसँश्लिष्टे स्यातां तथैकां कारयेद्द्विपदाक्ष्यणार्धेन समचतुरश्रामेकाम्

उपधाने शिरसोऽग्रे चतुरश्रामुपदध्याधँ समुख्यावरस्तात्
पञ्चपञ्च चतुरश्रा द्वेद्वे पादेष्टके इति पादेषूपदध्याद्यद्यदपच्छिन्नं तस्मिन्नर्धेष्टका
उपदध्याच्छेषमग्निं चतुर्भागीयाभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां
पूरयेदपरस्मिन्प्रस्तारे शिरसोऽग्रे हँ समुखीमुपदध्यात्पादेष्टके अभितस्
तयोरवस्तादभितो द्वेद्वे अध्यर्धपाद्ये विषूची
तयोरवस्तादभितश्छेदसँहिते द्वे पादेष्टके
द्वेद्वे द्विपदे तिस्रस्तिस्रोऽर्धेष्टका इति पादेषूपदध्याद्यद्यदपच्छिन्नं
तस्मिन्नर्धेष्टकाः पदेष्टकाश्चोपदध्याद्शेषमग्निं चतुर्भागीयाभिः
प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् २०

अथापरः
पुरुषस्य षोडशीभिर्विँशशतँ सारत्निप्रादेशः सप्तविधः संपद्यते
तासां पञ्च षोडशीरपोद्धृत्य शेषाः परिमण्डलं करोति
तदुत्तरेण द्रोणचिता व्याख्यातम्
अथ ताः पञ्च षोडश्यस्ताभिरवान्तरदिक्षु पादानुन्नयेच्छिरः पुरस्तात्
तासां परिकर्षणं व्याख्यातम्प्रधीनाँ सप्तधा विभागः
प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति
यदतिरिक्तँ संपद्यते तच्चतुरश्राणामध्यर्धाभिर्योयुज्येतापरस्मिन्प्रस्तारे पादानाँ
शिरोवद्विभागः शिरसः पादवद्व्यत्यासं चिनुयाद्यावतः प्रस्ताराँश्चिकीर्षेत्
कूर्मस्यान्ते तनुपुरीषमुपदध्यान्मध्ये बहुलम्
एतदेव द्रोणे विपरीतम्
अथ हैक एकविधप्रभृतीन्प्रौगादीन्ब्रुवते
समचतुरश्रानेक आचार्यास्
तस्य करण्या द्वादशेनेष्टकाः कारयेत्
तासामध्यर्धाः पाद्याश्चाथाश्वमेधिकस्याग्नेः पुरुषाभ्यासो
नारत्निप्रादेशानाम्प्राकृतो वा त्रिगुणस्
त्रिस्तावोऽग्निर्भवतीत्येकविँशोऽग्निर्भवतीत्युभयं ब्राह्मणमुभयं ब्राह्मणम् २१

## प्रवरप्रश्नः

अथातः प्रवरान्व्याख्यास्यामः

सप्तानामृषीणामगस्त्याष्टमानां पक्षा भवन्ति
त्रयः पक्षा भृगूणां पञ्चार्षेया वत्सा विदा आर्ष्टिषेणाश्चत्वार एवाङ्गिरसः
कौमण्डा दीर्घतमा रौक्षायणा गर्गाश्च
गर्गाणां त्र्यार्षेयो विकल्पो विश्वामित्रपक्षे पूरणा द्व्यार्षेयाः
शुनकवसिष्ठा एकार्षेया अतोऽन्ये त्रिप्रवरा भवन्त्येतेषु भृग्वङ्गिरसो
भिन्नविवाहं कुर्वते न चेत्समानार्षेया बहवः स्युरिति मतं बौधायनस्येति १

अथात ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो होतेत्येष एवोभयोः सर्वत्रोद्देशो
द्व्यार्षेयसंनिपातेऽविवाहस्त्र्यार्षेयाणां त्र्यार्षेयसंनिपातेऽविवाहः
पञ्चार्षेयाणाम्
असमानप्रवरैर्विवाह
एक एव ऋषिर्यावत्प्रवरेष्वनुवतते ।
तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरसां गणादिति पञ्चानां त्रिषु
सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेव शेषेष्वेकोऽपि वारयेदिति २

भृगूणामेवादितो व्याख्यास्यामो मार्कण्डेया माण्डूका माण्डव्याः काँसय
आलेखना दार्भायणाः शार्कराक्षा दैवतायनाः शौनकायना माण्डूकेयाः
पार्षिकाः साङ्काः प्रान्तायनाः पैलाः पैङ्गलायना दाध्रेषयो
बाह्यकयोवैश्वानरयो वैहीनरयो विरोहिता बार्हा गौष्ट्रायणा ऐष्टेषयः
काशकृत्स्ना वाग्भूतया ऋतभागा ऐतिशायना जानायनाः पाणिनिर्वाल्मीकि
स्थौलपिण्डयः शैखावता जिहीतयः सावर्णिर्वाकायना बालायना सौकृतयो
मण्डवित्सौविष्टयो हस्त्याग्नयः शौद्धकयो वैकर्णा औपजिह्वय औरशयः
काम्बलोदरयः काठोरकृद्वैहलिर्विरूपाक्षा वृकाश्वा उच्चैर्मन्यवो दैवमत्या
आर्कायणा मार्कायणाः काह्वायना वायवायनिनो शांकरवाः
कारबवश्चान्द्रमगाङ्गेया अनुपेया याज्ञिका जाबालिर्बाहुमित्रायणा आपिश-
लयो वैष्टपुरेया लोहितायना उष्ट्राक्षा नाडायनाः शारद्वतायना राजितवाहा
वत्सा वात्स्यायना इत्येके वत्सास्

तेषां पञ्चार्षेयः प्रवरो भवति

भार्गव च्यावनाप्नवानौर्व जामदग्न्येति होता
जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः ३

विदाः शैला अवटाः शैलाः प्राचीनयोग्या अभयजाताः काण्डरथयो
वैदभृताः पुलस्तय आर्कायणामार्कायणा नाष्ट्रायणाः क्रौञ्चायना भुञ्जायना
जामलायना इत्येते विदास्
तेषां पञ्चर्षियः प्रवरो भवति
भार्गव च्यावनाप्नवानैर्व वैदेति होता
विदवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः ४

आर्ष्टिषेणा नैरथयो ग्राम्यायणाः काण्वयश्चान्द्रायणाः प्रौढकलायनाः सिद्धाः
सुमनायना गौराम्भिराम्भिरित्येत आर्ष्टिषेणास्

तेषां पञ्चार्षेयः प्रवरो भवति
भार्गव च्यावनाप्नवानार्ष्टिषेणानूपेति
होतानूपवदृष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युर्वत्सा विदा
आर्ष्टिषेणा इत्येतेषामविवाह एते पञ्चावर्त्तिनः ५

यस्का मौनो मूको वाधूलो वर्षपुष्पो बालेयो राजिततायिनो दुर्दिनो भास्करो
दैवन्तायनो बाष्कलेयो माध्यमेया वाशयः कौशाम्बेयाः कौटिल्याः
सत्यकश्चित्रसेना भागन्तयो वार्काश्वकय औक्था औग्रचितयो भागुरित्थय
इत्येते यस्कास्

तेषां त्र्यार्षेयः प्रवरो भवति
भार्गव वैतहव्य सावेतसेति होता
सवेतोवद्वीतहव्यवद्भृगुवदित्यध्वर्युः ६

मित्रयुवो रौष्ट्यायनाः शायण्डिनाः सापिण्डनाः सुराम्भिना माल्या बाल्या
महाबाल्यास्ताद्दर्यायणा औरुद्दयायणा वाजायना मादाघयः कैतवायना
इत्येते मित्रयुवस्

तेषां त्र्यार्षेयः प्रवरो भवति
भार्गव वाध्र्यश्व दैवोदासेति होता दिवोदासवद्वध्र्यश्ववद्भृगुवदित्यध्वर्युः
७

वैन्याः पार्था बाष्कलास्तेषां त्र्यार्षेयः प्रवरो भवति
भार्गव वैन्य पार्थेति होता
पृथुवद्वेनवद्भृगुवदित्यध्वर्युः ८

शुनका गार्त्समदा यज्ञपयः सौगन्धयः खार्दमायना गाङ्गायना
मत्स्यगन्धाश्चौक्षाः श्रोत्रियास्तैत्तिरीयाः पल्पूला इत्येते शुनकास्

तेषामेकार्षेयः प्रवरो भवति
शौनकेति होता
शुनकवदित्यध्वर्युर्गार्त्समदेति होता गृत्समदवदित्यध्वर्युर्वा ९

अङ्गिरसो व्याख्यास्याम आयास्या आणीवेयाः काचाक्षयो मूढाः
सात्यकयस्तैदेहाः कौमारवत्यास्तौण्डिर्दार्भिर्देवकिः सात्यमुग्रिः कौबाह्या
बौध्या नैकरिः स्वस्तैषकिः कीलालयः कारुणिः काटोरिः काशीवाजाः
पार्थिवा इत्येत आयास्या गौतमास्

तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसायास्य गौतमेति होता
गोतमवदयास्यवदङ्गिरोवदित्यध्वर्युः १०

शारद्वता आभिजिता रौहिण्याः क्षीरकरम्भाः सौमुचयः सौयमुना
औपबिन्दवो राहूगणा राणयो मार्षण्या इत्येते शारद्वता गौतमास्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतम शारद्वतेति होता

शरद्वद्वद्गोतमवदङ्गिरोवदित्यध्वर्युः ११

कौमरगडा मामन्थरेषणा मासुराज्ञाः काष्टरेषयऊर्जायना वनजायना वाशय
इत्येते कौमरगडा गौतमास्
तेषां पञ्चार्षेयः प्रवरो भवत्याङ्गिरसौचथ्य काक्षीवत गौतम कौमरगडेति होता
कुमरगडवद्गोतमवत्कक्षीवद्वदुचथ्यवदङिग्रोवदित्यध्वर्युः १२

दीर्घतमसां पञ्चार्षेयः प्रवरो भवत्याङ्गिरसौचथ्यकाक्षीवत गौतम
दीर्घतमसेति होता
दीर्घतमोवद्गोतमवत्कक्षीवद्वदुचथ्यवदङ्गिरोवदित्यध्वर्युः १३

ग्रौशनसा दिश्याः प्रशस्ताः सुरूपाक्षा महोदरा विगद्वकाः सुबुध्या निहिता
गुहा इत्येत ग्रौशनसा गौतमास्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतमौशनसेति होतोशनसवद्गोतमव-
दङ्गिरोवदित्यध्वर्युः १४

कारेगुपालयो वास्तव्याः श्वेतीयाः पौञ्जिष्ठय ग्रौदज्ञायना बान्धुक्या
ग्राजगन्धय इत्येते कारेगुपालयो गौतमास्
तेषां त्र्यार्षेयः प्रवरो भवत्याङिग्रस गौतम करेगुपालेति होता
करेगुपालवद्गोतमवदङिग्रोवदित्यध्वर्युः १५

वामदेवानां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस गौतम वामदेवेति होता
वामदेववद्गोतमवदङ्गिरोवदित्यध्वर्युर्गौतमानाँ सर्वेषामेवाविवाहः १६

भरद्वाजाः क्षाम्यायणा मामगडा देवाश्वा उद्वहव्याः प्राग्वँ शयो वाहलया
बाह्योगा वासिनायनास्तैदेहा ग्राज्ञा ग्रौक्षा भूरयः पारिगद्धेयाः शैखेयाः
शौद्धकय ऊरूढाः खारिग्रीवय ग्रौपशयो वयोक्तिभेदा ग्राग्निवेश्या वेधाः
शठा गौरिवायनाश्चेलका स्तनकर्गा ऊरूक्षा मागभिन्दव्याः
काह्नोदङ्कास्तौज्वलयो वेलाः खारगादयो भारुगडेया माद्रपथयः सौरोभङ्गाः
शुङ्गा दैवमतय इषुमता ग्रौदमेघयः प्रवाहगेयाः कल्माषा राजस्तम्भिः
सुधूपकृद्वाराहयो वलभिकय उग्रांगता शालाहलयो देववेला महावेला
निविञ्चायना धन्यायनाः शालालयः शार्दूलयः कात्कला वाक्कला

सैह्यकेषाः क्रौडायणाः क्रौडिल्या ब्रह्मस्तम्भा राजस्तम्भा अग्निस्तम्भा वायुस्तम्भाः सूर्यस्तम्भाः सोमस्तम्भा यमस्तम्भा इन्द्रस्तम्भा विष्णुस्तम्भा यज्ञस्तम्भा आपस्तम्भा ये चान्ये स्तम्भशबधाः स्विष्टा आरुणसिन्धुः कौमुदगन्धिः शक्तिः कौशिवायना आत्रेयायणाः भामरया धूमगन्धाः कुकाः कौकाक्षयो नैतुन्दयो दार्भयः श्यामेया मत्स्यक्राथाः कौक्वायनाः कारुपथयः कारीषायणाः काम्बल्या इत्येते भरद्वाजास्

तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाजेति होता भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः १७

रौक्षायणानां पञ्चार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाज वान्दन मातवचसेति होता
मतवचोवदवन्दनवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः १८

गर्गाः सांभरायणाः सखीनयो गन्धारायणा बाहुलकयो भ्रष्टका भ्राष्ट्रबिन्दवः क्रौष्टुकयः सौयामुनिर्भ्राजिनाक्षत्रेया होत्रापचयः सत्यापचयः कारणायना औपमत्कटायना जाणवत्पलाशशाखावन्तयः संग्रहतुल्या वैडुहा निस्रोहताः कारिरौतिः कैवल्या राजयः पौलय इत्येते गर्गास्

तेषां पञ्चार्षेयस्त्र्यार्षेयो वा प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाज शैन्य गार्ह्येति होताङ्गिरस सैन्य गार्ग्येति वा
गर्गवच्छिनिवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युर्गर्गवच्छिनिवदङ्गिरो-वदिति वा
भरद्वाजानाँ सर्वेषामेवाविवाहः १९

विष्णुवृद्धाः शठमर्षणा भद्रणा मद्रणाः शाम्बुरायणा बादरायणा वात्सप्रायणाः सात्यकिः सात्यकायना नैतुन्द्या स्तुत्या भारुण्या वैहोढा दैवस्थानय इत्येते विष्णुवृद्धास्
तेषां त्र्यार्षेयः प्रवरो भवत्
आङ्गिरस पौरुकुत्स त्रासदस्येति होता

त्रसदस्युवत्पुरुकुत्सवदङ्गिरोवदित्यध्वर्युः २०

कण्वा औपमर्कटायना बाष्कलाः शैलाहलिनो मौञ्जिर्मौञ्जयो मौञ्जिगन्धा
वाजिर्वाजयो वाजश्रवसा इत्येते कण्वास्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसाजमीढ काण्वेति होता
कण्ववदजमीढवदङ्गिरोवदित्यध्वर्युः २१

हरिताः कौत्साः शाङ्ख्या दार्भ्या शैभङ्गो बैमगवो मनायुर्लम्बोदरो महोदरो
नैमिश्रयो मिश्रोदनाः कौठपाः कारोषयः कौलयः पौलयः पौण्डलो मान्धूपो
मान्धातुर्माद्रकारय इत्येते हरितास्

तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसाम्बरीष यौवनाश्वेति होता
युवनाश्ववदम्बरीषवदङ्गिरोवदित्यध्वर्युः २२

संकृतयो लमकाः पौत्यस्तण्डिः शम्भुः शैवगवः परिभवस्तारकाद्या
हारिग्रीवा वैतालेयाः श्रौतायनाश्चारायणा आग्रायणा आर्षयश्चान्द्रायणा
आपघ्रापयः पृतिमाषा इत्येते संकृतयस्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस सांकृत्य गौरिवीतेति होता
गौरिवीतवत्संकृतिवदङ्गिरोवदित्यध्वर्युः २३

रथीतरा हास्तिदासिः काण्वायना नैतिरक्षयः शैलालयो
भैलिर्भिल्लिभायनाः सावहवा भैक्षवाहा हैमगवा इत्येते रथीतरास्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस वैरूप राथीतरेति होताङ्गिरस वैरूप
पार्षदश्वेति वा
रथीतरवद्विरूपवदङ्गिरोवदित्यध्वर्युः पृषदश्ववद्विरूपवदङ्गिरोवदिति वा
२४

मुद्गला हिरण्याक्षा ऋषभा मिताक्षा ऋश्या ऋश्यायणा दीर्घजङ्घाः
प्रलम्बजङ्घास्तरुणा भिन्दवा इत्येते मुद्गलास्

तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस भार्म्यश्व मौद्गल्येति होता
मुद्गलवद्भृम्यश्ववदङ्गिरोवदित्यध्वर्युः २५

कपयो वैतलानामैतिशायनाना पतञ्जलायान्त्रस्विनां ताण्डिनां भोजसिनाँ
शाङ्गरवाणां करशिखण्डानां मौषीतकिश्छागलयः पौष्पय इत्येते कपयस्
तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसामहय्यवौरुक्षयेति
होतोरुक्षयवदमहय्यवदङ्गिरोवदित्यध्वर्युः २६

अत्रीन्व्याख्यास्यामोऽत्रयो भूरयश्छादिनश्छान्दोगिः पौष्टिका माङ्गलयः
शैवाश्छागलास्तृणबिन्दवो भागन्तयो मालकुजो व्याडलः शाम्बव्यायनाः
कार्मर्यायणयो दाक्षिस्तैदेहा गाणिस्पतय औद्दालकिर्द्रोणभावा गौरिग्रीवयो
गाविष्ठिराः शिशुपालाः कृष्णात्रेया गौरात्रेया अरुणात्रेया नीलात्रेयाः
श्वेतात्रेयाः श्यामात्रेया महात्रेया आत्रेया हालेया वालेयाः शौभ्रेया
वामरथीनां वैतभावयः शौद्रेयाः कौद्रेया गोपवनाः कालपवय आनीषायणा
आनङ्गिर्मानङ्गिर्दौरङ्गिः सौरङ्गिः पुष्पयः शैखयः साकेतायना भारद्वाजायना
इन्द्रातिथिरित्येतेऽत्रयस्

तेषां त्र्यार्षेयः प्रवरो भवत्यात्रेयार्चनानस श्यावाश्वेति होता
श्यावाश्ववदर्चनानसवदत्रिवदित्यध्वर्युः २७

वाद्भुतकानां त्र्यार्षेयः प्रवरो भवत्यात्रेयार्चनानस वाद्भुतकेति होता
वद्भुतकवदर्चनानसवदत्रिवदित्यध्वर्युः २८

गविष्ठिराणां त्र्यार्षेयः प्रवरो भवत्यात्रेयार्चनानस गाविष्ठिरेति होता
गविष्ठिरवदर्चनानसवदत्रिवदित्यध्वर्युः २९

मुद्गलाः शालिसंधय और्णनाभयो दाक्षिर्वैतवाहाः शिरीषयः शालिमतो
व्रीहिमतो गौरीषितो गौरिकयो वायवना वायुपूटा इत्येते मुद्गलास्

तेषां त्र्यार्षेयः प्रवरो भवत्यात्रेयार्चनानसपौर्वातिथेति होता

पूर्वातिथिवदर्चनानमवदत्रिवदित्यध्वर्युः ३०

विश्वामित्रान्व्याख्यास्यामः
कुशिकाः पार्णजङ्घा वारक्या औदरिर्माणिर्बृहदग्निरालविराघट्टिरापद्यपा
अन्तकाः कामन्तका बाष्पकयश्चिकिता लामकायनाः शालङ्कायनाः
शाङ्कायना लौका गौराः सौगन्तयो यमदूता
अनभिम्लातास्तारकायणाश्चौवला जाबालयो यज्ञवल्का विदण्डा भौवनयः
सौबभ्रवय औपदहनय औदुम्बरिर्भारिष्टिकयः श्यामेयाश्चैत्रेयाः शालावता
मयूराः सौमत्याश्चित्रतन्तवो मनुतन्तवो मान्तवो ये चान्ये तन्तुशब्दा
बाभ्रव्याः कलापा उत्सरय इत्येते कुशिकास्

तेषां त्र्यार्षेयः प्रवरो भवति

वैश्वामित्र दैवरातौदलेति होतोदलवद्देवरातवद्विश्वामित्रवदित्यध्वर्युः ३१

लोहिता दाण्डकयश्चाक्रवर्मायणा झर्झायना वाञ्चायना मादाघयः
कैतवायनयो वाशय इत्येते लोहितास्
तेषां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्राष्टक लौहितेति होता
लोहितवदष्टकवद्विश्वामित्रवदित्यध्वर्युः ३२

विश्वामित्रदेवश्रवसदेवतरसः श्रौमतकामकायनाः कामकायनिनस्
तेषां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्र दैवश्रवस दैवतरसेति होता
देवतरसवद्देवश्रवसवद्विश्वामित्रवदित्यध्वर्युः ३३

रौक्षकाश्चौडूहला रैणवाश्च
तेषां त्र्यार्षेयः प्रवरो भवति
वेश्वामित्र रौक्षक रेणवेति होता
रेणुवद्रुक्षकवद्विश्वामित्रवदित्यध्वर्युः ३४

कताः सैरिन्धाः करभा वाजायनाः सांहितेयाः कौकृत्याः शैशिरेया
औदुम्बरायणाः पिण्डग्रीवा नारायणा नाराट्या इत्येते कतास्
तेषां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्र कात्यात्कीलेति होतात्कीलवत्कतवद्विश्वामित्रवदित्यध्वर्युः ३५

धनंजयाः कारीषय आश्ववतास्तुलभ्याः सैन्धवायना उष्ट्राक्षा महाक्षा इत्येते धनंजयास्

तेषां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्र माधुच्छन्दस धानंजयेति होता
धनंजयवन्मधुच्छन्दोवद्विश्वामित्रवदित्यध्वर्युः ३६

अजानां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्र माधुच्छन्दसाजेति होता
अजवन्मधुच्छन्दोवद्विश्वामित्रवदित्यध्वर्युः ३७

अघमर्षणाः कुशिकास्
तेषां त्रयार्षेयः प्रवरो भवति
वैश्वामित्राघमर्षण कौशिकेति होता
कुशिकवदघमर्षणवद्विश्वामित्रवदित्यध्वर्युः ३८

इन्द्रकौशिकास्
तेषां त्र्यार्षेयः प्रवरो भवति
वैश्वामित्रैन्द्र कौशिकेति होता
कुशिकवदिन्द्रवद्विश्वामित्रवदित्यध्वर्युः ३९

पूरणा वारिधापयन्तास्
तेषां द्व्यार्षेयः प्रवरो भवति
वैश्वामित्र पौरणेति होता

पूर्वणवद्विश्वामित्रवदित्यध्वर्युः ४०

कस्यपान्व्याख्यास्यामः
कश्यपाश्छागरयो मठरा ऐतिशायना आभूत्या वैशिप्रा धूम्रा धूम्रायणा
धौम्या धार्म्यायणा औदव्रजिराग्रायणा बैम्बकयः प्रावाहार्या हृद्रोगाः
काश्यातपा आपाम्बानिका मौषीतकिश्छागसयो माषशरावयः सौधवयः
सायस्या आसुरायणाश्छागव्याः सौनद्या स्थौलकेशयो वार्षकय औपव्या
लाक्षमणयः क्रोष्टा जीवतयः खार्दमायणा लोहितायना मितकुम्भा पिङ्गाक्षय
औडलयो मारायणा ॥॥॥ वैकर्णेयाः कौषीतकेयाः धूमलक्ष्मणयः सुरा
गौरिवायणा विमत्स्या आग्निशर्मायणा औक्थ्यायनाः काम्बरोदरयो देवयाता
वैदोऽम्बा वेलया महाचक्रेयाः पैठीनसा पानस्या विषगणा दाक्षायणयो
भालन्दनाः शाङ्कमित्रेया हरित्याः पाञ्चाला जारमारयो वार्षगाणिः
सौविश्रवसो वैशंपायनाः स्वैरकिः कालशय औक्त्रायणिर्मार्जायनाः
कांसायना दैवो होता शुचयः खरेभा आयस्थूणा भागुरयः पाथिकार्या
गौमायना हिरण्यपापा आग्निदेविस्तथासूर्या मुसला आविश्रेण्या
उत्तरतोगण्डमाना मन्त्रिता वैकर्णय स्थूलबिन्दव इत्येते निध्रवाः कश्यपास्

तेषां त्र्यार्षेयः प्रवरो भवति
काश्यपावत्सार नैध्रुवेति होता
निध्रुववदवत्सारवत्कश्यपवदित्यध्वर्युः ४१

रेभाणां त्र्यार्षेयः प्रवरो भवति
काश्यपावत्सार रैभेति होता
रेभवदवत्सारवत्कश्यपवदित्यध्वर्युः ४२

शण्डिलाः कौहडाः पावकाः पार्यका औदमेघाः सौदानवः सावचसः
कारेयाः कौकुण्डेया ऐषिकयो महोदकयः कौश्रयो कामशयो मौञ्जायना
जाणवत्साः खार्वमायना गाड्गायना वात्सभालयो गोभिला वैदायना
वात्स्यायना वाह्यायनयो बहूदरयो भागुरिः गार्दभीमुखा हिरण्यबाहुस्तैदेहा
गोमूत्रा वार्कखण्डा जानन्तरिजालन्धरिर्धन्वन्तरिरित्येते शण्डिलास्

तेषां त्र्यार्षेयः प्रवरो भवति
काश्यपावत्सार शाण्डिलेति होता काश्यपावत्सार दैवलेति वा
काश्यपावत्सारासितेति वा शाण्डिलासित दैवलेति वा
शण्डिलवदवत्सारवत्कश्यपवदित्यध्वर्युर्देवलवदवत्सारवत्कश्यपवदिति
वासितवदवत्सारवत्कश्यपवदिति वा देवलवदवत्सारवच्छण्डिलवदिति
वा ४३

लौकाक्षयो दार्भायणा मैत्रवादिर्वैदेहाः कालेयाः कापुटिस्तथा कलयः काँ
सपात्रयश्च भालकायनिर्नित्यरसोविरोदकिः कौणामिः सौतयः सैतकिः
सांभरिरानिष्टिरैषिकिः सौसुकिश्चैरन्दिः पशुभिश्चोलपला
यौथकालकिर्लोकाक्षयो यौथपालाजपाला इत्येते लोकाक्षयोऽहर्वसिष्ठा नक्तं
कश्यपास्
तेषां त्र्यार्षेयः प्रवरो भवति
काश्यपावत्सार वासिष्ठेति होता काश्यपावत्सारासितेति वा
वसिष्ठवदवत्सारवत्कश्यपवदित्यध्वर्युरसितवदवत्सारवत्कश्यपवदिति
वैतेषामेवाविवाहा ४४

वसिष्ठानेकार्षेयान्व्याख्यास्यामो वैकलिर्वाराटकिः साखला गौरिश्रवसा
आश्वलायनाः कापिष्ठाः शौचिवृक्षा वैयाघ्रपद्या वाह्यकायनिर्वाटव्या
जातूकर्णा औडुलोमिः कौभोजिः कौलायनाः सुन्दरहरिताः काण्ढेविद्धिः
सौयवसायना आलम्भायना लौमायन्याः स्वस्त्याः कार्षिताः
पार्णकायनाश्चौडकायनाः पार्णवल्का देवना गौरव्याः श्राविष्ठायना
वाहकथय आविद्धितयोऽश्वयाजयाः पूतिमाषाः सप्तवैला वासिष्ठा इत्येते
वसिष्ठास्

तेषामेकार्षेयः प्रवरो भवति वासिष्ठेति होता
वसिष्ठवदित्यध्वर्युः ४५

कुण्डिना लोहायना गुग्गुलिरौपवस्तिर्वैकर्णयोऽश्मरथा बाहवः क्रौञ्चोक्याः

सामङ्गलिनः कापटवः पैठका नवग्रामा हिरगयाद्मायगाः पैप्पलादयो
भाद्मिर्माध्यंदिनाः शन्तिः सौपतिथिरित्येते कुगिडनास्
तेषां त्र्यार्षेयः प्रवरो भवति

वासिष्ठ मैत्रावरुग कौगिडन्येति होता
कुगिडनवन्मित्रावरुगवद्वसिष्ठवदित्यध्वर्युः ४६

उपमन्यव श्रौपगवा मगडलेखयः कापिञ्जला
जालागतास्तपोलोकास्त्रैवर्गाश्चैव पार्गागारिः सुराद्मराः शैलालयो
महाकर्गायना वालशिखा श्रौद्वाहमानयो बालायना भागुरित्थायना
कुगडोदरयगा लाद्मगोयाः काचान्तयो वार्काश्वकय श्रानृद्मरायगा
श्रालबवाः कपिकेशाः इत्येत उपमन्यवस्

तेषां त्र्यार्षेयः प्रवरो भवति
वासिष्ठैन्द्रप्रमदाभरद्वसवेति होताभरवद्वसुवदिन्द्रप्रमदवद्वसिष्ठवदित्यध्वर्युः
४७

पराशराः
कागडूशया वाजयो वाजन्तयो वैमतायनाः ।
गोपालिरेषां पञ्चम एते कृष्णाः पराशराः ॥
प्रारोहयो वैकलयः प्लाद्मयः कौमुदादयः ।
हार्यश्विरेषां पञ्चम एते गौराः पराशराः ॥

खल्वायनयोः गोपयः काल्कयः श्यातयातयः ।
वारुगिरेषां पञ्चम एतेऽरुगाः पराशराः ॥
भालुक्या बादरिश्चैव काह्वायनाः कौकुशालयः ।
द्मैमितिरेषां पञ्चम एते नीलाः पराशराः ॥
कृष्णाजिनाः कापिशुभ्राः श्यामायनयः श्वेतयूपयः ।
पोष्करसादिरेषां पञ्चम एते श्वेताः पराशराः ॥

वाश्यायनयो वार्ष्णेया श्यामेयाः श्रौतिभिः सह ।
चौलिरेषां पञ्चम एते श्यामाः पराशराः ॥
कृष्णा गौरा अरुणा नीलाः श्वेताः श्यामा ये पराशरास्
तेषां त्र्यार्षेयः प्रवरो भवति
वासिष्ठ शाक्त्य पाराशर्येति होता
पराशरवच्छक्तिवद्वसिष्ठवदित्यध्वर्युः ४८

अगस्तीन्व्याख्यास्यामोऽगस्तयो विशालाद्या स्कालायना औपदहनयः
कल्माषदण्डिर्धावणिर्लावर्णिर्लव्यार्बुदो बैरिणयो बुद्बुदोदरयः शैवपथयः
शालावता मौञ्जकयः पाण्डुहृदा हारिग्रीवयो रौहिष्या मौसलय
इत्येतेऽगस्तयस्

तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य दार्ढच्युतैध्मवाहेति
होतेध्मवाहवद्दृढच्युतिवदगस्तिवदित्यध्वर्युः ४९

सोमवाहानां त्र्यार्षेयः प्रवरो भवत्यागस्त्य दार्ढच्युत सौमवाहेति होता

सोमवाहवद्दृढच्युतिवदगस्तिवदित्यध्वर्युः ५०

यज्ञवाहानां त्र्यार्षेयः प्रवरो भवत्यागस्त्य दार्ढच्युत याज्ञवाहेति होता
यज्ञवाहवद्दृढच्युतिवदगस्तिवदित्यध्वर्युः ५१

क्षत्रियाणां त्र्यार्षेयः प्रवरो भवति
मानवैड पौरूरवसेति होता
पुरूरवोवदिडावन्मनुवदित्यध्वर्युः ५२

वैश्यानां त्र्यार्षेयः प्रवरो भवति
भालन्दन वात्सप्र माङ्किलेति होता
मङ्किलवद्वत्सप्रवद्भलन्दनवदित्यध्वर्युः ५३

नाराशँ सान्व्याख्यास्याम
आत्रेयवाध्र्यश्ववाधूलवसिष्ठकण्वशुनकसंकृतियस्कराजन्यवैश्या इत्येते
नाराशँ साः प्रकीर्तितास्

तनूनपादितरेषां क्षत्रियवैश्यानां पुरोहितप्रवरो भवतीति विज्ञायते
मनुवदिति वा सर्वेषां गोत्राणां मानव्यो हि प्रजा इति विज्ञायते
सगोत्रां गत्वा चान्द्रायणं चरेद्व्रते परिनिष्ठिते ब्राह्मणीं न
त्यजेन्मातृवद्भगिनीवद्गर्भो न दुष्यति कश्यपसिति विज्ञायतेऽथ संनिपाते
विवाहस्तदध्यायं वर्जयेद्बौधायनस्य तत्प्रमाणँ हि कर्तव्यं
मानव्यो हि प्रजा इति च विज्ञायते
गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् ॥
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥
तेषाँ सप्तर्षीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्युच्यते
न भवत्ययाजनीयो यः प्रवरान्स्वान्पराँश्च विजानाति
मन्त्रो ब्राह्मणं वेद इत्याचक्षते
तस्मात्प्रवरज्ञाने यत्नो महान्द्विजैः कार्यः
श्राद्धविवाह ऋत्विजो देवा स्तोत्रं गोत्रमूलानि च महाप्रवरे संतिष्ठते
नित्यं पर्वणिपर्वणि स्वाध्यायी ब्रह्मलोके महीयते ब्रह्मलोके महीयत इति
५४

Credits
Source: W. Caland, *The Baudhāyana Śrauta Sūtra belonging to the Taittirīya-Saṃhitā, Vols. 1-3*, 1st Edition Calcutta 1904-13, 2nd Edition New Delhi 1982.
Typescript: Edited by Makoto Fushimi
Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection